


# শৰাইঘাট

[ বুৰঞ্জীমূলক পঞ্চাঙ্ক নাটক ]





শৰাইঘাট



ৰচিত—শ্ৰীৰিনন্দচন্দ্ৰ বৰুৱা বি-এ

*Published through*

SRIMAN MĀDHWARĀDDHĀNTA SAMVARDHAKA SABHĀ
POORNAPRAJNA VIDYĀPEETA
Poornaprajna Nagar, Bangalore-28

BY

HIS HOLINESS SRI SRI VIDYĀMĀNYA THEERTHA SWĀMIGALU
PĪTĀDHIPATHI OF BHANDĀRAKĒRI MUTT
FOUNDER & PRESIDENT : SRĪMAN MĀDHWĀRĀDDHĀNTHA SAMVARDHAKA SABHĀ

*Published with*

THE FINANCIAL ASSISTANCE FROM THE MINISTRY OF EDUCATION
GOVT. OF INDIA

*Edited by*

Jyōtisha Vidwān, Tarka Vidwān, Vēdānta Sirōmani, Mysōre Āsthāna Vidwān, Pandita Bhūshanam
P. P. LAKSHMĪNĀRĀYANA UPĀDHYĀYA
Professor in Jyōtisha, Sanskrit College, Madras-4.
&
EMINENT SCHOLARS APPOINTED BY SWAMIJI

FIRST EDITION — 2000 Copies



*Printed by*
TRUSTEES
DHARMAPRAKĀSH PRESS, 5, RAJA ANNAMALAI CHETTIAR ROAD, MADRAS-7
1969.

Price Rs.

श्रीः

# प्रास्ताविकानि द्वित्राणि वचनानि

सुरवरावतारैः श्रीमदानन्दतीर्थभगवत्पादाचार्यैः सह पञ्चदशदिनानि वादं विधाय निरुत्त-रतां निर्बोधतां च गतः सकलमायावादिजनमाननीयः श्रीत्रिविक्रमपण्डिताचार्यः श्रीमदानन्दतीर्थभगव-त्पादाचार्यशिष्याग्रणीत्वमुपगम्य तदीयग्रन्थरत्नानि तत्सन्निधावस्तौषीत् ।

लोकानामवलोकाय मार्गस्यास्य व्यधाद्भवान् ।
करुणाकर नेत्राभे वादसन्मानलक्षणे ॥

एकाकी किल यश्चक्रे पदं मौलिषु विद्विषाम् ।
तत्वनिर्णयपार्थोऽयं केन नाम न पूज्यते ॥

वादादयः प्रकरणस्फुलिङ्गास्तनवोऽप्यलम् ।
विपक्षकक्षं क्षिण्वन्ति मारुतेन त्वयेरिताः ॥ इति ।

एषु प्रथमेन प्रमाणकथालक्षणयोः प्रमाणकथामार्गदर्शने नेत्रसाम्यं, द्वितीयेन विष्णुतत्व-निर्णयस्य प्रत्यर्थिनिरसने पार्थसाम्यं, तृतीयेन तत्वोद्योतादीनां सप्तप्रकरणानां सङ्क्षिप्तशब्दानामपि विपक्षवनदहनसमर्थवायुप्रेरितस्फुलिङ्गसाम्यं च प्रतिपादयता श्रीत्रिविक्रमपण्डिताचार्येण स्वानुभवः सम्यक् प्रकट्यक्रियत ।

तत्सूनुना श्रीनारायणपण्डिताचार्येण स्वकृते श्रीसुमध्वविजये,

बालसङ्गमपि बोधयद्भृशं दुर्निरूपवचनं च पण्डितैः ।
अप्रमेयहृदयं प्रकाशवत्सौम्यकान्ति च विपक्षभीषणम् ॥

अस्तदूषणमवन्ध्यभाषणं लक्षितं सकललक्षणैः समम् ।
माननीयमपि नाकिनायकै रूपमन्यदिव धन्यमात्मनः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यग्रन्थगुणगणः समुदघोषि । एतदुभयापेक्षया आचार्यग्रन्थगुणवर्णने न वयमधिकारिण इति तस्माद्व्यापाराद्विरमामः । दशसु प्रकरणेषु श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचि-तेषु प्रथमं प्रमाणलक्षणं प्रकरणं 'प्रमाणानां त्रैविध्यमेव, न न्यूनाधिकभावः, इतीममंशं समर्थयति । द्वितीयं कथालक्षणं प्रकरणं वादजल्पवितण्डानां स्वरूपलक्षणादिकं सम्यग्लक्षयति । तृतीयं उपाधिखण्डनं प्रकरणं च सत्यं मिथ्याभूतं वाउपाधिं निरस्य पारमार्थिकं स्वाभाविकं च जीवब्रह्मणोर्भेदं साधयति । तुरीयं मायावादखण्डनं न जीवब्रह्मणोरैक्यस्य शास्त्रप्रतिपाद्यत्वे शास्त्रस्यानारम्भणीतप्रसङ्गं बोधयत्

मायावादस्यानारम्भणीयतां साधयत् जीवब्रह्मभेदसाधकत्वेनैव शास्त्रस्यारम्भणीयतां समर्थयते। पञ्चमं प्रपञ्चमिथ्यात्वानुमानखण्डनं प्रकरणं प्रपञ्चमिथ्यात्वानुमाननिरसनेन प्रपञ्चसत्यतापक्षं पोषयति। एवमेवेतराणि पञ्चप्रकरणान्यपि शास्त्रैकदेशसम्बद्धानि शास्त्रकार्यान्तरे स्थितानि प्रकरणाभिख्यामलङ्कुर्वन्ति।

एतेषां ग्रन्थानामध्ययनेनैव आकरभूतन्यायसुधादिग्रन्थाध्ययने पर्याप्तोऽधिकारो लभ्यत इति नाविदितं विपश्चिदपश्चिमानाम्।

दुरूहानेकापूर्वार्थसन्दर्भबन्धुराणामेषां प्रकरणानामध्ययनं सर्वेषामपि दर्शनान्तरोपजीविनामत्यावश्यकं मन्यमानैः सकलविश्वविद्यालयाधिपतिभिः सर्वेषु विश्वविद्यालयेषु पाठ्यतया व्यवस्थापितानि। परं तु सप्ततिवत्सरेभ्यः पूर्वं मुद्रितानीमानीदानीं दुर्लभानि। अतो बहुधा बहुभिः प्रेरितैः पुनर्मुद्रणाय प्रयतमानैरस्माभिर्निवेदिता भारतकेन्द्रविद्याशाखाधिकारिणः समुचितद्रव्यदानवाग्दानेनास्मान् प्रोदसाहयन्। अतस्तेभ्यो धन्यवादानमितान् वितरामः।

एकत्रैव मूलं टीकां तत्तदुचितांष्टिप्पणीश्च संयोज्य संमुद्रणीयमिति धिया मुद्रिता अमुद्रिताश्च टिप्पणीः शोधयितुं प्रवृत्तानामस्माकं लिखितमूलकोशप्रदानेन समयोचितनैकविधोपकारनिकरकरणेन प्रोत्साहितवतां श्रीपेजावरमठाधीश श्रीविश्वेशतीर्थ श्रीचरणानां सविधे सप्रेमसौहार्दं कार्तज्ञ्यमाविष्कुर्मः।

पुस्तकसंशोधने लेखने चरममुद्रणपूर्वभाविनि मुद्रितपत्रसंशोधने च स्वीयं भक्तिभरं श्रीमदानन्दतीर्थश्रीमच्चरणयोः समर्पितवद्भ्यः पण्डितवर्येभ्यः पि. पि. लक्ष्मीनारायणोपाध्यायप्रभृतिभ्यः श्रेयसां प्रदानाय नारायणमनवरतं स्मरामः।

प्रथमभागेऽस्मिन् प्रमाणलक्षणम् कथालक्षणम् उपाधिखण्डनम् मायावादखण्डनम् प्रपञ्चमिथ्यात्वानुमानखण्डनञ्चेति पञ्चप्रकरणान्यन्तर्भवन्ति। अवशिष्टान्यग्रिमे भागे प्रकटीकरिष्यन्ते। प्रकटीकृतानामेतेषां ग्रन्थानां विस्तृता सूची प्रकटीकृता। तदवलोकनेनैव शब्दतोऽल्पीयसामप्येतेषां प्रकरणानां विश्वम्भरोदरायितानां बह्वर्थगर्भितत्वं स्फुटीभवतीति विद्वांसो जानन्ति। अतोऽस्माभिरेतद्ग्रन्थप्रतिपाद्यार्थविवरणाय नास्मल्लेखनी व्यापार्यते।

पूर्वजन्मनि स्कन्धोपारूढसकलसदागमग्रन्थः श्रीमदानन्दतीर्थभगवत्पादाचार्यानुग्रहेण अक्षोभ्यनाम्यामेव सार्थकीकृतसकललक्षणो देववरावतारो महोक्षा उत्तरजन्मनि श्रीजयतीर्थाभिधानमवाप्य प्रायः सर्वेषामप्याचार्यग्रन्थानां टीकोचितसकलगुणगरिष्ठाष्टीका विधाय पूर्वोक्तानाचार्यग्रन्थगुणान् प्राचीकटत्। तदीया याः प्रमाणलक्षणादिटीका विलोक्य वेदभाष्यकृद्विद्यारण्यप्रभृतयोऽप्यनितरसाधारणेन गौरवेणापूपुजन्। अत आचार्यग्रन्थैरविनाभावयुक्तता इमाष्टीका विना आचार्यग्रन्थभावपरिज्ञानं

दुःशकमिति न तिरोहितमभिज्ञानाम् । अतो वयमपि टीकासनाथान्येव दश प्रकरणानि प्रकटयितुं प्रावर्तामहे.

कर्णाटकसिंहासनाधीश्वरतया सह वेदान्तसिंहासनाधीश्वरतां भूषितवद्भिर्न्यायामृततरङ्गिण्यादि-द्वैतग्रन्थपरम्पराया अद्वैतसिद्ध्याद्यद्वैतग्रन्थपरम्परायाश्च वृद्धेर्निदानभूतं न्यायामृतं, तन्त्रचतुष्टयात्मकां स्तात्पर्यचन्द्रिकादीनन्याननेकान् ग्रन्थांश्च विहितवद्भिः अत एव मतत्रयाचार्यैर्निरन्तरस्मरणार्हतामुपगतैः श्रीव्यासतीर्थश्रीचरणैः स्वरचितमन्दारमञ्जर्या टीकेन्दिराधम्मिल्लभारः समभूषि । तया च मन्दारमञ्जर्या सह उपाधिखण्डनमायावादखण्डनप्रपञ्चमिथ्यात्वानुमानखण्डनटीका अमुमुद्राम ।

श्रीराघवेन्द्रतीर्थश्रीचरणानामन्यूनानधिकसकलगुणपूर्णटिप्पणीनिर्माणे अनन्वयालङ्कारनिदर्शनभूतानां टिप्पण्या भावदीपाख्यया सह प्रमाणलक्षणकथालक्षणटीके प्राचीकटाम ।

श्रीवेदेशतीर्थश्रीचरणानां सुन्दररचनविन्यासया बह्वर्थगर्भितया टिप्पण्या कथालक्षणटीकां समयूयुजाम ।

श्रीश्रीनिवासतीर्थानां सुलभसुलभया टीकाक्षरार्थविज्ञानायात्यन्तमुपयुक्तया टिप्पण्या प्रमाण-लक्षणटीकां समभूषयाम ।

एतासामाद्याक्षरग्रहणेन टी=टीका. रा. टि=राघवेन्द्रतीर्थीया टिप्पणी इत्यादिरूपा सूचना प्रतिपृष्ठं व्यधायि । टिप्पणीगतः पाठभेदस्तत्तत्पृष्ठाधोभागे रा. टि. इत्यादिसूचकशब्दनिर्देशपुरस्सरं निरदिष्ट । संशोधकतर्कितः पाठभेदः 'इति पाठेन भाव्यमिति भाति' एवं निर्देशेन समसूच्यत ।

सीसाक्षरयोजने संशोधने मुद्रणावसरे च सम्भाविता बुद्धिपूर्वाः प्रामादिका वा दोषा विदित मुद्रणश्रमैः सहृदयैरवश्यं मृष्यन्त इति न तत्र निवेदनीयमास्ते.

इयमस्माभिर्वारं वारमविस्मर्तव्या यत् अल्पेन कालेन सुन्दरं शुद्धं सकलगुणबन्धुरं पुस्तकं संमुद्र्य श्रीमदानन्दतीर्थभगवत्पादाचार्याणां बदरिकाश्रमप्रवेशदिने श्रीकृष्णसन्निधौ समर्पितवतां भक्तश्रीगोविन्ददासपौत्राणां भक्तश्रीसीतारामदासपुत्राणां मद्रपुरीगतधर्मप्रकाशमुद्रणालयाधिपानां नवरत्नायितानां मुद्रणालयसेवाधिकृतानां च भक्तिभरभरिता शाश्वतिकी सेवा ।

तेभ्यः सर्वेभ्योऽपि श्रीकृष्णो मङ्गलपरम्परां दद्यादिति नारायणं स्मरामः

श्री श्री विद्यामान्यतीर्थाः

श्रीमत्परमहंसपरिव्राजकाः श्रीभण्डारकेरिमठाधीशाः

श्रीमन्माध्वसिद्धान्तसंवर्धकसभास्थापकाः अध्यक्षाश्च

श्रीः

# विषयानुक्रमणिका

## प्रमाणलक्षणम्

---

## उपाधिखण्डनम्

---

## मायावादखण्डनम्

---

## प्रपञ्चमिथ्यात्वानुमानखण्डनम्

## उडुपि श्रीकृष्णः



स्पर्शनाद्भगवतोऽतिपावनात्सन्निधानपदतां गतां हरेः ।
त्रिंशदुद्यतनरैः सुदुर्धरां लीलयाऽनयदिमामसौ मठम् ॥

मन्दहासमृदुसुन्दराननं नन्दनन्दनमतीन्द्रियाकृतिम् ।
सुन्दरं स इह सन्न्यधापयद्धन्यमाकृतिशुचिप्रतिष्ठया ॥

श्रीः

# अथ श्रीमदानन्दतीर्थ भगवत्पादाचार्यविरचितेषु दशप्रकरणेषु

# प्रथमं प्रमाण लक्षणम्

श्रीजयतीर्थभिक्षुकृतया टीकया समलंकृतम्

टीका

प्रणम्यागण्यकल्याणगुणाब्धिं पुरुषोत्तमम् ।
पूर्णबोधानपि गुरून् व्याकुर्वे मानलक्षणम् ॥

ग्रन्थाऽरम्भस्य मङ्गलाऽचरणस्य वक्ष्यमाणार्थप्रतिज्ञायाश्च कर्तव्यत्वसमर्थनम्

इह खलु 'सुखमेव मे स्यात् दुःखं मनागपि मा भूत्' इति निखिलापेक्षितमोक्षस्येश्वरसाक्षात्कारमन्तरेणासम्भवात्, तस्य च प्रमाणानि विनाऽनुदयात्, प्रमाणानां च यथावद्विदितानामेव तद्धेतुत्वोपपत्तेः तत्स्वरूपं यथावज्ज्ञापयितुकामो[1] भगवानाचार्यवर्यः प्रारिप्सितग्रन्थाविघ्नपरिसमाप्त्यादिप्रयोजनाविगीतशिष्टाचारपरम्पराऽऽदिप्राप्तेष्टदेवतानतिपूर्वकं श्रोतृशेमुषीमनुकूलयिष्यन् वक्ष्यमाणमेवाग्रे दर्शयति

मूलम्

[2]अशेषगुरुमीशेशं नारायणमनामयम् ।
संप्रणम्य प्रवक्ष्यामि प्रमाणानां स्वलक्षणम् ॥

नारायणस्यैव नम्यत्वोपपादनम्

नारायणस्यैव नमस्कारे को हेतुरित्यत उक्तम् ॥ अशेषगुरुमिति ॥ सर्वज्ञं गुरुमिति पाठे सार्वज्ञ्यं गुरुत्वस्योपपादकम् । किं च नारायणस्यैवातिसमर्थत्वेनेष्टप्रदानसंभवात् तन्नतिरिति भावेनोक्तम् ॥ ईशेशमिति ॥ अपि च रागाऽदिदोषरहिता हि लोके वन्द्या भवन्ति । नारायणश्चाशेषदोषदूर इति सूचयितुं अनामयमिति ॥ आमयपदं दोषान्तरोपलक्षणम् । प्रवक्ष्यामीति उद्देशविभागपरीक्षाऽऽद्युपयोगिसंग्रहायोपसर्गः । न हि तद्विना प्रकृष्टा लक्षणोक्तिः स्यात् ।

---

[1] ए. यथावद्दर्शयितुकामो [2] सर्वज्ञं

## अथ श्रीराघवेन्द्रतीर्थयतिकृतः श्रीप्रमाणलक्षणटीकाभावदीपः प्रारभ्यते

हरिः ॐ

कल्याणगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥ १ ॥
प्रणम्य श्रीमदानन्दतीर्थाऽऽदिगुरुशेखरान् ।
व्याख्यास्यामि यथाबोधं मानलक्षणपञ्चिकाम् ॥ २ ॥

ग्रन्थाऽऽदौ मङ्गलमाचरंश्चिकीर्षितं श्रोतुर्मनःसमाधानाय प्रतिजानीते ॥ प्रणम्येति ॥ मूले अनामय पदोक्तनिर्दोषत्वमुपलक्षणमिति भावेनोक्तमगण्येत्यादि । श्रुत्यादिषु सत्वाऽऽदौ मतान्तरे दुःखाऽऽदौ च गुणत्वस्य प्रसिद्धेः तद्व्युदासाय कल्याणेत्युक्तिः । तथा च गणयितुमशक्यानां कल्याणानां ज्ञानाऽऽनन्दबलैश्वर्याऽऽदिभाव धर्माणां अज्ञानदुःखाल्पशक्तिपारतन्त्र्याऽऽद्यभावरूपाभावधर्माणां चाश्रिधरित्वाश्रिधराश्रय इत्यर्थः । एतद्घटनायोक्तम् ॥ पुरुषोत्तममिति ॥ क्षराक्षरशब्दितश्रीब्रह्माऽऽदिसर्वचेतनरूपपुरुषोत्तमस्य तेष्वदृष्टमप्येतद्घटत एवेति भावः । गुरून् पूर्णबोधानपीति सामानाधिकरण्येन वा पूर्णबोधान् तदितरगुरूनपीति वैयधिकरण्येन वा योजना । व्याकुर्व इत्यात्मनेपदप्रयोगेण ग्रन्थकर्तुः प्रीतेरात्मगामित्वं सूचयति । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति स्मरणात् ।

प्रकरणस्य परंपरया मोक्षप्रयोजनकत्वं आदौ प्रणामप्रतिज्ञाकरणयोः साफल्यं चोपपादयन्नवतारयति ॥ इहेत्यादिना ॥ इह लोके इत्यर्थः । निखिलापेक्षितेत्यनेनान्वयः । सर्वानुभवसिद्धिद्योतकः खलुशब्दः । इह एतत्प्रकरण इति वाऽर्थः । तथात्वे तत्स्वरूपं यथावद्दर्शयितुकाम इत्यनेनान्वयः । वाद्यन्तरोक्तमोक्षस्य हेयतया तत्साधनोपादित्साऽसंभवात्तद्घटनायोक्तं सुखमेवेत्यादि । मनागितीषदर्थेऽव्ययम् ॥ यथावत् विदिता नामेवेति ॥ वाद्यन्तररीत्या अनुमानाऽऽद्यप्रामाण्यबुद्धौ श्रवणमननादेरयोगादिति भावः । नतेरावश्यकत्वे प्रयोजनेत्यन्तेन फलोक्तिः प्राप्तेत्यन्तेन प्रमाणोक्तिः । परिसमाप्त्यादीत्यादिपदेन प्रचयपरिग्रहः । श्रोतृबुद्धेरानु. कूल्याचरणं नाम, किं वा वक्ष्यति ? इत्यव्याकुलतैव । मनःसमाधानमिति यावत् ॥ परीक्षाऽऽद्युपयोगीति ॥ परीक्षाऽऽदिरूपं यत् लक्षणोक्तेरुपयोगि तस्य संग्रहायेत्यर्थः । आदिपदेन विशेषोद्देशविशेषलक्षणसंग्रहः ।

## अथ श्रीनिवासतीर्थकृता श्रीप्रमाणलक्षणटीकावाक्यार्थकौमुदी प्रारभ्यते

हरिः ॐ

व्यासं सर्वगुणाऽऽवासं वासवीनन्दनं प्रभुम् ।
गुर्वाराधितपादाब्जं वन्देऽहं मध्ववल्लभम् ॥ १ ॥

ग्रन्थाऽऽरम्भणीयत्वाऽऽदिसमर्थनम्

श्रीमदानन्दतीर्थार्यचरणावाश्रयेऽनिशम् ।
रुद्रादिसर्वविबुधैः संसेव्याविष्टदौ सताम् ॥ २ ॥

श्रीमदानन्दतीर्थीयशास्त्रदुग्धाब्धिमन्थनात् ।
प्राप्ता[1] ज्ञानसुधा येन तं जयेन्द्रमहं भजे ॥ ३ ॥

यैरहं शुकवत् सम्यक् शिक्षितोऽस्मि दयालुभिः ।
तान्वन्दे यादवाऽऽचार्यान् वेदेशमुनिसेवकान् ॥ ४ ॥

अथैतत्कृपया श्रीनिवासाऽऽख्यायुतसूरिणा ।
व्याख्यायते बुद्धिशुद्ध्यै मानलक्षणपञ्जिका ॥ ५ ॥

सर्वज्ञकल्पाष्टीकाकारा जयतीर्थश्रीमच्चरणाः श्रीमदाचार्यकृतप्रमाणलक्षणाऽऽख्यग्रन्थस्य टीकां कर्तुकामाः-स्वचिकीर्षितस्य ग्रन्थस्य निर्विघ्नेन परिसमाप्त्यर्थं स्वेष्टदेवताऽऽदिनतिपूर्वकं स्वचिकीर्षितं प्रतिजानते ॥ प्रणम्येति । अत्र पुरुषोत्तममिति पदं योगरूढं सत् विशेषवाच्यपि भवतीति द्रष्टव्यम् । नमनस्य भक्तिश्रद्धाऽऽद्यतिशयपूर्वकत्वद्योतनाय प्रशब्दः । अन्यत्रादृष्टं क्षराक्षरपुरुषाभ्यामुत्तमत्वं परमात्मनोऽसम्भावितं इत्याशङ्कापरिहाराय तस्य सम्भावकमाह ॥ अगण्येति ॥ यद्वा, ननु सतीष्वन्यासु देवतासु अस्यैव नम्यत्वे को हेतुः ? इत्याशङ्कापरिहाराय क्षराक्षरातीतत्वार्थकेन पुरुषोत्तममित्यनेनैव नम्यत्वप्रयोजकं विशिष्टत्वमभिधाय तदुपपादनमनेन क्रियते । अगण्याः गणनां कर्तुमशक्याः कल्याणाः मङ्गलरूपा ये आनन्दाऽऽद्या गुणाः तैरब्धिरिव तम् । तार्किकमते दुःखाऽऽदीनामपि गुणत्वेन व्यवहारात् तत्प्रसक्तिपरिहाराय गुणानां कल्याणत्वविशेषणमुक्तम् । तदीयाष्ट-गुणत्वाऽऽदिप्रक्रियानिराकरणाय अगण्येत्युक्तमिति द्रष्टव्यम् । तथा च युक्तमितरपरित्यागेनास्यैव नम्यत्वमिति भावः । देवताननतिसमनन्तरं व्याचिख्यासितमूलकर्तृत्वेनोपाधिना श्रीमदाचार्यान् नमति ॥ पूर्णबोधानिति ॥ 'यथा देवे तथा गुरौ' इति वचनेन गुरुप्रणामस्याप्यभिमतसिद्ध्यङ्गतया कार्यारम्भेऽवश्यमनुष्ठेयत्वावगमादाह ॥ गुरूनिति ॥ परमगुरवः पद्मनाभतीर्थश्रीमच्चरणाः विद्यागुरवः अक्षोभ्यतीर्थश्रीमच्चरणाश्च गुरुशब्देन संगृहीता इति द्रष्टव्यम् । प्रणम्येति सम्बन्धः । मानलक्षणं तदाख्यं प्रकरणम् ।

नन्विदं प्रकरणमनारम्भणीयं विषयाऽऽद्यनुबन्धचतुष्टयशून्यत्वात् । अस्तु वाऽऽरम्भणीयत्वं, तथाऽपि आद्यपद्ये अशेषगुरुमीशेशं नारायणमनामयम् । संप्रणम्य इत्यंशो व्यर्थः । न च ईश्वरनमनरूपमङ्गल-करणार्थत्वेन सार्थक इति वाच्यं फलप्रमाणयोरभावेन तस्याकर्तव्यत्वात् । अस्तु वा कर्तव्यत्वं, तथाऽपि प्रवक्ष्यामि प्रमाणानां स्वलक्षणं इत्यंशो व्यर्थः । न च प्रमाणलक्षणकथनप्रतिज्ञाकरणार्थत्वेन सार्थक इति

---

1 न्यायसुधा

(श्री. टि.) वाच्यं प्रयोजनाभावेन तस्याकर्तव्यत्वात् इति शङ्कात्रयं परिहरन् आद्यपद्यमवतारयति ।। इहेत्यादिना ।। इह अधिकार्यनधिकारिवर्ग इत्यर्थः। इह जगति इत्यन्ये। खलु इति वाक्यालङ्कारे। अधिकारिणं प्रतीति शेषः। तत्स्वरूपं यथावत् ज्ञापयितुकाम इति सम्बन्धः।

अत्र सुखमेवेत्यारभ्य भगवानाचार्य इत्यन्तेन प्रथमशङ्कापरिहारः। ननु मोक्षस्य कथं निखिलापेक्षितत्वं ? तत्तद्वादिभिरुत्प्रेक्षितस्य अशेषविशेषगुणोच्छेदाऽऽत्महानिसततोर्ध्वगत्यादिरूपस्य मोक्षस्य तदयोगात्। इत्यतः स्वमते मोक्षस्वरूपनिरूपणव्याजेन तस्य निखिलापेक्षितत्वोपपादनायोक्तम् ।। सुखमेवेत्यादि ।। सदा इति शेषः। एवकारव्यावर्त्यं दर्शयति ।। दुःखमिति ।। मनागपि ईषदपि कदाचिदपि इति वा। 'मनागीषत् कदाऽपि च' इत्यभिधानात्। इति इत्येवं। तथा च आत्यन्तिकानिष्टनिवृत्तीष्टप्राप्तिरूपत्वान्मोक्षस्य युक्तं निखिलापेक्षितत्वमिति भावः ।। तस्य चेति ।। ईश्वरसाक्षात्कारस्य चेत्यर्थः ।। यथावत् विदितानामेवेति ।। आभासविविक्तत्वेन ज्ञातानामेवेत्यर्थः ।। तद्धेतुत्वोपपत्तेरिति ।। ईश्वरसाक्षात्कारहेतुत्वोपपत्तेरित्यर्थः। तत्स्वरूपं तेषां प्रमाणानां स्वरूपम्। यथावत् आभासविविक्तत्वेन। अत्र प्रमाणानां ईश्वरसाक्षात्कारहेतुत्वं न साक्षात्। किं तु ? नित्यानित्यवस्तुविवेकवैराग्याऽऽदिद्वारेणैव। अन्यथा अनुमानाऽऽगमयोः प्रत्यक्षलक्षणाऽऽक्रान्तत्वेन प्रत्यक्षत्वाऽऽपत्तेः इति मन्तव्यम्। यथोक्तं पद्धत्यन्ते 'तत् एवंभूतैः प्रमाणैः पदार्थानां नित्यानित्यत्वाऽऽदिकं निश्चित्य विषयेषु विरक्तस्य, शमदमाऽऽदिसम्पत्तिमतो वासुदेवैकशरणस्य तद्विषयाणि श्रवणमननिदिध्यासनान्यादरनैरन्तर्याभ्यां बहुकालमनुष्ठितवतो भगवत्साक्षात्कारे सति' इति। ननु प्रमाणेष्वनुमानाऽऽगमयोरेव ज्ञातकरणत्वात् प्रत्यक्षस्य चाज्ञातस्यैव करणत्वात् 'यथावत् विदितानां' इति कथं बहुवचनमिति चेन्न। ज्ञातकरणानुमानाऽऽगमसाहचर्यात् छत्रिन्यायेन प्रत्यक्षस्यापि तथात्वोक्तिरौपचारिकी इति वा 'अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे' इतिवत् अनुमानाऽऽगमव्यक्तिभेदात् वा बहुवचनोपपत्तिरित्यवधेयम्। लौकिकसाक्षात्कारे प्रत्यक्षस्याज्ञातकरणत्वेऽपि ईश्वरसाक्षात्कारे ज्ञातस्यैव तस्य करणत्वमित्याशयेनेदमुक्तमित्यप्याहुः।

तथा च ईश्वरस्य मुख्यविषयत्वात् तदवगतिसाधनानां प्रमाणानाममुख्यविषयत्वात्, तदुभयज्ञानस्यावान्तर प्रयोजनत्वात् मोक्षस्य च परमप्रयोजनत्वात्, यथायोग्यं सम्बन्धसद्भावात् निरुक्तमोक्षेच्छोरधिकारित्वात् इदं प्रकरणमारम्भणीयमेवेति भावः।

प्रारिप्सितेत्यादिना द्वितीयशङ्कापरिहारः। आदिपदेन प्रचयसंग्रहः। द्वितीयाऽऽदिपदेनाऽऽगमो ग्राह्यः। देवतावन्दनं खलु भक्त्यावुपेतमेव सफलम्। तच्च दृष्टायामेव देवतायामुपपद्यत इत्यभिप्रेत्योक्तम् ।। इष्टेति ।। परिसमाप्त्यादिप्रयोजना च सा इष्टदेवतानतिश्च इति विग्रहः।

---

[1] तस्या अकर्तव्यत्वात्

(श्री. टि.) श्रोत्रित्यादिना तृतीयशङ्कापरिहारः । श्रोतृणां शेमुषी बुद्धिः तां अनुकूलयिष्यन् करिष्यमाण-ग्रन्थार्थविषयिणीं कर्तुमिच्छन् इत्यर्थः । अन्यथा उत्तरत्र किं प्रमेयमुच्यते ? इति श्रोतृणां बुद्धिर्व्याकुला स्यात् इति भावः ॥ वक्ष्यमाणमेवेति ॥ प्रमेयमिति शेषः । अग्रे आद्यपद्ये ॥ अतिसमर्थत्वेनेति ॥ ईशानां समर्थानामपि ईशत्वोक्त्या अतिसमर्थत्वं उक्तं भवति इति द्रष्टव्यम् । ननु रोगराहित्यवाचिना अनामयपदेन अशेषदोष रहितत्वं कथं सूचितमित्यत आह ॥ आमयपदमिति ॥ एकदेशेन समुदायलक्षणा च 'दशामात्रं दग्धं' इत्यादौ दृष्टेति भावः । प्रेत्युपसर्गस्य कृत्यमाह ॥ प्रवक्ष्यामीतीति ॥ इत्यत्रेत्यर्थः । आदिपदेन परोक्तप्रमाण-लक्षणदूषणसंग्रहः । तस्यापि स्वोक्तलक्षणदार्ढ्यार्थत्वेन लक्षणोपयोगित्वात् । अत एव प्रमासाधनं प्रमाणम् इत्यादिना क्रियमाणं परकीयप्रमाणलक्षणनिराकरणमपि सङ्गच्छत इत्यवगन्तव्यम् । तथा च उद्देशविभागपरीक्षा एव आदयो यस्य परोक्तलक्षणनिरसनस्य तत् उद्देशविभागपरीक्षाऽऽदि तच्च तदुपयोगि चेति कर्मधारयः ॥ उपयोगीति ॥ लक्षणोपयोगीत्यर्थः । ननु प्रेत्युपसर्गस्य कथं उद्देशाऽदिरूपलक्षणोपयोगिसंग्राहकत्वं ? तस्य धात्वर्थातिशयमात्रद्योतकत्वेन उद्देशाऽदिरूपलक्षणोपयोगिवाचकत्वाभावात् इत्यत आह ॥ न हीति ॥ अनेन नायमुपसर्गस्य वाचनिकोऽर्थः किं तु आर्थिक इत्युक्तं भवति इत्याहुः । वस्तुतस्तु ननूद्देशाऽदिकमेव किमर्थं ? येन तत्संग्राहकतया प्रेत्युपसर्गो व्याख्यायते । तदभावेऽपि प्रकृष्टलक्षणोक्तिसम्भवात् इत्यत आह ॥ न हीति ॥ तत् विनेति ॥ उद्देशाऽदिकं विना इत्यर्थः ।

### लक्षणलक्षणप्रयोजने

(टी.) लक्ष्यमात्रव्यापको धर्मो लक्षणम् । तदुक्तिः शब्दव्यवहारार्था । सास्नाऽऽदिमान् गौः इति ज्ञातलक्षणो हि यं पिण्डं सास्नाऽऽदिमन्तं पश्यति तं गोशब्दवाच्यं प्रत्येति । यदा तु अयं गौः इत्युपदेशाऽदिना व्युत्पत्तिः तदाऽपि व्यक्तिविशेष एव न सर्वत्र । तत्रोपदेशाऽद्यभावात् । अतस्तत्र व्यक्तिविशेषे व्युत्पन्नः तदन्यत्रापि व्युत्पित्सुः तद्धर्मेषु व्यवहारानालोच्य, व्यभिचारिणोऽ-व्यापकांश्च परिहृत्य, लक्षणभूतमेकं गृहीत्वा, तद्वत्सु गोशब्दसम्बन्धं गृह्णाति । प्राचीनपक्षे केवल व्यतिरेकिणा अत्र अन्वयव्यतिरेकिणेति विशेषः ।

(रा.टि.) कण्ठोक्तलक्षणस्य उपसर्गसंगृहीतोद्देशादेश्च स्वरूपाणि कृत्यानि चाऽऽह ॥ लक्ष्यमात्रेत्यादिना तत्सौष्ठवसिद्ध्यर्थेत्यन्तेन ॥ यावति एकः शब्दो व्युत्पादनीयः तल्लक्ष्यम् इति लक्ष्यस्वरूपमग्रे लक्षणोक्ति-कृत्यव्युत्पादनेन सुज्ञानमिति भावः । व्यापको व्याप्त्या वर्तमान इत्यर्थः । वर्तमान इत्यनेनासम्भवस्य व्याप्त्ये-त्यनेनाव्याप्तेः मात्रेत्यनेनालक्ष्यवृत्तिव्यावृत्त्याऽतिव्याप्तेश्च निरासः । ॥ शब्दव्यवहारेति ॥ व्यवह्रियते अनेन इति व्युत्पत्त्या व्यवहारशब्दोऽत्राभिलपनरूपव्यवहारहेतुभूतवाच्यवाचकसंबन्धज्ञानरूपव्युत्पत्तिपरः । व्यवहारार्थे-त्युक्तं व्यनक्ति ॥ सास्नाऽऽदिमानिति ॥ प्रत्येतीति ॥ अयं पिण्डः गोशब्दवाच्यः सास्नाऽऽदिमत्वात् य

(रा. टि.) एवं न, स एवं न यथाऽश्वादिरिति व्यतिरेक्यनुमानेन जानातीत्यर्थः। व्युत्पत्तौ पक्षान्तरमाह ॥ यदेति॥ आदिपदेन वृद्धव्यवहारग्रहः। व्युत्पत्तिरिति वाच्यवाचकसम्बन्धज्ञानम् ॥ तत्रेति॥ अनुपदिष्टव्यक्तिविशेष इत्यर्थः॥ व्युत्पन्न इति॥ ज्ञातसंकेत इत्यर्थः। व्युत्पित्सुः वाच्यवाचकसम्बन्धज्ञानेच्छुः। तद्धर्मेषु गोधर्मेषु। व्यभिचारिणः गोव्यवहारानिमित्तभूतान्। अव्यापकान् सार्वत्रिकगोव्यवहाराहेतुभूतान्। परिहृत्येत्यन्वयः। तत्र हेतुः व्यवहारानालोच्येति। सास्नाऽऽदिमत्स्वेव वृद्धैः क्रियमाणगोशब्दव्यवहारान् पशुत्वाऽऽदिमत्सु अक्रियमाणानित्यर्थः। लक्षणभूतं गोमात्रव्यापकभूतं ॥ एकमिति॥ धर्ममित्यनुषङ्गः। सम्बन्धं वाच्यत्वरूपम्। अयं पिण्डः गोपदवाच्यः सास्नाऽऽदिमत्वात् प्रागुपदेशेन ज्ञातगोपिण्डवत् यन्नैवं तन्नैवं यथाऽश्वाऽऽदिकमित्यन्वयव्यतिरेकिणा जानातीत्यर्थः। को भेदः पक्षयोरित्यत आह ॥ प्राचीनेति॥ लक्षणज्ञानाधीनसङ्केतग्रहपक्ष इत्यर्थः॥ अत्रेति॥ क्वचिदुपदेशाऽद्यधीनसङ्केतग्रहपक्ष इत्यर्थः।

(श्री.टि.) लक्षणस्वरूपाज्ञाने प्रमाणलक्षणस्य ज्ञातुमशक्यत्वात् लक्षणस्य लक्षणमाह ॥ लक्ष्यमात्रेति॥ स्वेन लक्षयितुं योग्यं लक्ष्यं तन्मात्रेत्यर्थः। स्वशब्देन सास्नाऽऽदिमत्वं ग्राह्यम्। मात्रशब्दोऽवधारणे लक्ष्य एव न त्वलक्ष्य इति। तथा च लक्ष्येतरावृत्तित्वे सति लक्ष्ये व्याप्त्या वर्तमानत्वं लक्षणस्य लक्षणमित्यर्थः। अत्र लक्ष्यशब्देन स्वाऽधारो ग्राह्यः। तथा च सास्नाऽऽदिमत्वरूपलक्षणे कथमिदं लक्षणमस्ति सास्नादिमत्वरूपलक्षणस्यैवात्र लक्ष्यत्वेन गवादिकस्यालक्ष्यत्वात् तदादाय लक्षणायोगात् इति चोद्यानवकाशः। स्वाऽधारेतरावृत्तित्वे सति स्वाऽधार एव व्याप्त्या वर्तमानत्वस्य सास्नाऽऽदिमत्वरूपलक्षणे सत्वात् इति ध्येयम्। असंभविनि एकशफत्वाऽदौ अतिव्याप्तिपरिहाराय लक्ष्ये वर्तमानत्वं इत्युक्तम्। शबलत्वाऽद्यव्यापकव्यावृत्त्यर्थं व्याप्त्येति। पशुत्वाद्यतिव्याप्तिव्यावृत्तये सत्यन्तमिति बोध्यम्। ननु लक्षणोक्तिर्व्यर्था प्रयोजनाभावात् इत्यत आह ॥ तदुक्तिरिति॥ शब्दव्यवहारार्थेति। व्यवह्रियतेऽनेनेति व्यवहारो वाच्यत्वज्ञानं व्युत्पत्तिरिति यावत्। स एवार्थः प्रयोजनं यस्याः सा तथोक्ता। एतच्च साक्षात्फलमित्यवगन्तव्यं परंपराफलं तु मोक्ष इत्युक्तत्वात्। तदेवोपपादयति ॥ सास्नाऽऽदिमानित्यादिना॥ प्रत्येति अनुमिनोति। व्युत्पत्तिः वाच्यवाचकभावसम्बन्धज्ञानम्।[1] ननु अयं गोशब्दवाच्य इत्याप्तवाक्येनापि व्युत्पत्तेः संभवात् कथं तस्या लक्षणफलत्वम्? इत्यत आह ॥ यदा त्विति॥ आदिपदेन प्रयोज्यप्रयोजकवृद्धव्यवहाररूपप्रमाणसंग्रहः। व्यक्तिविशेष एव व्युत्पत्तिरिति वर्तते। सर्वत्र समुदाये। तद्धर्मेषु गोधर्मभूतेषु पशुत्वशबलत्वसास्नाऽऽदिमत्वेषु। व्यवहारान् लोकैः क्रियमाणान्। व्यभिचारिणः अतिव्यापकान्। तद्वत्सु लक्षणभूतैकधर्मवत्सु। गोशब्दसम्बन्धं गोशब्दवाच्यत्वम्। गृह्णाति अनुमिनोति। ननु पक्षद्वयस्यापि को भेदः? इत्यत आह ॥ प्राचीनपक्ष इति॥ यदा स्वयमेव सास्नाऽऽदिमत्वरूपलक्षणं ज्ञात्वा तद्वत्सु गोशब्दव्युत्पत्तिः तदा विमताः सर्वे गोशब्दवाच्याः सास्नाऽऽदिमत्वात् व्यतिरेकेण घटवत् इति केवलव्यतिरेक्यनुमानेन भवति। दृष्टान्ताभावेनान्वयव्याप्त्ययोगात्। यदा तु

[1] इदं च "व्युत्पत्तिरिति वर्तते" इत्यग्रेतनवाक्यानन्तरं योजनीयमिति भाति।

(श्री. टी.) आप्तोपदेशेन[1] एकत्र व्युत्पन्नः पश्चाल्लक्षणाऽदिना सर्वत्र व्युत्पत्तिमेति तदा उक्तानुमाने आप्तोपदिष्टगो-व्यक्तेरेव अन्वयदृष्टान्तत्वोपपत्तेः व्यतिरेकस्यापि सम्भवेन अन्वयव्यतिरेक्यनुमानेनेति पक्षद्वयस्यापि भेद इत्यर्थः ।

(टी.) नाममात्रेण वस्तुसङ्कीर्तनमुद्देशः । स च लक्षणाऽद्युक्तिसम्भावनार्थः । अनुद्दिश्य कस्य लक्षणाऽदि[2] ब्रूयात् । विधा विभागः । तदुक्तिरवान्तरोद्देशार्था । युक्तायुक्तचिन्ता परीक्षा । सोद्देशविषया न सम्भवति । फलाभावेन नाममात्रे विवादायोगात् । लक्षणपरीक्षा तस्य लिङ्गत्व निश्चयार्था । न ह्यसंभवाव्याप्त्यादि[3]लक्षणस्वरूपासिद्धिभागासिद्धि[4]व्यभिचारापरिहारे लिङ्गता निश्चीयते । विभागपरीक्षा न्यूनाधिकसङ्ख्याव्यवच्छेदमुखेन विभागसमर्थनार्था । बुद्धिदोषनिवृत्ति-पर्यन्ता परीक्षायाः परीक्षा तत्सौष्ठवसिद्ध्यर्था । द्विधा चोद्देशादयः सामान्यतो विशेषतश्चेति ।

प्रमाणलक्षणस्यान्यैरेवोक्तत्वात् किमपूर्वनिर्माणेनेत्यतो वा प्रवक्ष्यामीत्युक्तम् । अन्योक्तीनाम-प्रकृष्टतां वक्ष्यति ।

लक्षणविभागः

द्विविधं लक्षणम्, यावल्लक्ष्यभावि अयावल्लक्ष्यभावि चेति । तत्राऽद्यं यथा, पृथु-बुध्नोदराऽकारो घट इति । द्वितीयं यथा, भोगाऽयतनं शरीरमिति । तत्राऽद्यमेव व्युत्पाद्यम् । तस्यैव सार्वत्रिकव्यवहारोपयोगित्वादिति भावेनोक्तम् ॥ स्वलक्षणमिति ॥ तदेव हि स्वरूपभूतं लक्षणं यत् यावल्लक्ष्यभावीति ।

(रा. टि.) अथेदानीं उद्देशाऽदीनां स्वरूपाऽदिकमाह ॥ नाममात्रेणेति ॥ मात्रपदेन लक्षणवाक्यव्य-वच्छेदः । आदिपदेन विभागविशेषलक्षणपरीक्षाणां ग्रहः । कस्य लक्षणं ब्रूयात् ? इत्युपलक्षणम् । कथं विभजेत् ? विशेषलक्षणं वा कथं ब्रूयात् ? लक्षणाऽदिविषयपरीक्षां वा कथं कुर्यात् ? इत्यपि ग्राह्यम् । क्वचित् लक्षणाऽदीति पाठः ॥ विधेति॥ अवान्तरभेदकीर्तनमित्यर्थः ॥ तदुक्तिरिति ॥ द्विविधं त्रिविधमिति विभागोक्तिरित्यर्थः॥ लिङ्गत्व-निश्चयार्थेति ॥ तस्य केवलव्यतिरेकित्वोक्तेरिति भावः ॥ स्वरूपेति ॥ असिद्धिपदमत्राप्यन्वेति । अनवस्था-निवृत्त्यर्थमाह ॥ बुद्धिदोषनिवृत्तिपर्यन्तेति ॥ अयुक्तत्वशङ्कारूपबुद्धिदोषेत्यर्थः ॥ उद्देशाऽदय इति ॥ उद्देश-लक्षणविभागपरीक्षा इत्यर्थः । एतेन प्रमाणानां इति मूलपदस्य उद्देशता सिद्ध्यतीति भावः । इतिशब्दः कण्ठोक्तस्य प्रोपसर्गोक्तस्य च लक्षणोद्देशादेः स्वरूपाऽद्युक्तिसमाप्तौ ॥ वक्ष्यतीति ॥ 'न प्रमासाधनं प्रमाणं' 'न चानुभूतिरेव प्रमाणं' इत्यादिनेति भावः । स्वेतिपदस्य कृत्यं वक्तुमाह ॥ द्विविधमिति ॥ भोगाऽ-यतनमिति ॥ जीवापेतशरीरे भोगाऽयतनत्वाभावादिति भावः । लक्ष्यभावीति इतिशब्दः श्लोकव्याख्यासमाप्तौ ।

---

[1] लक्षणेन [2] रा. लक्षणम् [3] वाव्याप्त्यतिव्याप्तिलक्षण [4] स्वरूपभागासिद्धि

(श्री·टि·)॥ नाममात्रेणेति॥ वस्तु सम्यक् कीर्त्यते प्रतिपाद्यतेऽनेनेति वस्तुसङ्कीर्तनम्। 'कृत्यल्युटो बहुलम्' इति करणे ल्युट्। वस्तुनः समीचीनप्रतिपत्तिसाधनमित्यर्थः। साधनं उद्देश इत्युक्ते कुठारेऽतिव्याप्तिः। तदर्थं प्रतिपत्तीति। एवमपि विभ्रमसाधने। अत उक्तं समीचीनेति। एवमपि समीचीनप्रतिपत्ति-साधने चक्षुरादिप्रमाणे। अत उक्तं नाम्नेति। शब्देनेत्यर्थः। शब्देन या वस्तुसमीचीन-प्रतिपत्तिः तत्साधनं, वस्तुसमीचीनप्रतिपत्तिकरणं शब्द इत्यर्थः। एवमपि लक्षणवाक्ये। अत उक्तं मात्रेति। तदर्थस्तु अविवरणरूपत्वम्। लक्षणवाक्यानां सर्वेषां लक्ष्यविवरणरूपत्वात्। तथा च समीचीनवस्तुप्रतिपत्तिसाधनाविवरणरूपः शब्द उद्देश इति फलितार्थः। अविवरणरूपः शब्द उद्देश इत्युक्ते गाव्यादिरूपे भाषाशब्दे गतं। अत उक्तं समीचीनेति। शब्दविशेषणमेतत्। अपभ्रंशभिन्नत्वं तदर्थः। अपभ्रंशभिन्नाविवरणरूपः शब्द उद्देश इत्युक्ते जबगडदश् इत्यादौ गतं। अत उक्तं वस्तुप्रतिपत्तिसाधनमिति। न च तस्यापि 'स्वं रूपं शब्दस्य' इत्युक्तत्वेन स्वाऽऽख्यवस्तुप्रतीतिसाधनत्वात् नातिव्याप्तिवारणमिति वाच्यम् वस्तुपदेन स्वप्रतिपाद्यस्वातिरिक्तवस्तुनो विवक्षितत्वात्। 'जबगडदश्' इत्यादौ निरर्थकत्वेन स्वप्रतिपाद्यस्वाति-रिक्तवस्तुप्रतिपत्तिसाधनत्वाभावात् नोक्तदोषः। शास्त्रबहिर्भूतैतादृशशब्देऽतिव्याप्तिवारणाय शास्त्रप्रविष्टत्वे सतीत्यपि शब्दविशेषणं द्रष्टव्यम्। तथा च शास्त्रप्रविष्टः अपभ्रंशभिन्नः स्वप्रतिपाद्यस्वातिरिक्तवस्तुसमीचीनप्रति-पत्तिसाधनाविवरणरूपः शब्द उद्देश इति पर्यवसितं लक्षणं द्रष्टव्यम्। ननु वस्तुप्रतिपत्तिसाधनाविवरणशब्द उद्देश इति शब्दघटितोद्देशलक्षणस्य मौनिकृतोद्देशेऽव्याप्तिः इति चेन्न। अत्र शब्दपदेन पदोपस्थित्यनुकूल वक्तृव्यापारमात्रस्य विवक्षितत्वात्। तत्रापि मानसिकव्यापारस्य सत्त्वादिति ध्येयम्।

अन्ये तु कीर्तनं उद्देश इत्युक्ते गङ्गाघोषेऽतिव्याप्तिः। तदर्थं समित्युक्तम्। ताल्वोष्ठपुटव्यापारेणोच्चारणं तदर्थः। तावन्मात्रं वन्ध्यासुत इति शब्दे गतं। अतो वस्त्विति। तथाऽपि काकरवे गतं। अतो नाम्नेति। संस्कृतनाम्नेति तदर्थः। तेन तस्यापि यत्किंचिन्नाम्ना वस्तुसङ्कीर्तनरूपत्वात् कथं अतिव्याप्तिवारणं? इति शङ्काऽनवकाशः। तथाऽपि गन्धवती पृथिवी इति लक्षणवाक्येऽतिव्याप्तिः। अत उक्तं मात्रेति। तदर्थस्तु असाधारणधर्मानुपरागेणेति। नन्वेवमपि पृथिवी इत्युद्देशे पृथिवीत्वरूपासाधारणधर्मोपरागेणैव वस्तुसङ्कीर्तन-सद्भावात् अव्याप्तिः[1]। अतो लक्ष्यतावच्छेदकातिरिक्तासाधारणधर्मानुपरागेणेति व्याख्येयम्। तथा च लक्ष्यतावच्छेदकातिरिक्तासाधारणधर्मानुपरागेण संस्कृतनाम्ना ताल्वोष्ठपुटव्यापारेण वस्तुसङ्कीर्तनं उद्देश इति पर्यवसितोऽर्थ इत्याहुः।

उद्देशस्य कथं लक्षणाऽयुक्तिसम्भावकत्वं? इत्यत आह ॥अनुद्दिश्येति॥ विधेति॥ प्रकारभेद-कथनमित्यर्थः। 'प्रकारवचने धाल्' इति स्मरणात् इति भावः ॥अवान्तरेति॥ अविभज्य कस्वावान्तरो-

[1] असम्भवः

(श्री. टि.) द्वेषाऽऽदिकं कुर्यात् ? इति भावः ॥ युक्तायुक्तेति ॥ लक्षितस्य लक्षणं उपपद्यते न वा इति विचारः परीक्षेत्यर्थः। ननूद्देशविषयिणी परीक्षा कुतो न सम्भवति ? इत्यत आह ॥ फलाभावेनेति ॥ उद्देशविषयिणी परीक्षा किं मानमित्युद्देशः कर्तव्यः ? उत प्रमाणमिति ? इत्येवंरूपा वक्तव्या । सा व्यर्था मानप्रमाणशब्दयोः एकार्थत्वेन तथाविधपरीक्षायाः फलाभावेन नाममात्रे विवादायोगात् इत्यर्थः । तस्य लक्षणस्य ॥ न हीति ॥ लक्षणस्यासम्भवित्वे तस्य हेतूकरणे स्वरूपासिद्धिः लक्षणस्याव्याप्तत्वे तस्य च हेतूकरणे भागासिद्धिः लक्षणस्यातिव्याप्तत्वे तस्य च हेतूकरणे व्यभिचारं इत्यर्थः । ननु परीक्षाविषयकपरीक्षाऽङ्गीकारेऽनवस्था स्यात् इत्यत आह ॥ बुद्धिदोषेति ॥ बुद्धिदोषशब्देनाप्रामाण्यशङ्कोच्यते । तावत्पर्यन्तमेवाप्रामाण्यशङ्कापरिहाराय परीक्षाविषयकपरीक्षा अङ्गीकार्या यावत्पर्यन्तं सुखाऽऽदौ नावतारः । ततः परं तु न शङ्क्यत एव । अतो नानवस्थेति भावः ।

यथोक्तम् 'न परीक्षाऽनवस्था स्यात् साक्षिसिद्धे त्वसंशयात' इति

॥ तत्सौष्ठवेति ॥ युक्त्यनुसन्धानरूपपरीक्षाया निःशङ्कप्रवृत्तिहेतुत्वापरपर्यायसौष्ठवेत्यर्थः ॥ वक्ष्यतीति ॥ "न प्रमासाधनं प्रमाणं". इत्यादिनेत्यर्थः । अतो युक्तमपूर्वनिर्माणमिति भावः ॥ यावल्लक्ष्यभावीति ॥ यावत्पर्यन्तं लक्ष्यं तावत्पर्यन्तं विद्यमानमित्यर्थः ॥ अयावदिति ॥ यावत्पर्यन्तं लक्ष्यं तावत्पर्यन्तं अभावीत्यर्थः ॥ भोगेति ॥ सुखदुःखानुभवो भोगः तदायतनं तदवच्छेदकमित्यर्थः । तथा च यदवच्छिन्ने आत्मनि भोगो जायते तत् शरीरम् । इदं च लक्षणं मृतशरीरेऽभावात् अयावल्लक्ष्यभावि इति भावः ॥ व्युत्पाद्यमिति ॥ व्युत्पादकेन वक्तव्यमित्यर्थः । ननु भगवत्पादैः स्वरूपभूतलक्षणकथनस्यैव प्रतिज्ञातत्वात् कथं यावल्लक्ष्यभाविलक्षणकथनाभिप्रायेण स्वलक्षणमित्युच्यते ? इत्यत आह ॥ तदेव हीति ॥

ननूद्देशक्रमकृत्वा कथं प्रमाणलक्षणमुच्यते ? अतो न्यूनतेत्यत आह ॥ प्रमाणानामिति ॥

### प्रमाण सामान्य लक्षणम्

(टी.) प्रमाणानामित्युद्देशे सिद्धे प्रमाणसामान्यलक्षणमाह

## यथार्थं प्रमाणम्

प्रमाणमिति लक्ष्यनिर्देशः । यथार्थमिति लक्षणोक्तिः । एवमुत्तरत्रापि ज्ञातव्यम् । यथार्थं यथावस्थितार्थविषयीकारि । अर्थविषयीकारित्वमात्रस्य संशयविपर्ययसाधारण्याद्विशेषणोपादानम् । अर्थविषयीकारित्वेनैव प्रमेयाऽऽदिव्युदासः । अर्यत इत्यर्थो ज्ञेयमुच्यते । अतो न गम्यविषयीकारिगताव्याप्तिः ।

प्रमाणविभागः

तद्विभागमाह

## तद्‍द्विविधम्

प्रमाणानामानन्त्येऽपि साक्षात्पारम्पर्येण याथार्थ्यज्ञापनार्थोऽयं विभागः ।

एतदेव दर्शयन् द्वे विधे उद्दिशति

## केवलमनुप्रमाणं च

साक्षाद्यथावस्थितार्थविषयीकारि केवलम् । परम्परया तादृशमनुप्रमाणमिति ।

(रा.टि.) यथार्थमित्यत्र यथाशब्दोऽनतिक्रमार्थः । अर्थशब्दः अर्यते ज्ञायत इति व्युत्पत्त्या वस्तुपरः । ऋ गतौ इति धातोः कर्मणि औणादिके थप्रत्यये अर्थ इति रूपसिद्धेः । अर्थं ज्ञेयं अनतिक्रान्तं यथार्थं इत्यव्ययीभावसमास इत्यभिप्रेत्य फलितार्थमाह ।। यथावस्थितार्थविषयीकारीति ।। येन प्रकारेण अवस्थितं ज्ञेयं तथैव विषयीकारि ज्ञेयाव्यभिचारि इति यावत् । यथावस्थितत्वमात्रस्य प्रमातृप्रमेययोः सत्वेऽपि उत्तरदलेन तन्निरास इत्याह ।। अर्थेति ।। अर्थपदस्य विषयपर्यायत्वं मत्वा यथावस्थितविषयविषयीकारित्वं गमनक्रिया-यामतिव्याप्तमिति शङ्कमानस्योत्तरमाह ।। अर्यत इति ।। ज्ञेयशब्दस्य सम्बन्धिशब्दत्वात् "पितुर्धनं पुत्रस्य" इत्यादाविव स्वोपाधिना स्वनिमित्तेन वा यत् ज्ञेयं उच्यते तद्विषयीकारि इत्यर्थः । भवति च घटाऽदिः ज्ञानतत्करणाभ्यां उपाधिनिमित्ताभ्यां ज्ञेयः । न च गमनोपाधिना गमनेन निमित्तेन वा ग्रामो ज्ञेयः । अतो नातिव्याप्तिरिति भावेनोक्तम् ।। अतो न गम्यविषयीकारिगताविति ।। न चैवं प्रमाणलक्षणे स्वज्ञेयेति स्वपदेन प्रमाणोक्तौ ज्ञप्तावन्योन्याऽश्रय आत्माऽश्रयो वेति शङ्क्यम् स्वशब्देन ज्ञानतत्करणमात्रोपादानेन प्रमितितत्करणरूपविशेषानुपादानात् इति भावः ।। तद्विभागमिति ।। प्रमाणविभागमित्यर्थः ।। एतदेवेति ।। साक्षात्त्वं पारंपर्यं च दर्शयन्नित्यर्थः ।। परंपरयेति ।। न चैवं लक्षणस्याननुगमेन परस्पराव्याप्तिरिति शङ्क्यम् । केवलप्रमाण इवानुप्रमाणेऽपि साक्षादेव यथावस्थितार्थविषयकत्वस्य सत्वात् । ज्ञानस्येव तत्करणानामपि सविषयकत्वात् । परं तु ज्ञानं विषयस्य ज्ञेयतां उपाधितया करणानि तु उपाधिजनकतया संपादयन्तीति ज्ञेयत्वसंपादनमात्र एव साक्षात् पारंपर्यं इति भावेनैव साक्षात् पारंपर्येणेत्युक्तत्वात् । न ह्येतावताऽव्या-प्त्यादिप्रसङ्गः सर्वत्र लक्षणेषु किंचिद्वैलक्षण्यस्य वक्तुं शक्यत्वात् इति तात्पर्यात् ।

(श्री.टि.) मन्दानां लक्ष्यलक्षणवैपरीत्यभ्रमवारणायाऽह ।। प्रमाणमितीति ।। एवमिति ।। एतन्न्याये-नेत्यर्थः ।। उत्तरत्रापीति ।। 'यथार्थज्ञानं केवलं' इत्यादावपीत्यर्थः ।। विशेषणेति ।। यथावस्थितेति विशेषणेत्यर्थः ।। अर्थविषयीकारित्वेनेति ।। न तदर्थं विशेषणान्तरं देयमित्यर्थः । प्रमेयाऽदीत्यत्राऽदिपदेन प्रमातृग्रहणम् ।

(श्री. टि.) ननु एवं यथावस्थितोऽर्थो यो गम्यरूपो ग्रामाऽऽदिः तद्विषयीकारित्वस्य गतावपि विद्यमानत्वात् अतिव्याप्तिरित्यत आह ॥ अर्यत इति ॥ ऋ गतौ इति धातोः अर्यते गम्यत इत्यर्थः । न च ज्ञेयत्वस्य केवलान्वयित्वेन गम्यस्यापि ग्रामाऽऽदेः ज्ञेयतया पुनः गतावतिव्याप्तिरिति वाच्यम् । स्वनिमित्तकज्ञेयत्वोपेतज्ञेयविषयीकारित्वस्य विवक्षितत्वात् । गम्यस्य ग्रामाऽऽदेर्ज्ञेयतायाश्च गमननिमित्तकत्वाभावात् । न चैवमात्माऽऽश्रयः । 'स्वगुणग्राहकमिन्द्रियं श्रोत्रं' इत्यादाविव स्वत्वेन प्रवेशस्य अदोषत्वात् इति द्रष्टव्यम् ॥ आनन्त्येऽपीति ॥ व्यक्तिभेदेनेत्यर्थः ॥ याथार्थ्येति ॥ यथावस्थितज्ञेयविषयीकारित्वेत्यर्थः ॥ एतदेवेति ॥ साक्षात् पारम्पर्येण याथार्थ्यमेवेत्यर्थः ॥ परम्परया तादृशमिति ॥ साक्षात् यथावस्थितार्थविषयीकारिज्ञानद्वारा स्वयमपि तादृशमित्यर्थः ॥

### केवलप्रमाणलक्षणम्

(टी.) प्राधान्याभिप्रायेण प्रथममुद्दिष्टं केवलं लक्षयति

## यथार्थज्ञानं केवलम्

संज्ञानिरुक्त्यैव लक्षणसिद्धौ शृंगग्राहिकया तज्ज्ञापनार्थं पृथगारम्भः । यथार्थेति संशयाऽऽदिव्युदासः ।

### संशयनिरूपणम्

अनवधारणज्ञानं संशयः । स द्विविधः । अनिर्दिष्टकोटिको निर्दिष्टकोटिकश्चेति । तत्र कोटीनामतिबाहुल्यादनिर्दिष्टकोटिरनध्यवसायापरनामा । यथा, 'किंसंज्ञकोऽयं वृक्ष' इति । द्वितीयोऽपि समानानेककोटिरन्यतरकोटिप्रधानश्चेति द्वेधा । तत्राद्यो यथा, 'किमयं ब्राह्मणस्तदितरो वा, इति । ऊहापरनामा द्वितीयो यथा, 'प्रायेणायं ब्राह्मण' इति ।

### नैयायिकैकदेशिमते संशयकारणानि

प्रत्येकं निश्चायकाभावसहकृतसमानासमानधर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धिजन्मा पञ्चधा भिद्यत इत्येके । तद्यथा, समानधर्मात् दीर्घत्वात् 'स्थाणुर्वा पुरुषो वा' इति । असमानधर्मात् आकाशविशेषगुणत्वात् 'शब्दो नित्योऽनित्यो वा' इति । विप्रतिपत्तेः 'भौतिकानीन्द्रियाणि उत अभौतिकानि' इति । उपलब्धेः 'किं सदिदमुदकमुतासत्' इति । अनुपलब्धेः 'किमत्र यक्षोऽस्ति न वा' इति ।

### उदयनमते संशयकारणानि

उपलब्ध्यनुपलब्ध्योः समानधर्म एवान्तर्भावात् त्रैविध्यमित्यपरे[1] । समाने हि सदसतोरुपलब्धत्वानुपलब्धत्वे इति ।

---

[1], रा. त्रैविध्यमित्यन्ये.

### स्वमते कारणम्

**असमानधर्मविप्रतिपत्त्योरपि समानधर्म एवान्तर्भावयितुं शक्यत्वात् ऐकविध्यमिति तत्वम् ।**

### विपर्ययलक्षणम्

**विपरीतनिश्चयो विपर्ययः । यथा, शुक्तिकायामिदं रजतमिति ।**

**ज्ञानमित्यनुप्रमाणव्युदासः । अनुमानादेरपि स्वविषये केवलत्वान्नातिव्याप्तिः ।**

(रा. टि) ॥ प्राधान्येति ॥ साक्षात् ज्ञेयविषयकत्वेनेति भावः ॥ संज्ञानिरुक्त्येति ॥ प्रकृष्टं मानं प्रमाणम् । प्रकृष्टत्वं च अर्थाऽव्यभिचारित्वम् । तथा केवलं, न त्वन्यजनकम् । अन्यत् अनुसृत्य प्रमाणं अनुप्रमाणं इत्यादिरूपेणेत्यर्थः ॥ शुद्धग्राहिकयेति ॥ शुद्धग्रहणेनेत्यर्थः । 'ग्रह उपादाने' इत्यतः 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' इति ण्वुल्प्रत्ययस्य अकादेशे ग्राहिकेति रूपसिद्धेः । संशयाऽदीत्यादियदेन विपर्ययग्रहः ।

तयोः स्वरूपं निर्धारयति ॥ अनवधारणेत्यादिना इदं रजतमितीत्यन्तेन ॥ निश्चयशब्दितावधारण-भिन्नं ज्ञानमित्यर्थः । ज्ञानमिति घटाऽदिव्युदासः । अनवधारणमिति निश्चयस्य । संशयभिन्नत्वेन प्रतीयमानानां संशय एवान्तर्भाव इति ज्ञापनाय तद्विभागमाह ॥ स द्विविध इत्यादिना ॥ समानेति ॥ समाने अनिर्धारिते अनेके कोटी यस्य संशयस्य स तथा । संशयपदं सर्वत्रान्वेति ॥ प्रत्येकमिति ॥ अनिर्दिष्टनि-र्दिष्टान्यतरकोटिप्रधानेति[1] त्रिविधोऽपि संशयः प्रत्येकं एकैकमित्यर्थः । धर्मपदं समानेत्यत्राप्यन्वेति । कोटिद्वय-साधारणेत्यर्थः । निश्चायकाभावसहकृताभिः समानासमानधर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धिभिः जन्म यस्यासौ तथोक्तः । भवन्निति शेषः । भौतिकानीति तार्किकाः । अभौतिकानीति साङ्ख्याऽदयः । विप्रतिपत्तेः उपलब्धेः इत्यादि तु पंचमी । जातः संशय इति शेषः ॥ किं सदिति ॥ कूपखननानन्तरं उपलभ्यमानमुदकमिति योज्यम् ॥ अनुपलब्धेरिति ॥ अस्मिन् वटे यक्षोऽस्तीति केनचिदुक्ते अनुपलम्भात् जायते संशयः 'किमत्र यक्षोऽस्ति न वा' इतीत्यर्थः । सत्वासत्वरूपकोटिद्वयसाधारण्यं उपलब्ध्यनुपलब्ध्योरुपपादयति ॥ समाने हीति ॥ इतिशब्दस्य इत्यन्ये आहुः इत्यन्वयः ॥ अन्तर्भावयितुं शक्यत्वादिति ॥ असमानो हि धर्मो न स्वरूपेण[2] संशयहेतुः । विशेषस्मरणकारणत्वाभावात् । किं तु ? व्यावृत्तिमुखेनैव । तथा च नित्यव्यावृत्तत्वं अनित्यस्य धर्मे अनित्यव्यावृत्तत्वं नित्यस्य धर्मे अस्तीति नित्यव्यावृत्तत्वं अनित्यधर्मसाधारणः अनित्यव्यावृत्तत्वं नित्यधर्मसाधारण एवेति संशयहेतुभूतो द्वावपि धर्मौ साधारणावेव । न त्वेकेनैव समानधर्मेण भाव्यमिति नियमोऽस्ति । भौतिकत्वेन प्रतिपन्नत्वं भौतिकमात्रसमानं अभौतिकत्वेन प्रतिपन्नत्वं अभौतिकसाधारणमिति विप्रतिपत्तिरपि समानधर्म एवेत्येवंरूपेणेति भावः ।

---

[1] अनिर्दिष्टनिर्दिष्टसमानानेककोट्यन्यतरकोटिप्रधानेति

[2] स्वरूपेण ज्ञातः

(रा. टि.) ॥ विपरीतेति ॥ सम्यङ्निश्चयव्युदासायैतत् । विपरीतज्ञानमित्यस्य संशयेऽतिव्याप्तेः निश्चय इत्युक्तिः । केवलप्रमाणलक्षणगतयथार्थपदकृत्यमियता ग्रन्थेनोक्त्वा ज्ञानपदकृत्यमाह ॥ ज्ञानमितीति ॥ ननु यथार्थलिङ्गज्ञाने यथार्थशब्दज्ञाने च लिङ्गिनि वाक्यार्थे अनुप्रमाणरूपे केवलप्रमाणलक्षणं विशिष्टमप्यतिव्याप्तं इत्यत आह ॥ अनुमानाऽदेरिति ॥ लिङ्गज्ञानाऽदेः स्वविषये लिङ्गे शब्दे चेत्यर्थः

(श्री. टि.) ॥ संज्ञानित्वत्वैवेति ॥ साक्षात् परम्परयेत्युक्तरीत्येत्यर्थः ॥ भृङ्गग्राहिकयेति ॥ भृङ्गग्राहिकान्यायेनेत्यर्थः ॥ तज्ज्ञापनार्थमिति ॥ साक्षात् यथावस्थितार्थविषयीकारित्वाऽदिज्ञापनार्थमित्यर्थः । संशयाऽदीत्यत्राऽदिपदेन विपर्ययग्रहणम् ।

ननु संशयविपर्ययतत्साधनानामेवाज्ञाने तत्रातिव्याप्तिज्ञानमपि न सम्भवति इत्यतः संशयलक्षणं तावदाह ॥ अनवधारणज्ञानमिति ॥ प्रमाव्युदासायाऽद्यं विशेषणम् । घटाऽदिव्युदासाय द्वितीयम् ।

अत्र अवधारणत्वं नाम यद्यपि न तावदेककोटिव्यवच्छेदविषयकत्वे सति अपरकोटिविषयकत्वं वक्तुं युक्तम्, तद्भिन्नत्वस्य 'अयं घटः' इत्यादावपि सत्वेन अतिव्याप्त्यापत्तेः, नापि निश्चयत्वम् संशयभिन्नज्ञानत्वस्यैव निश्चयत्वेन अन्योन्याऽश्रयप्रसङ्गात्, तथाऽपि एकाऽकारावगाहिज्ञानत्वं विवक्षितम् । तथा च तद्भिन्नत्वं अनवधारणत्वम् । तथा च अनेकाऽकारावगाहिज्ञानत्वं संशयत्वं इति पर्यवस्यति । नन्विदमप्ययुक्तम् स्थाणुपुरुषौ इति समूहाऽलम्बने अतिव्याप्तेः । एकस्मिन् धर्मिणि इति विवक्षायामपि अयं वृक्षः शिंशपा च इति निश्चये अतिव्याप्तेः । विरुद्धानेकाऽकारविवक्षायां च इदं रजतं इति विभ्रमे अतिव्याप्तेः। इति चेन्न । एकस्मिन् धर्मिणि भासमानविरुद्धानेकाऽकारावगाहिज्ञानत्वस्य विवक्षितत्वात् । इदं रजतं इत्यत्र इदन्त्वरजतत्वयोः विरोधभाने प्रवृत्तिरेव न स्यात् । अतो नोक्तदोष इति ध्येयम् ।

नन्वत्र ज्ञानपदं व्यर्थम् । न च घटाऽदौ अतिव्याप्तिपरिहाराय सार्थकमिति वाच्यम् । 'नञिवयुक्तमन्यसदृशाधिकरणे' नञ्युक्तं इवयुक्तं च तदन्यस्मिन् तत्सदृशे चास्तीत्यर्थः । यथा अनश्वः इत्युक्ते अश्वादन्यः अश्वसदृशः रासभ एव लभ्यते न घटाऽदिः, चन्द्रमण्डलमिव इत्युक्ते चन्द्रमण्डलभिन्नं चन्द्रमण्डलसदृशं मुखं लभ्यते, तद्वत् इहापि अनवधारणं इत्युक्ते अवधारणभिन्नं अवधारणसदृशमेव लभ्यते । तथा च घटाऽदौ अवधारणसादृश्याभावेन अतिव्याप्त्यभावात् ज्ञानपदं व्यर्थमेव इति चेत् । सत्यम् । अवधारणसादृश्यं ज्ञानत्वेनैव विवक्षितमिति ज्ञानग्रहणम् । अन्यथा घटाऽदावपि वस्तुत्वाऽदिना अवधारणसादृश्यस्य सद्भावात् पुनरतिव्याप्तिः स्यात् इति ध्येयमिति प्रतिभाति ।

एवं संशयपमेयमुक्त्वा इदानीं तत्साधनप्रदर्शनाय न्यायैकदेशिनां मतमाह ॥ प्रत्येकमित्यादिना ॥ प्रत्येकमिति द्विविधोऽपि[1] संशय इत्यर्थः ॥ समानासमानेति ॥ साधारणासाधारणेत्यर्थः ॥ विप्रतिपत्तेरिति ॥

[1] त्रिविधोऽपि

(श्री॰ टि॰) इन्द्रियेषु वैशेषिकसाङ्ख्ययोः भौतिकत्वाभौतिकत्वविप्रतिपत्तेः सकाशात् इत्यर्थः । अस्याः संशयहेतुत्वं च उत्तरत्रान्तर्भावकथनसमये सम्यगुपपादयिष्यामः ॥ अभौतिकानीति ॥ केवलाऽहङ्कारिकाणीत्यर्थः ॥ उपलब्धेरिति ॥ कूपखननानन्तरं जलोपलब्धौ सत्यां निश्चायकमपश्यतः सन्देहो भवति 'किं प्राक् सदेवोदकं कूपखननाभिव्यक्तं सत् उपलभ्यते उत असदेवोत्पन्नं[1] इत्यर्थः ॥ अनुपलब्धेरिति ॥ यक्षः पिशाचः । अस्मिन् वटे पिशाचोऽस्ति इति वार्तां श्रुतवतो वटसमीपं गतस्य तत्र पिशाचानुलब्धौ सत्यां निश्चायकाभावे संशयो भवति 'किं विद्यमान एव पिशाचः अन्तर्धानशक्त्या नोपलभ्यते ? किं वा अविद्यमान एव ?' इति ।

न्यायैकदेशिनं उदयनमुखेन दूषयति ॥ उपलब्ध्यनुपलब्ध्योरिति ॥ उपलब्ध्यनुपलब्ध्योः सदसत्साधारण्यमुपपादयति ॥ समाने हीति ॥ उपलब्धिर्हि सतामेव घटाऽदीनां दीपाऽरोपणेन दृष्टा । असतां च कुलालाऽदिव्यापारानन्तरं दृष्टा । इदं चोदकमुपलभ्यते । अतः 'किं सदेव उपलभ्यते उत असदेव' इति जायमानः संशयः साधारणधर्मजन्य एव । तथा अनुपलब्धिः सतां ईश्वराऽदीनां असतां शशविषाणाऽदीनां दृष्टा । अयं च यक्षो नोपलभ्यते । अतः 'किं सन्नेव नोपलभ्यते उत असन्नेव' इत्येवं साधारणधर्मजन्य एवायमपि संशयः इति । एवमुपलब्ध्यनुपलब्ध्योः साधारणधर्म एवान्तर्भावात् त्रीण्येव संशय कारणानि इत्यर्थः ।

उदयनमतमप्ययुक्तमित्याशयेन स्वयं सिद्धान्तमाह ॥ असमानधर्मेति ॥ अयमर्थः । आकाशविशेषगुणत्वाऽद्यसाधारणधर्मो हि नाज्ञात एव संशयहेतुः तथात्वे सुषुप्तिदशायामपि तद्धेतुत्वप्रसङ्गात् । किं तु ? ज्ञात एव । तज्ज्ञानं च नाऽऽकाशविशेषगुणत्वाऽदिना स्वरूपेण । तथा हि । साधारणासाधारणाऽदिधर्मज्ञानस्य संशयहेतुत्वं कोटिस्मरणद्वारेणैव वाच्यम् प्रकारान्तरेण उपयोगादर्शनात् । असाधारणधर्मस्य स्वरूपेण ज्ञानं च न कोटिद्वयस्मरणजनकम् । न हि शब्दनिष्ठाऽऽकाशविशेषगुणत्वज्ञाने नित्यानित्यत्वकोट्युपस्थितिर्भवति । अतो नित्यानित्यव्यावृत्तत्वेनैव तज्ज्ञानं वक्तव्यम् । आकाशविशेषगुणत्वं नित्यव्यावृत्तं अनित्यव्यावृत्तं इति ज्ञाने हि शब्दस्य नित्यव्यावृत्तधर्मवत्त्वं अनित्यव्यावृत्तधर्मवत्त्वं च ज्ञायते । तेन नित्यव्यावृत्तधर्मवत्त्वज्ञानेन अनित्यकोटेः[2] अनित्यव्यावृत्तधर्मवत्त्वज्ञानेन नित्यत्वकोटेः उपस्थितिः नित्यव्यावृत्तधर्मवत्त्वस्य अनित्यत्वसहचरितत्वेन घटाऽदौ, अनित्यव्यावृत्तधर्मवत्त्वस्य नित्यत्वसहचरितत्वेन आकाशाऽदौ च दर्शनात् । ततश्च एवं व्यावृत्तिमुखेन ज्ञातस्य आकाशविशेषगुणत्वाऽद्यसाधारणधर्मस्य कोटिस्मरणकारणत्वमस्तीति युक्तं तस्य संशयहेतुत्वम् । नन्वस्त्वेवं व्यावृत्तिमुखेन ज्ञात एव असाधारणधर्मः संशयहेतुः तथाऽपि तस्य साधारणधर्म एवान्तर्भावः कथं ? इति चेत् उच्यते । उक्तरीत्या नित्यानित्यव्यावृत्तत्वेन ज्ञातो ह्यसाधारणधर्मः संशयहेतुः । एवं च नित्यव्यावृत्तधर्मवत्त्वं अनित्ये घटाऽदौ संशयधर्मिणि शब्दे च साधारणम् । अनित्यव्यावृत्तधर्मवत्त्वं च नित्ये गगनाऽदौ

---

[1] इति, इत्यर्थः [2] अनित्यत्व

(श्री. टि.) शब्दे च साधारणम् । ननूर्ध्वतालक्षणसाधारणधर्मस्य एकस्यैव कोटिस्मरणद्वारा संशयहेतुत्वं दृष्टम् । इह तु नित्यव्यावृत्तधर्मवत्त्वं अनित्यव्यावृत्तधर्मवत्त्वं चेति धर्मद्वयं साधारणमुक्तम् । तत्कथं धर्मद्वयस्य संशय-हेतुत्वं ? इति चेन्न । एकस्येव धर्मद्वयस्यापि संशयहेतुत्वे बाधकाभावात् । उक्तं च पद्धतौ । न ह्येकेनैव साधारणधर्मेण भाव्यमिति नियमोऽस्तीति । ननु च धर्मिकोटिद्वयाऽलिङ्गित एव हि धर्मः साधारणधर्मः यथा ऊर्ध्वताऽऽदिः । प्रकृते च नित्यव्यावृत्तधर्मवत्त्वं अनित्यव्यावृत्तधर्मवत्त्वं च नित्यत्वानित्यत्वरूपैकैककोटि-सहचरितमेव हि जातं, न तदुभयसहचरितं । अतः कथमेतयोः साधारण्यं ? इति चेत् धर्मिकोट्यालिङ्गित धर्मत्वमेव हि साधारणधर्मत्वं लाघवात्, तावत एव कोटिस्मरणोपयोगित्वाच्च । न तु कोटिद्वयाऽलिङ्गितत्वं गौरवात् । अत एव तत्वप्रकाशिकायां तत्र तत्राधिकरणेषु धर्मद्वयस्याऽपि संशयबीजत्वमुक्तमिति ध्येयम् ।

एवं विरुद्धार्थकवाक्यद्वयजन्यप्रतीतिद्वयरूपाया विप्रतिपत्तेरपि साधारणधर्मवत्वेनैव[1] संशयजनकत्वं न पृथक्त्वेन । तथा हि ; न तावत् अयं संशयो वैशेषिकसाङ्ख्ययोः । तयोः भौतिकत्वाऽदिनिश्चयवत्वात् । अत इन्द्रियाणि भौतिकान्यभौतिकानीति वैशेषिकसाङ्ख्यवाक्याभ्यां तावदिन्द्रियाणि भौतिकत्वाऽदिना प्रतीयन्ते, अनयोश्च प्रतीत्योर्न द्वयोरपि प्रामाण्यं अप्रामाण्यं वा युक्तम् परस्परविरुद्धत्वेन वस्तुविकल्पप्रसङ्गात् वस्तुनो निःस्वभावत्वाऽपत्तेश्च, उभयत्राप्यनिश्चयेन अन्यतरप्रामाण्यनिश्चयोऽप्यनुपपन्नः, अतः किमत्र भौतिकत्वप्रतीतिः प्रमाणं उत अभौतिकत्वप्रतीतिः इति प्रतीतिद्वयप्रामाण्ये सन्दिहानः अर्थे भौतिकत्वाऽदावपि सन्देहवान् भवति तटस्थः इति वक्तव्यम् । एवं च वाक्यद्वयजन्यभौतिकत्वाऽदिप्रतीतिलक्षणसाधारणधर्मदर्शनजन्य एव अयं भौतिकत्वाऽदिसंशय इत्यायातम् । भौतिकत्वेन प्रतीतेश्च धर्मिभूतेष्विन्द्रियेषु कोटिभूतेषु पृथिव्यादिषु च विषयतासंबन्धेन सत्वात् साधारण्यम् । एवं अभौतिकत्वेन प्रतीतेरपि धर्मिभूतेषु इन्द्रियेषु कोटिभूतेषु कालादिषु च विषयतासंबन्धेन सत्वात् साधारण्यमुपपादनीयम् । अत एव पद्धतौ साधारणधर्मभूतायाः प्रतीतेः धर्मिकोट्यालिङ्गितत्वं विषयतासंबन्धेनोपपादयितुमेव तथा तथा प्रतिपन्नत्वं इत्यभिहितम् इत्यवगन्तव्यम् ।

संशयाऽदिव्युदास इत्यत्र आदिपदोक्तं विपर्ययं लक्षयति ।। विपरीतनिश्चय इति ।। विपरीतेति सम्यङ्नि-श्चयव्युदासः । निश्चय इति संशयरूपज्ञानस्येति विवेकः । शुक्तिकायां इदं रजतं इत्यादिरूपोऽयं विपर्ययः प्रत्यक्षानुमानाऽगमाऽभासेभ्यो जायत इति विपर्ययकारणं च द्रष्टव्यम् ।

एवं केवलप्रमाणलक्षणगतयथार्थपदस्य कृत्यमुक्त्वा ज्ञानपदस्य कृत्यमाह ।। ज्ञानमितीति ।। अनुप्रमाणेऽपि परम्परया यथावस्थितार्थ[2]ज्ञेयविषयीकारित्वरूपयाथार्थ्यसद्भावात् अतिव्याप्तिः स्यात् अतो ज्ञानग्रहणमित्यर्थः । नन्वेवं लिङ्गज्ञानवाक्यज्ञानरूपयोः अनुमानाऽगमलक्षणानुप्रमाणयोरतिव्याप्तिः तयोरपि यथार्थज्ञानत्वात् इत्यत

[1] धर्मत्वेनैव, [2] यथावस्थितज्ञेय,

(श्री. टि.) आह ॥ अनुमानाऽदेरपीति ॥ स्वविषय इति ॥ लिङ्गवाक्यरूपे स्वविषय इत्यर्थः। लिङ्गिवाक्यार्थापेक्षया अनुप्रमाणत्वेऽपीति शेषः। अयमाशयः। यथार्थत्वे सति ज्ञानत्वमेव न लक्षणम् येन लिङ्गज्ञानाऽदावतिव्याप्तिः स्यात्। किं तु? यद्विषयापेक्षया यथावस्थितार्थविषयीकारित्वरूपं याथार्थ्यं साक्षात्तद्विषयकज्ञानत्वमेव लक्षणत्वेन विवक्षितम्। एवं च लिङ्गज्ञानवाक्यज्ञानयोः लिङ्गिवाक्यार्थापेक्षया याथार्थ्यविवक्षायां तत्र साक्षात् तद्विषयकत्वांशाभावात् नातिव्याप्तिः। लिङ्गवाक्यरूपविषयापेक्षया याथार्थ्योपादाने तु तत्र साक्षात् तद्विषयकज्ञानत्वस्यापि सत्वेन लक्ष्यत्वात् न कुत्राप्यतिव्याप्तिरिति।

### अनुप्रमाणलक्षणम्

(टी.) अनुप्रमाणलक्षणमाह

## तत्साधनमनुप्रमाणम्

तदिति यथार्थज्ञानपरामर्शः। यथार्थेति संशयाऽदिसाधनदुष्टेन्द्रियसन्निकर्षाऽदिव्युदासः। ज्ञानग्रहणमनुप्रमाणसाधननिवृत्त्यर्थम्। साधनमिति केवलप्रमाणव्युदासः। अनुमानाऽदेरपि लिङ्ग्यादि विषयेऽनुप्रमाणत्वात्। हेतुरित्युच्यमाने प्रमातृप्रमेययोरपि प्रसङ्गात् साधनग्रहणम्। सतोरपि कर्तृकर्मणोर्यदभावात् कार्याभावो यदनन्तरं चासति प्रतिबन्धे भवत्येव कार्यं तदुच्यते साधनमिति। यथा व्यापारवान् कुठारः। अत एव न यादृच्छिकसंवादिलिङ्गविभ्रमादावतिव्याप्तिः। यथार्थमित्येवोक्ते केवले अतिव्याप्तिः। ज्ञानमित्येवोक्ते तत्र संशयाऽदौ च। प्रत्यक्षे अव्याप्तिश्च। साधनमित्येवोक्ते कुठाराऽदौ। अतो विशिष्टग्रहणम्। प्रमावान् प्रमाता। प्रमाविषयः प्रमेयम्। यथार्थज्ञानं प्रमा। प्रमातुः प्रमेयत्वेऽपि विवक्षावशात् पृथगुक्तिः।

### अथ केवलप्रमाणनिरूपणम्

केवलप्रमाणं विभजति

## केवलं चतुर्विधम्

अयमपि महावैलक्षण्यज्ञापनार्थो विभागः। चतस्रो विधाः प्राधान्यक्रमेणोद्दिशति

## ईशलक्ष्मीयोग्ययोगिभेदेन

ज्ञानिनामेवं भेदेन निमित्तेन ज्ञानस्यापि चातुर्विध्यम्। ज्ञानपदं वा संयोज्यम्।

(रा.टि.) ननु प्रागुक्तदिशा लिङ्गाऽदिस्वविषये केवलप्रमाणभूते लिङ्गज्ञाने वाक्यज्ञाने च क्रमात् अनुमितौ वाक्यार्थज्ञाने च साधनत्वसत्वात् अतिव्याप्तिः इत्यतो यदंशे लक्षणं तदंशे लक्ष्यत्वमस्तीति[1] न दोष इत्याह

---

[1] लक्ष्यत्वमप्यस्तीति।

(रा. टि.) ॥ अनुमानाऽदेरिति ॥ लिङ्ग्यादीति ॥ लिङ्गिनि वाक्यार्थे चेत्यर्थः ॥ प्रमातृप्रमेययोरिति ॥ यद्यपि प्रमेयमपरोक्षज्ञानेऽपि न हेतुः धर्मिग्राहकप्रमाणसिद्धहेतुताकेन्द्रियसन्निकर्ष एवोपक्षीणत्वात् तस्य, तथाऽपि अभ्युपेत्यवादेन वा नियतपूर्ववृत्तित्वमात्रेण वा एतदुक्तिः। साधनस्वरूपं व्यक्तीकुर्वन्नेव तेन तयोर्निरासप्रकारमाह ॥ सतोरपीति ॥ कर्तृकर्मणोः प्रमातृप्रमेययोः। तथैव वाच्येऽप्येवमुक्तिः[1] कर्तृकर्मणोः कारकतया 'क्रियां कुर्वद्धि कारकं' इति प्रसिद्धेः हेतुत्वमस्तीति सूचनाय ॥तदुच्यत इति॥ तादृशं च करणसन्निकर्षो वा सन्निकृष्टं करणं वेति भावः ॥ व्यापारवानिति ॥ उपमनाऽदिर्व्यापारः ॥अत एवेति ॥ उक्तरूपसाधनग्रहणादेवेत्यर्थः।

न च दैवात् वह्निमति प्रदेशे धूलीपटले धूमभ्रमात् जायमानवह्निज्ञानस्य प्रमात्वेन तत्र भ्रमे[2] उक्तरूप-साधनत्वमप्यस्ति, तथा पञ्चफलोपेते तीरे 'नदीतीरे पञ्च फलानि सन्ति' इत्यनाप्तवाक्ये च अस्त्येव यथार्थ-ज्ञानसाधनत्वम्, तस्मिन् सत्येव लिङ्गिज्ञानाऽदेरुदयात् इति वाच्यम्। यदभावात् इत्यनेनैव तन्निरासात्। न हि लिङ्गभ्रमाऽदियादृच्छिकसंवादिनोऽभावे कार्यानुदयोऽस्ति। लिङ्गप्रमित्याऽपि तदुपपत्तेः इति भावः। केचित्तु अत एवेत्यस्य यदभावादिति विशेषणोपादानादेवेत्यर्थ इत्याहुः।

पूर्वं प्रमातृप्रमेययोरिति व्याहृतम्। तयोः स्वरूपमाह ॥ प्रमावानिति ॥ स्वस्वामिभावसम्बन्धो मतुबर्थः। स तु संयोगसमवायतादात्म्याऽदिः। विषयो नाम यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विषय इत्यवधेयम्। यज्ज्ञानमित्यत्र कर्मधारयः, न षष्ठीतत्पुरुषः। का प्रमा? इत्यत आह ॥ यथार्थेति ॥ केवल-लक्षण इवात्रापि पदकृत्यं ज्ञेयम् ॥ विवक्षेति ॥ तद्वत्त्वतद्विषयत्वरूपेत्यर्थः ॥ अयमपीति ॥ विभाग इत्यन्वयः। केवलप्रमाणावान्तरविभागः। ईशज्ञानस्य लक्ष्मीज्ञानात् तस्य च तदितरज्ञानात् महावैलक्षण्येत्यर्थः। केवलविभागमुपक्रम्य ईशाऽदिभेदोक्तिरसङ्गता इत्यत आह ॥ ज्ञानिनामिति ॥ भेदेनेति हेतौ तृतीया इति मत्वा तृतीयाऽर्थमाह ॥ निमित्तेनेति ॥

(श्री. टि.) ॥ अनुप्रमाणसाधननिवृत्त्यर्थमिति ॥ अत्र अनुप्रमाणशब्देन सन्निकृष्टेन्द्रियविवक्षायां अनुप्रमाणं यत् इन्द्रियं तत्साधनं तदवयवः तन्निवृत्त्यर्थमिति व्याख्येयम्। इन्द्रियसन्निकर्षविवक्षायां तु अनुप्रमाण-भूतो यः सन्निकर्षः तत्साधनभूतं यत् इन्द्रियं तन्निवृत्त्यर्थं ज्ञानग्रहणम् इति व्याख्येयम् ॥ हेतुरित्युच्यमान इति ॥ यथार्थज्ञानकारणम् इत्युच्यमान इत्यर्थः। प्रसङ्गात् अनुप्रमाणत्वप्रसङ्गात् इत्यर्थः। साधनशब्देन कथं तन्निवृत्तिः? इत्यतः साधनत्वं निर्वक्ति ॥ सतोरपीत्यादिना ॥ यज्जातीयानन्तरं नियमेन कार्योत्पत्तिः तदेव साधनं विवक्षितम्। तत्र नियमांशविवरणं सतोरपि कर्तृकर्मणोः यदभावात् इत्यादिना कृतमिति द्रष्टव्यम्। यादृच्छिकसंवादिलिङ्गविभ्रमे[3]ऽतिव्याप्तिमाशङ्क्यातिदेशेन परिहरति ॥ अत एवेति ॥ निरुक्त-

---

[1] वाच्यत्वेऽप्येवमुक्तिः, [2] धूमभ्रमे [3] विभ्रमाऽदावतिव्याप्तिमाशङ्क्य

(श्री॰ टि.) साधनत्वाभावादेवेत्यर्थः । तत्र केवले ।। प्रत्यक्ष इति ।। ज्ञानत्वरूपलक्षणस्य लिङ्गज्ञानवाक्यज्ञान-रूपानुमानागमयोः सत्वेऽपि प्रत्यक्षेऽभावात् अव्याप्तिरित्यर्थः ।। विशिष्टग्रहणमिति ।। यथार्थज्ञानसाधनमिति समग्रलक्षणस्वीकरणं युक्तमित्यर्थः ।

हेतुरित्युच्यमाने प्रमातृप्रमेययोरपि प्रसङ्गात् इत्युक्तम् । तत्र, कः प्रमाता ? किं प्रमेयम् ? इत्यतः तयोर्लक्षणमाह ।। प्रमावानिति ।। ननु जन्यज्ञानं मनोनिष्ठमिति सिद्धान्तः 'कामः सङ्कल्प' इति श्रुतेः । तथा च अतिव्याप्त्यसम्भवौ स्यातामिति चेत् । उच्यते । यथा हि सिद्धान्ते इच्छावत्वं नाम इच्छास्वामित्व-मेवाभिप्रेतम् न तदाधारत्वम् । यथोक्तमनुव्याख्याने

'इच्छास्वामित्वमेवोक्तमिच्छावत्वं न चापरम्' इति ।

एवमेव प्रमावत्वं नाम तत्स्वामित्वमेवात्राभिप्रेतं, नान्यत् । एवं चैतादृशं प्रमावत्वं मनसि नास्ति, अस्ति चाऽऽत्मनि इति नातिव्याप्त्यसम्भवाविति भावः । श्रुतिस्तु स्वामित्वात् अन्यस्योपादानत्वस्याभिधायिनीऽति ज्ञातव्यम् । यथोक्तमनुव्याख्याने

'.........................तस्मात्सा तदन्याभिधायिनी' इति ।

प्रमातृप्रमेयान्तर्गतप्रमालक्षणमाह ।। यथार्थेति ।। संशयविपर्ययनिरासाय यथार्थेत्युक्तम् । करण-व्यावृत्त्यर्थं ज्ञानमिति । अस्मन्मते स्मृतेरपि लक्ष्यत्वात् नातिव्याप्तिरित्याशयेन अनुभव इत्यनुक्त्वा ज्ञानमित्ये-वोक्तम् । अत्र यत् ज्ञानं यदंशे यथावस्थितार्थमात्रविषयीकारि[1] तत् ज्ञानं तदंशे प्रमा इति विवक्षितम् । अतः 'इदं रजतम्' इति ज्ञानस्यापि इदमंशे यथार्थज्ञानत्वात् अतिव्याप्तिरिति शङ्का परास्ता । तदंशे निरुक्तप्रमात्व-सद्भावेन लक्ष्यत्वात् इति ध्येयम् ।

ननु प्रमातर्यपि प्रमाविषयत्वसद्भावेन प्रमेयलक्षणेनैव प्रमातुरपि संगृहीतत्वात् प्रमातुः प्रमेयात् पृथगुक्तिर्व्यर्था । तथा हि सति प्रमेयलक्षणस्य तत्रातिव्याप्तिप्रसङ्ग इत्याशङ्क्याऽऽह ।। प्रमातुरिति ।। विवक्षावशादिति ।। सत्यं, प्रमाताऽपि प्रमेयमिति । तथाऽपि यदा प्रमाविषयत्वमविवक्षित्वा प्रमाश्रयत्वविवक्षा तदा प्रमातृत्वमेव तस्य विवक्षितं, न प्रमेयत्वम् । यथोक्तम् 'विवक्षातः कारकाणि भवन्ति' इति । अतः प्रमेयात् पृथगुक्तिसंभवेन न प्रमेयलक्षणस्य प्रमातर्यतिव्याप्तिरिति भावः ।

ननु केवलप्रमाणानामानन्त्यात् कथं चतुर्विधत्वोक्तिः ? इति चेन्न । ईशज्ञानादिना क्रोडीकृतस्य केवलप्रमाणस्य चतुर्विधत्वोपपत्तेः । नन्वेवं क्रोडीकारेण विभागेऽपि किं प्रयोजनम् ? इत्यत आह ।।अयमपीति।।

---

[1] यथावस्थितार्थविषयीकारि

(श्री.टि.) यथा 'तत् द्विविधं' इति प्रमाणविभागः साक्षाद्यथावस्थितज्ञेयविषयीकारित्वयथावस्थितज्ञेयविषयीकारि-साधनत्वरूपवैलक्षण्यज्ञापनार्थः एवं अयमपि ईशज्ञानत्वाऽदिना केवलप्रमाणस्य चतुर्विधतया विभागोऽपि ईशलक्ष्म्यादिज्ञानेषु 'पूर्वद्वयम्' इत्यादिना वक्ष्यमाणप्रकारेण महावैलक्षण्यज्ञापनार्थ इत्यर्थः ।

नन्वीशाऽदिभेदेन केवलप्रमाणचातुर्विध्यकथनमयुक्तम् ईशाऽदीनां यथार्थज्ञानत्वाऽदितल्लक्षणानाक्रान्तत्वात् । न च ज्ञानवतामीश्वराऽदीनां ज्ञानाभेदेन तदुपपत्तिः, अभेदेऽपि विशेषबलेन भेदव्यवहाराङ्गीकारात् । अन्यथा तच्छब्दयोः पर्यायत्वाऽदिप्रसङ्गात् इत्यत आह ॥ ज्ञानिनामिति ॥ एवंभेदेन चतुर्विधत्वेन । तथा च तत्संबन्धिनामीशाऽदीनां चातुर्विध्यात् तत्संबन्धिनो ज्ञानस्यापि चतुर्विधत्वं युक्तमिति भावः ॥ ज्ञानपदं वेति ॥ ईशलक्ष्मीयोग्ययोगिज्ञानभेदेनेति ज्ञानपदं संयोज्य द्वन्द्वान्ते श्रूयमाणस्य तस्य प्रत्येकं संबन्धः कार्य इति भावः ।

### ईशलक्ष्मीज्ञानयोर्योगिज्ञानाऽदिभ्यो मिथश्च महावैलक्षण्यनिरूपणम्

(टी.) अनुप्रमाणस्य केवलप्रमाणसाधनत्वेनोक्तत्वात् चतुर्विधमपीदं तज्जन्यं, तत एवानित्यं चेति न मन्तव्यमित्याह

**पूर्वद्वयमनादि नित्यम्**

ईशलक्ष्मीज्ञानम् ।

द्वयोरप्यनादिनित्यत्वे[1] को विशेषः? येन पृथग्ग्रहणमित्यत आह

**स्वातन्त्र्यपारतन्त्र्याभ्यां तद्विशेषः**

अनादिनित्यत्वसाम्येऽपि स्वसत्ताऽऽदौ स्वतन्त्रमीशज्ञानं, तदधीनं लक्ष्मीज्ञानमिति महाविशेषात् पृथग्ग्रहणमुपपद्यते । अनेन स्वतन्त्रज्ञानमाद्यं,[2] ईशैकाधीनं द्वितीयमिति द्वयोर्लक्षणं सूचितं भवति । आद्ये स्वतन्त्रमिति लक्ष्म्यादिज्ञाननिवृत्तिः । ज्ञानमितीशव्युदासः । द्वितीये ईशाधीनमिति ईशज्ञाननिवृत्तिः । एकेति ब्रह्माऽदिज्ञाननिवृत्तिः । ज्ञानमिति लक्ष्मीव्यावृत्तिः ।

तयोर्विशेषान्तरमाह

**पूर्वं स्वपरगताखिलविशेषविषयम्**

लक्ष्मीज्ञानस्याप्यतिमहत्वेनैतत्संभवात् कथमीशज्ञानस्य विशेषः? इत्यत आह

---

[1] रा. अनादित्वे [2] श्री स्वतन्त्रमाद्यम्

द्वितीयमीशेऽन्येभ्योऽधिकम्

(टी.) लक्ष्मीज्ञानमीशविषये ब्रह्मादिज्ञानेभ्य एवाधिकविषयम् ।

किं चातः ? इत्यत आह

असार्वत्रिकम्

न त्वीशे सर्वविशेषविषयम् । अतस्तयोरस्ति विशेषः ।

यथेशेऽसार्वत्रिकं तथा किमन्यत्रापि ? नेत्याह

अन्यत्र सर्वविषयम्

किम् ईशलक्ष्मीज्ञानयोरन्यत्र तर्हि साम्यमेव ? नेत्याह

स्पष्टत्वे भेदः

द्वयमपीशादन्यत्र सर्वविषयं स्पष्टं च । तत्रेशज्ञानं निरतिशयस्पष्टं । न तथा लक्ष्मीज्ञानमित्यस्त्येव विशेषः ।

अथ वा पूर्वमित्यनेन कात्स्न्र्येनेशविषयत्वं लक्षणान्तरमीशज्ञानस्य सूचितम् । तत्र कात्स्न्र्येनेति लक्ष्म्यादिज्ञानव्युदासः । कृत्स्नजगद्विषयं लक्ष्मीज्ञानमपि भवतीतीऽशग्रहणम् । ईशेऽन्येभ्योऽधिकमसार्वत्रिकमिति लक्ष्मीज्ञानस्य लक्षणान्तरम् । ईशग्रहणं स्वरूपकथनार्थम् । असार्वत्रिकत्वासंभवनिवृत्त्यर्थं च । अन्येभ्योऽधिकमिति ब्रह्मादिज्ञानव्युदासः । असार्वत्रिकमिति ईशज्ञाननिरासः । ईशेऽसार्वत्रिकमन्यत्र सर्वविषयमिति तल्लक्षणान्तरम् । ईशादन्यत्रग्रहणं व्याघातपरिहारार्थम् । ईशेऽसार्वत्रिकमिति ईशज्ञाननिवृत्तिः । अन्यत्र सर्वविषयमित्यस्मदादिज्ञानव्युदासः । ऋजुज्ञानेऽतिव्याप्तिपरिहारायानालोचनेऽपीति ग्राह्यम् । तस्याऽलोचने अन्यत्र सर्वविषयत्वं वक्ष्यति । स्पष्टत्व इत्यनेनापि निरतिशयस्पष्टं ईशज्ञानं, ईशज्ञानमेव यतोऽधिकस्पष्टं तत् लक्ष्मीज्ञानम् इत्यनयोर्लक्षणान्तरं सूचितं भवति ।

(रा.टि.) ॥अनादित्व इति॥ नित्यत्वे च इत्यपि ध्येयम्। क्वचित् तथैव पाठः ॥पृथग्ग्रहणमिति॥ ईशज्ञानं लक्ष्मीज्ञानमित्येवं पृथग्ग्रहणमित्यर्थः। तस्य महावैलक्षण्यज्ञापनार्थत्वात्[1] इति प्रागुक्तेरिति भावः ॥आद्यमिति॥ ईशज्ञानमित्यर्थः। लक्ष्मीज्ञानलक्षणे च ज्ञानपदमपि संयोज्यम् ॥ईशज्ञाननिवृत्तिरिति॥ तस्य स्वातन्त्र्योक्तेरिति भावः। न चैवम् ईशतज्ज्ञानयोर्द्वयोरपि स्वातन्त्र्ये अनेकस्वातन्त्र्याऽऽपत्तिरिति शङ्कयम्। तयोरभेदेन केवलं विशेषबलाद्भेदेन व्यवहारात्। 'सर्वं वाक्यं सावधारणम्' इति भावेनाऽऽह ॥ब्रह्माऽऽदिज्ञानेभ्य एवेति॥ किं चात इति॥ अतश्च किं? इत्यर्थः। तावता लक्ष्मीज्ञानस्यापीत्यादिना कृतचोद्यस्यापरिहारादिति भावः ॥स्पष्टं चेति॥ द्वयमपीत्यनुषङ्गः। स्पष्टत्वं च अपरोक्षत्ववत् ज्ञानगत एव विशेषः न विषयोपाधिकृतः।

लक्षणोक्तिप्रस्तावे स्वरूपकीर्तनमरोचयमान आह ॥अथ वेति॥ अस्मिन् पक्षे परगतेत्यंशस्य वैयर्थ्यात् पूर्वयोजनेति भावः। अन्येभ्यो ब्रह्माऽऽदिज्ञानेभ्योऽधिकविषयम् इत्येतावता ब्रह्माऽऽदिज्ञाननिरासात् 'ईशेऽन्येभ्योऽधिकम्' इति वाक्ये ईश इति व्यर्थम् इत्यत आह ॥ईशग्रहणमिति॥ स्वरूपकथनार्थम्। न तु अतिव्याप्त्यादिवारणार्थम्। कृत्यान्तरं चास्तीत्याह ॥असार्वत्रिकत्वेति॥ जगति सार्वत्रिकत्वात् इति भावः ॥अन्यत्रेति॥ ईशात् इति योज्यम् ॥व्याघातेति॥ तथा च असम्भवनिरासः फलमिति भावः। ॥तस्येति॥ ऋजुज्ञानस्येत्यर्थः ॥वक्ष्यतीति॥ अनुपदमेवेति योज्यम्।

(श्री. टि.) इदं ईशज्ञानाऽऽदिकम् ॥तत एवानित्यं चेति॥ जन्यत्वे सति भावत्वस्य अनित्यत्वव्याप्तत्वात् इति भावः ॥स्वसत्ताऽऽदाविति॥ आदिपदेन प्रतीतिप्रवृत्त्योः ग्रहणम् ॥स्वतन्त्रमिति॥ ज्ञानमिति शेषः। अन्यथा ज्ञानमिति ईशव्युदासः इत्युत्तरवाक्यासङ्गतेरिति ध्येयम् ॥ईशव्युदास इति॥ विशेषबलेनेदमिति ज्ञातव्यम्। एवमेव लक्ष्मीव्यावृत्तिरित्यपि द्रष्टव्यम् ॥ब्रह्माऽऽदीति॥ तत्र लक्ष्म्यधीनताया अपि सत्वेन ईशैकाधीनत्वाभावात् एकपदेन तन्निवृत्तिरित्यर्थः। न च लक्ष्मीज्ञानं लक्ष्म्यधीनमपि भवति इत्यसंभवः, ईशैकाधीन ईशज्ञाने अतिव्याप्तिश्च इति वाच्यम्, अत्र अधीनत्वस्य भेदगर्भस्यैव विवक्षितत्वात् इति ज्ञातव्यम् ॥अतिमहत्वेनेति॥ अनादिनित्यत्वेनातिमहत्वमिति भावः। ॥एतत्सम्भवात् इति॥ स्वपरगताखिलविशेषविषयकत्वसम्भवात् इत्यर्थः। तर्हि इत्येतत् किमीश इत्यतः पूर्वं योज्यम्। ननूभयोरपि स्पष्टत्वे तत्कृतो विशेषो न सम्भवति इत्यत आह ॥तत्रेति॥ निरतिशयेति॥ यज्ज्ञानस्पष्टताऽपेक्षया अन्यत् अतिशयेन स्पष्टं नास्ति इत्यर्थः ॥न तथेति॥ लक्ष्मीज्ञानस्पष्टताऽपेक्षया अतिशयेन स्पष्टं भगवज्ज्ञानमेवास्तीति न लक्ष्मीज्ञानं निरतिशयस्पष्टमित्यर्थः।

पूर्वं स्वपरगतेत्यादिवाक्यपञ्चकं ईश्वरज्ञानलक्ष्मीज्ञानयोर्विशेषप्रतिपादनपरतया व्याख्याय इदानीं तयोर्लक्षणकथनपरतयाऽपि व्याचष्टे ॥अथ वेत्यादिना॥ लक्षणान्तरमिति॥ स्वातन्त्र्यपारतन्त्र्याभ्याम्

---

[1] ज्ञापनार्थत्वस्य प्रागुक्तेरिति.

(श्री॰ टि.) इति वाक्येनैव एकस्य लक्षणस्योक्तत्वात् इति भावः। प्रयोजनाभावेन स्वरूपकथनपरत्वोक्तावपरितोषादाह ॥ असार्वत्रिकत्वेति ॥ ईशपदाभावे लक्ष्मीज्ञानस्य जगद्गतसर्वविशेषविषयकत्वेन जगद्विषये असार्वत्रिकत्वाभावात् असम्भवः स्यात्। अत ईशग्रहणम्। तथा च ईशे असार्वत्रिकम् इति सम्बन्धः। तथा च असम्भवपरिहारकत्वात् ईशग्रहणं सप्रयोजनमिति भावः ॥ अन्यत्रेति ॥ ईशात् अन्यत्रेत्यर्थः ॥ तल्लक्षणान्तरमिति ॥ तस्य लक्ष्मीज्ञानस्य लक्षणान्तरमित्यर्थः ॥ व्याघातेति ॥ अन्यत्र इति पदाभावे ईशे असार्वत्रिकं ईशे सर्वविषयम् इति प्रतीयते। अतो व्याघात इत्यर्थः ॥

अनालोचनेऽपीति ग्राह्यमिति ॥ अपिशब्दो भिन्नक्रमः। तथा च अनालोचन इत्यपि विशेषणं ग्राह्यमित्यर्थः। यद्वा अपिशब्दो विशेषणान्तरसमुच्चायकः। तेन सर्वदा इति सिद्ध्यति। अतो मुक्तावस्थाऽऽपन्नर्जुज्ञाने अनालोचने सर्वविषये नातिव्याप्तिः। यद्वा अपिशब्दोऽवधारणार्थः अनालोचन एवेति। तेनाऽऽलोचनव्युदासः अन्यत्रानालोचनेऽपि सर्वविषयं लक्ष्मीज्ञानम् इति पद्धतावपि अपिशब्दः सदा इति विशेषणान्तरसमुच्चायकतया अवधारणार्थतया वा व्याख्येयः।

एवं च, अत्र पद्धतौ च अनालोचनेऽपीत्यपिशब्देन लक्ष्मीज्ञानस्य अनालोचन आलोचने च सर्वविषयकत्वमुक्तम् अन्यथा तद्वैयर्थ्याऽपत्तेः। ऋजुयोगिज्ञानलक्षणकथनावसरे आलोचन इति लक्ष्मीज्ञानव्युदास इति च अत्र अभिहितम्। तेन च अलोचनाभावः प्रतीयते अन्यथा तद्व्यावृत्त्यनुपपत्तेः। अतो विरोध इति शङ्काऽनवकाशः। अत्र अपिशब्दस्य भिन्नस्थानसम्बन्धाङ्गीकारात्। यथास्थानेन[1] सम्बन्धाङ्गीकारेऽपि सर्वदेतिविशेषणान्तरसमुच्चायकतया अवधारणार्थतया वा व्याख्यातत्वात्। पद्धतिवाक्यगतापिशब्दस्य तु विशेषणान्तरसमुच्चायकतया अवधारणार्थतया च व्याख्यातत्वात् इति द्रष्टव्यम्।

अन्ये तु, ईशात् अन्यत्र अनालोचने सर्वविषयकत्वं लक्ष्मीज्ञानस्य सम्भावितम् इति सम्भावनार्थः अपिशब्दः। अपिः पदार्थसंभावनेत्यादिस्मरणात्। अतो न विरोध इत्याहुः।

नन्वनालोचनग्रहणेन कथं ऋजुयोगिज्ञानव्यावृत्तिः? इत्यत आह ॥ तस्येति ॥ वक्ष्यतीति ॥ 'अन्यत्र आलोचने सर्वविषयम्' इत्यत्रेत्यर्थः ॥ ईशज्ञानमेवेति ॥ ऋजुयोगिज्ञानाऽदावतिव्याप्तिवारणाय अवधारणम्। तथा च ऋजुयोगिज्ञानाऽपेक्षया लक्ष्मीज्ञानस्याप्यधिकस्पष्टस्य सत्त्वात् नेशज्ञानमेव ततोऽधिकं स्पष्टमिति नातिव्याप्तिरित्यर्थः।

### योगिज्ञानसामान्यलक्षणविभागौ

(टी.) योगप्रभावलब्धातिशयं योगिज्ञानम्। तत् त्रिविधम्। ऋजुतात्त्विकातात्त्विकयोगिज्ञानभेदेन।

---

[1] यथास्थानं

ऋजुयोगिज्ञाननिरूपणम्

(टी.) तत्र पूर्ववदृजुज्ञानं नानुप्रमाणजन्यमनित्यं चेत्याह

योगिज्ञानमृजूनामनादिनित्यम्[1]

केषां योगिनां ? ऋजूनां इति योज्यम् । योगिज्ञान इति पाठे ज्ञानमिति शेषः । असार्वत्रिकत्वात् योगविभागः ।

तल्लक्षणमाह

ईशे जीवेभ्योऽधिकम्

ऋजुव्यतिरिक्तजीवज्ञानेभ्य एव । ईश इति स्वरूपकथनम् । जीवेभ्योऽधिकमित्यस्मदादिज्ञाननिरासः । अवधारणेनेशलक्ष्मीज्ञाननिवृत्तिः ।

लक्षणान्तरं चाह

अन्यत्राऽऽलोचने सर्वविषयम्

अन्यत्र ईशादिति शेषः । अन्यत्रग्रहणमसंभवनिवृत्त्यर्थम् । आलोचन इतीशलक्ष्मीज्ञाननिरासः । सर्वग्रहणमस्मदादिज्ञाननिरासार्थम् ।

ऋजुज्ञानं यद्यनादिनित्यं तर्हि कथं तत् योगिज्ञानम् ? योगजं हि योगिज्ञानमित्यत आह

क्रमेण वर्धमानम्

योगप्रभावेन वृद्धिसद्भावात् योगिज्ञानत्वं युक्तम् ।
क्रमेण वर्धमानत्वे मुक्तावपि किं वर्धत इति ? नेत्याह

आ मुक्तेः

आङ् मर्यादायां ।

अभिवृद्धनदीवत्[2]पुनः किं ह्रासो भवति ? नेत्याह

---

[1] ज्ञाने ऋजूनां [2] नदीपूरवत्

## ततोऽन्ययम्

(रा. टि.) मूले योगिज्ञानावान्तरभेदभिन्नर्जुज्ञानस्यैव लक्षणोक्तेः ततः प्रागाकाङ्क्षितौ सामान्यलक्षण-विभागौ स्वयमाह ॥ योगेति ॥ योगो भगवद्धर्मानुष्ठानाऽदिरूपज्ञानोपायः । तत्सामर्थ्यप्राप्तोत्कर्षं ज्ञानमित्यर्थः । [1] योगिज्ञानपदं ऋजुयोगिज्ञानं तात्विकयोगिज्ञानं अतात्विकयोगिज्ञानमिति प्रत्येकमन्वेति । भेदेन निमित्तेनेत्यर्थः ।

पूर्ववत् ईशलक्ष्मीज्ञानवत् । अनित्यं च न इत्यनुषङ्गः ॥ इति पाठ इति ॥ समभ्यन्तपाठ इत्यर्थः । योगिज्ञानमध्य इत्यर्थः ।

ननु योगिज्ञानमनादिनित्यं इत्यनुक्त्वा योगिज्ञाने ऋजूनां ज्ञानमनादिनित्यम् इति वाक्यभेदः कस्मात् कुतः ? इत्यतो वा, ऋजुतात्विकातात्विकज्ञानमनादिनित्यम् इत्यनुक्त्वा ऋजूनामनादिनित्यं ततोऽर्वाक् क्रमेण ह्रसितम् इति वाक्यभेदः कुतः कुतः ? इत्यतो वाऽऽह ॥ असार्वत्रिकत्वादिति ॥ अनादिनित्यत्वस्येति योज्यमित्येके ।

अन्ये तु पूर्वद्वयमनादिनित्यम् इत्यत्र पूर्वत्रयमनादिनित्यम् इत्येव कुतो नोक्तम् ? कस्मात् वाक्य-भेदः ? इत्यत आह ॥ असार्वत्रिकत्वादिति ॥ अनादिनित्यत्वस्य योगिज्ञाने सर्वत्र अभावात् इत्यर्थः । तर्हि पूर्वद्वयं ऋजुज्ञानं चानादिनित्यम् इत्युच्यतामित्यपि न । प्राक् तथा अनिर्देशेन तदा तस्यानुपस्थितेः । उपस्थितौ वा वृत्तिज्ञानांशे मुख्यानादिनित्यत्वस्याभावेन असार्वत्रिकत्वात् योगविभाग इत्यर्थ इत्याहुः ।

एतच्च अनादिनित्यत्वं स्वरूपज्ञाने मुख्यम् । वृत्तिज्ञाने तु प्रवाहतः । तदपि मुक्तिपर्यन्तमेव नित्यत्वं ज्ञेयम् । एतेन मातरिश्वा व्याख्यातः इति सूत्रे प्रलये अविलुप्तत्वेनैव ज्ञाननित्यत्वोक्तेः ।

ऋजूनामपि ब्रह्मत्वयोग्यजीवत्वात् व्याघातनिरासायाऽऽह ॥ ऋजुव्यतिरिक्तेति ॥ आङ् मर्या-दायामिति ॥

> ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः ।
> एतमातं ङितं विद्यात्........................॥

इत्युक्तेर्मर्यादायामित्युक्तम् । 'तेन विना' इति मर्यादा । 'तेन सह' इत्यभिविधिः । 'आनगरं वृष्टिः' इत्यादौ आङ् मर्यादाऽर्थश्चेत् नगरपर्यन्तमेव, न तु नगर इत्यर्थः । अभिविध्यर्थश्चेत् नगरेऽपि वृष्टिः इत्यर्थो भवति ।

---

[1] एतद्वाक्यात्पूर्वं ॥ ऋज्विति ॥ इति अधिकं पठनीयमिति भाति ।

(रा. टि.) अतो मुक्तिपर्यन्तमेव इत्यर्थकाभाव मर्यादायाम् इत्युक्तम् । 'आ कडारात्' इत्यादिपाणिनिसूत्र इव असमासेनायं निर्देशः । अन्यथा आमुक्ति इति स्यात् ॥ तत इति ॥ मुक्त्यनन्तरमित्यर्थः । एतच्च स्वरूपज्ञानविषयम् ।

(श्री. टि.) योगिज्ञानसामान्यलक्षणस्य मूलेऽनुक्तत्वात् स्वयमेवाऽह ॥ योगप्रभावेति ॥ योगो नाम ईश्वरे मनःप्रणिधानम् । तत्सामर्थ्येन[1] लब्धः अतिशयः बहुविषयकत्वरूपो यस्य तत् तथोक्तमित्यर्थः । अत्र एतादृशातिशययोग्यत्वमेव लक्षणं विवक्षितम् । अतः कदाचित् अबहुविषयके योगिज्ञाने नाव्याप्तिरिति ध्येयम् । तत् विभज्य उद्दिशति ॥ तत् त्रिविधमित्यादिना ॥ ऋज्वित्यादि ॥ ऋजुयोगिज्ञानतात्त्विकयोगिज्ञाना-तात्त्विकयोगिज्ञानभेदेनेत्यर्थः ॥ पूर्ववदिति ॥ ईशलक्ष्मीज्ञानवदित्यर्थः ।

ननु योगिपदस्य ऋजुपदेन साकाङ्क्षतया तेनैव समासो वक्तव्यः न ज्ञानपदेन । यत् येन सापेक्षं तत् तेनैव समासाय समर्थं नान्येन । 'सापेक्षमसमर्थवत् भवति' इति वचनात् । अतो ऋजुयोगिज्ञान-मित्येव वक्तव्यम् , न ऋजूनामिति । तत्राऽह ॥ केषामिति ॥ अन्येन समासेऽपि न पूर्वपदेनाऽकाङ्क्षा विहन्यते । 'देवदत्तस्य गुरुकुलम्' इत्यादिवत् । अत उत्थिताऽकाङ्क्षारूपनित्यसापेक्षत्वात्[2] युक्तः समासः । वचनं तु उत्थाप्याऽकाङ्क्षारूपानित्यसापेक्षविषयमिति भावः ।

॥ ज्ञानमिति शेष इति ॥ तथा च योगिज्ञाने योगिज्ञानमध्ये ऋजूनां ज्ञानमनादिनित्यमित्यर्थो द्रष्टव्यः । ननु ईशलक्ष्मीज्ञानवत् ऋजुयोगिज्ञानस्यापि अनादिनित्यत्वे पूर्वत्रयमनादिनित्यम् इत्येव वक्तव्यम् । अतो योगिज्ञानमिति वाक्यं व्यर्थमित्यत आह ॥ असार्वत्रिकत्वादिति ॥ अनादिनित्यत्वस्येति शेषः । योगविभागो वाक्यभेदः । पूर्वत्रयमनादिनित्यम् इत्युक्ते ईशलक्ष्मीज्ञानवत् योगिज्ञानस्य सर्वस्याप्यनादिनित्यत्वं प्राप्नोति । अतः तन्निरासाय योगिज्ञानमध्ये ऋजुयोगिज्ञानस्यैवानादिनित्यत्वं वक्तुं योगविभाग इत्यर्थः । असार्वत्रिकत्वप्रकारं च उत्तरत्र विवरिष्यामः ।

ब्रह्मत्वयोग्या हि जीवा ऋजवः । तेषां ज्ञानं द्विविधं स्वरूपं मनोवृत्तिरूपं चेति । तत्र वेदिकेश्वराऽदि-विषयं स्वरूपज्ञानमनादितोऽभिव्यक्तं नित्यं च । वेदिकेश्वराऽदिविषयं मनोवृत्तिरूपज्ञानं योगानुगृहीत-प्रत्यक्षाऽदिना स्वरूपेण अन्यमपि प्रवाहतोऽनादि ।

'एवं प्रलयकालेऽपि प्रतिभातपरावरः । मुख्यवायुः'

इति वचनात् प्रलये वृत्तिप्रवाहो नोच्छिद्यते । मुक्तौ तु उच्छिद्यत इत्यनित्यम् । द्वयमपि नियमेन यथार्थमिति द्रष्टव्यम् ।

---

[1] तत्प्रभावेण तत्सामर्थ्येन, [2] सापेक्षत्व

(श्री. टि.) जीवशब्दो जीवज्ञानपर इत्यभिप्रेत्य जीवज्ञानेभ्य इत्युक्तम्। ऋजूनामपि जीवत्वावच्छिन्नत्वात् तज्ज्ञानेभ्य एव तज्ज्ञानस्याधिकत्वायोगात् ऋजुव्यतिरिक्तेत्युक्तम्। तथा च ऋजुव्यतिरिक्ततात्त्विकातात्त्विक-जीवापेक्षयैव ईशे अधिकविषयकं ज्ञानम् ऋजुयोगिज्ञानमिति लक्षणं द्रष्टव्यम्। ज्ञानं ऋजुयोगिज्ञानमित्ये-वोक्तेऽस्मदादिज्ञानेऽतिव्याप्तिः। अतो जीवेभ्योऽधिकमिति विशेषणमुक्तमित्याह ॥ जीवेभ्योऽधिकमि-तीति ॥ अधिकं अधिकविषयमित्यर्थः ॥ अवधारणेनेति ॥ ईशलक्ष्मीज्ञानयोः ऋजुयोगिज्ञानापेक्षयाप्यधिक-विषयत्वात् अवधारणेन तयोर्व्यावृत्तिरित्यर्थः ॥ लक्षणान्तरमिति ॥ ऋजूनां यत् स्वरूपभूतं ज्ञानं यच्च मनोवृत्तिरूपं तदुभयसाधारणमित्यर्थः ॥ असंभवेति ॥ ईशविषये आलोचने सर्वविषयत्वस्यासम्भवित्वात् इत्यर्थः।

अत्र आलोचने सर्वविषयकत्वं नाम आलोचने सर्वविषयकत्वात्यन्ताभावानधिकरणत्वरूपं तद्योग्यत्वमेव विवक्षितम्। तेनाऽलोचनाभावदशायां तज्ज्ञाने नाव्याप्तिः। तस्यापि आलोचनलक्षणसहकारिप्राप्तौ सर्वविषय-कत्वसम्भवेनोक्तयोग्यतासद्भावात्। एतेन मुक्त्यवस्थाऽऽपन्नर्जुज्ञाने अनालोचने सर्वविषयेऽव्याप्तिरिति निरस्तम्। तस्यापि पूर्वं आलोचने सर्वविषयकत्वसद्भावेन तदाप्युक्तयोग्यताया अनपायात्। एतेनैव ऋजूनामपरोक्षदशायां आलोचने सर्वविषयत्वाभावात् अव्याप्तिरिति परास्तम्। तत्रापि उक्तविधया योग्यताघटितलक्षणसद्भावात् इति द्रष्टव्यम्।

न च ऋजूनां जायमाने 'अयं घटः' इति घटमात्रविषयके ज्ञाने आलोचने सर्वविषयकत्वाभावाद-व्याप्तिरिति वाच्यम् तत्रापि आलोचने सर्वविषयकत्वस्य सत्वात्। तथा हि। यदा घटं पलपरिमाणेयत्ता-विशेषवन्तं तन्निमित्तं कालं दिशम् अदृष्टं तदाश्रयं पुरुषं तत्प्रयोजनविशेषं च साक्षात्करोति तदा घटमात्रविषयकस्यापि ज्ञानस्य आलोचने सर्वविषयकता प्राप्तैवेत्यवगन्तव्यम्। यथाऽऽहुः

> एकं च तत्वतो ज्ञातुं विना सर्वज्ञतां नरः।
> न समर्थो महेन्द्रोऽपि तस्मात् सर्वत्र जिज्ञसेत् ॥ इति।

॥ ऋजुज्ञानमिति ॥ ऋजूनां स्वरूपभूतं ज्ञानमित्यर्थः ॥ योगजं हीति ॥ तथा च योगिज्ञान-सामान्यलक्षणस्याव्याप्तिरित्यर्थः ॥ योगप्रभावेनेति ॥ तथा च योगप्रभावात् व्यक्त्यतिशयसद्भावेन योगप्रभाव-जन्यातिशयवत्त्वरूपं योगिज्ञानत्वं युक्तमिति नाव्याप्तिरिति भावः ॥ मर्यादायामिति ॥ मुक्तिं मर्यादीकृत्य तत्पर्यन्तमेव क्रमेण वर्धमानमित्यर्थः। 'आङ् मर्यादाऽभिविध्योः' इति वचनादिति भावः ॥ ततोऽव्ययमिति ॥ मुक्तावेकप्रकारमित्यर्थः।

(टी) तात्त्विकातात्त्विकयोगिज्ञानलक्षणं युगपदाह

## ततोऽर्वाक् क्रमेण ह्रसितम्

ऋजुभ्योऽन्येषां योगिनां ज्ञानं ईशात् अन्यत्र क्रमेण किञ्चिन्मात्रह्रासयुक्तं भवति।

नेदं लक्षणं युक्तम् अन्योन्यमृजुज्ञानाच्च अव्याप्तेः। इत्यत आह

## सादि च तात्त्विकेभ्योऽन्यत्र

नैतावदेव लक्षणम्। किं तु ? तात्त्विकयोगिज्ञानमनादि अतात्त्विकयोगिज्ञानं सादीत्यपि गृह्यते। एतेन अनादित्वे सति ईशात् अन्यत्र आलोचनेऽपि ह्रसितं तात्त्विकयोगिज्ञानम्, सादित्वे सति ईशात् अन्यत्र किंचिन्मात्रह्रासयुक्तमतात्त्विकयोगिज्ञानमित्युभयोर्लक्षणं सूचितं भवति। तत्राद्येऽनादित्वेन अतात्त्विकयोगिज्ञाननिवृत्तिः। ईशादन्यत्रेति ईशविषयेऽनादित्वे सत्यालोचनेऽपि ह्रसितलक्ष्म्यादिज्ञाननिरासः। ऋजुज्ञाननिरासार्थमालोचनेऽपीति। ह्रसितमित्यनेनैव ईशज्ञानव्युदासः। द्वितीये सादित्वग्रहणमृजुतात्त्विकज्ञाननिवृत्त्यर्थम्। किञ्चिन्मात्रह्रासयुक्तमित्ययोगिज्ञाननिरासः। ईशादन्यत्रेति तत्सम्भवार्थम्। ह्रसितत्वादिग्रहणेनैवे[1]शादिज्ञानेऽप्रसंगः।

### अयोगिज्ञाननिरूपणम्

अयोगिज्ञानं किमीश्वराऽदिज्ञानवदनादिनित्यमेव सदिन्द्रियसन्निकर्षाऽदिनाऽभिव्यज्यते। उत सादि विनाशि चेति। तत्राऽह

## अयोगिज्ञानमुत्पत्तिविनाशवत्

तस्य लक्षणमाह

## अल्पम्

ईशादन्यत्राल्पविषयम्।

---

[1] श्री, ज्ञाने,

### सादिकेवलज्ञानविभागः

(टी.) सर्वं चोत्पत्तिमत् केवलं त्रिविधम् । प्रत्यक्षजमनुमानजमागमजमिति । प्रत्यक्षाऽऽदीनामवान्तरभेदेन पुनर्भिद्यत इति ।

### इति केवलप्रमाणनिरूपणम्

(रा. टि.) ॥ ऋजुज्ञानाद्येति ॥ तस्यापि अनालोचने किञ्चिद्ध्रासयुक्तत्वात् इति भावः । अत्र तात्त्विकज्ञानाऽऽद्यौ अनादित्वसादित्वयोरुक्तिर्व्यर्थेत्यपेक्षयेत्याहुः । लक्ष्मीज्ञानस्थित्युपपादनपूर्वं तन्निरासायाऽऽह ॥ ॥ ईशादन्यत्रेतीत्यादिना ॥ आलोचनेऽपि ह्रसितं लक्ष्म्यादिज्ञानमिति कृत्वा ईशात् अन्यत्रेत्युक्त्या तल्लक्ष्म्यादिज्ञानस्य निरास इति योजना ॥ ऋजुतात्त्विकज्ञानेति ॥ ऋजुज्ञानतात्त्विकज्ञानेत्यर्थः ॥ अयोगिज्ञानेति ॥ तस्यातिह्रासयुक्तत्वात् इति भावः । मूलानुक्तविभागं शिष्यव्युत्पादनाय स्वयमाह ॥ सर्वं चेति ॥ त्रिविधं योगिनां अयोगिनां च वृत्तिरूपं केवलप्रमाणमित्यर्थः । साक्षिज्ञाननिरासायोत्पत्तिमदित्युक्तिः । ॥ अवान्तरभेदेनेति ॥ चाक्षुषं रासनं अन्वयानुमानजं व्यतिरेकिजं स्वार्थानुमानजं कार्यानुमानजं नित्याऽऽगमजं पौरुषेयाऽऽगमजं इत्याद्यवान्तरभेदेनेत्यर्थः । एतच्च त्रिविधमित्युक्तधाप्रत्ययघटनाय । "सङ्ख्याया विधाऽर्थे धा" इति अवान्तरभेद एव धाप्रत्ययविधानात् ।

(श्री. टि.) ततः तेभ्य ऋजुभ्यः, अर्वाक् नीचानां योगिनां तात्त्विकानां अतात्त्विकानां च, ज्ञानमिति शेषः, ततः ईशात् , अर्वाक् अन्यत्र, क्रमेण ह्रसितमित्यर्थ इत्यभिप्रेत्य व्याचष्टे ॥ ऋजुभ्य इत्यादिना ॥ किञ्चिन्मात्रह्रासयुक्तमिति ॥ किञ्चिन्मात्र ह्रासो नामाल्पाज्ञानयुक्तत्वम् । असर्वविषयकत्वमिति यावत् । तद्युक्तमित्यर्थः ॥ अन्योन्यमिति ॥ ईशात् अन्यत्र असर्वविषयकत्वस्य तात्त्विकयोगिज्ञानलक्षणत्वे अतात्त्विकयोगिज्ञाने अतिव्याप्तिः, अतात्त्विकयोगिज्ञानलक्षणत्वे च तात्त्विकयोगिज्ञाने अतिव्याप्तिरित्यर्थः ॥ ऋजुज्ञानाद्येति ॥ अनालोचनदशायां इति शेषः । ईशात् अन्यत्र अनालोचनदशायां असर्वविषयकत्वस्य ऋजुज्ञानेऽपि सत्त्वात् अतिव्याप्तिरित्यर्थः । कथम् अनेनोक्तशङ्कानिरासः? इत्यत आह ॥ नैतावदेवेति ॥ ततोऽर्वागितिवाक्योक्तमेव न लक्षणमित्यर्थः । नैतावदेव लक्षणं चेत् पुनः कियत्? इति पृच्छति ॥ किं त्विति ॥ तदुत्तरतया मूलं योजयति । तात्त्विकेति । सादि चेत्यत्र चशब्दार्थकथनमेतत् ॥ इत्यपि गृह्यत इति ॥ ततोऽर्वागित्युक्तलक्षण इत्यर्थः । वाक्यद्वयसम्पन्नं लक्षणं दर्शयति ॥ एतेनेत्यादिना ॥

अनादित्वे सतीति ॥ तत्त्वाभिमानिनो देवास्तात्त्विकाः । तेषां ज्ञानमपि स्वरूपभूतं वृत्तिरूपं चेति द्विविधम् । तदुभयसाधारणमिदं लक्षणम् । तत्र तात्त्विकस्वरूपज्ञानस्य अनादित्वं नाम वैदिकेश्वराऽऽदिविषये

(श्री.टि.) सदा वक्तव्यम्[1]। इदम्प्रथमताऽभाव इति यावत्। वृत्तिज्ञानस्यानादित्वं नाम वैदिकेश्वराऽदिविषये तत्प्रवाह-स्येदम्प्रथमताया अभाव एवेति ज्ञातव्यम् ॥ ह्रसितमिति ॥ अल्पाज्ञानयुक्तमसर्वविषयकमित्यर्थः। यथोक्तम् पद्धतौ अनादित्वे सति ईशात् अन्यत्र आलोचनेऽपि असर्वविषयं तज्ज्ञानमिति। एतेषां स्वरूपज्ञानं यथार्थमेव। बाह्यं कदाचित् अयथार्थमपीति विशेषो द्रष्टव्यः।

॥ सादित्वे सतीति ॥ तत्त्वाभिमानिव्यतिरिक्ता देवाऽदयो योगिनः अतात्त्विकाः। तदीयं ज्ञानमपि स्वरूपं वृत्तिरूपं चेति द्विविधम्। तदुभयसाधारणमिदं लक्षणम्। तत्रानादितोऽनभिव्यक्तमेव स्वरूपम्[2] वैदिके-श्वराऽदिविषये कदाचित् अभिव्यज्यते इत्येवं अभिव्यक्तेः इदम्प्रथमतावत्त्वमेव स्वरूपज्ञानस्य साऽदित्वम्। वृत्तिज्ञानस्य वैदिकेश्वराऽदिविषये अनुत्पन्न एव प्रवाहः कदाचित् उत्पद्यत इति इदम्प्रथमतावत्त्वमेव सादित्वमिति विवेको द्रष्टव्यः ॥ किञ्चिन्मात्रह्रासयुक्तमिति ॥ अल्पाज्ञानयुक्तमित्यर्थः। यथोक्तम् पद्धतौ सादित्वे सति ईशात् अन्यत्र अल्पाज्ञानयुक्तम् इति। एतेषामपि स्वरूपज्ञानं यथार्थमेव। बाह्यं तु कदाचिदयथार्थमपीति द्रष्टव्यम्। तात्त्विकातात्त्विकयोगिज्ञानयोः अल्पाज्ञानयुक्तत्वेन साम्येऽपि अनादित्वसादित्वाभ्यां विशेषो द्रष्टव्यः।

एवं च अतात्त्विकस्वरूपज्ञान इव ऋजुतात्त्विकस्वरूपज्ञानेऽपि व्यक्तेः साम्यात्, सादित्वस्य च अतात्त्वि-कवृत्तिज्ञान इव ऋजुतात्त्विकवृत्तिज्ञानयोरपि विद्यमानत्वात् कथं ऋजुतात्त्विकातात्त्विकयोगिज्ञानानां अनादित्व-सादित्वकथनम्? इति चोद्यानवकाशः। वैदिकेश्वराऽदिविषये ऋजुतात्त्विकस्वरूपव्यक्तिवृत्तिप्रवाहयोः[3] इदम्प्रथमताया अभावेन अनादित्वम्, अतात्त्विकस्वरूपज्ञानाभिव्यक्तिवृत्तिप्रवाहयोः इदम्प्रथमतायाः कदाचिदेवो-त्पन्नत्वेन सादित्वम् इति विवक्षितत्वात्।

तात्त्विकयोगिज्ञानलक्षणे पदानां कृत्यमाह ॥ तत्राद्य इति ॥ लक्षणद्वयमध्ये आद्ये लक्षण इत्यर्थः ॥ ह्रसितेति ॥ असर्वविषयेत्यर्थः ॥ ऋजुज्ञानेति ॥ अनादित्वे सति ईशात् अन्यत्र अनालोचनदशायां ऋजुज्ञान-स्यापि ह्रसितत्वादित्यर्थः। ईशात् अन्यत्र ज्ञानमित्येवोक्ते ईशाऽदिज्ञाने अतिव्याप्तिः इत्याशङ्क्य तां परिहरति ॥ ह्रसितमित्यनेनैवेति ॥ किं पुनरालोचनेऽपीत्यालोचनग्रहणेनेति एवकारार्थः। तथा च पदद्वयेन तन्निरास इति भावः। अत एवोत्तरत्र ह्रसितत्वाऽदिग्रहणेनेति वक्ष्यति ॥ ईशज्ञानेति ॥ ईशाऽदिज्ञानेत्यर्थः।

अन्ये तु अस्मिन् लक्षणे ईशज्ञानं व्यावर्त्यते न वा। आद्ये केन ज्ञानेति[4] विवेक्तव्यम्? न तावदना-दित्वे सतीत्यनेन। तस्यातात्त्विकज्ञानव्यावर्तकत्वात्। नापि ईशात् अन्यत्रेति विशेषणेन। तस्य लक्ष्मीज्ञान-व्यावर्तकत्वात्। नाप्यालोचनेऽपीति विशेषणेन। तस्य ऋजुज्ञानव्यावर्तकत्वात्। नापि ह्रसितमित्यनेन।

---

[1] व्यक्तत्वम् [2] स्वरूपज्ञानम् [3] स्वरूपज्ञानाभिव्यक्ति। [4] केन विशेषणेनेति।

(श्री.टि.) ईशस्याऽलोचनाभावात्। अतः केन विशेषणेन तद्व्यावृत्तिः? इत्यत आह ॥ हसितमित्यनेनैवेति ॥ न त्वनादीत्यादिपदैरिति एवार्थः। अत्रानादिविशेषणानां[1] कृत्यकरणात् प्रागेव हसितपदकृत्यं द्रष्टव्यम्। तथा चैवं पदकृत्यक्रमः। अनादि तात्त्विकज्ञानमित्युक्ते ईशज्ञानेऽतिव्याप्तिः स्यात्। तदर्थं हसितमित्युक्तम्। तावत्युक्ते लक्ष्मीज्ञाने। तस्याप्यनादित्वात् ईशविषये हसितत्वाच्च। अत उक्तम् ईशात् अन्यत्रेति। तावत्युक्ते ऋजुज्ञानेऽतिव्याप्तिः तस्यापि अनालोचनदशायां हसितत्वात्। अत उक्तम् आलोचनेऽपीति। तथा च हसितपदेनैव ईशज्ञानव्यावृत्तिः कार्या न पदान्तरैः। तेषां तदव्यावर्तकत्वात् इति भाव इत्याहुः।

अतात्त्विकयोगिज्ञानलक्षणे पदानां कृत्यमाह ॥ द्वितीय इति ॥ सादित्वे सति ईशात् अन्यत्र अज्ञानयुक्तमित्युक्ते अयोगिज्ञानेऽतिव्याप्तिः स्यात्। अत उक्तम् किञ्चिन्मात्रह्रासयुक्तमिति। तस्य बहुतराज्ञानयुक्तत्वेनाल्पाज्ञानयुक्तत्वाभावादाह किञ्चिन्मात्रेति। ईशात् अन्यत्र इति पदत्यागे ईशविषये बह्वज्ञानयुक्तत्वेनाल्पाज्ञानयुक्तत्वाभावाल्लक्षणस्यासम्भवः स्यात्। अत उक्तम् ईशात् अन्यत्रेति, इत्याह ॥ ईशादन्यत्रेति ॥ तत्सम्भवार्थमिति ॥ तस्य लक्षणस्य लक्ष्ये सम्भवार्थम् असम्भवपरिहारार्थमिति यावदित्यर्थः। ईशात् अन्यत्र ज्ञानम् इत्येवास्तु इत्यत आह ॥ हसितत्वाऽदीति ॥ हसितत्वाऽदीत्यत्र आदिपदेन सादित्वकिञ्चिन्मात्रह्रासयुक्तत्वयोः संग्रहः। द्वितीयाऽदिपदेन लक्ष्मीग्रहणम् ॥ अयोगिज्ञानमुत्पत्तिविनाशवदिति ॥ अतात्त्विकदेवाऽदिव्यतिरिक्तजीवा अयोगिनः। तथा च अयोगिनां स्वरूपं बाह्यं चेति द्विविधमपि ज्ञानमुत्पत्तिनाशवत्। स्वरूपज्ञानस्य वैदिकेश्वराऽदिविषयकस्य कदाचिदभिव्यक्त्यपेक्षयोत्पत्तिविनाशवत्त्वम्। वृत्तिज्ञानस्य तु स्वरूपापेक्षयेति द्रष्टव्यम् ॥ तस्य लक्षणमाहेति ॥ नन्वेवं चेत् अतात्त्विकयोगिज्ञानायोगिज्ञानयोरुत्पत्तिनाशवत्त्वेन साम्यमेव प्राप्तम् इत्याशङ्क्य तयोर्भेदकं लक्षणमाहेत्यर्थः ॥ अल्पविषयमिति ॥ अत्यन्तमिति संयोज्यम्। अत्यन्ताल्पविषयमित्यर्थः। यथोक्तं पद्धतौ ईश्वरात् अन्यत्र अज्ञानप्रचुरम् इति। अज्ञानप्रचुरं बह्वज्ञानयुक्तम्। अत्यन्ताल्पविषयमिति तदर्थः। ईशेऽत्यन्ताल्पविषयलक्ष्मीज्ञानव्युदासाय ईशात् अन्यत्र इत्युक्तम्। ईशात् अन्यत्र अल्पविषयकातात्त्विकयोगिज्ञानवारणाय अत्यन्तेति। ईशलक्ष्मीज्ञानर्ज्वादिस्वरूपज्ञानरूपकेवलप्रमाणे वक्ष्यमाणप्रत्यक्षत्वाऽदिरूपत्रैविध्यस्य बाधितत्वादाह ॥ सर्वं चोत्पत्तिमत्केवलमिति ॥ उत्पत्तिमत् सर्वं केवलं ऋज्वादिमनोवृत्तिरूपं ज्ञानमित्यर्थः ॥ प्रत्यक्षाऽदीनामिति ॥ प्राणाऽद्यवान्तरभेदेन प्रत्यक्षस्य षाड्विध्यात् तज्जन्यं ज्ञानमपि षड्विधम्। अनुमानस्यापि साधनदूषणभेदेन द्वैविध्यात् आगमस्यापि पौरुषेयापौरुषेयभेदेन द्वैविध्यात् तज्जन्यं ज्ञानमपि पुनर्भिद्यत इत्यर्थः।

अथ अनुप्रमाणनिरूपणम्

(टी.) अनुप्रमाणविभागमाह

---

[1] अत्रानादित्वाऽदिविशेषणानां कृत्यकथनात्

## अनुप्रमाणं त्रिविधम्

(टी.) तिस्रो विधा उद्दिशति। न्यूनाधिकसङ्ख्यान्यतमान्तर्भावाभावज्ञापनार्थोऽयं विभागः।

## प्रत्यक्षमनुमानमागम इति

प्रायेणाऽसन्नाव्यवहितवर्तमानकतिपयार्थग्राहकं प्रत्यक्षम्, अनासन्नातीतानागतव्यवहितार्थगोचरमनुमानम्, स्वातन्त्र्येणाशेषार्थविषय आगम इति अर्थग्रहणक्रमेणोद्देशः।

### प्रत्यक्षमात्रप्रामाण्यवादनिरासः

प्रत्यक्षमेकमेवेति चार्वाकः। तस्येष्टानिष्टसाधनज्ञानाभावाज्जीवनमेवानुपपन्नम्। न हि प्रत्यक्षं तज्ज्ञानोपायः।

### प्रत्यक्षानुमानमात्रप्रामाण्यवादनिरासः

प्रत्यक्षानुमाने एवेति कणादः सौगताश्च। तेषां किमागमो न बोधकः। बोधकोऽपि वा न यथार्थः। यथार्थोऽपि वाऽन्यत्रान्तर्भूतः। पक्षत्रयमप्यनुभवविरुद्धमिति।

अर्थं प्रति स्थितमर्थं[1] प्रत्यक्षम्। प्रमाणान्तरानुसरणेनैवार्थप्रमापकमनुमानम्। सम्यगतीन्द्रियार्थावगमक आगम इति संज्ञानिरुक्त्यैव लक्षणसिद्धौ प्रत्यक्षे तस्यैव स्फुटीकरणार्थं अनुमानाऽदौ शृंगग्राहिकया तज्ज्ञापनार्थं च पुनर्लक्षणाऽरम्भः।

(रा. टि.) ॥ न्यूनाधिकेति ॥ न्यूनसङ्ख्या च अधिकसङ्ख्या च अन्यतमान्तर्भावश्च तेषामभावज्ञापनार्थ इत्यर्थः। केचित् प्रत्यक्षमेव प्रमाणम् नान्यदिति। अन्ये तु प्रत्यक्षानुमाने एव प्रमाणम् नान्यदिति। अपरे तु आगमः प्रमाणमप्यनुमानेऽन्तर्भवतीति। उपमानार्थापत्त्यादयोऽपि पृथक्प्रमाणमित्येक आहुः। तन्निरासायेदं विभागकरणमित्यर्थः।

मानसप्रत्यक्षस्मृतिव्यावृत्त्यर्थं प्रायेणेति। प्रायेणेति सर्वत्रान्वेति ॥ आसन्नेति ॥ सन्निहितेत्यर्थः। यद्वा प्रायेणेति चक्षुःश्रोत्रघ्राणव्यावृत्त्यर्थमासन्नेत्यस्यैव विशेषणम्। चक्षुरादेर्दूरस्थस्यापि ग्राहकत्वात्

---

[1] श्री, चारेणैव

(रा.टि.) ॥ अव्यवहितेति ॥ कुड्याऽदिनाऽव्यवहितेत्यर्थः । एतदुक्तिश्च वक्ष्यमाणचार्वाकाऽदिदूषणघटनाय ॥ स्वातन्त्र्येणेति ॥ सङ्केतग्रहाऽद्यन्यव्याप्त्यादिग्राहकप्रमाणान्तरमनपेक्ष्येत्यर्थः ।

न्यूनाधिकसङ्ख्येत्याद्युक्तं व्यनक्ति ॥ प्रत्यक्षमेकमेवेत्यादिना ॥ अनुप्रमाणमिति अत्र उत्तरत्र चान्वेति ॥ न हि प्रत्यक्षमिति ॥ अनुमानाऽदिवैयर्थ्यात् इष्टाऽद्युपायत्वस्येति भावः ॥ अनुभवविरुद्धमिति ॥ व्याप्त्याद्यनुसन्धानाभावेऽपि सङ्केतस्मृतिमतः शब्दश्रवणमात्रादेव वाक्यार्थबोधस्याविसंवादिनः सर्वसाक्षिसिद्धत्वात् इति भावः ।

विषयान् प्रति स्थितं यद्धि प्रत्यक्षम् इति तत्त्वनिर्णयोक्तवचनानुरोधादाह ॥ अर्थं प्रतीति ॥ प्राऽदिसमास एवायं, नाव्ययीभाव इति भावः । स्वस्वयोग्यविषयं प्रतीत्यर्थः ॥ प्रमाणान्तरेति ॥ प्रत्यक्षाऽगमरूपेत्यर्थः । आ समन्तात् गमयति धर्माधर्मौ परं पदम् । यच्चाप्यतीन्द्रियं किञ्चित् इत्यनुव्याख्यानोक्तमाह ॥ सम्यगिति ॥

(श्री. टि.) अनुप्रमाणत्रैविध्योक्तेः प्रयोजनमाह ॥ न्यूनेति ॥ न्यूना च अधिका च सङ्ख्या येषां तानि न्यूनाधिकसङ्ख्यानि प्रमाणानि तेषां प्रत्यक्षाऽद्यन्यतमेष्वन्तर्भावाभावज्ञापनार्थोऽयं विभाग इत्यर्थः । अत्र न्यूनसङ्ख्याकप्रमाणस्याभावः अधिकसङ्ख्याकप्रमाणस्य प्रत्यक्षाऽद्यन्यतमेष्वन्तर्भाव इत्येवं यथायोगं सम्बन्धो न यथाक्रमम् । तथा च उत्तरत्र न्यूनसङ्ख्याकप्रमाणवादिनां चार्वाकाऽदीनां दूषणम् अर्थापत्त्यादीनामन्तर्भावकथनं च सङ्गच्छत इति द्रष्टव्यम् ।

प्रत्यक्षाऽदीनां क्रमेणोद्देशे निमित्तमाह ॥ प्रायेणेत्यादिना ॥ आसन्नेति ॥ सन्निकृष्टेत्यर्थः । चक्षुषा जायमाने 'सोऽयम्' इति प्रत्यभिज्ञाप्रत्यक्षे अनासन्नाव्यवहितावर्तमानस्यापि अतीतत्वस्य भानात् प्रायेण इत्युक्तम् । आगमानुसार्यनुमानस्य कतिपयार्थग्राहकदुर्बलप्रत्यक्षादप्युत्तमत्वमित्याशयेनाऽह ॥ अनासन्नेति ॥ अनासन्नधर्माऽदिस्वरूपमात्रस्यानुमानेन सिद्धावपि न तद्विशेषः शक्यानुमानः । अतोऽनासन्नगोचरादप्यनुमानात् आगमस्यैवोत्तमत्वमित्याह ॥ स्वातन्त्र्येणेति ॥ प्रत्यक्षानुमानानपेक्षयेत्यर्थः ॥ अशेषार्थेति ॥ ईश्वरधर्माधर्माऽद्यशेषविशेषार्थेत्यर्थः । उद्देशः उद्देशोऽपि क्रम इत्यर्थः ।

न्यूनसङ्ख्याकप्रमाणवादिमतमनूद्य दूषयति ॥ प्रत्यक्षमिति ॥ तस्येष्टेति ॥ लोके इष्टसाधनताज्ञानस्यैव प्रवृत्तिहेतुत्वदर्शनात् तस्य चानुमानसाध्यत्वात् तस्य च प्रामाण्यानङ्गीकारेण इष्टसाधनताज्ञानोपायाभावे जातमात्रस्य बालस्य स्तनपानाऽदौ प्रवृत्त्यभावप्रसङ्गेन जीवनमेवानुपपन्नमित्यर्थः । ननु प्रत्यक्षमेवाऽस्तु तज्ज्ञानोपायः । अतो नानुमानापेक्षेत्युपपन्नं जीवनमिति चेत् तत्राऽह ॥ न हीति ॥ इष्टसाधनत्वं नाम इष्टं प्रति जनकत्वम् । तच्च कालाऽदिगर्भतया अतीन्द्रियमिति न प्रत्यक्षं तज्ज्ञानोपाय इत्यर्थः ।

(श्री. टि.) ॥ अन्यत्रान्तर्भूत इति ॥ अनुमानेऽन्तर्भूत इत्यर्थः । संसर्गप्रमितिर्ह्यागमफलम्[1]। सा च एतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षाऽऽदिमत्पदकदम्बकत्वात् इत्यनुमानेन वक्तृज्ञानावच्छेदकतया सिद्ध्यतीति न तदर्थमागमः पृथक्प्रमाणतया अङ्गीकार्य इति भावः ।

॥ अनुभवविरुद्धमिति ॥ गृहीतसङ्गतेः पुरुषस्य 'शब्दात् अर्थं प्रत्येमि' इत्यर्थावबोधस्य साक्ष्यनुभवसिद्धत्वात् आगमो न बोधक इत्यङ्गीकारे अनुभवविरोधः । अर्थसंवादाऽऽदिना यथार्थबोधकत्वस्याऽप्यनुभवसिद्धत्वेन बोधकोऽपि न यथार्थ इत्यङ्गीकारेऽपि अनुभवविरोधः । व्याप्त्यादिग्रहणनिरपेक्षस्यैव आगमस्य बोधकतया अनुभवसिद्धत्वात् अनुमानान्तर्भावाङ्गीकारपक्षोऽपि अनुभवविरुद्ध इत्यर्थः । विस्तरस्तु अन्यत्र द्रष्टव्य इति भावः ।

अनुमानम् इत्यत्र अनु इत्युपसर्गार्थः प्रमाणान्तरानुसारेणैवेति । आगम इत्यत्रत्यस्य आङोऽर्थः सम्यगिति ॥ संज्ञानिरुक्त्यैवेति ॥ प्रत्यक्षाऽऽदिनामनिर्वचनेनैवेत्यर्थः । तर्हि पुनर्लक्षणाऽऽरम्भवैयर्थ्यमित्याशङ्क्याऽऽह ॥ प्रत्यक्षे तस्यैवेति ॥ प्रत्यक्षशब्दनिरुक्तया लब्धं यत् 'प्रति स्थितं अक्षम्' इति लक्षणं तस्यैवेत्यर्थः । स्फुटीकरणं च प्रतिशब्दार्थविवरणेन, कं प्रति ? इति शङ्कायां योग्यतया अर्थसम्बन्धकथनेन, निर्दोषत्वविशेषणदानेन चेति ज्ञातव्यम् ॥ अनुमानाऽऽदाविति ॥ प्रमाणान्तरानुसारेणार्थप्रमापकम्, सम्यगतीन्द्रियार्थावगमकश्च कः ? इत्यपेक्षायां निर्दोषोपपत्तिः, निर्दोषः शब्दः इत्येवं शृङ्गग्राहिकान्यायेन तज्ज्ञापनाय प्रमाणान्तरानुसारेणार्थप्रमापकसम्यगतीन्द्रियार्थावगमकवस्तुज्ञापनार्थं पुनर्लक्षणाऽऽरंभ इत्यर्थः ।

### प्रत्यक्षसामान्यलक्षणम्

(टी.) तत्र प्रत्यक्षलक्षणमाह

## निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम्

निर्दोषत्वमर्थेन्द्रिययोर्विशेषणम् । अर्थग्रहणेनाऽऽकाशाऽऽदीनां चक्षुरादिसन्निकर्षव्युदासः । अत्र तत्तदिन्द्रियविषयोऽर्थ उच्यते । तन्निर्दोषत्वग्रहणेन अतिसामीप्याऽऽदिदोषयुक्तार्थानामिन्द्रियसन्निकर्षनिरासः । इन्द्रियग्रहणेन अर्थानामेवान्योन्यसन्निकर्षनिरासः । तन्निर्दोषत्वग्रहणं मनोऽनधिष्ठितत्वाऽऽदिदोषवदिन्द्रियाणामर्थसन्निकर्षव्यावृत्त्यर्थम् । सन्निकर्ष इतीन्द्रियाऽऽदिमात्रव्युदासः । सर्वेण प्रमाणान्तरव्युदासः ।

(स. टि.) ॥ अर्थेति ॥ अर्थेन्द्रिययोर्विशेषणमित्यर्थः[2] । आकाशस्याप्यर्थत्वात् कथं तेन तन्निरासः ? इत्यत आह ॥ अत्रेति ॥ लक्षणवाक्य इत्यर्थः ।

---

[1] स च,    [2] इत्यधिकमिति भाति

(श्री. टि.) नन्वाकाशाऽदेरप्यर्थत्वात् कथं तद्ग्रहणेन तत्सन्निकर्षव्यावृत्तिः ? इत्यत आह ॥अत्रेति॥ यथाऽऽहुः पदार्थविदः 'अर्थाः स्युरिन्द्रियग्राह्याः' इति । अतिसामीप्याऽदीत्यादिपदेन अतिदूरत्व-सौक्ष्म्यव्यवधानाऽदिग्रहणम् ॥ तदिति ॥ इन्द्रियेत्यर्थः । आदिपदेन काचाऽदिग्रहणम् ॥ इन्द्रियेति ॥ असन्निकृष्टेन्द्रियेत्यर्थः । निर्दोषः प्रत्यक्षम् इत्येवास्त्विति चेत् तत्राऽऽह ॥ सर्वेणेति ॥ उर्वरितेनार्थेन्द्रिय-सन्निकर्ष इति भागेनेत्यर्थः । प्रमाणान्तरं अनुमानाऽदिकम् । अन्ये तु सर्वेण समस्तेन लक्षणेन प्रमाणान्तर-व्युदासः । तथा चेदं लक्षणमलक्ष्ये नास्तीत्यर्थ इत्याहुः ।

### अनुमानसामान्यलक्षणम्

(टी.) अनुमानलक्षणमाह

## निर्दोषोपपत्तिरनुमानम्[1]

उपपत्तिरिति लिङ्गमुच्यते । साहचर्यबलेनार्थगमकं लिङ्गम् । निर्दोषग्रहणमनुमाना-ऽभासव्युदासार्थम् । व्याप्त्याद्यनुमानलक्षणरहितोऽनुमानवदवभासमानोऽनुमानाभासः । उपपत्ति ग्रहणं प्रत्यक्षाऽदिव्यावृत्त्यर्थम् । उपपत्तिश्च यथार्थतो ज्ञातैवार्थं बोधयति । अन्यथाऽतिप्रसङ्गात् ।

(रा. टि.) उपपत्तिर्घटनेति भ्रमनिरासायाऽऽह ॥ लिङ्गमिति ॥ यद्वा अग्रेतनग्रन्थोपक्षेपायोक्तम् लिङ्गमिति । घटः करीर इत्युक्तेरिव पुनरुक्तिदोषनिरासायोक्तम् उच्यत इति । किं लिङ्गम् ? इत्यत आह ॥ साहचर्येति ॥ यद्यपि इदं 'गिरिः अग्निमान् प्रमेयत्वात्' इत्यादौ साधारणानैकान्तिकेऽतिव्याप्तम् अतः साहचर्यनियमबलेनेति वाच्यम् तथाऽपि निर्दोषत्वग्रहणेनैव तन्निरासम्भवात् न नियमांश उपात्तः । अत एवाऽऽह ॥ निर्दोषग्रहणमिति ॥ व्याप्त्यादीति ॥ आदिपदेन पक्षधर्मता वा समुचितदेशवृत्तित्वं वा ग्राह्यम् ॥ अनुमानवत् अवभासमान इति ॥ तादृशश्च प्रागुक्तप्रमेयत्वाऽदिहेतुर्ज्ञेयः । पूर्वदलेन सदनु-मानव्यावृत्तिः । उत्तरदलेन प्रत्यक्षाऽदिनिरासः ॥ उपपत्तिग्रहणमिति ॥ निर्दोषमर्थगमकमनुमेत्युक्ते प्रत्यक्षाऽग-मयोरतिव्याप्तिः । अतो निर्दोषं साहचर्यबलेनार्थगमकमित्युक्तमित्यर्थः ।

ननु साहचर्यबलेनार्थगमकस्य लिङ्गत्वे गृहस्थं प्रति पर्वतधूमाऽदेर्गमकत्वप्रसङ्गात्[2] । धूलीपटलत्वाऽदिना अन्यथाज्ञातस्य च तत्प्रसङ्गात्[3] इत्यत आह ॥ उपपत्तिश्चेति ॥ किञ्च चेत्यर्थः । व्याप्त्याद्यनुसन्धानसहिता इत्यर्थ[4] इत्यपि ज्ञेयम् । 'स तदा वह्निमान् तदा धूमवत्वात्' इत्याद्यतीतानागतसाधारण्येनोपपत्तिज्ञानमेवार्थगमकम् न तूपपत्तिः । सा तूपपत्तिः ज्ञानगतेरव्यावर्तकधर्मज्ञापिकैव[5] । अत एव सुधायां न धूमाऽदिकमेवानुमानं, किं तु ? तज्ज्ञानम् इत्युक्तम् ।

---

[1] रा. निर्दोषोपपत्तिरनुमा. [2] प्रसङ्गः. [3] तत्प्रसङ्ग इत्यत आह. [4] 'इत्यर्थः' इत्येतदधिकमिति भाति [5] गतव्यावर्तक

(श्री. टि.) ॥ निर्दोषोपपत्तिरिति ॥ नन्वत्र निर्दोषग्रहणस्य कृत्यमस्ति न वा ? नास्ति चेत् न कर्तव्यमेव । यद्यस्ति तर्हि युक्त्युपपत्तिशब्दयोः पर्यायत्वात् अनुमा युक्तिरेवोक्ता इत्यत्रापि निर्दोषत्वविशेषणं देयमेव स्यात् इति चेत् । उच्यते । अस्ति खलु शब्दानां मुख्यामुख्यभेदेन द्वयी वृत्तिः । एवं च उपपत्ति-शब्दात् समीचीनोपपत्ताविव तदाभासेऽपि प्रतिपत्तावुत्पन्नायां तद्व्यवच्छेदेन मुख्यार्थोपदर्शनार्थं अत्र निर्दोषग्रहणं कृतम् अनैकान्तिको हेतुः इतिवत् । तत्र पुनरन्तर्गतनिर्दोषत्वं मुख्यमेवार्थमुपादाय युक्तिरित्येवोक्तमित्य-वगन्तव्यम् ।

निर्दोषेति ॥ अत्र प्रमाप्रतिबन्धकत्वं दोषत्वम् । प्रमाप्रतिबन्धकत्वं च द्वेधा । सर्वथा शानाजनक ज्ञानजनकत्वेऽपि संशयविपर्ययजनकत्वेनेति ज्ञातव्यम् । यथोक्तम् पद्धतौ, 'यत्सद्भावे लिङ्गाभिमतं ज्ञानमेव न जनयति संशयविपर्ययौ वा करोतिः ते दोषा' इनि । अनुमानलक्षणान्तर्गतनिर्दोषपदव्यावर्त्यत्वेन प्रसक्तानु-मानाऽभासलक्षणमाह ॥ व्याप्त्यादीति ॥ आदिपदेन समुचितदेशसिद्धिपरिग्रहः । व्याप्त्यादिग्रहणसापेक्षार्थ-प्रमापकत्वाऽदिरूपानुमानलक्षणेत्यर्थः । सदनुमानव्यावृत्तये पूर्वभाग । घटाऽदिव्यावृत्तये विशेष्यभाग इति द्रष्टव्यम् ॥ ज्ञातैवेति ॥ न प्रत्यक्षवदज्ञातेत्यर्थः । अज्ञातकरणत्वे बाधकमाह ॥ अन्यथेति ॥ पर्वते धूमम-जानतो गृहस्थस्याप्यनुमित्यापत्तिरित्यतिप्रसङ्ग इत्यर्थः ।

### अनुमानविभागः

(टी.) त्रिविधमनुमानम्[1] । केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकीति केचित्[2] । साध्यधर्म-वान् धर्मी पक्षः । साध्यसमानधर्मवान् धर्मी सपक्षः । [3]साध्यतत्समानधर्मरहितो धर्मी विपक्षः । साध्यत्वाऽकारमन्तरेण स एव धमः साध्यसमानधर्मः । पक्षव्यापकं सपक्षवृत्ति अविद्यमानविपक्षं केवलान्वयि । तद्द्विविधम् । सपक्षव्यापकं तदेकदेशवृत्तीति । तद्यथा, धर्माधर्मौ कस्यचित् प्रत्यक्षौ प्रमेयत्वात्, गुणत्वादिति । पक्षव्यापकमविद्यमानसपक्षं विपक्षात् व्यावृत्तं केवलव्यतिरेकि ॥ तद्यथा, ईश्वरः सर्वज्ञः सर्वकर्तृत्वादिति । पक्षव्यापकं सपक्षवृत्ति विपक्षात् व्यावृत्तमन्वयव्यतिरेकि पूर्ववत् सपक्षतदेकदेशवृत्तिभेदात् द्विविधम् । तद्यथा, जीवो नित्यः नाशकारणशून्यत्वात्, चेतन-त्वादिति । सर्वत्र निर्दोषत्वानुवृत्तेर्न बाधिताऽदौ प्रसङ्गः ।

तत्पुनर्द्विविधम् । दृष्टं सामान्यतोदृष्टं चेति । प्रत्यक्षयोग्यार्थानुमापकं दृष्टम् । यथा, धूमोऽग्नेः । प्रत्यक्षायोग्यार्थानुमापकं सामान्यतोदृष्टम् । यथा, रूपाऽदिज्ञानं चक्षुरादेः ।

---

[1] श्री. अत्र केचित्, त्रिविधमनुमानम्

[2] श्री. केचित् इति नास्ति

[3] रा. साध्यतत्समानधर्मरहितो विपक्षः

(टी.) पुनस्त्रिविधम्। कारणानुमानं कार्यानुमानं सामान्यानुमानमिति। कारणं कार्यस्यानुमानमाद्यम्। यथा, विशिष्टमेघोन्नतिर्वृष्टेः। कार्यं कारणस्यानुमानं द्वितीयम्। यथा, धूमोऽग्नेः। अकार्यकारणमकारणकार्यस्यानुमानं तृतीयम्। यथा, रसो रूपस्येति।

(रा. टि.) अनुप्रमाणं त्रिविधम् इति धाप्रत्ययेन सूचितमवान्तरभेदं शिष्यव्युत्पादनाय स्वयमाह ॥ त्रिविधमनुमानमिति॥ प्रत्यक्षावान्तरविभागं तु मूलकारः प्रत्यक्षं सप्तविधम् इति स्वयमेव वक्ष्यतीति तदनुक्तिः। उद्दिष्टानां त्रयाणां लक्षणं विवक्षुरादौ अपेक्षितपक्षाऽदिलक्षणान्याह॥ साध्येति॥ सिषाधयिषितधर्मवानित्यर्थः। एतच्च सपक्षाऽदिनिरासाय। धर्मीत्युक्तिस्तु धूमाऽदिलिङ्गनिरासाय। तस्यापि व्याप्तिरूपसम्बन्धेन साध्यधर्मवत्त्वात्। एवमग्रेऽपि। अत एव विपक्षलक्षणे न धर्म्यनुप्रवेशः। समानत्वं[1] प्रमेयत्वाऽदिना ह्रदाऽदेरप्यस्तीति धूमानुमाने सपक्षताऽपत्तिरित्यत आह॥ साध्यत्वाऽऽकारमिति॥ स एवेति॥ व्यापकतावच्छेदकधर्माऽऽक्रान्त एवेत्यर्थः॥ पक्षव्यापकमिति॥ भागासिद्धि[2]केवलव्यतिरेक्यन्वयव्यतिरेकिणां क्रमात् पक्षव्यापकाऽदिविशेषणत्रयेण निरासः॥ तद्यथेति॥ तत् उदाहरणं। यथा स्पष्टं भवति तथा दर्शयिष्यामीत्यर्थः। एवमग्रेऽपि। पक्षव्यापकमिति प्राग्वत्। द्वितीयं केवलान्वयिव्यावृत्त्यर्थम्। तृतीयं अनैकान्तिकनिरासार्थम्। केवलव्यतिरेकिनिरासायाऽऽह॥ सपक्षवृत्तीति॥ चेतनत्वादिति॥ तस्य आकाशाऽदौ सपक्षैकदेशे असत्त्वात् जीवचेतने सत्त्वात् एकदेशवृत्तीति भावः।

ननु 'धर्माधर्माऽद्यतीन्द्रियं दुःखज्ञानाऽदिमतः[3] कस्यचित् प्रत्यक्षं प्रमेयत्वात् गुणत्वात्' इति बाधिते 'विमतं अनिर्वचनीयम् बाध्यत्वात् व्यतिरेकेण ब्रह्मवत्' इत्याद्यप्रसिद्धविशेषणे 'पर्वतो धूमवान् वह्निमत्त्वात्' इति ह्रदाऽदिविपक्षव्यावृत्तेऽपि व्यभिचार्यन्वयव्यतिरेकिणि च अतिप्रसङ्ग इत्यत आह। सर्वत्रेति॥ उदाहृत केवलान्वय्यादावित्यर्थः। इतिभेदात् त्रैविध्यम्। केचित् इत्युक्तया केवलान्वय्यादिभेदेन त्रेधा विभागे अरुचिं सूचयति। तद्बीजं तु पद्धत्याद्युक्तं ज्ञेयमिति भावः॥ रूपाऽदिज्ञानं चक्षुरादेरिति॥ रूपाऽदिज्ञानं करणसाध्यम् क्रियात्वात् अन्यक्रियात्वाद्वा छिदिक्रियावत् इत्येवमनुमापकमित्यर्थः॥ सामान्येति॥ अकार्यकारणानुमानमित्यर्थः।

(श्री. टि.) व्यतिरेकव्याप्तेरनङ्गत्वेन व्यतिरेक्यनुमानस्यैवायोगात् त्रैविध्यमनुपपन्नमिति अन्यत्रोक्तं द्रष्टव्यं इत्याशयेन 'अत्र केचित्' इति परमतानुवादमात्रमेव कृतमिति द्रष्टव्यम्। पक्षाऽदिघटिततया केवलान्वय्यादिकं लक्षयितुं घटकत्वात् पक्षाऽदिलक्षणमाह॥ साध्यधर्मवानिति॥ साध्यरूपधर्मवानित्यर्थः। सपक्षाऽदौ धर्मिण्यतिव्याप्तिवारणाय साध्यधर्मवानित्युक्तम्। यत्प्रतीतिर्लिङ्गेन जनयितव्या स साध्यधर्मः

[1] समानधर्मवत्वम्. [2] भागासिद्ध. [3] दुःखज्ञानाऽदिमत:

(श्री. टि.) इति टीकाकारैः मिथ्यात्वानुमानखण्डनटीकायामभिहितत्वात् सिद्धिकर्मत्वमेव साध्यत्वं विवक्षितम्। अतो न सपक्षाऽऽदावतिव्याप्तिः। साध्यधर्मवत्त्वं संयोगसम्बन्धेन[1] हेतावप्यस्ति, सम्बन्धस्य व्याप्यवृत्तित्वात्। अतस्तत्रातिव्याप्तिवारणाय धर्मीत्युक्तम्। तथा च साध्यधर्मनिरूपितसम्बन्धमात्रस्य हेतौ सत्त्वेऽपि धर्मिपदलब्धसाध्यधर्माधिकरणत्वस्य तत्राभावान्नातिव्याप्तिरिति भावः। सपक्षलक्षणे पक्षे अतिव्याप्तिवारणाय समानपदम्। महानसीये धूमेऽतिव्याप्तिवारणाय धर्मिपदम्॥ साध्यतत्समानधर्मरहित इति॥ साध्यरहितः तत्समानधर्मरहितश्चेत्यर्थः। पक्षेऽतिव्याप्तिवारणाय साध्यरहितपदम्। सपक्षेऽतिव्याप्तिवारणाय तत्समानधर्मरहितपदम्। साध्यतत्समानधर्मरहिते ह्रदत्वेऽतिव्याप्तिवारणाय धर्मिपदम्।

नन्वेवमपि सपक्षलक्षणस्य पक्षविपक्षयोरतिव्याप्तिः साध्येन वह्निना प्रमेयत्वेन समानो यो धर्मः पर्वतत्वह्रदत्वाऽऽदि तद्वत्त्वस्य सत्त्वात्। तथा विपक्षलक्षणस्यापि सपक्षेऽतिव्याप्तिः। साध्यरहितत्वस्य साध्येन वह्निना प्रमेयत्वेन समानभूतो यो धर्मः ह्रदत्वाऽऽदिः तद्रहितत्वस्य च सत्त्वात्। अतः साध्यसमानपदार्थमाह॥ साध्यत्वाऽऽकारमिति॥ सिद्धिकर्मत्वरूपं साध्यत्वाऽऽकारमन्तरेण स एव धर्मो वह्निरूप एव धर्मः साध्यसमानधर्म इत्यर्थः। तथा च लिङ्गेन जनयितव्यप्रतीतिविषयत्वरूपसिद्धिकर्मत्वाऽऽख्यसाध्यत्वाऽऽकारमन्तरेण वह्निरूपधर्म एव महानसेऽस्ति। नास्ति च पक्षे, ह्रदाऽऽदौ च विपक्ष इति न तयोरतिव्याप्तिः। एवं विपक्षलक्षणस्यापि न सपक्षेऽतिव्याप्तिरिति भावः।

केवलान्वयिलक्षणे 'शब्दोऽभिधेयः चाक्षुषत्वात् घटवत्' इति स्वरूपासिद्धे अतिव्याप्तिवारणाय पक्षवृत्ति इत्युक्तम्। एवमपि तस्यामेव प्रतिज्ञायां वर्णात्मकत्वात् इति भागासिद्धेऽतिव्याप्तिवारणाय पक्षव्यापकम् इत्युक्तम्। 'सर्वमभिधेयं प्रमेयत्वात्, इत्यत्रातिव्याप्तिवारणाय सपक्षवृत्ति इत्युक्तम्। अत्र सर्वस्यापि पक्षत्वेन सपक्षस्यैवाऽभावेन तद्वृत्तित्वाभावात्। अन्वयव्यतिरेकिणि धूमानुमानेऽतिव्याप्तिवारणाय अविद्यमानविपक्षम् इत्युक्तम्। गुणत्वादिति॥ तस्मिन्नेव साध्ये गुणत्वात् इति हेतुः सपक्षैकदेशवृत्तिः, कस्यचित् प्रत्यक्षे गुणाऽऽदौ सत्त्वात् घटाऽऽदावभावात्।

केवलव्यतिरेकिलक्षणे 'घटः इतरेभ्यो भिद्यते अवस्तुत्वात्' इति स्वरूपासिद्धे अतिव्याप्तिवारणाय पक्षवृत्तीत्युक्तम्। 'जीवच्छरीरं सात्मकं नीलशरीरत्वात्' इति भागासिद्धेऽतिव्याप्तिवारणाय पक्षव्यापकमित्युक्तम्। धूमवत्त्वाद्यन्वयव्यतिरेकिणि अतिव्याप्तिवारणायाविद्यमानसपक्षम् इत्युक्तम्। 'जीवच्छरीरं सात्मकं प्रमेयत्वात्' इत्यत्रातिव्याप्तिनिरासाय विपक्षात् व्यावृत्तमित्युक्तम्। अत्र सर्वस्मात् विपक्षात् व्यावृत्तमिति वक्तव्यम्। अन्यथा कतिपयविपक्षव्यावृत्ते 'जीवच्छरीरं सात्मकं पृथिवीत्वात्' इति हेतावतिव्याप्तिः स्यात् इति ध्येयम्।

---

1 संयोगाऽऽदिसम्बन्धेन.

(श्री. टि.) अन्वयव्यतिरेकिलक्षणे 'परमाणवोऽनित्याः कृतकत्वात्' इति स्वरूपासिद्धेऽतिव्याप्तिवारणाय पक्षवृत्ति इति 'वाङ्मनसे परमाणवश्च अनित्याः मूर्तत्वात्' इत्यत्र भागासिद्धे अतिव्याप्तिवारणाय पक्षव्यापकम् इति, केवलव्यतिरेकिवारणाय सपक्षवृत्ति इति, केवलान्वयिनिरासाय विपक्षात् व्यावृत्तम् इति उक्तमित्यवगन्तव्यम्। अत्रापि सर्वस्मात् इति पूरणीयम्। अन्यथा 'जीवच्छरीरं अनित्यं पृथिवीत्वात्' इति पार्थिवपरमाणौ व्यभिचारिण्यतिव्याप्तिः स्यादिति ज्ञातव्यम्।

॥ पूर्ववदिति ॥ सर्वसपक्षवृत्तिसपक्षैकदेशवृत्तिभेदात् इत्यर्थः ॥ चेतनत्वादिति ॥ अयं हेतुः सपक्षैकदेशवृत्तिः नित्ये ईश्वरे वृत्तेः गगनाऽदाववृत्तेः इति द्रष्टव्यम्।

ननु केवलान्वयिलक्षणस्य 'सर्वं तेजोऽनुष्णं पदार्थत्वात्' इति बाधितेऽतिव्याप्तिः। केवलव्यतिरेकिलक्षणस्यापि 'शब्दशब्दत्वे अभिधेयत्वाभाववती श्रावणत्वात्' इत्यत्र बाधितेऽतिव्याप्तिः। तथा अन्वयव्यतिरेकिलक्षणस्य 'वैधी हिंसा अधर्मसाधनं हिंसात्वात्' इत्यत्र बाधितेऽतिव्याप्तिः। अत आह ॥ सर्वत्रेति ॥ केवलान्वय्यादिलक्षणत्रयेऽपि निर्दोषोपपत्तिरनुमा इति सामान्यलक्षणस्थस्य निर्दोषत्वस्यात्राप्यनुवृत्तेर्न बाधिताऽदावतिव्याप्तिदोषप्रसङ्ग इत्यर्थः। निर्दोषत्वमात्रं तु प्रत्यक्षाऽगमयोरतिव्याप्तम्। अतः पक्षव्यापकत्वाऽदिभाग इति ज्ञातव्यम् ॥ कार्यस्यानुमानमिति ॥ अनुमापकमित्यर्थः। एवमुत्तरत्रापि। सामान्यानुमानमित्यस्य विवरणम् अकार्यकारणमिति।

### आगमलक्षणम्

(टी.) आगमलक्षणमाह

## निर्दोषः शब्द आगमः

अज्ञानविपर्ययसंशयप्रमादविप्रलम्भाऽदिपुरुषदोषपूर्वकत्वाभावो निर्दोषत्वम्। शब्दो वाक्याऽत्मा। विभक्त्यन्ता वर्णाः पदम्। आकांक्षायोग्यतासन्निधिमन्ति पदानि वाक्यम्। श्रोतुराकांक्षितार्थाभिधायकत्वं पूर्वपदसंजाताऽकांक्षापूरकत्वं वा आकांक्षावत्त्वम्। तेन विरक्तं प्रति वाणिज्योपदेशस्य, गौरश्वः पुरुषो हस्तीत्यादेश्चावाक्यत्वं भवति। सन्निहितार्थाभिधायकत्वं अविलंबेनोच्चरितत्वं वा सन्निहितत्वम्। तेन चोलेषु वर्तमानं तृषितं प्रति 'सन्ति सुरसरिति शीतलानि जलानि' इत्युपदेशस्य विलंबेनोच्चरितपदानां च वाक्यत्वनिरासः। अन्योन्यान्वययोग्यतावदर्थाभिधायकत्वं योग्यतावत्त्वम्। तथा च 'अग्निना सिंचेद्' इत्यादेर्वाक्यत्वनिरासः। निर्दोष इत्यागमाऽभासनिवृत्तिः। शब्द इति प्रत्यक्षाऽदिव्युदासः। आगमश्च सम्यग्ज्ञात एव बोधकः। अन्यथाऽतिप्रसंगात्।

(टी.) स द्विविधः। नित्योऽनित्यश्च। नित्यो वेदः। अनित्यः पुराणाऽदिः। वर्णानां च सर्वत्र नित्यत्वेऽपि प्रबन्धविशेषस्य नित्यत्वानित्यत्वाभ्यामयं विभागः। वर्णाश्च भेदकाभावात् सर्वगता एवेति।

(रा. टि.) निर्दोषपदेन निरभिधेयत्वानन्वितत्वाऽदिराहित्यविवक्षायां शब्दपदस्य वाक्याऽत्मत्वविवक्षा पुनरुक्तिदोषपराहता स्यात्। अतो विवक्षितदोषराहित्यमाह ॥ अज्ञानेति ॥ शब्दबोध्यार्थविषयाज्ञानविपर्ययसंशयेत्यर्थः। प्रमादोऽनवधानम्। विप्रलम्भो वञ्चनम्, अविद्यमानस्य विद्यमानताविवक्षेति यावत्। आदिपदेन करणापाटवगुरूपायविवक्षानिष्प्रयोजनकानपेक्षितार्थप्रतिपादकत्वाऽदिग्रहः। 'आगमोऽदुष्टवाक्यं च' इति तत्वनिर्णयोक्तब्रह्मतर्कवाक्यानुरोधादाह ॥ शब्दो वाक्याऽत्मेति ॥

निष्प्रयोजनत्वाऽदिदोषनिरासार्थमावश्यकनिर्दोषत्वविशेषणेनैव निरभिधेयाऽद्यावतिव्याप्तिनिराससम्भवेऽपि वाक्याऽत्मत्वविवक्षा शिष्याणां पदवाक्याऽदिस्वरूपज्ञानार्था[1] इति भावेन पदाऽदिस्वरूपं दर्शयति ॥ विभक्त्यन्ता इति ॥ सुबन्तास्तिङन्ताश्चेत्यर्थः। 'विभक्तिश्च' इति सूत्रे सुप्तिङोर्विभक्तिसञ्ज्ञोक्तेः। बहुवचनं प्राथिकत्वाभिप्रायेणोपात्तम्। न च विवक्षितम्। विभक्त्यन्तो वर्णः विभक्त्यन्तौ वर्णौ इत्यपि ध्येयम्। तेन 'अः इति ब्रह्म' 'अप्रकेतं सलिलं सर्वमा इदम्' इत्यादौ अ आ इत्यादेरपि पदत्वसिद्धिर्ज्ञेया। विभक्त्यन्तं पदम् इति वाच्ये वर्णा इत्युक्तिः स्फोटनिरासायेत्याहुः।

॥ श्रोतुराकाङ्क्षितेति ॥ आकाङ्क्ष्यत इति आकाङ्क्षितं जिज्ञासितं तदभिधायकत्वं तद्बोधकपदवत्वमित्यर्थः॥ पूर्वपदेति ॥ शब्दमात्रपरोऽत्र पदशब्दः। तेन प्रकृतिजनिताऽकाङ्क्षापूरकप्रत्ययनिष्ठसाकाङ्क्षत्वे नाव्याप्तिः। आकाङ्क्षा जिज्ञासा। पूर्वपदश्रवणेन सञ्जाता किम्? इति या जिज्ञासा तत्पूरकत्वम्। यज्ज्ञाने सति पूर्वपदोत्थजिज्ञासा शाम्यति तज्जनक[2]शब्दः तेन साकाङ्क्ष इत्यर्थः। जिज्ञासाविषयज्ञानजनको हि जिज्ञासापूरको भवति। तादृश[3]ज्ञानविषयत्वयोग्यज्ञानजनकतावच्छेदकरूपवत्वमिति यावत्। भवति हि घटमानय इत्यादौ पूर्वपदेन सञ्जाताया जिज्ञासाया विषयत्वयोग्यं यत् ज्ञानं क्रियाज्ञानं[4] तज्जनकतावच्छेदकरूपक्रियापदत्वम् तादृशरूपवत् क्रियापदं घटरूपकारकपदेन साकाङ्क्षम्।

लक्षणद्वयस्यापि क्रमात् व्यावर्त्यमाह ॥ तेनेति ॥ द्विविधलक्षणेनेत्यर्थः। अवाक्यत्वम् इत्याकृष्यते। यद्यपि एतादृशोपदेशस्य पूर्वपदेत्यादिनोक्ताकाऽङ्क्षाऽदिराहित्ये तत एवावाक्यत्वम्, तद्वत्त्वे च वाक्यार्थप्रमितिजनकत्वात् अस्त्येव वाक्यत्वम् इति तन्निरासायाऽद्यलक्षणमनपेक्षितम् तथाऽपि श्रोतुरनाऽकाङ्क्षितत्वमात्रेण

[1] ज्ञापनार्था, [2] तज्ज्ञानजनक [3] जिज्ञासाविषयत्व, [4] तज्जनकतावच्छेदकं रूपं,

(शा.दि.) तस्यावाक्यत्वोक्तिरित्येव । वस्तुतस्तादृशोपदेशोऽपि संग्राह्य एव । अन्वयमितिमुपयोग्युक्तवक्ष्यमाणाऽका-ङ्क्षाऽऽदिमत्त्वात् । परं तु श्रोतुरनपेक्षितत्वात् तन्मात्रस्यानुपादेयत्वमिति ज्ञातव्यम् ॥ गौरश्व इति ॥ गोपदोत्थ-जिज्ञासापूरकत्वमश्वाऽऽदिपदस्याभावात्[1] नातिव्याप्तिरिति भावः । अत्र पूर्वपदजातजिज्ञासाविषयज्ञानजनकत्वं तादृशज्ञानजननयोग्यता विवक्षिता । न तु फलोपधानम् । तेन अनितान्वयबोधे वाक्ये अन्वयबोधप्राक्कालीन-वाक्ये च नाव्याप्तिरित्यपि ध्येयम् । इदं चाऽऽकाङ्क्षावत्त्वं ज्ञातमेव वाक्यार्थान्वयबोधहेतुः ।

सन्निधिलक्षणमाह ॥ सन्निहितेति ॥ यद्यपि क्रमप्राप्तयोग्यतालक्षणमेवाऽऽदौ वक्तव्यम् तथाऽपि आकाङ्क्षाया लक्षणद्वयोक्तिप्रक्रमात् सन्निधिलक्षणद्वयस्यापि तदनन्तरमुक्तिरित्यदोषः । व्यवहितार्थबोधक-वाक्येऽप्याकाङ्क्षाऽऽदिमत्त्वे अन्वयप्रमितिजनकत्वेन प्रमाणतयाऽस्त्येव वाक्यत्वम् तथाऽप्यनुपादेयत्वं तस्यास्ति । लक्षणे निर्दोषपदेन तादृक्षदोषस्यापि वारणमभिप्रेतमिति भावेन पूर्वत्र अत्र च लक्षणद्वयसमुच्चयोक्तिः ।

॥ अविलम्बेनोच्चरितत्वमिति ॥ न च 'गौरश्व' इत्यादौ च वाक्येऽतिव्याप्तिः । तत्र सन्निधेः सत्त्वात्, अन्वयबोधविरहस्य चाऽऽकाङ्क्षाऽभावनिबन्धनत्वात्तत्र इति तात्पर्यात् । न च तथाऽपि 'नेदृशं सकमलं समलं नास्य तीर्थसलिलस्य समं वाः' इत्यादौ मौनिलिखितश्लोके अव्याप्तिः तत्रोच्चारणाभावात् इति शङ्क्यम् । उच्चरितस्य[2] पदस्य उच्चारणाभिप्रायसाधारणव्यापारमात्रपरत्वेन अविलम्बेन पदोपस्थित्यनुकूलवक्तृव्या-पारविषयत्वं सन्निहितत्वमित्यर्थस्य विवक्षितत्वात् । तथा च अविलम्बेनोपस्थित्यनुकूलाभिप्रायविषयत्वं[3] तादृशोच्चारणविषयत्वं चेत्यर्थः । मौनिश्लोके[4] च उच्चारणाभावेऽपि निष्फलेन अन्वयबोधविरोधिना व्यवधान-शून्यतया पदोपस्थित्यनुकूलाभिप्रायरूपवक्तृव्यापारविषयत्वस्य सन्निहितत्वस्य मौनिश्लोकाऽऽदावपि सत्त्वात् नाव्याप्तिः । वेदेऽपि तादृशेश्वराभिप्रायविषयत्वात् तत्रापि नाव्याप्तिः । सन्निहितत्वमपि ज्ञातमेव शाब्दधी-हेतुर्ज्ञेयः ॥ विलम्बेनेति ॥ निष्फलेन अन्वयबोधविरोधिना व्यवधानेन वक्तृव्यापारविषयपदानामित्यर्थः । ॥ अन्योन्येति ॥ घटमानय इत्यादौ क्रियाकारकयोर्योऽन्योन्यमन्वयः तद्योग्यतावन्तौ यावर्थौ घटाऽऽनयनाऽऽदि-रूपौ तत्प्रतिपादकपदवत्त्वमित्यर्थः ।

॥ इत्यादेर्वाक्यत्वनिरास इति ॥ न चैवं निश्चिताप्रामाण्यकस्य 'अग्निना' इत्यादिवाक्यस्य निरासेऽपि 'जलेन सिञ्चति' इत्यनाप्तोक्तवाक्येऽतिव्याप्तिरिति शङ्क्यम् । आवश्यकनिर्दोषत्वविशेषणेनैव तादृशवाक्यस्यापि निवारणात् इति भावेनाऽऽह ॥ निर्दोष इति ॥ आगमाऽऽप्तोऽनाप्तवाक्यम् । एतच्च योग्यत्वं आकाङ्क्षा-

---

[1] पूरकत्वस्याश्वाऽऽदिपदेऽभावात्  [2] उच्चरितपदस्य,  [3] अविलम्बेन पदोपस्थित्यनुकूला
[4] 'मौनिश्लोके च' इदमधिकमिति भाति ।

(रा. टि.) सन्निधिवत् न ज्ञातं शाब्दान्वयधीहेतुः। तथात्वेऽन्वयज्ञानं विना तद्योग्यार्थाभिप्रायकत्वज्ञानायोगेनाऽन्यो-न्याश्रयात्[1]। शाब्दान्वयप्रमितिं प्रति स्वरूपसत्कारणमपि शाब्दान्वयबोधमात्रे स्वरूपं सदपि[2] न कारणम् तदभावनिश्चयेऽपि 'अग्निना' इत्यादिवाक्यादन्वयबोधस्य जननात्। मेरुः सर्षपः इत्यादिवाक्यात् मेरोः सर्षपत्व-प्रतिभासात् इति अन्यथाख्यातिप्रकरणे सुधोक्तेश्च। पद्धतौ तु प्रतीतार्थस्य प्रमाणविरोधाभावो योग्यता। तत्प्रतिपादकत्वात् पदान्यपि योग्यतावन्ति इत्युक्तम्। तदा तु तेनैवागमाऽऽभासनिरासो व्यक्तः ॥ नित्यो वेद इति ॥ प्रतिकल्पं सजातीयाऽऽनुपूर्वीक इत्यर्थः। अनित्यं प्रतिकल्पं अन्यान्याऽऽनुपूर्वीकमित्यर्थः ॥ प्रबन्धविशेषस्येति ॥ आनुपूर्व्या इत्यर्थः ॥ भेदकेति ॥ तारत्वमन्द्रत्वाऽऽदिकं तु व्यञ्जकध्व-निगतमेवेति भावः।

(श्री.टि.) वाक्ये प्रत्यक्षाऽऽदाविव स्वाभाविकदोषाणामभावात् आह ॥ अज्ञानेत्यादिना ॥ पदसमु-दायरूपं वाक्यमात्रमेव लक्ष्यतयाऽभिप्रेत्य प्रवृत्तं यत् 'आगमोऽदुष्टवाक्यं च' इति प्रमाणतर्कवाक्यं तदनुसारेण शिष्याणां पदवाक्याऽऽदिस्वरूपज्ञापनाय शब्दशब्दाभिप्रेतमर्थमाह ॥ शब्दो वाक्याऽऽत्मेति ॥ तथा च निर्दोषं वाक्यमागम इत्यर्थः।

ननु सिद्धान्ते वैदिकानां पदानामपि महायोगवृत्त्या भगवति प्रामाण्यस्योक्तत्वेन वैदिकपदाऽऽत्मक आगमे अव्याप्तिरिति चेत्, अत्राहुः, यौगिकपदानामपि प्रकृतिप्रत्ययविभागेन संसर्गबोधकतया वाक्यात्म-कतैवेति। वस्तुतस्तु पदसमुदायरूपवाक्याऽऽत्मक एव शब्दोऽत्र लक्ष्यत्वेन विवक्षित इति न दोषः। अत एव पद्धतौ 'आगमोऽदुष्टवाक्यं च' इति प्रमाणतर्कानुसारेण निर्दोषं वाक्यमिति वा इति लक्षणान्तर-मुक्तम् इत्यवधेयम्।

पदघटितत्वेन वाक्यं लक्षयितुं तावत् पदलक्षणमाह ॥ विभक्त्यन्ता वर्णाः पदमिति ॥ अवगड-देत्यादिवर्णसमूहेऽतिव्याप्तिपरिहाराय विभक्त्यन्ता इत्युक्तम्। विभक्त्यन्ते 'पर्वतोऽग्निमान्' इत्यादि-वाक्येऽतिव्याप्तिपरिहाराय वर्णा इत्युक्तम्। न च तत्र वर्णानामपि सत्त्वेन कथं निवारणम्? इति वाच्यम्, तत्र वर्णानां पदत्वेन प्रवेशोऽपि न वर्णत्वेन प्रवेशः अतस्तेन तद्व्यावृत्तिरिति ध्येयम्।

ननु एकवर्णाऽऽत्मके वर्णद्वयाऽऽत्मके च पदे वर्णबहुत्वघटितलक्षणाभावात् अव्याप्तिः इति चेत्, उच्यते, नात्र 'बहुषु बहुवचनम्' इति सूत्रेण बहुवचनं बहुत्वापेक्षम्। किं तु? जातौ। 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति सूत्रात्। अतो विभक्त्यन्तवर्णत्वं [3]पदत्वम् इत्युक्तं स्यात्। न चेदं

---

[1] निश्चायकत्व, [2] स्वरूपसदपि [3] पदम्.

(श्री॰ टि॰) युक्तम् । विभक्तेर्वर्णधर्मत्वेन वर्णत्वजातेर्विभक्त्यन्तत्वाभावेन पदत्वोत्पत्त्यसम्भवात् । अतो मुख्यार्थासम्भवात् लक्षणया वर्णत्वजात्यवच्छिन्नवर्णव्यक्तेः पदत्वाऽश्रयणेन एकवर्णाऽत्मकवर्णद्वयाऽत्मकबहुवर्णात्मकानां सर्वेषामपि पदानां संग्रहो भवतीति न कोऽपि दोष इति सम्प्रदायः ।

इयं च रीतिः 'त्रिविधा विदुषां कथा' इत्यत्र कथालक्षणटीकायां जाताविदं बहुवचनम् इति वदद्भिः 'कथास्तिस्रो विजानताम्' इत्यनुव्याख्यानव्याख्यानसमये सुधायां विदुषामिति जातौ बहुवचनम् इति वदद्भिः टीकाकारैः प्रदर्शितेति ज्ञातव्यम् ।

आकाङ्क्षालक्षणद्वयव्यावर्त्यं क्रमेण दर्शयति ॥ तेनेति ॥ अविलम्बेनोच्चरितत्वमिति ॥ नन्विदमनुपपन्नम् मौनिकृतग्रन्थरूपे वाक्ये तत्कृतलिप्यनुमिते उच्चारणाभावेनाव्यापकत्वात् इति चेन्न । उच्चरितपदेन पदोपस्थित्यनुकूलवक्तृव्यापारमात्रस्य विवक्षितत्वात् । तत्रापि मानसिकव्यापारसद्भावात् इति ज्ञातव्यम् । सन्निधिलक्षणद्वयव्यावर्त्यं क्रमेण दर्शयति ॥ तेनेति ॥ विलम्बेनोच्चारितेति ॥ प्रहरे प्रहर उच्चार्यमाणेत्यर्थः ॥ आगमाभासेति ॥ भ्रान्तप्रतारकवाक्यमागमाऽभासशब्देनोच्यत इत्यवधेयम् । विप्रलम्भकवाक्यस्याऽगमाऽभासशब्देन ग्रहणे योग्यताघटितवाक्यत्वरूपाऽगमलक्षणस्य तत्राभावेनातिव्याप्तिप्रसक्तिरेव नास्तीति द्रष्टव्यम् । तत्र प्रतारणस्यैव दोषत्वेन निर्दोषपदेन तद्व्यावृत्तिरिति भावः । न च भ्रान्तप्रतारकवाक्यस्य निर्दोषत्वाभावे तज्जन्यं ज्ञानं कथं प्रमा स्यात्? इति वाच्यम् । न हि तार्किकाणामिव अस्मन्मते प्रामाण्यम् आप्तोक्तत्वगुणजन्यम् येनैवं पर्यनुयोगः स्यात् इति भावः ।

सुधायां तु, निर्दोषत्वाविशेषितं यथार्थज्ञानसाधनत्वमनुप्रमाणलक्षणं कृत्वा, भ्रान्तप्रतारकवाक्येऽतिव्याप्तिमाशङ्क्य, पारिभाषिकसाधनत्वस्य प्रतारकवाक्यजातीयेऽभावेन परिहृत्य, भ्रान्तप्रतारकवाक्ये पारिभाषिकसाधनत्वमस्तीति पुनरतिव्याप्तिमाशङ्क्य, तस्य प्रामाण्यप्रसङ्गेऽपि न काचिदस्माकं क्षतिः न हि तार्किकाणामिवास्माकमाप्तोक्ततया प्रामाण्यानुमानाऽदिकमप्यस्तीति लक्ष्यत्वात् नातिव्याप्तिरिति समाधानमभिधाय, यद्वा निर्दोषत्वेन ज्ञानं विशिष्यते यथार्थपदफलितार्थस्यैव निर्दोषग्रहणेन वर्णितत्वात् इत्यादिना भ्रान्तप्रतारकवाक्यादावतिव्याप्तिपरिहारो निर्दोषग्रहणेन कृत इत्यवधेयम् ।

वस्तुगतिमभिप्रेत्याह ॥ आगमश्चेति ॥ अज्ञातस्यैव बोधकत्वाङ्गीकारे बाधकमाह ॥ अन्यथेति ॥ अतिप्रसङ्गादिति ॥ बधिरस्यापि वाक्यार्थधीप्रसङ्गात् इत्यर्थः । आगमविभागमाह ॥ स द्विविध इति ॥ नित्योऽनित्य इति ॥ अपौरुषेयः पौरुषेयश्चेत्यर्थः । अन्यथा ध्वंसाप्रतियोगित्वलक्षणनित्यत्वस्य पुराणेऽपि सत्वात् अनित्यत्वोक्तिरयुक्ता स्यात् इति मन्तव्यम् ।

(श्री· टि·) ननु वेदानां पुराणानां च वर्णात्मकत्वात् वर्णानां च कूटस्थनित्यत्वात् कथमयं विभागः? इत्यत आह ॥ वर्णानां चेति ॥ सर्वत्रेति ॥ वेदे पुराणे चेत्यर्थः ॥ प्रबन्धविशेषस्येति ॥ 'अग्निमीळे' इत्याद्यानुपूर्वीविशेषस्येत्यर्थः ।

॥ नित्यत्वेति ॥ नित्यत्वं नियतैकप्रकारत्वम् । तथा च आनुपूर्वीविशेषस्य नियतैकप्रकारत्वेन तद्विशिष्टवर्णात्मकवेदस्याप्यपौरुषेयत्वमेव । पुराणानां च अन्यथाशब्दरचनसद्भावेन नियतानुपूर्वीकत्वाभावात् पौरुषेयत्वमेवेति भावः ।

ननु सर्वत्र वर्णेषु क्रमः तत्तद्बुद्ध्युपाधिक एव वक्तव्यः, न स्वतः, नित्यत्वेन सर्वगतत्वेन च कालिकस्य देशिकस्य च क्रमस्य अयोगात् । तथा च अस्मद्बुद्ध्युपाधिकस्य ईश्वरबुद्ध्युपाधिकस्य च क्रमस्य जन्यत्वमेवेति कथं तद्विशिष्टवेदस्यापौरुषेयत्वम्? इति चेत्, उच्यते, वर्णानां कूटस्थनित्यत्वेऽपि क्रमस्य सर्वत्र जन्यत्वेऽपि वेदस्यापौरुषेयत्वं युज्यत एव । तथा हि, सजातीयोच्चारणमनपेक्ष्योच्चारयिता पुरुषः स्वतन्त्रः । तत्पूर्वकत्वाभाव एवापौरुषेयत्वम् । वर्तते चेदं वेदादौ, नास्ति च पुराणादाविति न कोऽपि दोषः ।

अत्रेश्वरबुद्ध्युपाधिकः क्रमोऽजन्य एवेति केचिन्मन्यन्ते । तन्न समीचीनमिव भाति । तथात्वे क्रमस्य कृतकत्वेऽपीति सामान्यतस्तत्त्वनिर्णयटीकोक्तिविरोधात् ।

किं च वर्णास्तावन्नित्याः । क्रमस्तु वर्णद्वयधर्मः ॥ क्रमस्तु वर्णद्वयधर्म इति सुधोक्तेः । तथा च नित्यभूतवर्णधर्मभूतक्रमस्य नित्यत्वे खण्डितत्वाभावेन वर्णैरत्यन्ताभेद एव प्राप्तः । ॐ इति चेत्, तथात्वे 'यत् यदभिन्नाभिन्नं तत् तेनाभिन्नम्' इति व्याप्तिबलात् यः कृष्णो येन रामेणाभिन्नमूलरूपनारायणाभिन्न इति तेन रामेणाप्यभिन्नो दृष्टः, एवं ककाररूपो वर्णः खकाराभिन्नक्रमाभिन्न इति खकारेणाप्यभिन्नो जात इत्येवं ककारखकारयोरप्यैक्यप्रसङ्गात् न क्रमस्य नित्यत्वम् । अनित्यत्वे तु नायं दोषः खण्डितत्वेन वर्णैर्भिन्नाभिन्नत्वात्, उक्तव्याप्तेश्चात्यन्ताभेदस्थलीयत्वात् । अत एव एतद्दोषभयात् जीवेश्वरनिष्ठद्वित्वस्येश्वरेण भेदाभेद एवाङ्गीकृतः । यथोक्तमनुव्याख्याने

> 'न केनचिदभेदोऽस्ति भेदाभेदोऽपि वा क्वचित् ।
> समुदायमृते विष्णोः स्वगुणादीन् विनाऽपि वा ॥
>
> इति श्रुतेः' इति ।

अन्यथा तत्रापि ईश्वरधर्मभूतद्वित्वस्येश्वरेणात्यन्ताभेदे उक्तव्याप्तिबलात् जीवेश्वरयोरप्यभेदः स्यादिति । तस्मात् सर्वोऽपि क्रमो जन्य एवेति सिद्धान्तसङ्क्षेपः ।

(श्री. टि.) अत एवोक्तम् तर्कताण्डवे, ईश्वरोऽप्यस्मन्मते महोपाध्याय एव इति। तथा च ईश्वरस्याप्युपाध्यायतुल्यत्वोक्त्या उपाध्यायबुद्ध्युपाधिकक्रमस्येव ईश्वरबुद्ध्युपाधिकक्रमस्यापि अन्यत्वमेवेति तद्ग्रन्थाभिप्रायो बोद्धव्यः। सर्वेषां मतेऽपि ईश्वरबुद्ध्युपाधिकः क्रमो नित्य एव। न नश्यति। बुद्ध्युपरमेण हि तदुपरमो वक्तव्यः। न हीश्वरबुद्धेरुपरमोऽस्तीति सर्वज्ञत्वादीश्वरस्य इति तत्वनिर्णये प्रतिपादितत्वात् इति ध्येयम्। विस्तरस्तु अस्मत्कृततत्त्वनिर्णयटीकाटिप्पण्यां द्रष्टव्यः।

ननु वर्णानां मध्यमपरिमाणवत्वेन अनित्यत्वसाधनात् नित्यत्वोक्तिरयुक्ता इत्याशङ्क्य स्वरूपासिद्धो हेतुरित्याह ॥ वर्णाश्चेति ॥ यतः सर्वगताः अतो नित्या एव इति योज्यम्। तथा च 'वर्णा नित्याः सर्वगतत्वात् गगनादिवत्' इत्यनुमानमुक्तं भवति। असिद्धिपरिहाराय सर्वगतत्वं साधयितुं भेदकाभावात् इत्युक्तमिति केचित् व्याचक्षते। तन्न। सर्वगतत्वेन नित्यत्वसाधनस्य सर्वगतेषु अनित्येषु कालक्षणेषु व्यभिचारित्वात्।

वस्तुतस्तु प्रसङ्गात् आह ॥ वर्णाश्चेति ॥ ननु कथं वर्णानां सर्वगतत्वम्? काश्येतद्देशस्थयोः ककारयोर्भिन्नत्वादित्यत उक्तम् ॥ भेदकाभावादिति ॥ काश्येतद्देशस्थयोः ककारयोर्भेदसाधकप्रमाणाभावात् प्रत्युत 'यावत् ब्रह्म विष्ठितं तावती वाक्' इत्यादिश्रुत्या ब्रह्म यावद्देशकालव्यापितया अवस्थितं वागपि तावद्देशकालव्यापिनीति सर्वगतत्वस्यैवाभिधानादित्यर्थः।

अन्येऽप्याहुः

'वर्णात्मकाश्च ये शब्दा नित्याः सर्वगतास्तथा' इति

अर्थापत्तेरनुमानान्तर्भावसमर्थनम्

(टी) ननु कथं त्रीण्येव प्रमाणानि? अर्थापत्त्युपमानयोरपि पृथक्प्रमाणत्वात् इत्यत आह

## अर्थापत्त्युपमे अनुमाविशेषः

अनुपपद्यमानप्रमितिरर्थापत्तिः। सा द्विविधा, श्रुतार्थापत्तिर्दृष्टार्थापत्तिश्चेति। तत्राऽद्या यथा, 'जीवंश्चैत्रो गृहे नास्ति' इति श्रुतवतो जीवतो गृहाभावप्रमितिः। द्वितीया यथा, जीवतो गृहाभावं दृष्टवतस्तत्प्रमितिरिति। तया बहिर्भावप्रमा भवतीति सा अनुमाने अन्तर्भवति। विमतो बहिरस्ति जीवनवत्वे सति गृहेऽसत्वात् यथाऽहम्' इति प्रयोगसम्भवात्।

(रा. टि.) करणाभिप्रायेणाऽऽह ॥ अनुपपद्यमानप्रमितिरिति ॥ तयेति ॥ जीवनवतो गृहाभाव-प्रमित्येत्यर्थः । बहिर्भावो बहिःसत्त्वम् । इतिशब्दो हेतौ । मृते अव्यभिचाराय सत्यन्तम् । गृहे विद्यमाने अव्यभिचाराय विशेष्यम् ।

(श्री. टि.) अनुपपद्यमानप्रमितिरिति ॥ अनुपपद्यमानार्थदर्शनात् तदुपपादकभूतार्थान्तरप्रमिति-रित्यर्थ. ॥ जीवनवत्त्वे सतीति ॥ मृते व्यभिचारवारणाय सत्यन्तम् । गृहे सति व्यभिचारवारणाय विशेष्यभाग इति द्रष्टव्यम् ।

मीमांसकोक्तोपमानस्य प्रत्यक्षाऽद्यन्तर्भावः

(टी) सादृश्यप्रमासाधनमुपमानम् । तत् त्रिविधम् । गृह्यमाणे स्मर्यमाणप्रतियोगिकसादृश्य-प्रमासाधनम् । यथा, गां दृष्ट्वा वनं गतस्य गृह्यमाणगवये स्मर्यमाणगोसादृश्यप्रमाणं 'गोसदृशोऽयं गवयः' इति । गृह्यमाणप्रतियोगिकस्मर्यमाणगतसादृश्यप्रमासाधनं स्मर्यमाणप्रतियोगिकगृह्यमाणगत-सादृश्यज्ञानम् । यथा, गामनुभूय वनं गतस्य गवये गोसादृश्यज्ञानं स्मर्यमाणे गवि गृह्यमाणगवय-प्रतियोगिकसादृश्यप्रमासाधनम् । 'गोसदृशोऽयं गवयः, तस्मात् गवयसदृशोऽसौ गौः' इति । निर्दोषवाक्यं सादृश्यप्रमासाधनं यथा, 'यथा गौर्गवयस्तथा' इति । तदेतत् त्रयं क्रमेण प्रत्यक्षाऽद्य-न्तर्भूतम् । विमतो गौः गवयसदृशः गवयगतसादृश्यप्रतियोगित्वात् यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः यथा यमो यमान्तरेण' इति प्रयोगसंभवात् ।

(रा. टि.) मीमांसकोक्तमुपमानमाह ॥ सादृश्येति ॥ त्रिविधम् इत्युक्तत्रैविध्यम् उद्देशपूर्वकं क्रमात् उदाहरणनिष्ठतया दर्शयति, गृह्यमाण इति गृह्यमाणेति निर्दोषं वाक्यमिति च वाक्यत्रयेण । गृह्यमाणे गवये स्मर्यमाणगोप्रतियोगिकसादृश्यप्रमामभिनीय दर्शयति ॥ गोसदृशोऽयं गवय इतीति ॥ स्मर्यमाणगतसादृश्य-प्रमासाधनं किम्? इत्यत आह ॥ स्मर्यमाणप्रतियोगिकेत्यादि ॥ स्मर्यमाणे गवीति ॥ पुंलिङ्गो गोशब्द इति भावः । साधनीभूतसादृश्यज्ञानं तत्साध्यसादृश्यप्रमां चाभिनीय दर्शयति ॥ गोसदृश इति । तथेतीति । इतिपदस्य वाक्यमिति पूर्वेणान्वयः ॥ प्रत्यक्षाऽद्यन्तर्भूतमिति ॥ आद्यस्य सादृश्यज्ञानस्येन्द्रियसन्निकर्षान्वय-व्यतिरेकानुविधायित्वेन तृतीयस्य तु वाक्यजत्वेन स्पष्टत्वात् द्वितीयेऽनुमानप्रकारं दर्शयति ॥ विमत इति ॥ यमे इति ॥ युगपत् प्रसूतौ यमावुच्येते ।

न च गोगतसादृश्यज्ञानं स्मृतिरूपं किं न? इति शङ्क्यम्, प्रतियोगिनो गवयस्य प्रागननुभूतत्वेन गोगतगवयसादृश्यस्य प्रागननुभूतत्वात् । सादृश्यज्ञाने प्रतियोगिज्ञानाधीनत्वस्यान्वयव्यतिरेकसिद्धत्वात् ।

(श्री. टि.) शाबरोपमानस्यान्तर्भावं वक्तुं तल्लक्षणं विभागं चाऽह ॥ सादृश्यप्रमेति ॥ 'गोसदृशोऽयं गवय' इति गवये गोसादृश्यप्रमाणमित्यन्वयः । गोसादृश्यप्रमाणम् गोसादृश्यप्रमाकरणं प्रत्यक्षमित्यर्थः । सादृश्यप्रमासाधनं निर्दोषवाक्यं यथेत्यन्वयः । तत्राऽद्यस्य प्रत्यक्षेऽन्तर्भावस्य तृतीयस्य शब्देऽतर्भावस्य स्पष्टत्वात् द्वितीयस्यानुमानान्तर्भावं तु दुर्विज्ञानत्वात् उपपादयति ॥ विमत इति ।

## तार्किकोक्तोपमानस्यानुमानान्तर्भावः

(टी.) अकृतसमयसंज्ञास्मरणसहायं तत्समभिव्याहृतवाक्यार्थप्रत्यभिज्ञाप्रत्यक्षं उपमानम् । संज्ञासंज्ञिसम्बन्धप्रमितिस्तत्फलमित्यन्ये । तत्रातिदेशवाक्यार्थस्त्रिविधः । साधर्म्यं वैधर्म्यं धर्ममात्रं चेति । तद्भेदात्[1] तत्प्रतिसन्धानात्मकमुपमानमपि त्रिधा भिद्यते । तत्र साधर्म्योपमानं यथा, 'यथा गौर्गवयस्तथा' इति श्रुतातिदेशवाक्यस्य नागरिकस्य वनं गतस्य गोसदृशं गवयमवलोकयतोऽव्युत्पन्नगवयपदस्मरणवतः 'अयमसौ गोसदृशः य आप्तेनोपदिष्ट' इति प्रतिसन्धानं, तेन तस्य गवयपदार्थत्वप्रमा । वैधर्म्योपमानं यथा, 'गवादिवत् द्विशफो न भवत्यश्व' इत्यतिदेशवाक्यं श्रुतवतः अश्वं पश्यतः अश्वपदं स्मरतः 'अयमसौ गवादिविसदृश' इति प्रतिसन्धानम्, तस्य तेनाश्वपदार्थत्वप्रमितिः । धर्ममात्रोपमानं यथा, 'दीर्घग्रीवत्वाऽऽदिमान् पशुरुष्ट्र' इत्यतिदेशवाक्यं श्रुतवतः क्रमेलकं पश्यत उष्ट्रपदस्मृतिमतः 'अयमसौ तद्धर्मा[1]' इति प्रतिसन्धानम्, तेनोष्ट्रपदव्युत्पत्तिरिति ।

तदेतत् त्रयमप्यनुमान एवान्तर्भूतम् । विमतो गवयशब्दवाच्यः अगोत्वे सति गोसदृशत्वात् व्यतिरेकेण घटवदिति प्रयोगसंभवात् । अतो न विभागानुपपत्तिः । अत्रोपमानद्वयस्यान्तर्भावानुक्तिः अतिस्फुटप्रतिभासत्वात्, आगमान्तर्भूतत्वे विवादाभावाच्चेति ।

प्रयोगप्रकारवैचित्र्यात् कथमनुमानत्वमित्यत उक्तम् ॥ अनुमाविशेष इति ॥ यथा खल्वन्वयिनो व्यतिरेकिणश्च प्रयोगप्रकारवैचित्र्येऽपि नानुमानाद्बहिर्भावः अनुमानविशेषत्वात् अपेक्षितसाधर्म्यसद्भावाच्च तथाऽत्रापीति ।

एतेनोपमानस्यार्थविशेषनिष्ठतया पार्थक्यशंकाऽपि परास्ता । तादृशसंप्रतिपन्नानुमानवदेव तदुपपत्तेः । अनेनैव "न च केवलतर्केण" इत्यादिपृथगुक्तेर्गतिश्चोक्ता भवति ।

---

[1] रा. तत्प्रमितिसाधनात्मक.   [1] रा. तद्धर्मवान्.

(रा. टि.) तार्किकोक्तमुपमानमाह ॥ अकृतेति ॥ तन्मते सङ्केतमात्रस्य कृतिमत्वात् अकृतेत्युक्तम् । अकृतः अज्ञातः, समयः सङ्केतः वाच्यवाचकसम्बन्धः यस्याः सा अकृतसमया, सा च सा सञ्ज्ञा च, तस्याः स्मरणसहायं अव्युत्पन्नवाचकपदस्मृतिसहकृतं प्रत्यभिज्ञाप्रत्यक्षम् इत्यन्वयः ॥ तत्समभिव्याहृतेति ॥ अकृतसमयसञ्ज्ञासमभिव्याहृतेत्यर्थः ॥ अतिदेशवाक्यार्थ इति ॥ सादृश्यादिपदघटितवाक्यार्थ इत्यर्थः ॥ तद्भेदादिति ॥ अतिदेशवाक्यार्थभेदात् । सञ्ज्ञासञ्ज्ञिसम्बन्धप्रमितिसाधनात्मकमित्यर्थः । कदाऽपि गवयदर्शनं नेति प्रदर्शनायोऽक्तम् ॥ नागरिकस्येति ॥ प्रतिसन्धानमिति ॥ वाक्येनावगतार्थस्य पुनः प्रत्यक्षेण दर्शनमित्यर्थः । साधर्म्योपमानमित्यन्वयः ॥ तद्धर्मवानिति ॥ दीर्घग्रीवाऽऽदिधर्मवानित्यर्थः ॥ व्युत्पत्तिरितीति ॥ सङ्केतज्ञानमित्यर्थः । गवान्तरे अव्यभिचारायोक्तम् ॥ अगोत्वे सतीति ॥ महिषाऽऽदौ अव्यभिचारायोक्तम् ॥ गोसदृशत्वादिति ॥ अन्वयव्याप्तौ दृष्टान्ताभावादाह ॥ व्यतिरेकेणेति ॥

यद्यपि, अत्र अमुक इति दृष्टान्ताभावेऽपि अतिदेशवाक्यस्य आप्तवाक्यत्वेन 'ब्राह्मणो न हन्तव्यः' इति वाक्यस्येव 'यो यो गोसदृशः स सर्वोऽपि गवयपदवाच्यः' इति व्याप्तिग्राहकत्वसम्भवात् अन्वयव्याप्तिरेव वक्तुं शक्या, तथाऽपि उपायान्तरप्रदर्शनमेतत् । यथा, 'पृथिवीत्ववती पृथिवीति व्यवहर्तव्या' इति लक्षणवाक्यं श्रुतवतः पृथिवीत्वाभिसम्बन्धं क्वचित् द्रव्ये पश्यतः अनुमानेनैव सञ्ज्ञासञ्ज्ञिसम्बन्धप्रमितिरभ्युपगम्यते, लक्षणमपि केवलव्यतिरेकीति प्रसिद्धेः[1], तथा प्रकृतेऽपीति भावः ।

न चात्र साध्याप्रसिद्धिर्दोषः शङ्क्यः व्यतिरेकिणि तस्या अदोषत्वात् । सामान्यतः प्रसिद्धिस्तु 'गवयपदं क्वचिच्छक्तम् पदत्वात्' इत्यादिना भविष्यति । एवदर्थमेव प्राक् केवलव्यतिरेकिणा अन्वयव्यतिरेकिणा च व्युत्पत्तिप्रकारः प्रदर्शितः । एतदुपलक्षणम् । 'विमतः अश्वपदवाच्यः एकशफत्वात् गवादिविसदृशत्वात्' विमतः उष्ट्रपदवाच्यः दीर्घग्रीवाऽऽदिमत्वात् व्यतिरेकेण गवादिवत्' इत्यपि ध्येयम् ।

॥ अत्रेति ॥ अर्थापत्त्युपमे इति वाक्ये, एतत्प्रकरण इति वा अर्थः । शबरोक्तोपमानत्रये आद्यन्तोपमानद्वयस्येत्यर्थः ॥ अपेक्षितेति ॥ व्याप्तिपक्षधर्मतासाधर्म्येत्यर्थः ॥ अर्थविशेषेति ॥ सङ्केतरूपेत्यर्थः । अनुमानविशेषत्वकथनेन परास्तेत्यर्थः ॥ अनेनैवेति ॥ अर्थापत्त्यादेरनुमानविशेषत्वकथनेनैव ।

न च केवलतर्केण नाक्षजेन न केनचित्

इति तत्वनिर्णयाऽऽदौ तर्केणेति तर्कशब्दितानुमानेन न ज्ञेयो हरिः इत्युक्त्यैव न केनचिदित्युक्तार्थाऽपत्त्यादिनाऽपि न ज्ञेय इत्यस्य लाभात् केनचिदिति अर्थाऽपत्त्यादेःपार्थक्योक्तेर्गतिश्चोक्ता भवतीत्यर्थः ।

(श्री. टि.) एवं शाबरोपमानस्यान्तर्भावमभिधाय तार्किकाभिमतोपमानस्याप्यनुमान एवान्तर्भावं वक्तुं तत्स्वरूपमाह ॥ अकृतेति ॥ सहायमित्येतत् प्रत्यक्षविशेषणम् । तथा च अकृतः अज्ञातः, समयः वाच्यवाच-

[1] प्रसिद्धिः

कभावसम्बन्धः, यस्याः सञ्ज्ञायाः गवयपदस्येति यावत्, तस्याः यत् स्मरणं, तत्सहायं तत्सहकृतम्, तत्समभिव्याहृतं अकृतसमयसञ्ज्ञासमभिव्याहृतं सहोच्चरितं यत् 'गोसदृशो गवय'[1] इत्यतिदेशवाक्यं, तस्य योऽर्थः साधर्म्याऽऽदिः, तस्य पूर्वं वाक्येनानुभूतस्य सञ्ज्ञिनि गवयाऽऽदौ 'अयमसौ गोसदृशः पशु' इत्यादि यत् प्रत्यक्षेण प्रत्यभिज्ञानम् तत् उपमानम् इत्यर्थः। यथाऽऽहुः

> "अव्युत्पन्नपदोपेतवाक्यार्थस्य च सञ्ज्ञिनि।
> प्रत्यक्षप्रत्यभिज्ञानमुपमानमिहोच्यते॥ इति।

॥ सञ्ज्ञासञ्ज्ञीति ॥ गोसादृश्याऽऽदिज्ञानानन्तरं गवयाऽऽदौ वाच्यवाचकभावसम्बन्धप्रमितिरित्यर्थः। यथाऽऽहुः

> प्रमेयं तस्य सम्बन्धः सञ्ज्ञायाः सञ्ज्ञिना सह।
> तत्प्रतीतिः फलं चास्य नासौ मानान्तरात् भवेत्॥ इति।

॥ तद्भेदादिति ॥ अतिदेशवाक्यार्थस्य त्रिविधत्वात् इत्यर्थः॥ तत्प्रतिसन्धानात्मकमुपमानमिति ॥ तत्प्रत्यभिज्ञाप्रत्यक्षरूपमुपमानमित्यर्थः। यथाऽऽहुः

> तत्रातिदेशवाक्यार्थस्त्रिविधः परिगृह्यते।
> साधर्म्यं धर्ममात्रं च वैधर्म्यं चेति भेदतः॥ इति।

साधर्म्योपमानं यथेति ॥ साधर्म्यप्रत्यभिज्ञाप्रत्यक्षमित्यर्थः। एवमेव वैधर्म्योपमानं धर्ममात्रोपमानम् इत्येतदपि व्याख्येयम्॥ गवयपदार्थत्वप्रमेति। गवयपदवाच्यत्वप्रमेत्यर्थः। एवमेव अश्वपदार्थत्वप्रमितिरित्येतदपि व्याख्येयम्। तद्धर्मेति ॥ स दीर्घग्रीवत्वाऽऽदिः धर्मो यस्यासौ तद्धर्मेत्यर्थः। उष्ट्रपदव्युत्पत्तिः उष्ट्रपदवाच्यत्वज्ञानम्।

तत्र साधर्म्योपमानस्यानुमानान्तर्भावम् उपपादयति ॥ विमत इति ॥ गोसदृशे गवान्तरे व्यभिचारवारणाय सत्यन्तम्। घटाऽऽदौ व्यभिचारवारणाय विशेष्यभागः। आदिशब्देन वैधर्म्योपमानधर्ममात्रोपमानयोरपि 'विमतः अश्वशब्दवाच्यः द्विशफत्वशून्यत्वात् व्यतिरेकेण गवादिवत्' तथा 'विमतः उष्ट्रपदवाच्यः दीर्घग्रीवाऽऽदिमत्वात् व्यतिरेकेण घटाऽऽदिवत्' इत्यनुमानेऽन्तर्भावप्रकारो द्रष्टव्यः॥ अतो न विभागेति ॥ अनुपमाणं त्रिविधमिति विभागेत्यर्थः।

---

[1] इत्याद्यतिदेश.

(श्री. टि.) ननु शबरनिरूपितत्रिविधोपमानमध्ये द्वितीयोपमानस्यैव भगवत्पादैरनुमानान्तर्भाव उक्तः। न प्रथमतृतीययोः। तत् कुतः? इत्यत आह ।। अत्रेति ।। प्रथमोपमानस्यान्तर्भावानुक्तौ निमित्तमाह ।। अतिस्फुट-प्रतिभासत्वादिति ।। प्रत्यक्षेऽन्तर्भावस्येति शेषः। तृतीयस्यानुक्तौ निमित्तमाह ।। आगमान्तर्भूतत्व इति ।। तृतीय उपमान इति शेषः ।। प्रयोगप्रकारेति ।। द्वितीयस्य शाबरोपमानस्य भगवत्पादैरनुमानेऽन्तर्भाव उक्तः। स न युक्तः। केवलान्वयिनि प्रमेयत्वे अन्वयव्यतिरेकिणि धूमवत्वे केवलव्यतिरेकिणि प्राणाऽदिमत्वे च यथा व्याप्त्यादिप्रकारः तदपेक्षया अत्र वैचित्र्यमस्ति 'गौः गवयसदृशी[1] गवयगतसादृश्यप्रतियोगित्वात् यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः' इति प्रयोगप्रकाराऽङ्गीकारात्। अतः कथमनुमानत्वम्? इत्यर्थः। वैचित्र्येऽपीति ।। केवलान्वयिनि हेतुसाध्ययोर्व्याप्तिः केवलव्यतिरेकिणि साध्याभावसाधनाभावयोरिति व्याप्त्यादिप्रयोगप्रकारवैचित्र्येऽपीत्यर्थः ।। अपेक्षितेति ।। केवलान्वयिसाधर्म्यस्य यथाकथंचित् व्याप्त्यपेक्षया अर्थगमकत्वस्य व्यतिरेकिण्यपि सद्भावेन तद्वैचित्र्यस्याप्रयोजकत्वात् इत्यर्थः ।। तथाऽत्रापीति ।। केवलान्वयि-साधर्म्यस्य व्याप्त्यपेक्षया अर्थगमकत्वस्य अत्रापि सत्वेन तद्वैचित्र्यस्य अप्रयोजकत्वात् इत्यर्थः। इयं च सामा-न्यव्याप्तिः। तन्मूलकमिदमनुमानं च सामान्यतो दृष्टम् इत्युच्यते।

यद्यपि 'तदयोग्यार्थमुत्तरम्' इति प्रत्यक्षायोग्यार्थानुमापकमेव सामान्यतोदृष्टम् इत्यभिहितम् तथाऽपि सामान्यव्याप्तिमूलकमप्यनुमानं सामान्यतो दृष्टं भवत्येव। यथोक्तम् पद्धतौ व्याप्यव्यापकयोः अन्या-दृशत्वेऽपि तत्सामान्याऽऽकारानुगमेन लिङ्गलिङ्गिभावे सामान्यतोदृष्टम्, यथा कृषीवलस्य कर्षणाऽदि-प्रवृत्तेर्धान्याऽदिफलवत्त्वदर्शनेन यज्ञाऽदेः स्वर्गाऽदिफलानुमानम् प्रेक्षावत्प्रवृत्तित्वफलवत्त्वसामान्यानु-गमात् इति।

ननु उपमानं पृथक्प्रमाणमिति वक्तव्यम्। सादृश्यरूपार्थविशेषनिष्ठत्वात् इति केनचिदुक्तमाशङ्क्य निराकरोति ।। एतेनेति ।। एतेनेत्युक्तमेव विशदयति ।। तादृशेति ।। अर्थविशेषनिष्ठेत्यर्थः ।। तदुपपत्ते-रिति ।। उपमानस्यार्थविशेषनिष्ठतोपपत्तेरित्यर्थः। यथा हि केवलान्वय्यनुमानसाध्यं अभिधेयत्वाऽदि केवला-न्वयिरूपं न तथा व्यतिरेकिसाध्यम्, तथा केवलव्यतिरेक्यनुमानसाध्यं सात्मकत्वाऽदि केवलव्यतिरेकिरूपं न तथा केवलान्वयिसाध्यमिति तयोः अर्थविशेषनिष्ठत्वेऽपि नानुमानात् पार्थक्यं तद्वत् इहापीत्येवमर्थविशेष-निष्ठत्वं न पृथक्प्रामाण्यसाधकं व्यभिचारात् इति भावः।

ननु तथाऽपि नार्थापत्त्यादीनामनुमानेऽन्तर्भावः सम्भवति। तथा हि,

---

[1] [illegible]

(श्री. टि.) न च केवलतर्केण नाक्षजेन न केनचित् ।
केवलाऽऽगमविज्ञेयो भक्तैरेव न चान्यथा ॥

इति वाक्ये विष्णोः नाक्षजेनेति प्रत्यक्षाविषयत्वमुक्त्वा 'न च केवलतर्केण' इति तर्कशब्दोक्तानुमानाविषयत्वं चोक्त्वा 'न केनचित्' इत्यर्थाऽऽपत्त्याद्यविषयत्वमुच्यते । इदं च तदैवोपपन्नं स्यात् यदि अर्थाऽऽपत्त्यादीनां पृथक्प्रामाण्यं स्यात् । अनुमानान्तर्भावाङ्गीकारे तु 'न च केवलतर्केण' इति सामान्यतोऽनुमाननिषेधेनैव अर्थाऽऽपत्त्यादीनामपि प्रतिषेधलाभात् 'न केनचित्' इति पुनर्निषेधो व्यर्थ एव स्यात् । अतो 'न केनचित्' इति पृथङ्निषेधान्यथाऽनुपपत्त्या अर्थाऽऽपत्त्यादीनां पृथक्प्रामाण्यसिद्धिः इत्यत आह ॥ अनेनैवेति ॥ अनुमाविशेष इति अनुमाविशेषत्ववचनेनेत्यर्थः ॥ गतिश्चोक्ता भवतीति ॥ तथा च 'न च केवलतर्केण' इति सामान्यतः अनुमानं निषिद्ध्य कुरुपाण्डववत् सामान्यविशेषभावमाश्रित्य अर्थाऽऽपत्त्यादिप्रतिषेधाय 'न केनचित्' इत्युक्तमिति भावः ।

अनुपलब्धेः प्रत्यक्षाऽऽद्यन्तर्भावः

(टी.) तथाऽपि अभावाऽऽख्यं पृथक्प्रमाणमस्तीत्यत आह

अभावोऽनुमा प्रत्यक्षं च

अभावविषयं प्रमाणमभावः । तत् त्रिविधम् । प्रत्यक्षार्थप्रतियोगिकाभावविषयं प्रमाणं यथा 'नास्त्यत्र घट' इति । आनुमानिकार्थप्रतियोगिकाभावविषयं प्रमाणं यथा, रूपज्ञानरहितस्य 'नास्ति चक्षुः' इति । आगमिकार्थप्रतियोगिकाभावविषयं प्रमाणं यथा 'वैधहिंसा न पापसाधनम्' तत्र प्रथमं प्रत्यक्षानुमानयोरन्तर्भवति । द्वितीयमनुमाने । विमतः चक्षूरहितः रूपाज्ञत्वात् घटवदिति प्रयोगसंभवात् । तृतीयमागमे । अतो युक्तो विभाग इति । अत्राभावद्वयस्यान्तर्भावानुक्तिस्तत्र वादिनामविवादात् । उभयत्रान्तर्भावात् योगविभागः । प्रायेणानुमानेऽन्तर्भावज्ञापनाय क्रमोल्लंघनम् ।

कथमेकप्रमाणस्योभयत्रान्तर्भाव[1] इत्यत आह

परामर्शापरामर्शविशेषात्

यदा "अत्र घटोऽस्ति न वा" इति परामर्शपूर्वकं योग्यानुपलब्धिरूपं घटाभावप्रमाणं प्रवर्तते तदाऽनुमाने । 'घटोऽत्र नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वात् गजवत्' इति प्रयोगसंभवात् । यदा

[1] ग, एकस्यैव

(टी.) पुनरेवमपरामृश्य झडिति "नास्ति घटः" इति प्रवर्तते तदा प्रत्यक्ष इति न विरोधः । अयं च बहिरेव विभागो न तु सुखाऽद्यभावप्रमाणे । साक्षिणः सुखाऽदिस्वरूपे निश्चयरूपत्वेन परामर्शाभावात् ।

(रा. टि.) अभावेति ॥ घटपटाऽद्यभावविषयकप्रमितिजनकम् अभावपदेनात्रोच्यत इत्यर्थः ॥ नास्ति चक्षुरितीति ॥ 'रूपज्ञानं करणसाध्यं क्रियात्वात् छिदिक्रियावत्' इति सामान्यपरिशेषानुमानगम्यं चक्षुरिति भावः ॥ वैधहिंसेति ॥ 'अग्नीषोमीयं पशुमालभेत' इत्यादिविध्यवगतपशुहिंसायाः आगमैकवेद्यत्वात् इति वा, पापसाधनत्वाऽदेरागमैकवेद्यत्वात् इति वा, तदभावः आगमैकवेद्यप्रतियोगिकाभाव इत्यर्थः ॥ चक्षूरहित इति ॥ 'रो रि' इति लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः । चक्षुर्हीन इत्यर्थः ॥ तृतीयमागम इति ॥ 'आलभेत' इत्यस्य तु पापसाधनं न, प्रत्युत इष्टसाधनम् इत्यर्थकत्वात् इति भावः ॥ अत्राभावद्वयस्येति ॥ आनुमानिकप्रतियोगिकाऽगमिकप्रतियोगिकाभावद्वयस्येत्यर्थः ।

ननु 'अर्थापत्त्युपमाऽभावा अनुमाविशेषः' इति एकवाक्येनैव कस्मान्नोक्तम्? कुतो वाक्यभेदेन अन्तर्भावोक्तिः? इत्यत आह ॥ उभयत्रेति ॥ प्रत्यक्षयोग्यप्रतियोगिकाभावप्रमाणस्य प्रत्यक्षप्रमाणे अनुमानप्रमाणे च उभयत्रान्तर्भावान्निमित्तात् वाक्यभेदेन अन्तर्भावोक्तिरित्यर्थः । 'अभावः प्रत्यक्षमनुमा च' इति वाच्यम् प्रत्यक्षस्य प्राथम्यात् इत्यत आह ॥ प्रायेणेति ॥ अभावप्रमाणस्येति योज्यम ॥ कथमेकस्यैवेति ॥ तथात्वे एकस्यैव ज्ञानस्य स्वतन्त्रकरणद्वयजत्वाऽपत्त्या परस्परविरुद्धपरोक्षत्वापरोक्षत्वाऽपत्तेरिति भावः । परमाण्वादावव्यभिचाराय योग्यत्वे सतीति । पुरःस्थिते अव्यभिचाराय विशेष्यम् । न च लिङ्गस्य ज्ञातस्यैव करणत्वात् अनुपलब्धेरपि अभावत्वेन तज्ज्ञानाय अनुपलब्ध्यन्तरापेक्षायामनवस्थितिरिति शङ्क्यम् तस्याः साक्षिप्रत्यक्षसिद्धत्वेनानवस्थाऽभावात् ॥ तदा प्रत्यक्ष इति ॥ इन्द्रियान्वयव्यतिरेकानुविधायित्वात् अभावप्रत्ययस्य । तस्याधिकरणग्रह एवोपक्षीणत्वकल्पनं तु अपरोक्षाऽकारत्वस्यानुभवसिद्धत्वात् बाधकाभावाच्चायुक्तमिति भावः ।

ननु प्रातश्चत्वराऽदौ प्रतियोगिस्मृत्यभावेन गजाभावमननुभूय देशान्तरं गतो गजस्मृतिमान् 'प्रातश्चत्वरे गजो नाऽसीत्' इति प्रतिपद्यते, नास्त्यत्र प्रत्यक्षस्यावकाश इति चेत् । सत्यम् 'चत्वरे गजो नासीत् योग्यत्वे सति तदा मया अनुपलभ्यमानत्वात्'[1] न चासिद्धिः 'गजः प्राक् तत्र तदा नोपलब्धः इदानीमस्मर्यमाणत्वात्' न चात्राप्यसिद्धिः । स्मरणाभावस्य साक्ष्यनुभवसिद्धत्वात् इत्यनुमानस्य तत्रापि प्रवृत्तिसम्भव इति भावः ॥ सुखाऽदिस्वरूपे निश्चयरूपत्वेनेति ॥ तथा च तदभावः साक्षिप्रत्यक्षैकवेद्य इति भावः ।

---

[1] अनुपलब्धत्वात्

(श्री॰ टि॰) ॥ अभावविषयं प्रमाणमिति ॥ अभावविषयप्रमितिकरणम् अभावः अनुपलब्धि-रित्यर्थः । [1]अभावः प्रमाणं अभावविषयप्रमितिकरणम् । एवमुत्तरत्रापि व्याख्येयम् ॥ प्रत्यक्षेति ॥ प्रत्यक्षयोग्यार्थेत्यर्थः ॥ नास्ति चक्षुरिति ॥ चक्षुषो रूपज्ञानानुमेयत्वेनाऽनुमानिकत्वात् इत्यर्थः । वैधहिंसा विधिवाक्यबोध्यहिंसा ॥ न पापसाधनमिति ॥ पापसाधनत्वस्य आगममात्रवेद्यत्वात् इत्यर्थः ॥ अन्तर्भव-तीति ॥ वक्ष्यमाणप्रकारेणेति भावः ।

॥ विभाग इति ॥ अनुप्रमाणं त्रिविधमिति विभाग इत्यर्थः । नन्वाचार्यैः प्रत्यक्षयोग्यार्थप्रतियोगिका-भावस्यैव प्रत्यक्षानुमानान्तर्भावः कथितः, न तु 'आनुमानिकाऽऽगमिकार्थप्रतियोगिकाभावप्रमाणयोः । अतस्तत्र किं निमित्तम् ? इत्यत आह ॥ अत्रेति ॥ तत्रेति ॥ अनुमानाऽऽगमान्तर्भाव इत्यर्थः ।

ननु तथाऽपि 'अर्थापत्त्युपमाऽभावा अनुमाविशेषाः' इत्येकेनैव वाक्येनार्थाऽपत्त्यादित्रयाणामप्यन्तर्भा-वस्य प्रतिपादयितुं शक्यत्वात् अभावोऽनुमेति किमर्थं पुनर्योगविभागः? इत्यत आह ॥ उभयत्रेति ॥ उक्तरीत्या एकेनैव वाक्येनान्तर्भावोक्तौ अर्थाऽपत्त्यादिवत् अनुमान एवान्तर्भावो विज्ञायेत । स मा विज्ञायि । किं तु ? अभावोऽनुमाने प्रत्यक्षे चेत्युभयत्रान्तर्भूत इति ज्ञापनार्थं योगविभाग इत्यर्थः ।

नन्वथापि प्रत्यक्षस्यानुमानापेक्षया प्राथम्यात् 'अभावः प्रत्यक्षमनुमा च' इति वक्तव्ये क्रमोल्लङ्घनं किमर्थम् ? इत्यत आह ॥ प्रायेणेति ॥ बाहुल्येनेत्यर्थः ॥ कथमेकप्रमाणस्येति ॥ अभावाख्यप्रमाणस्ये-त्यर्थः । प्रत्यक्षत्वे इन्द्रियसन्निकर्षजन्यत्वं वक्तव्यम्, अनुमानत्वे तु तदजन्यत्वम् । तच्च एकस्य विरुद्धमिति भावः ॥ योग्यत्वे सतीति ॥ परमाण्वादौ व्यभिचारवारणाय सत्यन्तम् । उपलभ्यमाने पटे व्यभिचारवारणाय विशेष्यभागः ।

ननु प्रत्यक्षयोग्यार्थप्रतियोगिकाभावप्रमाणस्योभयत्रान्तर्भावाङ्गीकारे आन्तरप्रत्यक्षविषयसुखाऽद्यभाव-प्रमाणस्याप्युभयत्रान्तर्भावप्राप्त्या साक्षिणोऽपि अनुमानान्तर्भावः प्राप्तः इति चेत् तत्राऽऽह ॥ अयं चेति ॥ 'परामर्शापरामर्शविशेषात् अभावोऽनुमा प्रत्यक्षं च' इति विभागो बहिरेव प्रत्यक्षयोग्यबाह्यार्थप्रतियोगिकाभाव-प्रमाणविषय एवेत्यर्थः ॥ सुखाऽद्यभावप्रमाण इति ॥ साक्षिरूप इत्यर्थः । कुतः? इत्यत आह ॥ साक्षिण इति ॥ परामर्शाभावात् इति ॥ येन सुखाऽद्यान्तरपदार्थप्रतियोगिकाभावप्रमाणरूपस्य साक्षिणोऽप्यनुमानान्त-र्भावः स्यात् इति भावः ।

---

[1] इदं वाक्यमधिकमिति भाति ।

(टी.) सम्भवपरिशेषावपि पृथक्प्रमाणे विद्येते। अतः कथं त्रित्वम्? इत्यत आह

## संभवपरिशेषावनुमा

अल्पप्रमासाधनं बहुलज्ञानं सम्भवः। यथा 'शतमस्यास्ति' इति ज्ञाने पंचाशज्ज्ञानम्। प्रसक्त-व्यावृत्तिप्रतीतिः परिशिष्यमाणप्रमासाधनं परिशेषः। स द्विविधः। विधिमुखो निषेधमुखश्च। तत्राऽऽद्यो यथा 'चैत्रमैत्रयोरयं चैत्रः' इत्युक्तेऽन्यस्मिन् मैत्रप्रमा। द्वितीयो यथा 'नायं चैत्र' इत्युक्ते तस्मिन् मैत्रप्रमा इति। सम्भवपरिशेषयोरनुमानेऽन्तर्भावः। 'विप्रतिपन्नः पंचाशद्वान् शतवत्त्वात् संप्रतिपन्नवत्, विमतो मैत्रः चैत्रमैत्रयोरन्यतरत्वे सत्यचैत्रत्वात् व्यतिरेकेण चैत्रवत्' इति प्रयोगसम्भवात्। तस्मादुपपन्नं प्रमाणानां त्रित्वमिति। वादिविवादभावाभावज्ञापनार्थोऽयं विभागः[1]।

(रा. टि.) अचैत्रत्वमात्रस्य देवदत्ताऽऽदावव्यभिचाराय चैत्रमैत्रयोरन्यतरत्वे सतीति। चैत्रे व्यभिचार-वारणाय विशेष्यम्। ननु 'अर्थापत्त्युपमासम्भवपरिशेषा अनुमाविशेषाः' इति वाच्ये वाक्यभेदः किंनिमित्तः? इत्यत आह ॥ वादिविवादेति ॥ अर्थाऽपत्त्युपमयोरनुमानत्वेऽस्ति भाट्टतार्किकयोर्विप्रतिपत्तिः, अत्र तु न तथा वादिनां विवाद इति ज्ञापनाय योगविभागो वाक्यभेद इत्यर्थः।

(श्री. टि.) ॥ चैत्रमैत्रयोरन्यतरत्वे सतीति ॥ घटे व्यभिचारवारणाय सत्यन्तम्। चैत्रे तद्वारणाय विशेष्यभाग इति ज्ञेयम्। दृष्टान्तीभूते चैत्रे विशेष्याभावप्रयुक्तविशिष्टाभावमादाय हेत्वभाव उपपादनीयः। ननु 'अभावसम्भवपरिशेषा अनुमा' इति एकवाक्येन विभागमनुक्त्वा[2] सम्भवपरिशेषयोर्वाक्यभेदेनानुमानान्तर्भा-वोक्तौ किं निमित्तम्? इत्यत आह ॥ वादीति ॥ विभागो योगविभागः। अभावस्यानुमानान्तर्भावोक्तौ वादिनां विवादोऽस्ति। केश्चित् पृथक्प्रामाण्यमपरैः[3] प्रत्यक्षान्तर्भावस्य चाङ्गीकृतत्वात्। सम्भवपरिशेषयोश्चानु-मानान्तर्भावस्य सर्वसंमतत्वेनात्र वादिविवादो नास्तीति ज्ञापनार्थोऽयं योगविभाग इत्यर्थः। पौराणिकानाम-नभिमतत्वात् इति ध्येयम्।

### तर्कस्यानुमानान्तर्भावः

(टी.) ननु तर्कः प्रमाणं न वा। प्रमाणमिति ब्रूमः। कथं तर्हि त्रित्वम्? इत्यतस्तत्स्वरूपं विवृण्वन्नाह।

---

[1] रा., योगविभागः।  [2] अन्तर्भावमनुक्त्वा,  [3] प्रामाण्यमन्यापरैः.

आत्मान्योन्याऽऽश्रयचक्रकानवस्थाकल्पनागौरव-
श्रुतदृष्टहानाऽऽदयो दूषणानुमा

(टी.) आदिपदेनाश्रुतकल्पनमदृष्टकल्पनं च संगृह्यते। एतत्प्रसंजनमिहोपलक्ष्यते। व्याप्यांगीकारेऽनिष्टव्यापकप्रसंजनं तर्कः। द्विविधमनिष्टम्। प्रामाणिकहानमप्रामाणिककल्पनं च। तत्पुनः पंचविधम्। आत्माऽऽश्रयान्योन्याऽऽश्रयचक्रकानवस्थानिष्टभेदात्। सर्वस्यानिष्टत्वेऽपि गोबलीवर्दन्यायेन पृथगुक्तिः। तत्राद्यचतुष्टयमप्रामाणिककल्पनाऽऽत्मकम्। न हि कुत्राप्यात्माऽऽश्रयाऽऽदिकं प्रमाणसिद्धम्। पंचममुभयात्मकम्। तत्राप्याद्यं द्विविधम्। श्रुतदृष्टहानभेदात्। द्वितीयमपि तथा। अश्रुतादृष्टकल्पनभेदात्। तदेव कल्प्यानेकत्वे कल्पनागौरवम्। एतत्प्रसंजनाऽऽत्मकस्तर्कोऽपि पंचधा भिद्यते। तस्य पंचांगानि। प्रसंजकस्य प्रसंजनीयेन व्याप्तिः प्रतितर्कैरप्रतिघातः प्रसंजनीयस्य विपर्यये पर्यवसानं प्रसंजनीयस्यानिष्टत्वं प्रतिपक्षासाधकत्वं चेति। तस्यैवोत्पत्तिज्ञप्त्यर्थं तदुत्पत्तिज्ञप्त्यपेक्षायामात्माऽऽश्रयत्वप्रसंगः। यदुत्पत्त्याद्यधीनं यदुत्पत्त्यादि तदुत्पत्त्याद्यर्थं तदुत्पत्त्याद्यपेक्षायामन्योन्याऽऽश्रयत्वप्रसंगः। यदुत्पत्त्याद्यधीनं यदुत्पत्त्यादि तदुत्पत्त्यादौ परंपरया तदुत्पत्त्याद्यपेक्षायां चक्रकप्रसंगः। उत्पत्त्यादावन्योत्पत्त्याद्यपेक्षाया अपर्यवसानेऽनवस्थाप्रसंगः। अत्र यद्येवमभ्युपगमः तदाऽऽत्माऽऽश्रयाऽऽदिप्रसंगः। यत्रैवमभ्युपगमः तत्र तत्प्रसंगः यथाऽमुत्र। यदि नाऽऽत्माऽऽश्रयाऽऽदिः तर्हि नैतदपीति प्रवृत्तिप्रकारः। सामान्यत एव व्याप्तिर्वाच्या। श्रुतहानं यथा 'यदीश्वरो न सर्वज्ञः तर्हि न जगत्कर्ता स्यात्' इति। दृष्टहानं यथा 'यदि पर्वतोऽनग्निमान् तर्हि निर्धूमः स्यात्' इति। अश्रुतकल्पनं यथा 'यदीश्वरो जीवाभिन्नः तर्हि दुःखी स्यात्' इति। अदृष्टकल्पनं यथा 'यदि पीतमुदकमन्तरधक्ष्यत् तर्हि मामपि दहेत् अविशेषात्' इति। यत्राऽऽपाद्याऽऽपादकयोर्न साक्षात्सामानाधिकरण्यं तत्र तथैवानुपपत्तौ प्रकारान्तरेणैकाधिकरणतामापाद्य व्याप्तिरभिधातव्या। यथा 'यदि देवदत्तः सर्वज्ञस्तर्हि यज्ञदत्तोऽपि तथा स्यात्' इत्यत्र 'यत्र यो धर्मो वर्तते स तदविशिष्टेऽपि वर्तत' इत्यादि। सोयं तर्कोऽनुमान एवान्तर्भूतोऽतो न प्रमाणगित्वभंगः।

(रा. टि.) कथं त्रित्वम्? इत्याक्षेप्तुं पृच्छति ॥ नन्विति ॥ अपेक्षितसामान्यलक्षणविभागो स्वयमुक्त्वा मूलवाक्ये घटयति ॥ व्याप्याङ्गीकार इति ॥ प्रसञ्जनमिति ॥ आपादनमित्यर्थः ॥ तर्कइति ॥ तर्क्यते साधनस्य साध्यव्याप्यत्वं प्रमीयते अनेन प्रसञ्जनेनेति करणव्युत्पन्नोऽयं तर्कशब्दो ज्ञेयः। तत्साध्यं च साधनस्य साध्यव्याप्यत्वम् ॥ तत्पुनरिति। द्विविधमनिष्टमित्यर्थः ॥ गोबलीवर्दन्यायेनेति ॥ आत्माऽऽश्रयाऽऽदिरनिष्टविशेष इति सामान्यविशेषभावेन पृथगुक्तिरित्यर्थः ॥ तत्राऽपीति ॥ प्रामाणिकहानाप्रामाणिककल्पनरूपोभयाऽऽत्मकेऽप्यनिष्ट इत्यर्थः ॥ तथेति ॥ द्विविधमित्यर्थः। तदेव अश्रुताऽदृष्टकल्पनरूपमनिष्टमेवेत्यर्थः

(श. टि.) ।। एतत्प्रसञ्जनाऽऽत्मक इति ।। आत्माऽऽश्रयाऽऽदिचतुष्टयपञ्चविधानिष्टप्रसञ्जनाऽऽत्मक इत्यर्थः ।। तदुत्पत्त्यादाविति ।। प्रथमोत्पत्त्यादावित्यर्थः ।। परम्परयेति ।। द्वित्रकक्ष्याऽनन्तरं पुनराद्योत्पत्तिज्ञप्त्यपेक्षायामित्यर्थः[1] ।। अङ्गेति ।। आत्माऽऽश्रयाऽऽदितर्के । इति प्रवृत्तिप्रकार इत्यन्वयः ।। यद्येवमिति ।। 'घटोत्पत्तिज्ञप्त्योर्घटोत्पत्तिज्ञप्त्यधीनत्वमभ्युपगम्यते तदा आत्माऽऽश्रयः स्यात यथा घटाऽऽदौ[2] । न चेत् आत्माऽऽश्रयोऽङ्गीक्रियते तर्हि घटोत्पत्तिज्ञप्त्यधीनत्वं घटोत्पत्तिज्ञप्त्योर्न' इत्येवमित्यर्थः । आदिपदेन अन्योन्याऽऽश्रयचक्रकाऽऽदिर्ग्राह्यः । आपाद्यस्याप्रामाणिककल्पनरूपत्वेन विशिष्य व्याप्त्युक्तौ दृष्टान्ताभावादाह ।। सामान्यत एवेति ।।

(श्री. टि.) त्रित्वं प्रमाणानां त्रित्वम् । ननु 'तर्कोऽनिष्टप्रसङ्गः स्यात्' इत्यनिष्टप्रसञ्जनस्यैव तर्कत्वे नोक्तेः आत्माऽऽश्रयाऽऽदेश्च प्रसञ्जनरूपत्वाभावात् कथं तर्कस्वरूपत्वम्? इत्यत आह ।। एतत्प्रसञ्जनमिति ।। व्याप्त्येति ।। 'वह्निर्माऽस्तु' इति वह्न्यभावाऽऽदिव्याप्याङ्गीकारे व्यापकं धूमाभावाऽऽदि ।। द्विविधमिति ।।

............अनिष्टस्य द्वयी विधा ।
प्रामाणिकपरित्यागस्तथेतरपरिग्रहः ।।

इति वचनादिति भावः । तत् अनिष्टम् । ननु आत्माऽऽश्रयाऽऽदेरेवानिष्टत्वेन तस्य आत्माऽऽश्रयाऽऽदेः पृथगुक्तिरयुक्ता इत्यत आह ।। सर्वस्येति ।। सामान्यविशेषभावेनापुनरुक्तिरिति भावः । पञ्चमं अनिष्टम् । उभयाऽऽत्मकं प्रामाणिकहानाऽप्रामाणिककल्पनाऽऽत्मकम् । आद्यं प्रामाणिकहानम् । द्वितीयमपि अप्रामाणिककल्पनमपि । तथा द्विविधम् । तदेव अश्रुतादृष्टकल्पनमेव ।। कल्प्यानेकत्व इति ।। कल्प्यानामनेकत्व इत्यर्थः । यथा

'शृङ्गाग्रे शशकस्य भानि गणयत्यन्धोऽह्नि वन्ध्यासुतः' इति ।

अनेकाश्रुतादृष्टकल्पन इति यावत् । नन्वेवमात्माऽऽश्रयाऽऽदेः पञ्चविधत्वेऽपि तर्कस्य किमायातम्? इत्यत आह ।। एतत्प्रसञ्जनाऽऽत्मक इति ।। एतेषामात्माऽऽश्रयाऽऽदीनां आपादनाऽऽत्मक इत्यर्थः ।

व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये ।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम् ।
अङ्गपञ्चकसम्पन्नस्तत्त्वज्ञानाय कल्पते ।।

इति वचनानुसारेणाऽऽह ।। तस्येति ।। प्रसञ्जकस्येत्यादि ।। आपादकस्याऽऽपाद्येनेत्यर्थः ।। प्रतिपक्षासाधकत्वं चेति ।। विरुद्धहेत्वाभासवत् प्रतिपक्षासाधकत्वमित्यर्थः । एतदेवाननुकूलत्वमित्युच्यते । अतः अननुकूलत्वस्य

[1] पुनर्द्वितीयोत्पत्ति. [2] पटाऽऽदौ.

(श्री. टि.) पञ्चमत्वेन पद्धतौ परिगणितत्वात् कथमेतत् ? इति शङ्काऽनवकाशः। एवं आत्माऽश्रयाऽविरुद्धमनुमेयं। तदापादनस्वरूपप्रकारं दर्शयति ॥ अङ्गेति ॥ यद्येवमभ्युपगम इति ॥ घटोत्पत्त्याश्रये घटोत्पत्त्याऽभ्युपगम इत्यर्थः। अत्र विशेषव्याप्तौ दृष्टान्ताभावादाह ॥ यत्रैवमिति ॥ यथाऽमुत्रेति ॥ सामान्यत एव व्याप्तिर्वाच्येत्यर्थः। अमुत्र घटाऽदौ। विपर्ययपर्यवसानमाह ॥ यदीति ॥ यदि[1] इत्यनन्तरं अमुत्र इत्येतदनुवर्तनीयम्। श्रुतहानं श्रुतस्य हानाऽऽपादनम्। एवं दृष्टहानम् इत्येतदपि योज्यम्। अविशेषात् पीतत्वाविशेषात्। तदविशिष्टे तत्समाने।

(टी.) स्यादेतत्। न तर्कोऽनुमानम्। तर्के हि प्रामाणिकहानाऽदि आपाद्यते। न च तत् साध्यं भवति अपसिद्धान्तात् प्रमाणविरोधाच्च, आरोपितलिङ्गत्वेनासिद्धेश्चेति। अत उक्तम् ॥ दूषणेति ॥ द्विविधं ह्यनुमानम्। स्वपक्षसाधनं परपक्षदूषणं च। तत्राऽऽद्यं यथा 'पर्वतोऽग्निमान् धूमवत्वात्' इति। द्वितीयमपि द्वेधा प्रवर्तते 'नायं निरग्निकः अनिर्धूमत्वात्' इति वा 'निरग्निकत्वांगीकारे निर्धूमत्वाभ्युपगमः' इत्यनिष्टप्रसंगरूपेण वा 'तत्र दूषणानुमाने तर्कस्यान्तर्भावः। प्रसंगरूपानुमाने च न साध्यवत् आपाद्यस्य प्रमाणविरोधाऽदि असिद्धिश्च दूषणमिति वक्ष्यतीति न कश्चिद्विरोध इति। एतदर्थ एव योगविभागः।

(रा. टि.) 'पर्वतो निर्धूमः निरग्निकत्वात्' इति प्रयोगप्रकारं मन्वानः शङ्कते ॥ स्यादेतदित्यादिना ॥ अपसिद्धान्तादिति ॥ धूमवत्वस्याभ्युपगतत्वात् प्रत्यक्षसिद्धत्वाच्चेति भावः। तर्को हि साधनानुमानमिव विपर्यये पर्यवसानमुखेन क्वचित् स्वातन्त्र्येण अग्न्याद्यनुमितिजनकः क्वचित् व्याप्यत्वप्रमितिजननद्वारा प्रमाणानुग्राहकश्च भवतीति उभयानुरोधेनानुमानत्वमभिप्रेत्याऽऽह ॥ नायमिति ॥

यद्यपि 'नेदं साध्यसाधकं असिद्धत्वात्' इत्यादिदुष्टिप्रमितिसाधनमपि दूषणानुमानम्। अतः त्रेधेति वक्तव्यम्। तथाऽपि तस्य तर्कोक्तिप्रस्तावे अनुपयोगात् अनुक्तिः। 'न चायं निर्धूमः तस्मान्निरग्निकः'[2] इति विपर्यये पर्यवसितस्यायमनुमानत्वस्फोरणायैवमुक्तिः[3]। 'धूमोऽस्तु, निरग्निकश्चास्तु' इति हेतोरप्रयोजकत्वेन अव्याप्यत्वशङ्कायां विपक्षे अनिर्धूमत्वरूपानिष्टप्रसञ्जनप्रदर्शनमुखेन हेतोरग्निव्याप्यत्वप्रमित्युत्पादनद्वारा परामर्शरूपकरणस्वरूपनिष्पत्तिलक्षणानुग्रहः क्रियत इति विपर्यये पर्यवसानं विना प्रसङ्गत्वमात्रमेव प्रदर्शितम्।

॥ तत्र दूषणानुमान इति ॥ उक्तद्विविधदूषणानुमान इत्यर्थः ॥ प्रमाणविरोधाऽदीति ॥ अपसिद्धान्त आदिपदार्थः ॥ वक्ष्यतीति ॥ ग्रन्थान्त्यभागे परसिद्धैर्दूषणम् इति वक्ष्यतीत्यर्थः। अर्थाऽपत्त्युपमा[4] तर्कश्चानुमाविशेषः' इति वक्तव्यम्। कुतो वाक्यभेदः? इत्यत आह ॥ एतदर्थ इति ॥ दूषणानुमानत्वज्ञापनार्थ एवेति वा, अर्थाऽपत्त्यादौ बाधाऽदिदोषो, न तर्के इति ज्ञापनार्थ इति वा अर्थः।

---

[1] इदं वाक्यमधिकमिति भाति। [2] तस्मान्न निरग्निकः. [3] स्यैव. [4] पत्त्युपमे.

(श्री. टि.) ॥ तदिति ॥ प्रामाणिकत्वाभ्युपगमाऽऽदि ॥ अपसिद्धान्तादिति ॥ स्थापनानुमानकर्त्रा धूमस्याङ्गीकृतत्वात् इत्यर्थः ॥ प्रमाणेति ॥ प्रमाणबाधादित्यर्थः ॥ आरोपितलिङ्गत्वेनेति ॥ तर्कस्याऽरोपितलिङ्गकत्वेनेत्यर्थः । वस्तुतो वह्नेः सत्त्वेन तदभावरूपस्य लिङ्गस्य आरोपितत्वेन स्वरूपासिद्धत्वात् इत्याशयः ॥ परपक्षदूषणमिति ॥ परपक्षप्रतिक्षेपरूपमित्यर्थः ॥ नायमिति ॥ इदमपि साधनानुमानस्वरूपमेव । परं तु परपक्षप्रतिक्षेपरूपत्वात् दूषणानुमानत्वमिति ध्येयम् ॥ दूषणानुमानं इति ॥ अनिष्टप्रसङ्गरूपे द्वितीये दूषणानुमान इत्यर्थः । अनुमानान्तर्भावपक्षे पूर्वोक्तं दूषणं परिहरति ॥ प्रसङ्गरूपानुमाने चेति ॥ प्रकृतत्वानुसन्धानार्थश्चशब्दः । अनिष्टप्रसङ्गरूपे दूषणानुमाने चेत्यर्थः ॥ साध्यवदिति ॥ इदमुपलक्षणम् । साधनवत् इत्यपि द्रष्टव्यम् । व्यतिरेकदृष्टान्तः । असिद्धिश्चेत्यत्र आपादकस्येति शेषः । तथा च साधनानुमाने यथा साध्ये प्रमाणबाधः अपसिद्धान्तश्च दूषणम् , साधने च स्वरूपासिद्धिर्दूषणम् , एवं दूषणानुमाने आपाद्यस्य प्रमाणबाधाऽऽदिकं न दूषणमित्यर्थः । साध्यवत् साधनानुमानवत् इत्यर्थ इत्यप्याहुः ॥ वक्ष्यतीति ॥ अतो न दूष्योऽपसिद्धान्ताऽऽदि इत्यत्र । अत्रापि योगविभागकरणे निमित्तमाह ॥ एतदर्थ एवेति ॥ अत्र योगविभागः आत्माऽऽश्रयाऽऽदिरूपे प्रसङ्गानुमाने बाधाऽऽदेरदूषणत्वरूपविशेषकथनप्रयोजनक एवेत्यर्थः ।

## उपक्रमादीनामनुमानान्तर्भावः

(टी.) तथाऽपि वाक्यतात्पर्यज्ञापकान्युपक्रमाऽऽदीनि पृथक्प्रमाणानि सन्तीत्यत आह

उपक्रमोपसंहारतदैकरूप्याभ्यासापूर्वताफलार्थवादाश्च

चोऽनुमेयत्वस्यानुकर्षणार्थः । प्रकरणाऽऽदिरुपक्रमः । तदन्त उपसंहारः । तयोरुपक्रमोपसंहारयोरेकार्थत्वं तदैकरूप्यम् । एकप्रकारासकृदुक्तिरभ्यासः । प्राचुर्येण[1] प्रमाणान्तराप्राप्तता अपूर्वता । फलवत्त्वं फलम् । स्तुतिर्निन्दा परकृतिः पुराकल्पोऽर्थवादः । एतेषां वाक्यतात्पर्ये अनुमात्वान्नोक्तविरोधः ।

यद्येतेऽनुमानेऽन्तर्भूतास्तर्हि कथं तेषां

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इति उपपत्तितः पृथगुक्तिरित्यत आह

---

[1] क्वचित् प्राचुर्येणेति नास्ति ।

## उपपत्तिविशेषाः

(टी.) यथा खलु पाण्डवानां कौरवान्तर्भावेऽपि कौरवेभ्यः पृथगुक्तिः कौरवविशेषत्वेन साक्षादेकत्वाभावेन कौरवपदेन तदतिरिक्तग्रहणात्, तथा प्रकृतेऽपीति ।

नन्वेवं पृथगुक्तिमन्यथा व्याख्यायैषामनुमानान्तर्भावांगीकारे को हेतुः? इत्यत आह

**त एव सोपपत्तयो लिङ्गानि**

उक्ता इति शेषः । यथा 'उपक्रमोपसंहारौ' इत्यत्रोपपत्तेर्लिङ्गत्वमुच्यते तथा उपक्रमाऽदीनामपि। अतो युक्तमुक्तम् ।

किं च यथोपपत्तिर्लिङ्गम् व्याप्तिबलेनार्थधीहेतुः तथोपक्रमाऽदयोऽपि 'यत्र यत् उपक्रम्यते तत्रापवादाभावे तत् तात्पर्यगोचरः' इत्यादिव्याप्तिबलेनैवार्थबोधकाः । अतः कथं नानुमानेऽन्तर्भावः? इत्याह ॥ त एवेति ॥ एतेनागमान्तर्भावोऽपि परास्तः । न ह्यागमवत् व्याप्तिमनपेक्ष्य बोधका एते अनुभूयन्ते । तेषा[1]मागमार्थविषयत्वज्ञापनार्थो योगविभागः ।

(रा. टि.) 'गिरिरग्निमान् वह्निमान्, इत्यादेरभ्यासत्वनिवृत्त्यर्थमुक्तम् एकप्रकारेति । न चासकृदुक्तिर्व्यर्थेति शङ्क्यम् । दुरधिगमेऽर्थे तात्पर्याभावशङ्कानिरासार्थं तस्या अर्थवत्वात् ।

॥ प्राचुर्येणेति ॥ स्वबोधनीयपुरुषगताज्ञानाऽदिविरोधिना स्वानुपजीविना प्रमाणान्तरेणाऽप्राप्तार्थता इत्यर्थः । तेन वेदार्थस्य धर्माधर्माऽदेः ईश्वरसार्वज्ञ्याऽदेश्च स्मृतिवाक्येन सर्वकर्तृत्वाऽद्यनुमानेन च प्राप्तत्वेऽपि तयोर्वेदोपजीवित्वात् वेदस्य अपूर्वतासिद्धिः । वेदार्थस्य वेदानुपजीवीऽश्वरप्रत्यक्षप्राप्तत्वेऽपि ईश्वरस्य वेदबोधनीयत्वाभावात् वेदबोधनीयास्मदादिगताज्ञानाऽदिकं प्रति चेश्वरज्ञानस्याविरोधित्वात् वेदस्यापूर्वताप्राप्तिः । प्रत्यक्षप्राप्तेऽर्थे प्राक् प्रवृत्तस्य शब्दस्य तदगृहीतार्थत्वेऽपि तदप्राप्तार्थ[2]त्वादपूर्वताऽभावः । स्मृतीनां स्वानुपजीविवेदप्राप्तार्थत्वेऽपि वेदे नानाशाखासु अस्पष्टं विक्षिप्योक्तस्य स्मृतिभिरिव वेदेन स्मृतिबोधनीयैरस्मदादिभिरप्राप्तत्वात् अपूर्वता । एवं वादिविप्रतिपत्तिजन्यातत्वाऽवेदकत्वशङ्काकलङ्कितेन सर्वविषयेण प्रत्यक्षेण 'विश्वं सत्यम्' इत्यादिवा[3]क्येनैव जगत्सत्यत्वाऽद्यप्राप्तेः तद्वाक्यस्यापूर्वता इत्येवं ज्ञेयम् ।

---

[1] श्री. एतेषा [2] र्थत्वाभावादपूर्वताऽभावः । [3] वाक्येनैव.

(रा. टि.) स्तुतिर्गुणकीर्तनम् । दोषकीर्तनम् निन्दा । एककर्तृकोपाख्यानम् परकृतिः । बहुकर्तृकोपाख्यानम् पुराकल्पः । अक्षाऽदिशब्द इव नानाऽर्थोऽयं अर्थवादशब्द इति भावः ॥ एतेषामिति ॥ उपक्रमाऽदीनामित्यर्थः । तात्पर्यं नाम तत्प्रमित्युद्देशेन प्रवृत्तत्वरूपं तत्प्रमितिशेषत्वम् । प्रत्येकं तत् अनुमापयन्त्येत इत्येकैकस्याननुगमेऽपि न दोषः । तेषामुदाहरणानि ब्रह्मतन्त्रे व्यक्तानि । विस्तरभिया अत्र नोच्यन्ते ॥ नोक्तेति ॥ त्रित्वविरोधो नेत्यर्थः ॥ पृथगुक्तिरिति ॥ 'सन्तानबीजं कुरुपाण्डवानाम्' इति दशमस्कन्ध इति भावः ॥ इति शेष इति ॥ त एव उपक्रमाऽदय एव, उपपत्तिसहिताः लिङ्गानि उक्ताः, लिङ्गत्वेनोक्ताः प्रागुक्तस्मृताविति योजना । तथैव व्यनक्ति ॥ यथेति ॥

अध्याहारं विनैव योजनान्तरमाह ॥ किं चेति ॥ उपपत्तेः सिद्धस्य लिङ्गत्वस्योपन्यासो दृष्टान्तार्थ इत्यभ्युपेत्याऽऽह ॥ यथेति ॥ लिङ्गपदार्थमाह ॥ व्याप्तिबलेनेति ॥ 'लीनं अर्थं गमयति लिङ्गम्' इति व्युत्पत्तेरिति भावः ।

'यत्र यत् उपक्रम्यते तत्र तत् तात्पर्यगोचरः' इत्येवोक्तौ 'इयाम्यग्निं प्रथमं स्वस्तये' इति सावित्रसूक्ते अग्नेरुपक्रमेऽपि तत्सूक्ततात्पर्यगोचरत्वं नेति व्यभिचारनिरासाय अपवादाभाव इत्युक्तम् । तत्र सवितृश्रुतिलिङ्गाऽदेरपवादस्य भावादिति भावः ।

॥ इत्यादीति ॥ 'यत्र यत् उपसंह्रियते तत्र तत् तात्पर्यगोचरः अपवादाभाव इत्यादि ध्येयमित्यर्थः । 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति जीवप्रापकोपसंहारे सत्यपि न तत्र तस्य तात्पर्यगोचरत्वम् इत्यतः अपवादाभाव इत्युक्तिः । तत्र ब्रह्मशब्दाभ्यासरूपापवादात् ।

'जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः' इत्यादावभ्यासे सत्यपि न जीवपरत्वम् , ब्रह्मपरत्वमापकापूर्वताल्लक्षणापवादात् इत्यादि ध्येयम् । त एवेतीतिप्रतीकमुखेन वाक्यमात्रस्य ग्रहणम् ॥ एतेनेति ॥ व्याप्तिबलेनार्थगमकत्वकथनेनेत्यर्थः ।

अत्रोपक्रमोपसंहारेत्येवं क्रमेण निर्देशः तेषामन्योन्यविरोधे सति उत्तरोत्तरेण पूर्वपूर्वस्य बाधेनाऽर्थनिर्णयः कार्य इति सूचयितुम् ।

'उपक्रमाऽदिलिङ्गानां बलीयो ह्युत्तरोत्तरम्' इत्युक्तेः ।

यत्रैकस्यार्थस्योपक्रममात्रमुपसंहारमात्रं वा तत्रोपक्रान्ताऽदिमात्रार्थे तात्पर्यम् , यत्र तु वाक्ये उभयं तत्र तदविरोधलक्षणैकरूप्यात् उभयानुगुणेऽर्थे तात्पर्यम् इति ज्ञापनाय तदैकरूप्यस्याप्युक्तिः । प्रागुक्तस्मृतावपि

(शा.टि.) 'उपक्रमोपसंहारौ' इत्यत्र प्रत्येकविवक्षया विशकलितौ द्वाविव समुदायविवक्षया तदैकरूप्यमिति विवक्षि-तम्। तेन 'त एव' इति वाक्ये ऐकरूप्यस्यापि उपपत्तेरिव तल्लिङ्गत्वोक्तिः[1] सिद्धेति ज्ञेयम्। यस्य वाक्ये यस्मिन्नर्थे उपक्रमोपसंहारयोरैकरूप्यं तत्र तदर्थे तात्पर्यम्। यथा 'ब्रह्मविदाप्नोति परम्' इति ज्ञानिप्राप्यत्वेनोपक्रमः, तथैव 'स य एवंवित् अन्नमयमात्मानमुपसंक्रम्य' इति ज्ञानिप्राप्यत्वेन उपसंहारात् तद्वाक्यसन्दर्भः सर्वोऽपि ब्रह्मपरः इत्यादि ध्येयमिति भावः।

ननु आत्माऽश्रयेत्यादिवाक्य एवोपक्रमाऽदयोऽपि निर्देष्टव्याः। कुतो वाक्यभेदः? इत्यत आह ॥ तेषामिति ॥

(श्री. टि.) ॥ सन्तीति ॥ अतोऽनुप्रमाणत्रित्वभङ्ग इति भावः। चः चशब्दः ॥ प्राचुर्येणेति ॥ अन्यथा प्रमाणसम्प्लववादिनामस्माकं मते वेदवेद्यस्येश्वराऽदेर्योगिप्रत्यक्षाऽदिरूपप्रमाणान्तराप्राप्तार्थताऽभावात् असम्भवः स्यात् इत्यतः प्राचुर्येणेत्युक्तम्। बाहुल्येनेत्यर्थः। क्वचित् तदभावो न दोषायेति भावः। प्रमाणान्तराप्राप्तता अपूर्वता इत्येव क्वचित् पाठः। तत्र प्राचुर्येणेति पदमध्याहार्यम्। अन्यथा उक्तरीत्याऽसम्भवाऽपत्तेरिति ध्येयम् ॥ स्तुतिरित्यादि ॥ गुणसङ्कीर्तनम् स्तुतिः। दोषसङ्कीर्तनम् निन्दा। कर्तृनामनिर्देशपूर्वकमितिहास-कथनम् परकृतिः। सामान्यतः कथाकथनम् पुराकल्पः। अन्ये तु एककर्तृकवाक्यम् परकृतिः। बहुकर्तृक-वाक्यम् पुराकल्प इत्यप्याहुः।

॥ अनुमानत्वादिति ॥ 'इदं वाक्यम् अस्मिन्नर्थे तात्पर्योपेतम् तादृशोपक्रमाऽद्युपेतत्वात्[2], इत्येवंरूपे-णानुमानत्वात् इत्यर्थः ॥ नोक्तविरोध इति ॥ प्रमाणत्रित्वस्य विरोधो नेत्यर्थः ॥ पृथगुक्तिरिति ॥ 'सन्तानबीजं कुरुपाण्डवानाम्' इत्यत्रेत्यर्थः ॥ साक्षादेकत्वाभावेनेति ॥ घटकलशवत् निर्विशेषाभेदाभावे-नेत्यर्थः ॥ तथा प्रकृतेऽपीति ॥ उपक्रमाऽदीनामप्युपपत्तिविशेषत्वेन उपपत्तिपदेन तदतिरिक्तोपपत्तिग्रहणात् इत्यर्थः ॥ अन्यथेति ॥ सामान्यविशेषभावेनेत्यर्थः ॥ उक्ता इतीति ॥ त एव उपक्रमाऽदयः, सोपपत्तयः उपपत्तिसहिताः, लिङ्गान्युक्ताः लिङ्गत्वेनोक्ताः, इति मूलार्थमभिप्रेत्य सोपपत्तय इत्यस्याभिप्रायमाह ॥ यथो-पक्रमेति ॥ युक्तमुक्तमिति ॥ उपपत्तिविशेषत्वेन पृथगुक्तिं व्याख्याय अनुमानान्तर्भावमङ्गीकृत्य प्रमाणत्रि-त्वकथनं युक्तमित्यर्थः।

ननूपपत्तेर्व्याप्तिबलेनार्थधीहेतुत्वात् युक्तं लिङ्गत्वम्। उपक्रमाऽदीनां तु कथं तत्? इत्याशङ्कानिरा-सार्थत्वेनापि एतदेव वाक्यमवतारयति ॥ किं चेत्यादिना ॥ सोपपत्तय इत्यस्याभिप्रायमाह ॥ यथोपपत्तिर्लि-ङ्गमिति ॥ लिङ्गमित्यस्यार्थमाह ॥ व्याप्तीति ॥ तदेव विवृणोति ॥ यथेति ॥ यत्र यत्र उपक्रमाऽदे तस्यैव

[1] वत्,　　[2] एतदर्थोपपन्ना,

(श्री. टि.) तत्तात्पर्यविषयत्वम् इत्यङ्गीकारे 'एकमेवाद्वितीयम्' इत्युपक्रमात् जीवपरमात्माभेदस्य 'तत्त्वमसि' इति इति श्रुतितात्पर्यविषयत्वाऽऽपत्तिः इत्यत उक्तम् ॥ अपवादाभाव इति ॥ तत्र च विरुद्धधर्माधिकरणत्वयुक्ति-युक्ता 'भिन्नो चिन्त्यः' इत्यादिश्रुतिरेवापवादकभूताऽस्तीति नाभेदस्तत्र श्रुतितात्पर्यविषय इत्यर्थः । यथोक्तम् 'पृथगुपदेशात्' इति ॥ एतेनेति ॥ उपक्रमाऽदीनां व्याप्तिबलेनार्थधीहेतुतया लिङ्गत्ववचनेनेत्यर्थः । तदेव विशदयति ॥ न हीति ॥ अत्रापि योगविभागेनान्तर्भावकथने निमित्तमाह ॥ एतेषामिति ॥ अर्थाऽपत्त्यादीनां केवलं वाक्यार्थ एव लिङ्गत्वम्, उपक्रमाऽदीनां तु आगमार्थविषयत्वमेव आगमस्यार्थविशेषे तात्पर्यनिश्चायकत्वमिति[1] विशेषज्ञापनार्थो योगविभाग इत्यर्थः ।

## समाऽख्याऽऽदीनामनुमानान्तर्भावः

(टी) तथाऽपि समाऽख्याऽदीनि पृथक्प्रमाणानि सन्तीत्यत आह

## समाऽख्यावाक्यप्रकरणस्थानानि च

अनुमेत्यस्यानुकर्षणार्थश्चकारः । निर्णीतस्थले समानोक्तिः समाख्या । सा द्विविधा । अर्थतः शब्दतोऽपीति । वाक्यमुक्तम् । कयाचिद्विवक्षयैकार्थावच्छिन्नं वाक्यजातं प्रकरणम् । तादृशं प्रकरणजातं स्थानम् । एतेषामनुमानेऽन्तर्भावादुक्तमुपपन्नम् । समाख्याया वाक्याऽदेरवरत्वेऽपि तदादित्वेन ग्रहणं

'श्रुतिर्लिङ्गम् समाऽख्या च वाक्यं प्रकरणं तथा'

इति अविवक्षितक्रमं[2] वाक्यमनुसृत्य कृतम् । उपक्रमाऽदीनां तात्पर्यलिङ्गत्वं, एतेषामर्थ एवेति[3] विशेषज्ञापनार्थो योगविभागः । उपक्रमाऽदीनां स्वार्थे आगमत्वेऽपि तात्पर्य एव लिङ्गत्वात् नोक्तविरोधः ।

यर्हि श्रुतिर्लिङ्गमिति समाख्याऽऽदीनां लिङ्गात् पृथगुक्तिः कथम्? इत्यत आह

## लिङ्गविशेषाः

पूर्वपक्षपरिहारः । अत्राप्यनुमानान्तर्भावे पूर्वोक्ता युक्तिरनुसन्धेयेति ।

(रा. टि.) ॥ अर्थतः शब्दत इति ॥ तत्राऽऽद्या, वैश्वानरविद्यायां वैश्वानरस्य विष्णुत्वे 'मूर्धैव सुतेजाः चक्षुर्विश्वरूपः' इत्युक्त्वा 'शीर्ष्णो द्यौः समवर्तत' इत्यादिश्रुत्यनुसारेणाऽऽख्यामाह सूत्रकारः 'भूमविद्यमपि

[1] विषयत्वात् [2] रा. भिन्नाभिन्नपरीततात्. [3] रा. एतेषां पुनरर्थे.

(रा. टि.) चैनमधीयत' इति। द्वितीया तु, विश्वकर्मसूक्ते अजस्य विष्णुत्वे प्रोक्तस्य 'परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति' इत्यस्य अम्भृणीसूक्ते 'परो दिवा पर एना पृथिव्यैतावती' इति समाऽऽख्या ॥ वाक्यमुक्तमिति ॥ आगमलक्षणोक्तिप्रस्ताव इति भावः ॥ कयाचिदिति ॥ केनापि प्रकारेण एकार्थे तात्पर्ययुक्तवाक्यसन्दर्भः प्रकरणमित्यर्थः। यथा 'नैवेह किञ्चनाग्र आसीत् मृत्युनैवेदमावृतम्' इत्यादि 'तददितेरदितित्वम्' इत्यन्तं अनेकावान्तरार्थबोधकमपि मृत्युमहिमोक्तिपरत्वविवक्षया मृत्युप्रकरणम् ॥ तादृशमिति ॥ एकार्थे तात्पर्ययुक्तानेकवाक्यजातरूपप्रकरणमित्यर्थः[1]। तद्यथा, शं नो मित्र' इत्यारभ्य 'सुवर्णज्योतिः' इत्यन्तम्।

॥ एतेषामनुमानेऽन्तर्भावादिति ॥ वैश्वानरविद्यास्थः विष्णुर्भवितुमर्हति विष्णुपरत्वेन निर्णीतपुरुषसूक्तसमाऽऽख्यानात्[2] एतत्सदृशतया कथनात् इत्यर्थः। यत्र विप्रतिपन्नवाक्ये शब्दतोऽर्थतो वा निर्णीतवाक्यान्तरसादृश्योक्तिस्तद्वाक्यं तदर्थकमिति सामान्यव्याप्त्या संमतवत्।

वाक्यमपि, स्वान्तर्गतपदार्थनिर्णयसमभिव्याहृतवाक्यान्तरार्थनिर्णयेन[3] अनुमापकमिति द्वेधा। तत्राऽऽद्यं यथा 'एतमेव ब्रह्मेत्याचक्षते' इति वाक्यं[4] स्वान्तर्गतैतच्छब्दार्थो ब्रह्मैव तदसाधारणब्रह्मशब्दसमभिव्याहारात्। यत् यदसाधारणश्रुतिसमभिव्याहृतम् तत् तत्परम्, यथा संमतम् इति। पदान्तरसमभिव्याहारो हि वाक्यम्। द्वितीयं तु दहरविद्यायां 'किं तत् अत्र विद्यते?' इति प्रश्नवाक्यसमभिव्याहारात् 'यावान्वा अयमाकाशः' इति वाक्यस्य ब्रह्मपरत्वम्। यावानिति वाक्यं ब्रह्मपरं, अन्वेष्टव्यत्वेनोक्तं दहराऽऽकाशस्थं ब्रह्म किम्? कीदृशम्? इति प्रश्नवाक्यसमभिव्याहारात्। अन्यथा असङ्गतेः। ईदृशं ब्रह्म विद्यत इत्येव वाच्यत्वात्। प्रकरणमपि, 'सर्वमत्ति' इत्युक्ते अदनकर्ता मृत्युशब्दितो विष्णुरेव तत्प्रकरणमध्यगतत्वात्[5] अन्नमयाऽऽदिशब्दार्थो विष्णुरेव तत्परस्थानमध्यगतत्वात् इत्यादिरूपेण प्रयोगसम्भवात् इति भाव।

॥ अवरत्वेऽपीति ॥ 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाऽऽख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षात्' इति जैमिनिसूत्रात् इति भावः ॥ भिन्नवाक्येति ॥ उपक्रमोपसंहाराविति श्रुतिर्लिङ्गमिति भिन्नस्मृतिगृहीतत्वादित्यर्थः। क्वचित् उपक्रमाऽऽदीनां तात्पर्यलिङ्गत्वमेतेषां पुनरर्थ एवेति विशेषज्ञापनार्थो योगविभागः इत्येव पाठः। उपक्रमाऽऽदेः शब्दरूपत्वात् कथमनुमानता? इत्यत आह ॥ उपक्रमाऽऽदीनामिति ॥ नोक्तेति ॥ प्रमाणत्रित्वे विरोधो नेत्यर्थः ॥ पूर्ववदिति ॥ कुरुपाण्डववत् सामान्यविशेषभावेन परिहार इत्यर्थः ॥ अत्रापीति ॥ समाऽऽख्याऽऽदावपीत्यर्थः। व्याप्तिबलेनार्थगमकत्वरूपयुक्तिरनुसन्धेयेत्यर्थः।

---

[1] प्रकरणजातमित्यर्थः. [2] सूक्ते समाऽऽख्यानात्. [3] स्वान्तर्गतपदसमभिव्याहृतपदान्तरार्थनिर्णयेन स्वसमभिव्याहृतवाक्यान्तरार्थनिर्णयेन. [4] वाक्ये. [5] अस्मात्पूर्वं 'इति। स्थानमपि' इति त्रुटितमिति भाति।

(श्री. टि.) ॥ वाक्यमुक्तमिति ॥ आकाङ्क्षासन्निधियोग्यतावन्ति[1] पदानि वाक्यम् इति वाक्यलक्षणं पूर्वमुक्तमित्यर्थः ॥ एकार्थावच्छिन्नमिति ॥ एकार्थप्रतिपादकत्वावच्छिन्नं एकार्थप्रतिपादकमिति यावदित्यर्थः ॥ तादृशमिति ॥ कयाचिद्विवक्षया एकार्थावच्छिन्नं प्रकरणजातमित्यर्थः । उक्तम् अनुप्रमाणत्रित्वम् ।

ननु समाऽऽख्यावाक्येत्यादिवाक्ये समाऽऽख्याया आदित्वेन ग्रहणमनुपपन्नम् । तथा हि, 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाऽऽख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षात्' इति जैमिनिसूत्रोक्त एव वास्तवः क्रमः । उक्तञ्चानुव्याख्याने,

वाक्यं प्रकरणं स्थानं समाऽऽख्या च तथाविधा' इति ।

अतः तदनुसारेण वाक्यप्रकरणस्थानसमाऽऽख्याश्च इति वक्तव्यत्वात् इत्यत आह ॥ समाऽऽख्याया इति ॥ समाऽऽख्याया इति षष्ठी । वाक्याऽऽदेरिति पञ्चमी ॥ तदादित्वेन ग्रहणमिति ॥ तस्याः समाऽऽख्याया आदित्वेन ग्रहणमित्यर्थः ॥ अनुसृत्येति ॥ तथा च तद्वत् अत्रापि क्रमो न विवक्षित इत्यर्थः ।

अत्रापि योगविभागेनान्तर्भावकथने निमित्तमाह ॥ उपक्रमाऽऽदीनामिति ॥ उपक्रमाऽऽदीनां वाक्यतात्पर्यनिर्णय एव लिङ्गत्वम् । समाऽऽख्याऽऽदीनां तु एतद्वाक्यम् एतदर्थकम् तादृशसमाख्याऽऽद्युपेतत्वात्[2] इत्येवं आगमार्थविशेषनिश्चायकतया तत्रैव लिङ्गत्वम् इति विशेषज्ञापनार्थो योगविभाग इत्यर्थः ।

ननु उपक्रमाऽऽदीनां कथं लिङ्गत्वमुच्यते ? आगमतया स्वार्थनिश्चायकत्वेन स्वार्थे आगमत्वात् इत्याशङ्क्य उपक्रमाऽऽदीनां स्वार्थे आगमत्वेऽपि आगमतात्पर्यनिर्णय एव लिङ्गत्वाङ्गीकारात् त एव सोपपत्तयो लिङ्गानि इत्युक्तविरोधो नास्तीत्याह ॥ उपक्रमाऽऽदीनामिति ॥ तर्हीति ॥ यद्येते समाऽऽख्याऽऽदयोऽनुमानेऽन्तर्भूतास्तर्हीत्यर्थः ॥ पृथगुक्तिरिति ॥ 'श्रुतिर्लिङ्गम् समाख्या च' इति वाक्य इत्यर्थः ॥ पूर्ववदिति ॥ कुरुपाण्डवन्यायेन समाऽऽख्याऽऽदीनामपि लिङ्गविशेषत्वेन लिङ्गपदेन समाऽऽख्याऽऽद्यतिरिक्तलिङ्गग्रहणात् इति पूर्वोक्तन्यायेन परिहार इत्यर्थः ।

नन्वेवं समाऽऽख्याऽऽदीनां लिङ्गात् पृथगुक्तिं सामान्यविशेषभावमाश्रित्यान्यथा व्याख्याय एतेषामनुमानान्तर्भावाङ्गीकारे को हेतुः? इत्यत आह ॥ अत्रापीति ॥ पूर्वोक्ता युक्तिरिति ॥ लिङ्गं व्याप्तिबलेनार्थधीहेतुर्यथा तथा समाऽऽख्याऽऽदयोऽपि 'यत् वाक्यं यदर्थकसमाऽऽख्याऽऽद्युपेतम् तत् वाक्यं तदर्थकम्' इति व्याप्तिबलेनार्थबोधकाः । अतः कथं नानुमानान्तर्भावः? इत्येवं त एव सोपपत्तयो लिङ्गानि इति वाक्योक्ता युक्तिरनुसन्धेयेत्यर्थः ।

---

[1] आकाङ्क्षायोग्यतासन्निधिमन्त.  [2] एतदर्थकत्वेन निर्णीतसमाऽऽख्या.

व्याप्तिनिरूपणम्

(टी.) यदुक्तं निर्दोषं प्रमितं लिंगमनुमानमिति। तदयुक्तम्। नारिकेलद्वीपवासिनो धूमदर्शनेऽपि वह्निप्रमाऽनुदयादित्यत आह

## व्याप्तिरुपपत्तिमूलम्

व्याप्तिरिति विषयेण विषयिणः प्रत्ययस्योपलक्षणम्।

न केवलं प्रमितं लिङ्गमात्रमनुमितिजनकमंगीक्रियते। किं नाम? निर्दोषत्वान्तर्गतव्याप्तिप्रमितिपूर्वकमेव। न च तादृशं नानुमितिजनकम्। अविनाभावो व्याप्तिः। सा द्विविधा अन्वयव्याप्तिर्व्यतिरेकव्याप्तिश्चेति। तत्र साध्येन साधनस्य व्याप्तिरन्वयव्याप्तिः। यथा 'यो धूमवानसावग्निमान्' इति। साधनाभावेन साध्याभावस्य व्याप्तिर्व्यतिरेकव्याप्तिः। यथा, 'योऽग्निमान्न भवति स धूमवान्न भवति' इति। भूयो भूयो हि धूमं पश्यन् तत्राग्निं पश्यति, अग्न्यभावं पश्यंश्च धूमाभावं। ततो निश्चिनोति धूमाग्न्योः साहचर्यात् अस्त्यविनाभाव इति। गृहीतव्याप्तिश्च पर्वते धूमं पश्यंस्तामनुस्मरति 'यत्सम्बन्धी यो दृष्टः स तस्य स्मारकः' इति न्यायात्। स्मृतव्याप्तिश्च व्याप्तं धूमं पर्वते प्रत्यभिजानाति। तेनाग्न्यनुमितिरिति युक्तं लक्षणमिति।

(रा. टि.) प्रमितमित्यभिप्रेतार्थोक्तिः। उपपत्तिश्च यथार्थतो ज्ञातैव इति स्वोक्त्यभिप्रायेण वा इयमुक्तिः। प्रत्ययस्य ज्ञानस्य। अविनाभाव इत्यत्र नञ्व्यत्यासेन विना अभावः असम्भवः अनुपपत्तिः। येन विना यस्य अनुपपत्तिः तेन तस्य व्याप्तिरित्यर्थः। यदभावे यस्य सत्वं प्रमाणविरुद्धं तत् तेन व्याप्तमिति यावत्। न चैवं व्यतिरेकव्याप्तिरेव नान्वयव्याप्तिरिति शङ्क्यम् केवलान्वयिन्यपि साध्येन विना हेतोरनुपपत्तिरूपव्याप्तेः सत्वात्।

न च तत्र साध्येन विना हेतोर्या उपपत्तिः तदभावरूपा अनुपपत्तिरयुक्ता, तेन विना तदुपपत्तेरप्रामाणिकत्वेन तदभावस्य तत्र हेतावसम्भवात् इति वाच्यम्। सिद्धान्ते अप्रामाणिकस्यैव निषेधप्रतियोगित्वात्। तथा च रसस्य समानदेशकालेन रूपेण विनैव, पाकजरूपाऽदेः समानदेशेन भिन्नकालेन पाकेन विनैव, कृत्तिकोदयस्य स्वसत्तासमानकालया भिन्नदेशया रोहिण्युदयाऽसत्त्वा विना, अधोदेशे नदीपूरस्य भिन्नदेशकालया ऊर्ध्वदेशवृष्ट्या विना अनुपपत्तिरस्तीति सामानाधिकरण्य इव वैयधिकरण्येऽपि उक्तरूपा व्याप्तिरस्त्येव भवतीति भावः।

व्याप्तिग्रहस्य तर्काधीनत्वात् तत्र च व्याप्तिग्रहापेक्षायामनवस्थेत्यतो भूयोदर्शनरूपपत्यक्षेणैव व्याप्तिग्रहमाह[1] ॥ भूयो भूय इति ॥ पुनः पुनः इत्यर्थः ॥ तत इति ॥ भूयोदर्शनात् इत्यर्थः ॥ प्रत्यभिजानातीति ॥

[1] मनवस्थाऽपत्त्या भूयो,

(रा. टि.) 'अयं च धूमो वह्निव्याप्यः' इत्येवमनुसन्धत्त इत्यर्थः। अत्र एक इति व्याप्तिद्वैविध्य एवाऽरुचिं सूचयति। अन्यत्तु अनुमतमेवेति ज्ञेयम्।

(श्री. टि.) धूमदर्शनेऽपीत्यनेन लिङ्गस्य प्रमितत्वमुक्तमित्यवधेयम् ॥ अनुदयादिति ॥ तथा च सा स्यादिति भावः। ननु व्याप्तिरुपपत्तिमूलमिति कथमुच्यते? स्वरूपसत्या व्याप्तेरपि धूमे सत्त्वेन पुनर्नारिकेलद्वीपवासिनो धूमदर्शनेन वह्निप्रमा स्यात् इत्यतिप्रसङ्गः अपरिहृत एवेत्यत आह ॥ व्याप्तिरितीति ॥ लक्षणाबीजशक्यसम्बन्धोपपादनाय विषयेणेऽत्याद्युक्तम् ॥ निर्दोषत्वान्तर्गतेति ॥ व्याप्तिप्रमित्यभावस्य दोषत्वेन व्याप्तिप्रमितिर्निर्दोषत्वान्तर्गतैवेत्यर्थः। तथा च नारिकेलद्वीपवासिनो व्याप्तिप्रमित्यभावेन न वह्न्यनुमितिर्भवतीति निर्दोषपदेनैव तद्व्यावृत्तिरिति भावः। तथा च व्याप्तिः व्याप्तिप्रमितिः उपपत्तेः लिङ्गस्य अनुमितिजनने मूलं कारणं सहकारिणीऽति यावदिति मूलयोजना द्रष्टव्या।

व्याप्तिरुपपत्तिमूलम् इत्युक्तम्। तत्र व्याप्तिस्वरूपजिज्ञासायामाह ॥ अविनाभावो व्याप्तिरिति ॥ अत्र भावः सत्ता। एवं च साध्येन विना साधनस्य भावो न इत्यनेन साध्याभाववन्निष्ठात्यन्ताभावप्रतियोगित्वं व्याप्तिः इत्युक्तं भवतीति द्रष्टव्यम्।

नन्विदमयुक्तम् तथात्वे तुच्छस्यापि वह्निव्याप्यताऽपत्तेः। तदत्यन्ताभावस्य केवलान्वयित्वेन वह्न्यभाववन्निष्ठत्वात्। किं च अस्य व्यतिरेकव्याप्तिलक्षणत्वेन[1] साध्याभावसाधनाभावयोरेव व्याप्तिरुक्ता स्यात्, न साध्यसाधनयोरन्वयव्याप्तिः। व्यतिरेकव्याप्तिश्च सिद्धान्ते नानुमानाङ्गम्। केवलान्वयिन्यप्रसिद्धिश्च स्यात् इति चेन्न। साहचर्यनियम इत्यत्र तात्पर्यात्। अत एवोक्तं पद्धतौ, अविनाभावो व्याप्तिः साहचर्यनियम इति यावत् इति।

अत्र साहचर्यं नाम स्वदेशकालविशेषगतस्य हेतोः स्वदेशकालविशेषगतेन साध्येन सम्बन्धमात्रं विवक्षितम्। न तु सामानाधिकरण्यमेव। तथात्वे अधोदेशे नदीपूराऽद्यावव्याप्तेः। सम्बन्धमात्रं तु तत्राप्यस्ति। वृष्टिमदूर्ध्वदेशाऽऽगतत्वात् पूरस्य। एवमन्यत्रापि कृत्तिकोदयाऽऽदौ हेतुसाध्यसम्बन्धमात्रमुपपादनीयम्। तुच्छस्य सोऽकस्याप्यभावात् नातिव्याप्तिः। व्यभिचारिसम्बन्धव्यावर्तनाय नियम इत्युक्तम्। नन्वेवं नियमस्य व्याप्तिघटकत्वात् आत्माऽऽश्रय इति चेन्न। नियमपदेनाव्यभिचारस्य विवक्षितत्वात्। तथा च अव्यभिचरितसाध्यसम्बन्धो व्याप्तिः इत्युक्तं भवति। अत एवोक्तं पद्धतौ, व्याप्तिरव्यभिचरितः सम्बन्ध इति। अत्र अव्यभिचरितत्वं नाम स्वाभाविकत्वं विवक्षितम्। अतो हेतुधर्मस्याव्यभिचारस्य कथं सम्बन्धविशेषणत्वम्? इति चोद्यानवकाश इति ज्ञातव्यम्।

---

[illegible]

1 [illegible]

(श्री.टि.)॥ सा द्विविधेति ॥ यद्यपि अस्मन्मते अन्वयव्याप्तिरेव साध्यसिद्ध्युपयोगिनी न व्यतिरेकव्याप्तिः, तथाऽपि पररीत्या शिष्यमतिवैशद्यायेदं व्युत्पादनमिति ज्ञातव्यम् । एवमुत्तरत्रापि । यथोक्तम् युक्तिपादीयसुधायां, शिष्यमतिवैशद्याय व्युत्पादनं तु अनुमतमेवेति न स्वीयव्यवहारविरोध इति । भूयोदर्शनरूपव्याप्तिग्राहकसामग्रीं दर्शयति ॥ भूय इति ॥ अनेन प्रथमज्ञानमुपदर्शितम् । पर्वते धूमं पश्यन् इत्यनेन द्वितीयज्ञानम् ॥ धूमं पर्वते प्रत्यभिजानातीति ॥ 'अस्त्यत्र पर्वते वह्निना व्याप्तो धूमः' इति प्रत्यभिजानातीत्यर्थः । अनेन तृतीयलिङ्गपरामर्शः प्रदर्शितः ॥ तेनेति ॥ तृतीयलिङ्गपरामर्शेनेत्यर्थः ।

### अनुमानविभागः

(टी) द्विविधमनुमानम् । स्वार्थं परार्थं चेति । परोपदेशानपेक्षं[1] स्वार्थम् । तदपेक्षं[2] परार्थम् । व्याप्तिमल्लिङ्गबोधकं वाक्यं परोपदेशः ।

### अवयवनियमनिराकरणम्

तस्यावान्तरवाक्यान्यवयवाः । ते च जिज्ञासासंशयशक्यप्राप्तिप्रयोजनसंशयव्युदासप्रतिज्ञाहेतूदाहरणोपनयनिगमनानीति दशेति जरन्नैयायिकाः । प्रतिज्ञाऽऽदयः पंचैवेति नवीनाः । प्रतिज्ञाहेतूदाहरणानि उदाहरणोपनयनिगमनानि त्रय एवेति मीमांसकाः । उदाहरणोपनयौ द्वावेवेति बौद्धाः । तत्र तृतीयपक्षव्यतिरिक्तनियमपक्षास्तावन्नोपपन्ना इत्याह

## सा प्रतिज्ञाहेतुदृष्टान्तरूपा

सेत्युपपत्तिप्रतिपादकं वाक्यमुपलक्ष्यते । दृष्टान्तेऽति तत्प्रतिपादकमुदाहरणम् । प्रतिपादनाय पक्षवचनं प्रतिज्ञा । यथा 'पर्वतोऽग्निमान्' इति । साधनत्वाभिव्यंजकविभक्त्यन्तं लिङ्गवचनं हेतुः । यथा 'धूमवत्वात्' इति । व्याप्तिदर्शनपुरस्सरं[3] सम्यग्दृष्टान्ताभिधानमुदाहरणम् । व्याप्तिग्रहणस्थलं दृष्टान्तः । स द्विविधः । साधर्म्यदृष्टान्तो वैधर्म्यदृष्टान्तश्चेत्येके । अन्वयव्याप्तिग्रहणस्थलं साधर्म्यदृष्टान्तः । व्यतिरेकव्याप्तिग्रहणस्थलं वैधर्म्यदृष्टान्तः । अत एवोदाहरणमप्येवं द्विविधम् । तत्र साधर्म्योदाहरणं यथा 'यो धूमवानसावग्निमान् यथा महानस' इति । वैधर्म्योदाहरणं यथा 'योऽग्निमान्न भवति स धूमवान्न भवति यथा ह्रद' इति । एतैस्त्रिभिरेवावयवैरुपपत्ते र्बोधयितुं शक्यत्वान्न तद्दशावयवत्वाऽऽदिनियमो युक्तः ।

---

[1] रा. नपेक्षितम्. [2] इदं वाक्यम् क्वचित्कोशे नास्ति. [3] रा. श्री. व्याप्तिप्रदर्शनपूर्वकं.

(टी.) अथ वा दृष्टान्तपदेन तद्वचनमात्रोपलक्षणेनेदं पक्षान्तरम् । उपलक्षणं चैतत् । उदाहरणोपनयनिगमनैरुदाहरणोपनयाभ्यां[1] वा शक्यते बोधयितुम् । दृष्टान्तोपमानेन लिङ्गस्य पक्षे उपसंहारः उपनयः । सोऽप्युदाहरणानुसारेण द्विविध इति । 'तथा चायं धूमवान् पर्वतः' इति साधर्म्योपनयः । 'न तथाऽयं निर्धूमः पर्वतः' इति वैधर्म्योपनयः । हेतुपुरस्सरं पक्षे साध्योपसंहारो निगमनम् । यथा 'तस्मात् पर्वतोऽग्निमानेव' इति । किं च जिज्ञासाऽऽदयः शब्दा एव न भवन्ति । कुतो वाक्यावयवाः । कुतस्तरां तन्नियमः । उपनयनिगमनयोः प्रतिज्ञाहेतुभ्यां गतार्थत्वाच्चेति ।

(रा. टि.) ॥ द्विविधमनुमानमिति ॥ व्याप्तिस्मृतिमद्व्याप्यदर्शनं द्विविधमित्यर्थः । परोपदेशानपेक्षितमित्यत्र अनुमानमित्यनुकर्षः । परोपदेशापेक्षं परार्थमिति[2] सिद्धत्वात् अनुक्तिः । तदपेक्षं परार्थमित्येव पाठः ॥ नोपपन्ना इति ॥ तत्र हेतुः उत्तरत्र एतैस्त्रिभिरेवावयवैः इत्यादिना व्यक्तः । लक्षणाबीजसम्बन्धप्रदर्शनायोक्तम् उपपत्तिप्रतिपादकमिति । व्याप्तिमल्लिङ्गप्रतिपादकमित्यर्थः । एवमग्रेऽपि । तथा च परोपदेशवाक्यं प्रतिज्ञाहेतूदाहरणरूपमित्युक्तं भवतीति भावः ।

प्रतिज्ञाऽऽदिस्वरूपमाह ॥ प्रतिपादनायेति ॥ पक्षः इत्याद्युक्तेः प्रतिज्ञात्ववारणाय एतदुक्तिः । साध्यप्रमितिव्युत्पादनाय हेत्वाद्युपन्यासाय वा इत्यर्थः । पक्षस्वरूपं तु साध्यधर्मवान् धर्मी पक्ष इति प्रागेवोक्तम् । लिङ्गेत्याद्युक्तेः धूम इत्याद्युक्तेश्च हेतुत्ववारणायोक्तम् साधनत्वाभिव्यञ्जकविभक्त्यन्तमिति । अन्वयव्याप्तौ[3] व्यतिरेकाऽऽदिदृष्टान्तोक्तेरुदाहरणत्ववारणायोक्तम् सम्यगिति । साध्यसाधनोभयोपेतेत्यर्थः । इत्येक इति द्वैविध्योक्तावेवारुचिं सूचयति । तद्बीजं तु व्यतिरेकस्य प्रकृतानुमित्यनुपयोगादिति अन्यत्र व्यक्तम् । शिष्यव्युत्पादनार्थमेवात्रोपन्यासः ॥ अत एवेति ॥ दृष्टान्तस्य द्वैविध्यादेव तद्वचनरूपमुदाहरणमपीत्यर्थः ॥ उपपत्तेरिति ॥ व्याप्तिमल्लिङ्गस्येत्यर्थः ।

प्राक् मीमांसकेतरमतनियमनिरासपरतया व्याख्यातं वाक्यम् । उपपत्तिबोधकपरोपदेशे अवान्तरपक्षभेदोक्तिपरतया व्याचष्टे ॥ अथ वेति ॥ तद्वचनमात्रेति ॥ व्याप्तिप्रदर्शनपूर्वकमित्यंशो मात्रपदेन व्यावर्त्यते ॥ पक्षान्तरमिति ॥ 'पर्वतोऽग्निमान् धूमवत्वात् महानसवत्' इत्येवंरूपं परोपदेशवाक्यम् । प्रागुक्तत्र्यवयवरूपपक्षात् किञ्चिन्न्यूनत्र्यवयवरूपं पक्षान्तरमित्यर्थः । एतेन मीमांसकपक्षोऽप्यपोढो ध्येयः ॥ दृष्टान्तोपमानेनेति ॥ दृष्टान्तसादृश्येनेत्यर्थः ।

---

[1] श्री. बोधयितुं शक्यते.  [2] मिति वा पाठः.  [3] व्यतिरेकदृष्टा.

(श्री. टि.) ॥ व्याप्तिमल्लिङ्गबोधकमित्यादि ॥ यथाऽऽहुः,

य: परार्थानुमानस्य प्रयोगो वाक्यलक्षण: ।
तस्यावान्तरवाक्यानि कथ्यन्तेऽवयवा इति ॥ इति ।

॥ शक्यप्रतीतीति ॥ शक्यसाधनेत्यर्थः ॥ नवीना इति ॥ यथाऽऽहुः,

ते प्रतिज्ञाऽऽदिरूपेण पञ्चेति न्यायविस्तरः । इति ।

॥ मीमांसका इति ॥ यथाऽऽहुः

त्रीनुदाहरणान्तान्वा यद्वोदाहरणाऽऽदिकान् ।
मीमांसका:.......................................॥ इति ।

॥ बौद्धा इति ॥ यथाऽऽहुः

..........सौगतास्तु सोपनीतिमुदाहृतिम् ॥ इति ।

मीमांसकपक्षस्योत्तरत्र दूषणात् तावदित्युक्तम् ॥ इत्याहेति ॥ त्र्यवयवनियमवादिमीमांसकपक्षमङ्गीकृत्याऽऽहेत्यर्थः । सा इति तच्छब्दोक्तस्य लिङ्गरूपोपपत्तिलक्षणार्थस्य पक्षवचनरूपप्रतिज्ञाऽऽदिरूपत्वाभावादाह ॥ सेतीति ॥ प्रतिपादकमिति लक्षणाबीजशक्यसम्बन्धोपपादनायेति ज्ञेयम् । वाक्यं परोपदेशरूपम् । नन्वथापि उपपत्तिप्रतिपादकवाक्यस्य प्रतिज्ञाहेतुरूपत्वसंभवेऽपि व्याप्तिग्रहणस्थानभूतमहानसाऽऽदिदृष्टान्तरूपत्वाभावादाह ॥ दृष्टान्तेतीति ॥ इतिपदेनोदाहरणं ग्राह्यमित्यर्थः । प्रतिपादकपदप्रयोजनं पूर्ववत् ज्ञातव्यम् ।

प्रतिज्ञाऽऽदीनां लक्षणमाह ॥ प्रतिपादनायेति ॥ परबोधनायेत्यर्थः ॥ पक्षवचनमिति ॥ साध्यधर्मविशिष्टधर्मिवचनमित्यर्थो द्रष्टव्यः । अन्यथा 'पर्वतः' इति वचनस्यापि प्रतिज्ञात्वाऽऽपत्तेः । यथाऽऽहुः

तत्र प्रतिज्ञा पक्षोक्तिः प्रतिपाद्यमितुं परम् । इति ।

॥ साधनत्वेति ॥ धूमेति लिङ्गवचनेऽतिव्याप्तिपरिहाराय विभक्त्यन्तमित्युक्तम् । तथाऽपि 'धूमः' इत्यादिवचने तत्परिहाराय साधनत्वाभिव्यञ्जकेति विभक्तिविशेषणम् । हेतौ पञ्चमीविधानात् साधनत्वाभिव्यञ्जकविभक्तिः पञ्चमीविभक्तिरिति ज्ञातव्यम् । यथाऽऽहुः,

(श्री. टि.) लिङ्गस्य वचनं हेतुः [illegible]प्रकाशकम्। इति।

तृतीयाविभक्त्यन्तमित्यपि ज्ञातव्यम्।

> पञ्चम्यन्तं तृतीयाऽन्तं वा लिङ्गप्रतिपादकम्।
> वचनं हेतुः........................................ ॥ इत्यभियुक्तवचनात्।

॥ सम्यगिति ॥ 'महानस' इति दृष्टान्तवचनेऽतिव्याप्तिपरिहाराय व्याप्तिप्रदर्शनपूर्वकमित्युक्तम्। तथाऽपि 'यो वह्निमान् असौ धूमवान् यथा महानस' इति वचनेऽतिव्याप्तिवारणाय सम्यगित्युक्तम्। ननु दृष्टान्तस्य द्वैविध्येऽपि उदाहरणस्य किमायातम्? इत्यत आह ॥ अत एवेति ॥ दृष्टान्तस्य द्विविधत्वादेव तद्वचनरूपम् उदाहरणमपि द्विविधमित्यर्थः। यथाऽऽहुः

> द्विधोदाहरणं सम्यग्व्याप्तिनिर्देशपूर्वकम्।
> दृष्टान्तवचनं तत्स्यादन्वयव्यतिरेकतः ॥ इति।

उपपत्तेर्व्याप्त्यादिमल्लिङ्गस्य। बोधयितुं स्मृतिं जनयितुमित्यर्थः।

उपलक्षणमेतत्। जिज्ञासां जनयितुं चेत्यपि द्रष्टव्यम्। तथा हि, न तावदिदं पञ्चावयवाऽनुपेतं वाक्यमात्र[illegible]तया परप्रत्यायनाङ्गम् वादिप्रतिवादिनोरन्योन्यसिद्धान्ताभ्यासात्। किं तु? गृहीतव्याप्तेः स्मारकत्वेन अगृहीतव्याप्तेर्जिज्ञासाजनकत्वेनोपयुज्यत इत्येव वक्तव्यम्। तत्स्मरणाऽदिकं यावता भविष्यति तावान् परोपदेश इति वक्तव्यम्। तच्च एतैस्त्रिभिरेवावयवैर्भविष्यतीति न नियमपक्षो युक्त इति भावः।

पूर्वं [illegible] नियमपक्षो दूषितः। तदर्थं दृष्टान्तपदेनोदाहरणं गृहीतम्। इदानीं इदमपि पक्षान्तरमित्यभिप्रेत्याऽऽह ॥ अथ वेति ॥ तद्वचनमात्रेति ॥ दृष्टान्तवचनमात्रेत्यर्थः। न च पूर्ववत् समग्रोदाहरणोपलक्षणमित्यर्थः। तथा च सा प्रतिज्ञेति वाक्यम्, सा उपपत्तिप्रतिपादिकं वाक्यं प्रतिज्ञारूपा हेतुरूपा इत्येकः पक्षः दृष्टान्तरूपेत्यपरः पक्षः इति [illegible] व्याख्यातं भवतीति ज्ञातव्यम्।

ननु [illegible] व्याप्त्यादिमल्लिङ्गस्मरणाऽदिकारणम्? धर्मिलिङ्गाऽन्यतरस्यापि ततोऽस्फुरणात् इति चेत्। [illegible] प्रतिज्ञासिद्धौ कथं पर्वतोऽग्निमान्? इति पृष्टे 'महानसवत्' इति दृष्टान्तवचनमात्रमपि व्याप्त्यादिमल्लिङ्गस्मरणाऽदिकारणं भविष्यत्येवेति ज्ञातव्यम्। यथोक्तम् [illegible]तर्कवाक्ये

(श्री. टि.)　युक्तिः प्रतिज्ञारूपा च हेतुदृष्टान्तरूपिका ।
तथोपनयरूपा च परा निगमनाऽऽत्मिका ॥
पृथक् पृथक् प्रमाणत्वं याति युक्तितयैव तु । इति ।

॥ उपलक्षणं चैतदिति ॥ सा प्रतिज्ञेतिवाक्योक्तपक्षद्वयं पक्षान्तरस्याप्युपलक्षणमित्यर्थः । तदेव दर्शयति ॥ उदाहरणेति ॥ मीमांसकबौद्धोक्तरीत्येति भावः । उपपत्तिर्व्याप्त्यादिमल्लिङ्गम् । बोधयितुं स्मृतिविषयीकर्तुम् । जिज्ञासितुं चेत्यपि द्रष्टव्यम् ।

॥ दृष्टान्तोपमानेनेति ॥ दृष्टान्तसादृश्येनेत्यर्थः । यथाऽऽहुः

दृष्टान्तापेक्षया पक्षे हेतोर्व्याप्तिप्रदर्शकम् ।
वचनं स्यादुपनयस्तथेति न तथेति च ॥ इति ।

॥ हेतुपुरःसरमिति ॥ यथाऽऽहुः

हेतुपूर्वं पुनः पक्षवचो निगमनं मतम् । इति ।

जरन्नैयायिकोक्तदशावयवपक्षः अत्यन्तासम्बद्ध इत्याह ॥ किं चेति ॥ आदिपदेन संशयाऽऽदिग्रहणम् ॥ न भवन्तीति ॥ ज्ञातुमिच्छा हि जिज्ञासा संशयश्च ज्ञानम् संशयव्युदासश्च अभावरूपः इत्यादिप्रकारेण न शब्दाऽऽत्मकत्वं तेषामिति भावः ।

नवीनाभिमतः पञ्चावयवपक्षोऽप्ययुक्त इत्याह ॥ उपनयेति ॥ प्रतिज्ञाहेतुभ्यामिति यथायोगं सम्बन्धो न यथक्रमम् ॥ गतार्थत्वादिति ॥ हेतोः पक्षसम्बन्धस्य हेतुवाक्येनैव बोधितत्वेन उपनयस्य हेतुवाक्येन गतार्थत्वात् अविप्रकृष्टत्वेनोपसंहारस्यानपेक्षितत्वात् , प्रतिज्ञावाक्येन निगमनस्य गतार्थत्वाच्चेत्यर्थः ।

(टी.) त्र्यवयवाऽऽदिनियमोऽप्यनुपपन्न इति भावेनाऽऽह

## हेतुगर्भा प्रतिज्ञा केवलाऽपि

उपपत्तिज्ञापिकेति शेषः । ‘धूमवान् पर्वतोऽग्निमान्’ इति हेतुगर्भा प्रतिज्ञा अवयवान्तरं विहायोपपत्तिज्ञापिका भवतीति न कोऽपि नियमपक्षो युज्यते । तावन्मात्रेणोपपत्तेर्बोधे जातेऽप्यवय-वान्तरं वदत आधिक्यप्रसंगात् । न चैवं त्र्यवयवाभ्युपगमे व्याघातः । यस्यैतावता न बोधस्तं प्रति तदभिधानस्येष्टत्वात् । विचित्रबुद्धयो हि पुरुषा इति ।

(टी.) इतोऽपि न नियमपक्षो युज्यत इत्याह

## सिद्धौ प्रतिज्ञायां[1] हेतुमात्रं च

पर्वतादग्निमानय इति नियुक्तः कश्चिद् ब्रूते 'नाग्निमान् पर्वत' इति। अन्यस्तु 'अग्निमान्' इति। एवं विवादेनैव प्रतिज्ञासिद्धौ कुतोऽग्निमान् ? इति पृष्टो यदा 'धूमवत्वात्' इति ब्रूयात्तदाऽपि भवत्येवोपपत्तिज्ञानमिति नावयवनियमो[2] युक्त इति।

इतोऽपि न युक्त इत्याह

## दृष्टान्तः सप्रतिज्ञो हेतुगर्भः

अत्र दृष्टान्त इति तद्वचनोपलक्षणम्। 'धूमवन्महानसवत् पर्वतोऽग्निमान्' इति हेतुगर्भेण सप्रतिज्ञेन दृष्टान्तवचनमात्रेणोपपत्तिज्ञानसंभवात्। श्रोत्राकांक्षानुसारेणैवावयवकल्पना युक्ता न तु तन्नियतिरिति।

(रा. टि.) केवलशब्दस्यार्थमाह ॥ अवयवान्तरं विहायेति ॥ अत्र न्यूनताऽदिनिग्रहस्थानप्रसक्तिदोषपरिहारः तर्कताण्डवे द्रष्टव्यः ॥

(श्री. टि.) ॥ त्र्यवयवाऽद्दीति ॥ आदिपदेन द्व्यवयवग्रहणम्। मीमांसकबौद्धाभिप्रेत इत्यर्थः। केवलशब्दार्थः अवयवान्तरं विहायेति ॥ उपपत्तिज्ञापिकेति ॥ व्याप्त्यादिमल्लिङ्गस्मृत्यादिजननीत्यर्थः। बोधे स्मरणे जिज्ञासायां च सत्यामित्यपि द्रष्टव्यम् ॥ आधिक्येति ॥ अनाकाङ्क्षिताभिधानरूपत्वादिति भावः।

ननु पूर्वं सा प्रतिज्ञाहेतुदृष्टान्तरूपा इति त्र्यवयवाऽदिपक्षमङ्गीकृत्य इदानीं तस्यापि दूषणे कथं न पूर्वोक्तव्याघातः ? इत्याशङ्क्य निराकरोति ॥ न चेति ॥ बोधः उपपत्तिस्मृत्यादिः। ननु सर्वेषामप्येकप्रकारबुद्धित्वात् एक एव प्रकारो वक्तव्य इति चेत् तत्राऽह ॥ विचित्रेति ॥ उपपत्तिज्ञानं उपपत्तिस्मृत्यादि ॥ न युक्त इति ॥ नियमपक्ष इति वर्तते। दृष्टान्तवचनस्यैव व्याप्त्यादिमल्लिङ्गस्मारकत्वेन दृष्टान्तस्य तदभावात् अयुक्तमेतत्, इत्यत आह ॥ अत्रेति ॥

---

[1] प्रतिज्ञाया:   [2] श्री. नियमपक्ष:

(श्री. टि.) ॥ धूमवन्महानसवदिति ॥ नन्वेवं प्रतिज्ञाया एव दृष्टान्तसाहित्यं प्राप्तम्, न तु दृष्टान्तस्य प्रतिज्ञासाहित्यमिति चेन्न। यथा हि 'देवदत्तसहितो यज्ञदत्तः' इत्युक्ते यज्ञदत्तेऽपि देवदत्तसाहित्यं लभ्यते एवमिहापि 'सप्रतिज्ञो दृष्टान्तः' इत्युक्ते प्रतिज्ञाया अपि दृष्टान्तसाहित्यमर्थाल्लभ्यत एवेत्याशयेनैवमुक्तम् इत्यवगन्तव्यम् ॥ उपपत्तिज्ञानेति ॥ उपपत्तिस्मृत्यादीत्यर्थः। सा प्रतिज्ञेत्यादिवाक्यसमुदायलब्धमर्थमाह ॥ श्रोगिति ॥ तस्मादिति शेषः।

उपपत्तिदोषनिरूपणम्

(टी.) निर्दोषोपपत्तिरनुमेत्युक्तम्। को दोष उपपत्तेः संभवति ?। द्विविध उपपत्तिदोषः। साक्षात् वाचनिकश्चेति। यस्तत्रोपपत्तेरेव साधनदूषणाक्षमत्वाऽऽपादकः स साक्षादुपपत्तिदोषः। तं विभज्य दर्शयति।

## उपपत्तिदोषौ विरोधासङ्गती

उपपत्तिदोषो द्विविधः। विरोधोऽसंगतिश्चेति। अन्वययोग्यताविरहो विरोधः। आकांक्षाऽभावोऽसंगतिः। इमौ चार्थवचनयोरपि संभवतः। अर्थासाधुत्वे वचनस्यापि तथात्वादिति।

वचनस्यैवासाधुत्वाऽऽपादको वाचनिकदोषः। तं विभज्य दर्शयति

## न्यूनाधिके वाचनिके

द्विविधो वाचनिकदोषः। न्यूनमधिकं चेति। अपेक्षितासंपूर्तिर्न्यूनम्। अपेक्षिताधिकमधिकम्। न्यूनाधिके च परार्थप्रयोग एव संभवतः। वचनद्वारेणैवोपपत्तेरपि दूषिके स्यातामिति।

(रा. टि.) ॥ को दोष उपपत्तेरिति ॥ साहचर्येणार्थगमकरूपलिङ्गस्येत्यर्थः। एवमग्रेऽपि। 'यन्निमित्तं लिङ्गमभिहितार्थ[1]ज्ञानं न जनयति, संशयविपर्ययौ वा करोति स उपपत्तेर्दोषः' इति सामान्यलक्षणं स्पष्टं मत्वाऽऽह ॥ द्विविध इति ॥ साक्षादिति ॥ वचनोपधानेन विनेत्यर्थः। दूषणानुमानाभिप्रायेणोक्तम् ॥ दूषणाऽक्षमत्वेति ॥ अन्वयेति ॥ लिङ्गाभिमतस्य लिङ्गित्वेनाभिमतेन सह साध्यसाधनभावरूपान्वयस्याभावरूपो योग्यताऽभाव इत्यर्थः। इमौ चेति ॥ दोषावित्यनुषङ्गः। स्वार्थानुमाने वचनाभावादाह ॥ न्यूनाधिके चेति ॥ उपपत्तिरूपार्थदोषोक्तिप्रस्तावे वचनदोषोक्तिरयुक्तेत्यत आह ॥ वचनद्वारेणैवेति ॥ इतिशब्दो दोषोक्तिसमाप्तौ।

---

[1] मभिमतार्थ.

(प्र. टि.) ॥ सम्भवतीति ॥ इति जिज्ञासायामुच्यत इति शेषः । वाचनिकः लिङ्गवचनसम्बन्धी । तद्द्वारा लिङ्गे प्राप्यमाण इत्यर्थः । नन्वर्थदोषयोः कथं वचने सम्भवः? इत्यत आह ॥ अर्थेति ॥ वचनस्यापीति ॥ तत्प्रतिपादकवचनस्यापीत्यर्थः । तथा चार्थद्वारा वचनस्यापि दोषत्वमिति भावः । वचनदोषत्वमुपपादयति ॥ परार्थप्रयोग एवेति ॥ न स्वार्थानुमाने तत्र वचनस्यैवाभावादिति भावः । नन्वनयोर्वचनदोषत्वे द्विविध उपपत्तिदोषः इति वाचनिकयोरनयोरुपपत्तिदोषत्वं कथमुक्तम्? इत्यत आह ॥ वचनद्वारेणैवेति ॥

**निग्रहस्थानानां विरोधाऽदिष्वन्तर्भावः**

(टी.) न केवलमुपपत्तिदोषाणामेव विरोधाऽदिभिः संग्रहः । किं नाम? परनिरूपिताशेषनिग्रहस्थानान्यपि विरोधाऽदिष्वेवान्तर्भवन्तीत्याह

## संवादानुक्तियुता[2] निग्रहाः

निग्रहाः निग्रहस्थानानि । कथायां अखण्डिताहंकारेण परेण परस्याहंकारखण्डनं पराजयो निग्रहस्तन्निमित्तं तत्त्वाप्रतिपत्तिलिङ्गम् वा निग्रहस्थानम् । सा द्विविधा अप्रतिपत्तिर्विप्रतिपत्तिश्चेति । परोक्तस्ववक्तव्ययोरज्ञानम् अप्रतिपत्तिः । तयोरेव विपरीतज्ञानम् विप्रतिपत्तिः । तानि च प्रतिज्ञाहानिः (१) प्रतिज्ञान्तरम् (२) प्रतिज्ञाविरोधः (३) प्रतिज्ञासंन्यासः (४) हेत्वन्तरम् (५) अर्थान्तरम् (६) निरर्थकम् (७) अविज्ञातार्थकम् (८) अपार्थकम् (९) अप्राप्तकालम् (१०) न्यूनम् (११) अधिकम् (१२) पुनरुक्तम् (१३) अननुभाषणम् (१४) अज्ञानम् (१५) अप्रतिभा (१६) विक्षेपः (१७) मतानुज्ञा (१८) पर्यनुयोज्योपेक्षणम् (१९) निरनुयोज्यानुयोगः (२०) अपसिद्धान्तः (२१) हेत्वाभासाः (२२) उदाहरणाऽभासाः (२३) तर्कपराहति (२४) श्चेति । एतानि च कथाबाह्यानि कथायामपस्मारोन्मादाऽदिदशाऽपन्नानि झटिति संवरणेन तिरोहितोद्भावनावसराणि पुरःस्फूर्तिकानधिकृतोद्भावितानि न निग्रहस्थानानि । तात्कालिकातत्त्वज्ञानलिङ्गत्वेऽपि प्रतियोग्यपेक्षया तदभावात् इति ।

(रा. टि.) उपपत्तिदोषाणामिति ॥ असिद्ध्यादीनामित्यर्थः । निगृह्यते पराजीयते एभिः इति व्युत्पत्तिमभिप्रेत्याह ॥ निग्रहा निग्रहस्थानानीति ॥

को निग्रहः? किं च तस्य स्थानम्? इत्यत आह ॥ कथायामिति ॥ अहङ्कारखण्डनं च स्वपक्षसाधनपरपक्षदूषणसहकृत्यभावः, तद्रहितेन परेण प्रतिवादिना परस्य वादिनः तत्करणं निग्रहः, तन्निमित्तं निग्रहस्थानमित्यर्थः । एतच्च विचारगोचरानेकविद्वत्कर्तृकवाक्यप्रबन्धरूपकथायामेवेति भावेनोक्तम् कथायामिति ।

---

[1] दोषित्वम्,  [2] युताश्च एव निग्रहाः,

(रा. टि.) तेन कथावाह्यानां प्रतिज्ञाहान्यादीनां निग्रहस्थानत्वं नेति सूचितम् । अखण्डिताहङ्कारेणेत्युक्त्या कथायामेव अपस्मारोन्मादद[1]शाऽऽपन्नानां झटिति संवरणेन तिरोहितोद्भावनावसराणां निग्रहस्थानत्वव्युदासः । परेणेत्युक्त्या पुरःस्फूर्तिकानधिकृतोद्भावितानां निग्रहस्थानत्वनिरास इत्यग्रे व्यक्तम् ।

परोक्तलक्षणान्तरं चाऽऽह ॥ **तत्त्वेति** ॥ लिङ्गं ज्ञापकमित्यर्थः ॥ **सेति** ॥ तत्वाप्रतिपत्तिरित्यर्थः । अकारोऽत्र तदभावतद्विरोधरूपार्थद्वयपर इति भावः । **तानि** चेति वक्ष्यमाणापेक्षया बहुवचनम् । हेत्वाभासाश्चेत्यन्तमेव गौतमसूत्रम् । तथाऽपि चशब्दसमुच्चेयावेताविति दर्शयितुम् उदाहरणाऽऽभासतर्कपराहत्योरप्युक्तिः । तथा च चतुर्विंशतिरित्युक्तम् भवति । सामान्यलक्षणगतकथायामित्यादिविशेषणकृत्यानि व्यनक्ति ॥ **एतानि चेति** ॥

यत्तु **विद्याहीनत्वलिङ्गेन** इत्येतद्व्याख्यानावसरे कथालक्षणटीकायां **एतेन कथाबाह्यानामनिग्रहस्थानत्वमिति परास्तम्** इति वचनम् , तत्तु प्रस्तुतजल्पवितण्डारूपकथाविशेषपरमित्याहुः ॥ **झटिति संवरणेनेति** ॥ शीघ्रं स्वाप्रतिभागूहनेन तिरोहितस्याप्रतीतस्य दूषणस्य उद्भावनावसरे प्राप्तानि अप्रतिभाऽऽदीनि निग्रहस्थानानीत्यर्थः ॥ **अनधिकृतेति** ॥ कथायामनधिकृतस्तटस्थः तेनोद्भावितानि दूषणानीत्यर्थः । प्रतियोग्यपेक्षया प्रतिवाद्यपेक्षया । तदभावात् अज्ञानाभावात् । तेनाज्ञानलिङ्गस्य अनुक्तेः तटस्थेनैवोक्तेरिति भावः ।

(श्री. टि.) उपपत्तिदोषाणां हेत्वाभासाऽऽदीनाम् । ननु प्रतिज्ञाहान्यादीनां निग्रहनिमित्तत्वेन निग्रहस्थाभावादाह ॥ **निग्रहस्थानानीति** ॥ निगृह्यते पराजीयते एभिरिति व्युत्पत्त्या निग्रहनिमित्तानीत्यर्थः ।

ननु प्रतिज्ञाहान्यादीनां पराजयनिमित्तत्वमेव प्रसिद्धम् , न तु निग्रहनिमित्तत्वम् इत्यतो निग्रहपराजयशब्दयोः पर्यायत्वमभिप्रेत्य

अखण्डिताहंकृतिना पराहङ्कारखण्डनम् ।
निग्रहस्तन्निमित्तस्य निग्रहस्थानतोच्यते ॥

इति कारिकाऽनुसारेण निग्रहस्थानसामान्यलक्षणमाह ॥ **कथायामित्यादिना** ॥ अहङ्कारखण्डनञ्च स्वपक्षसाधनपरपक्षदूषणसङ्कल्पभ्रंश इति द्रष्टव्यम् । परस्याहङ्कारखण्डननिमित्तत्वं युद्धाऽऽदिसाधारणम् इत्यतः कथायामित्युक्तम् ।

---

[1] दशविद्या.

(श्री. टि.) कथायां अहङ्कारखण्डनरूपपरपराजयनिमित्तं निग्रहस्थानमित्येव लक्षणम्। अखण्डिताहङ्कारेण परेणेति तु स्वरूपकथनमात्रपरमित्याहुः।

वस्तुतस्तु परस्परं यत्राहङ्कारखण्डनं द्वयोरपि जातं तत्र स्वस्योप्यहङ्कारखण्डनेन साम्यस्यैव प्राप्त्या परपराजयासम्भवात् अत उक्तम् अखण्डिताहङ्कारेण परेणेति।

नन्वहङ्कारखण्डनं न पराजयः पराजितस्याप्यहङ्कारानपयात् इत्यतः 'अप्रतिपत्तिर्विप्रतिपत्तिर्वा निग्रहस्थानम्' इति गौतमसूत्रानुसारेण लक्षणान्तरमाह ॥ तत्वाप्रतिपत्तिलिङ्गं वेति॥ तत्वस्याप्रतिपत्तिज्ञापकमित्यर्थः। अप्रतिपत्तिविप्रतिपत्तिशब्दयोरर्थमाह ॥ परोक्तेत्यादिना ॥

अत्र तत्वाप्रतिपत्तिलिङ्गं निग्रहस्थानमित्येव सामान्यलक्षणम्। तत्वाप्रतिपत्तिश्च द्विविधा। अज्ञानरूपा अप्रतिपत्तिः विपरीतज्ञानरूपा विप्रतिपत्तिश्चेत्यर्थो विवक्षितः। अन्यथाऽनुगतलक्षणाभावात्। सूत्रे 'अप्रतिपत्तिविप्रतिपत्तिपदाभ्याम् उभयानुगता तत्वाप्रतिपत्तिर्लक्ष्यतेऽनुगमार्थम्' इति परोक्तेः।

ननु सूत्रे लिङ्गपदाभावात् तत्वाप्रतिपत्तिलिङ्गमिति कथमुक्तम्? इति चेन्न। 'सा चाप्रतिपत्तिः परबुद्धेरप्रत्यक्षत्वात् न स्वतो निग्रहस्थानं भवतीति स्वज्ञापकं लक्षयति'[1]। परैः सूत्रव्याख्यातृभिरुक्तत्वात् तदनुसारेण लिङ्गमित्युक्तमिति ज्ञातव्यम्। निग्रहस्थानान्युद्दिशति ॥ तानि चेति ॥ निग्रहस्थानानीत्यर्थः।

अत्र कथायाम् अखण्डिताहङ्कारेण परेणेतिविशेषणद्वयस्य कृत्यमाह ॥ एतानि चेति ॥ प्रतिज्ञाहान्यादीनीत्यर्थः। कथाबाह्यानि न निग्रहस्थानानीत्यन्वयः। तथा च कथायामित्यनेन तद्व्यावृत्तिरिति भावः। अपस्मारो नाम भूताऽऽवेशेन स्मरणाभावः। तद्दशाऽऽपन्नानि उन्मादाऽऽदिदशाऽऽपन्नानि। झटिति शीघ्रं संवरणं समीचीनाङ्गकरणं, स्वदोषाऽऽच्छादनं वा तेन तिरोहितो नाशित उद्भावनावसरो येषां तानीत्यर्थः। अयं भावः

उक्तग्राह्याः केचिदन्येऽनुक्तग्राह्यास्तथा परे।
उच्यमानदशाग्राह्या इति कालत्रिधा मतः॥

इति परैर्निग्रहस्थानोद्भावनकालत्रिविध उक्तः। तत्रोच्यमानकालोद्भावनीयमपशब्दाऽऽदिकं प्रमादादुक्त्वा वादी झटिति संवरणं चेत् कुर्यात् तदा प्रतिवादिना तस्मिन् काले निग्रहस्थानं न वाच्यम् वादिकृतझटिति संवरणेन तदुद्भावनावसरस्य नाशितत्वात् दोषोक्तेः प्रागेव समाधानात् इति।

---

[1] लक्षयति' इति परैः

(श्री. टि.) ॥ पुरःस्फूर्तिकेति ॥ वादिप्रतिवादिनोर्दैवादज्ञाने सति तयोः पुरःस्फूर्तिकर्त्तारौ द्वौ कथायां क्रियेते। तथा च पुरःस्फूर्तिकत्वेनानधिकृता ये तैरुद्भावितानीत्यर्थः।

नन्वपस्माराऽदिदशाऽपन्नानामपि तात्कालिकतत्त्वाप्रतिपत्तिलिङ्गत्वेन निग्रहस्थानत्वात् कथं व्यवच्छेद्यत्वम्? इत्यत आह ॥ तात्कालिकेति ॥ अतत्त्वज्ञानं तत्त्वाप्रतिपत्तिः। अपस्माराऽदिदशाऽऽपन्नानामिति शेषः। प्रतियोगी प्रतिवादी। तदपेक्षया प्रतिवादिनैवेति यावत्। तत्त्वाप्रतिपत्तिलिङ्गत्वाभावादित्यर्थः। तथाचाखण्डिताहङ्कारेण परेणेति विशेषणेन तद्व्यावृत्तिरिति द्रष्टव्यम्। तथा हि, प्रथमे मूताऽवेशाऽपस्मारो[1]न्मादाऽदिनैव पराहङ्कारस्य खण्डितत्वात्, द्वितीये स्वदोषस्य स्वयमेव समाहितत्वात्, तृतीयेऽनधिकृतोद्भावितत्वेन अखण्डिताहङ्कारेण परेण प्रतिवादिना पराहङ्कारखण्डनाभावात्तेन विशेषणेन तद्व्यवच्छेद इति।

### प्रतिज्ञाहानिः

(टी.) तत्र येन यत् यथा साध्यत्वादिना निर्दिष्टं तस्य[2] तथा निर्वाहादर्शनेन पुनस्त्यागः। प्रतिज्ञाहानिः। द्विधा चैषा। साधनहानिर्दूषणहानिश्चेति। तत्राऽद्या द्वादशविधा। पक्षे तावत् साध्य साधनधर्मितद्विशेषणहानिभेदात् षट्प्रकारा। एवं दृष्टान्तेऽपीति। द्वितीयाऽपि द्विविधा। स्वरूपतो विशेषतश्चेति। सर्वा पुनर्द्विविधा। असद्विषया सद्विषया चेति। सर्वा चेयं[3] द्विधा प्रवर्तते कण्ठतोऽर्थतश्चेति। 'दुष्टं चेन्मा[4] भूत्' इति कण्ठतः। 'अन्यथाऽस्तु' इत्यर्थतः।

तत्रासद्विषया पक्षे साध्यहानिर्यथा 'पर्वतोऽग्निमान् प्रमेयत्वात्' इत्यत्रानैकान्तिकत्वोद्भावने माऽस्त्वग्निमानिति, निरग्निकोऽस्त्विति वा। साधनहानिर्यथा, तस्मिन्नेव हेतौ तथा दूषिते माऽस्त्वसौ हेतुरिति, धूमवत्त्वमस्त्विति वा। धर्मिहानिर्यथा, ह्रदपर्वतावग्निमन्तावित्यत्र भागे बाधाभिधाने माऽस्तु तर्हि ह्रदः पक्ष इति, पर्वत एवास्त्विति वा। साध्यविशेषणहानिर्यथा, पर्वत उष्णाग्निमान् इत्यत्र व्यर्थविशेषणतया प्रत्युक्ते माऽस्तु तर्हि तथेति, अग्निमानित्येवास्त्विति वा। साधन विशेषणहानिर्यथा, सुरभिधूमवत्त्वादित्यत्र तथैव दूषिते माऽस्तु तर्ह्येवमिति, धूमवत्त्वादित्येवास्त्विति वा। धर्मिविशेषणहानिर्यथा, अयं पर्वतोऽग्निमानित्यत्र तथैव दूषिते तर्हि तथा माऽस्त्विति, पर्वत इत्येवास्त्विति वा।

---

[1] शाक्यापस्मारो. [2] श्री. तेन तस्य. [3] रा. द्वेधा [4] श्री. माऽस्तु.

(टी.) दृष्टान्ते साध्यहानिर्यथा, पर्वतोऽग्निमान् प्रमेयत्वान्महानसवदित्यत्रानैकान्तिकत्वोद्भावने मास्तु तर्हि महानसोऽग्निमानिति, निरग्निकोऽस्त्विति वा । साधनहानिर्यथा, तत्रैव प्रयोगे तथैव प्रत्युक्ते माऽस्तु प्रमेयत्वान्महानसोऽग्निमानिति, धूमवत्त्वादिति[1] वा । धर्मिहानिर्यथा, ह्रदवदित्युक्ते साध्यवैकल्यात् प्रत्युक्ते मास्तु स दृष्टान्त इति, महानसोऽस्त्विति वा । साध्यविशेषणहानिर्यथा 'यो धूमवानसावुष्णाग्निमान् यथा महानसः', इत्यत्र विशेषणवैयर्थ्येऽभिहिते माऽस्तु तथेति, सोऽग्निमानित्येवास्त्विति वा । साधनविशेषणहानिर्यथा 'यः सुरभिधूमवानसावग्निमान् यथा महानसः' इत्यत्र तथैव प्रत्युक्ते मास्तु तर्हीत्थमिति, यो धूमवानित्येवास्त्विति वा । धर्मिविशेषणहानिर्यथा, 'यः सुरभिधूमवानसावग्निमान् तन्महानसवत्' इत्यत्र तथैव प्रत्युक्ते मास्त्वेवमिति, महानसवदित्येवास्त्विति वा ।

(रा. टि.) ॥ तत्रेति ॥ तेषु मध्य इत्यर्थः ॥ साध्यत्वाऽदिनेति ॥ साधनत्वाऽदिरादिपदार्थः । दृष्टान्तविषया पक्षे तावदिति तावच्छब्दः ॥ द्वितीयाऽपीति ॥ दूषणहानिरपीत्यर्थः ॥ असद्विषया सद्विषया चेति ॥ दुष्टप्रयोगविषया सदनुमानविषया चेत्यर्थः ॥ सर्वा चेयं द्वेधेति ॥ अवान्तरभेदभिन्ना साधनहानिर्दूषणहानिश्चेत्यर्थः । साध्यहानिर्यथेत्यत्र कण्ठतोऽर्थतश्चेत्यपि प्राह्यम् । तयोः क्रमेणोदाहरणम् माऽस्त्वित्यादि । साधनहानिरित्यादौ दृष्टान्त इतिपर्यन्तम् 'सद्विषया[2] पक्षे कण्ठतोऽर्थतश्च' इत्यनुषज्यते । दृष्टान्त इत्यादौ दूषणहानिः इतिपर्यन्तम् 'असद्विषया कण्ठतोऽर्थतश्च' इत्यनुषज्यते । साधनहानिरित्यत्र[3] सद्विषये दृष्टान्त इत्याद्यनुषज्यते ।

(श्री. टि.) एवं निग्रहस्थानसामान्यलक्षणमुक्त्वा प्रथमोद्दिष्टायाः प्रतिज्ञाहानेर्लक्षणम्

> कथायां यत्र पक्षाऽदि येन निर्दिष्टमादितः ।
> तस्य तेन पुनस्त्यागः प्रतिज्ञाहानिरुच्यते ॥

इतिकारिकाऽनुसारेणाऽऽह ॥ तत्रेति ॥ उद्दिष्टेषु प्रतिज्ञाहान्यादिषु मध्ये । येन वादिना प्रतिवादिना वा । कथायाम् इत्युपस्कर्तव्यम् । यत् साध्यसाधनधर्मिदृष्टान्ताऽदिकम् । यथा येन प्रकारेण । तस्यैव विवरणम् साध्यत्वाऽदिनेति । साध्यत्वेन साध्यवत्तया । आदिपदेन साधनतयेत्यादि ग्राह्यम् । तेन वादिना । तस्य साध्याऽदेः । तथा तेन प्रकारेण । अत्र कथायामित्युक्त्या कथाबाह्यसाध्याऽदित्यागे, येन तेनेति समानकर्तृकत्वोक्त्या भिन्नकर्तृकत्यागे, यस्य तस्येति समानप्रमेयत्वोक्त्या भिन्नप्रमेयत्यागे, यथा तथेति प्रकारैक्योक्त्या एकस्यैव साध्याऽदेः प्रमेयस्यैकेनैव पुंसा प्रकारान्तरेण त्यागे च अतिव्याप्तिः परिहृतेति ज्ञातव्यम् ।

---

[1] धूमवत्त्वादस्त्विति. [2] तत्रासद्विषया पक्षे. [3] हानिरित्यादौ दूषणहानिरितिपर्यन्तम् दृष्टान्त इत्यनुज्यते.

(श्री. टि.) ॥ साधनहानिरिति ॥ स्वपक्षसाधनाय यदाऽनुमानं[1] प्रयुज्यते तत्र प्राप्ता हानिरित्यर्थः ॥ दूषणेति ॥ अनुमाने प्राप्तस्य दूषणस्य हानिरित्यर्थः । पक्षे तावत् षट्प्रकारेत्यन्वयः । धर्मिहानिः पक्षस्यैव हानिरित्यर्थः ॥ तद्विशेषणेति ॥ साध्यविशेषणसाधनविशेषणधर्मिविशेषणेत्यर्थः ॥ दृष्टान्तेऽपीति ॥ साध्यसाधनदृष्टान्तधर्मितद्विशेषणहानिभेदात् षट्प्रकारेत्यर्थः । द्वितीयाऽपि दूषणहानिरपि ॥ सर्वेति ॥ साधनहानिर्दूषणहानिश्चेतिभेदभिन्ना प्रतिज्ञाहानिरित्यर्थः ॥ असद्विषयेति ॥ असदनुमानविषयिणीत्यर्थः । सद्विषया सदनुमानविषयिणी ॥ सर्वा चेयमिति ॥ सप्तभेदसाधनहानिदूषणहानिभेदभिन्ना प्रतिज्ञाहानिरित्यर्थः । कण्ठतोऽर्थतश्च हानिप्रकारं दर्शयति ॥ दुष्टं चेदिति ॥ 'माऽस्तु' इति कण्ठतो हानिप्रकारः ॥ अर्थत इति ॥ 'अन्यथाऽस्तु' इत्युक्ते पूर्वस्य हानिरर्थाल्लब्धेत्यर्थः । 'निरग्निकोऽस्तु' इति वाऽर्थतो[2] हानिप्रकारः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ तस्मिन्नेव हेतौ तथेति ॥ प्रमेयत्वहेतावनैकान्तिकत्वेन दूषिते सतीत्यर्थः ॥ तथैवेति ॥ व्यर्थविशेषणत्वेनेत्यर्थः । एवमुत्तरत्रापि ॥ माऽस्तु तर्हीत्थमिति ॥ सुरभिधूमवानिति माऽस्तु इत्यर्थः ।

(टी.) दूषणहानिः स्वरूपतो यथा 'पर्वतोऽग्निमान् प्रमेयत्वात्' इत्यत्रासिद्धेरुद्भावने निरनुयोज्यानुयोगेन प्रत्युक्ते 'तर्हि मा भूत्तत्' इति 'अनैकान्तिकता भवतु' इति वा । विशेषतो यथा 'ह्रदपर्वतावग्निमन्तौ धूमवत्त्वात्' इत्यत्र स्वरूपासिद्ध्युद्भावने पूर्ववत् प्रत्युक्ते 'तर्हि मास्तु' इति 'भागासिद्धो भवतु' इति वा ।

(रा. टि.) एवमसत्प्रयोगविषये पक्षदृष्टान्तभेदेन चतुर्विंशतिभेदसाधनहानिमुदाहरणनिष्ठतया प्रदर्श्य प्रागुक्तदूषणहानिप्रभेदमुदाहरणनिष्ठतया असद्विषयं प्रदर्शयति ॥ दूषणहानिरिति ॥ कण्ठतोऽर्थतश्चेत्यपि ग्राह्यम् ॥ निरनुयोज्यानुयोगेनेति ॥ अविद्यमानदोषोत्कीर्तनं निरनुयोज्यानुयोग इत्यग्रे व्यक्तम् । मा भूदिति कण्ठतः, अनैकान्तिकता भवत्वित्यर्थतो दूषणहानिः ॥ विशेषत इति ॥ असद्विषये[3] कण्ठतोऽर्थतश्च विशेषतो दूषणहानिर्यथेत्यर्थः । पूर्ववत् प्रत्युक्ते निरनुयोज्यानुयोगेन प्रत्युक्त इत्यर्थः ।

(श्री. टि.) ॥ दूषणहानिरिति ॥ असदनुमानविषयिणी दूषणहानिरित्यर्थः ॥ निरनुयोज्यानुयोगेनेति ॥ अतन्निग्रहसम्प्राप्तौ तन्निग्रहोद्भावनम् निरनुयोज्यानुयोग इत्यर्थः । अत्रासिद्धिरूपदूषणस्य स्वरूपस एव त्यागादियं स्वरूपतो दूषणहानिरिति भावः । तत् असिद्धत्वम् ॥ पूर्ववदिति ॥ निरनुयोज्यानुयोगेन प्रत्युक्त इत्यर्थः । अत्र च भागासिद्ध्यङ्गीकारेण स्वरूपासिद्धिरूपदूषणविशेषस्यैव त्यागात् विशेषतो दूषणहानिरियमिति भावः ।

---

[1] यदनुमानं. [2] चार्थतो. [3] असद्विषया.

(टी.) सद्विषया तु 'पर्वतोऽग्निमान् धूमवत्वात्' इत्यत्र अनैकान्तिकत्वोद्भावने 'तर्हि माऽस्तु पर्वतोऽग्निमान्' इत्याद्युदाहर्तव्या । सा च पर्यनुयोज्योपेक्षणसहचारिणीऽति ।

ननु यद्दोषभयादुक्तं त्यजति स एव निग्रहस्थानमस्तु किं हान्येति चेन्न । सद्धानौ तस्या एव निग्रहहेतुत्वात् । असद्धानावपि तत एव परिहृतत्वात् । हानिमनुद्भाव्य प्राचीनदोषस्थापनानुपपत्तेश्च । न चास्यास्तादर्थ्यं, स्वयमपि विप्रतिपत्तिसूचकत्वात् । न चैवं स्ववचनविरोध एव । हानिमनुद्भाव्य विरोधोद्भावनानुपपत्तेरिति ॥ १ ॥

(रा. टि.) सद्विषया त्विति ॥ पक्षे साध्यसाधनधर्मितद्विशेषणहानिभेदेन दृष्टान्ते च साध्यसाधनधर्मितद्विशेषणभेदेन[1] कण्ठतोऽर्थतश्चतुर्विंशतिप्रभेदभिन्ना प्रतिज्ञाहानिः, चतुर्धा भिन्ना दूषणहानिश्च इत्यादिरूपेणोदाहर्तव्येत्यर्थः । प्रागुक्तोदाहरणान्येव प्रमेयत्वहेतुस्थाने धूमवत्वप्रक्षेपेण उदाहरणानीत्यर्थः । ह्रदपर्वतावित्यत्र पर्वतमहानसाविति ध्येयम् । सदनुमानविषया प्रतिज्ञाहानिः निग्रहस्थानान्तरसङ्कीर्णेत्याह ॥ सा चेति ॥ नास्त्यनैकान्तिकमस्येति वादिना पर्यनुयोगस्य[2] परिहारार्हदोषस्योपेक्षणरूपवक्ष्यमाणनिग्रहस्थानसहचारिणीत्यर्थः ।

प्रतिज्ञाहानेः पृथग्दोषत्वं माऽस्त्विति भावेन शङ्कते ॥ यद्दोषेति ॥ तद्धेतोरेवास्तु हेतुत्वं, किं तेनेति न्यायादिति भावः ॥ सद्धानाविति ॥ धूमवत्वाऽदिसदनुमानविषयप्रतिज्ञाहानौ धूमवत्वहेतोः परोक्तानैकान्तिकत्वदोषभयात् प्रतिज्ञातं वह्निमत्त्वं त्यजति । न च तत्रानैकान्त्यमस्ति येन तस्यैव दोषत्वं तत्र कल्प्येत । अतः प्रतिज्ञाहानेरेव तत्र दोषत्वात् सैव तत्र पराजयहेतुरिति भावः ।

॥ असद्धानावपीति ॥ प्रमेयत्वाऽद्यसदनुमानविषयप्रतिज्ञाहानावपि तत एव सद्धानौ पृथग्दोषत्वेन क्लृप्तत्वादेव 'माऽस्तु पृथग्दोषत्वम्' इत्यस्य परिहृतत्वादित्यर्थः ।

असद्धानावनैकान्त्याऽदिदोषसत्वेऽपि तस्य दार्ढ्यहेतुत्वेन उपजीव्यत्वात् सद्धानिरेव[3] तत्रापि पराजयशब्दितनिग्रहहेतुर्नानैकान्त्याऽदीति भावेनाऽह ॥ हानिमनुद्भाव्येति ॥

तर्हि प्राचीनदोषस्थापनार्थत्वेन उपक्षीणत्वादुपाधेरिव न पृथग्दोषत्वमित्याशङ्क्य निराह ॥ न चास्या इति ॥ हानिमनुद्भाव्येति ॥ तथा चोपजीव्यत्वात् हानिरेव दोष इति भावः ॥ १ ॥

---

[1] तद्विशेषणहानिभेदेन.   [2] पर्यनुयोज्यस्य.   [3] साऽसद्धानिरेव.

(श्री. टि.) ॥ सद्विषया त्विति ॥ सदनुमानविषयिणीत्यर्थः । इयमपि पक्षे दृष्टान्ते च साध्यहान्यादिभेदेन द्वादशविधेति द्रष्टव्यम् । अथ पक्षे सद्विषयिणीं साध्यहानिमुदाहरति ॥ पर्वतोऽग्निमानित्यादि ॥ 'माऽस्तु' इति कण्ठतो हानिः, 'निरग्निक एवास्तु' इत्यर्थतो हानिरिति द्रष्टव्यम् ॥ इत्यादीति ॥ सद्विषये पक्षे साधनहानिर्यथा 'पर्वतोऽग्निमान् धूमवत्वात्' इत्यत्र अनैकान्तिकत्वोद्भावने 'माऽस्तु तर्हि धूमवत्वं हेतुः' 'अन्य एवास्तु' इति वा, धर्मिहानिर्यथा धूमानुमान एव बाधोद्भावने 'तर्हि माऽस्तु पर्वतः पक्षः' इति 'चत्वर एवास्तु' इत्यादि द्रष्टव्यमित्यर्थः ।

॥ सा चेति ॥ सदनुमानविषया प्रतिज्ञाहानिरित्यर्थः । अयं भावः, वादिना 'पर्वतोऽग्निमान् धूमवत्वात्' इति प्रयुक्ते, प्रतिवादिना अनैकान्तिकत्वोद्भावने, वादिना अतन्निग्रहसम्प्राप्तौ तन्निग्रहोद्भावनरूपनिरनुयोज्यानुयोगाऽऽख्यं निग्रहस्थानमुद्भावनीयम् । तदनुद्भाव्य 'माऽस्तु तर्हि पर्वतोऽग्निमान्' इत्यादिप्रतिज्ञाहानिकरणे पर्यनुयोज्यस्य अवश्योद्भाव्यतया प्राप्तनिरनुयोज्यानुयोगरूपनिग्रहस्थानस्य उपेक्षणात् अनुद्भावनात् पर्यनुयोज्योपेक्षणं नाम निग्रहस्थानं वादिन आयातीत्येवं सा सद्विषयिणी प्रतिज्ञाहानिः पर्यनुयोज्योपेक्षणसहचारिणीऽति । 'पर्वतोऽग्निमान् प्रमेयत्वात्' इत्याद्यसद्धानौ तु न पर्यनुयोज्योपेक्षणसहचारोऽस्ति । तत्र निरनुयोज्यानुयोगस्य पर्यनुयोज्यत्वस्याभावेन तदुपेक्षणासम्भवात् इति द्रष्टव्यम् ।

॥ यद्दोषभयादिति ॥ अनैकान्त्यरूपदोषभयात् प्रतिज्ञातं त्यजति । अत उपजीव्यत्वात् अनैकान्त्यरूपदोष एव निग्रहस्थानमस्तु । किम् प्रतिज्ञाहान्या ? इत्यर्थः । अत्र प्रष्टव्यम्, किम् सदनुमानविषयकप्रतिज्ञाहानौ तस्या दूषणत्वं नास्तीत्युच्यते ? उत असद्धानौ ? नाद्य इत्याह ॥ सद्धानाविति ॥ तस्या एवेति ॥ प्रतिज्ञाहानेरेवेत्यर्थः । प्रथमोद्भावितानैकान्त्यरूपस्य दोषस्य वस्तुगत्या अभावादिति भावः । द्वितीये त्वाह ॥ असद्धानाविति ॥ तत एवेति ॥ हानेरेवेत्यर्थः । परिहृतत्वात् पूर्वानुमानदोषस्येति शेषः । अयं भावः, 'पर्वतोऽग्निमान् प्रमेयत्वात्' इत्यत्रानैकान्त्योद्भावने 'माऽस्तु तर्हि पर्वतोऽग्निमान्' इति प्रतिज्ञाहानिकरणेनैव अनैकान्त्याऽऽख्यदोषस्य परिहृतत्वेन तस्य दूषणत्वायोगात् प्रतिज्ञाहानेरेव दोषत्वमिति ।

नन्वसद्धेतावनैकान्त्यस्यैव दोषत्वमस्तु । न प्रतिज्ञाहानेः । न च वाच्यम् तत एव तस्य परिहृतत्वात् कथं दोषत्वम् ? इति । 'माऽस्तु तर्हि पर्वतोऽग्निमान्' इत्युक्ते प्रतिज्ञाहानिः । अतस्तद्रीत्या 'पर्वतोऽग्निमानेव' इति वक्तव्यम् । तथा च प्रमेयत्वहेतोरनैकान्त्यतादवस्थ्यम् । प्रतिज्ञाहान्युद्भावनेन प्राचीनस्यानैकान्त्यरूपदोषस्य स्थापनकरणात् । स्थापितस्य तस्यानैकान्त्याख्यदोषस्यैव निग्रहहेतुत्वोपपत्तौ किम् प्रतिज्ञाहान्या ? इति शङ्कायामाह ॥ हानिमनुद्भाव्येति ॥ प्रतिज्ञाहान्युद्भावनमकृत्वेत्यर्थः । तथा [illegible] तस्या एव

(श्री. टि.) दोषत्वमस्त्विति भावः । ननु यदुक्तम् , असद्भावनौ तत एव परिहृतत्वादिति ॥ तथात्वे अस्याः प्रतिज्ञाहानेः तादर्थ्यम् अनैकान्तिकनिरसनहेतुत्वमेव प्राप्तम् । न तु स्वातन्त्र्येण निग्रहस्थानत्वम् इत्याशङ्क्य निराकरोति ॥ न चेति ॥

तादर्थ्यम् उक्तरीत्या प्राचीनदोषस्थापनार्थत्वमेव प्राप्तम् । न तु साक्षान्निग्रहस्थानत्वमित्यर्थ इत्यप्याहुः ।

कुतो न चेत्यत आह ॥ स्वयमपीति ॥ साक्षादित्यर्थः ॥ विप्रतिपत्तीति ॥ परोक्तस्ववक्तव्ययोर्विपरीत-ज्ञानं विप्रतिपत्तिः । तत्सूचकत्वादित्यर्थः । यदा सद्भावनौ 'पर्वतोऽग्निमान् धूमवत्वात्' इत्यत्र अनैकान्तिकत्वो-द्भावने 'अत्रानैकान्त्यमेव नास्ति' इति परिहारमनभिधाय तदङ्गीकृत्य 'माऽस्तु तर्हि पर्वतोऽग्निमान्' इति वदति, तदा तस्याः प्रतिज्ञाहानेः साक्षात् परोक्तस्ववक्तव्ययोर्विपरीतज्ञानरूपविप्रतिपत्तिसूचकत्वेन निग्रहस्थान-त्वमस्त्येव । तत्वाप्रतिपत्तिविप्रतिपत्तिलिङ्गत्वस्यैव निग्रहस्थानत्वादिति भावः ।

नन्वथापि प्रतिज्ञाहानेः स्वातन्त्र्येण न दूषणत्वम् , स्वयमादौ 'पर्वतोऽग्निमान्' इति प्रतिज्ञामभिधाय पुनस्तत्त्यागे स्ववचनविरोधस्यैव प्राप्तेः तत्रैवास्या अन्तर्भावादित्याशङ्क्य निराकरोति ॥ न चैवमिति ॥

॥ हानिमनुद्भाव्येति ॥ 'मास्तु पर्वतोऽग्निमान्' इति प्रतिज्ञायास्त्यक्तत्वादेव हि स्ववचनविरोधः प्राप्तो नान्यथा । अत उपजीव्यत्वात् सैव दोष इत्यर्थः ॥ १ ॥

### प्रतिज्ञाऽन्तरम्

(टी.) दोषपरिजिहीर्षया निर्दिष्टसाध्यभागेऽधिकप्रक्षेपः प्रतिज्ञाऽन्तरम् । प्रतिज्ञा उदाहरणे प्रयो-ज्यभागः निगमनं चेति साध्यभागः । द्विविधं चेदं दोषपरिहारहेतुः तदहेतुश्चेति । दोषसदसद्भावा-भ्यां पुनर्द्विविधम् । तत् प्रतिज्ञायां चतुर्विधम् । पक्षतद्विशेषणसाध्यतद्विशेषणप्रक्षेपभेदात् । पक्ष-प्रक्षेपोऽपि द्वेधा । स्वरूपतः पक्षान्तरतश्चेति । एवं साध्यप्रक्षेपोऽपि ।

तत्र सद्दोषपरिहारार्थमाद्यं यथा 'अनित्यः कृतकत्वात्' इत्यत्र न्यूनतया प्रत्युक्ते 'शब्दोऽ-नित्य' इति । द्वितीयं यथा 'शब्दोऽनित्यः ऐन्द्रियकत्वात्' इत्यत्र सामान्येनानैकान्तिकत्वेऽभिहिते 'तदपि पक्ष' इति । तृतीयं यथा, तत्रैव ध्वनिभिः सिद्धसाधनत्वोद्भावने 'वर्णात्मकः शब्दः पक्ष' इति । चतुर्थं यथा 'शब्दः कृतकत्वात्' इत्यत्र न्यूनतया प्रत्युक्ते 'शब्दोऽनित्य' इति । पंचमं यथा 'पर्वतोऽग्निमान् सुरभिमलिनधूमवत्वात्' इत्यत्र विशेषणासामर्थ्येऽभिहिते 'साग्निकृष्णागरु-मान्' इति । षष्ठं यथा 'क्षित्यादिकं कारणपूर्वकं कार्यत्वात्' इत्यत्र सिद्धसाधनत्वोक्तौ उपादानाऽ-दिबुद्धिमत्कारणपूर्वकमिति ।

(रा. टि.) हेत्वन्तरेऽनतिव्याप्तये निर्दिष्टसाध्यभाग इत्युक्तम् ॥ प्रतिज्ञेति ॥ साध्यभाग इत्यन्वेति ॥ इदमिति ॥ प्रतिज्ञान्तरमित्यर्थः ॥ एवं साध्यप्रक्षेपोऽपीति ॥ तथा चायमर्थः । सद्दोषपरिहारहेतुः पक्षे धर्मिस्वरूपप्रक्षेप आद्यः, तादृशो धर्म्यन्तरप्रक्षेपो द्वितीयः, तादृशधर्मिविशेषणप्रक्षेपस्तृतीयः, तादृशः साध्यस्वरूपप्रक्षेपश्चतुर्थः, तादृशः साध्यान्तरप्रक्षेपः पञ्चमः, तादृशः साध्यविशेषणप्रक्षेपः षष्ठ इति । एवमसद्दोषपरिहारहेतुरपि प्रतिज्ञायां धर्मिस्वरूपधर्म्यन्तरधर्मिविशेषणसाध्यस्वरूपसाध्यान्तरसाध्यविशेषणप्रक्षेप इति षाड्विध्यम्, एवं सद्दोषपरिहारहेतुभूत[1]धर्मिस्वरूपाऽदिप्रक्षेपभेदेन षाड्विध्यम्, असद्दोषपरिहारहेतुभूत[2]धर्मिस्वरूपाऽदिप्रक्षेपभेदेन षाड्विध्यम् इति प्रतिज्ञायां चतुर्विंशतिप्रभेदभिन्नं तावत्प्रतिज्ञाऽन्तरमिति ।

तत्राऽऽद्यषट्कं क्रमेणोदाहरति ॥ तत्र सद्दोषेत्यादिना ॥

(श्री. टि.) अविशेषितपूर्वोक्तसाध्यांशे दूषिते पुनः ।
तद्विशेषणनिक्षेपः प्रतिज्ञाऽन्तरमिष्यते ॥

इति कारिकाऽनुसारेण प्रतिज्ञाऽन्तरं लक्षयति ॥ दोषेति ॥ निर्दिष्टसाध्यभाग इत्यस्य पूर्वोत्तराभ्यां सम्बन्धः । हेत्वन्तरव्यावृत्तये साध्यभाग इत्युक्तम् । कः साध्यभागः? इत्यत आह ॥ प्रतिज्ञेति ॥ उदाहरणे प्रयोज्यभाग इति ॥ 'यो धूमवान् असावग्निमान् यथा महानस' इत्युदाहरणे 'अग्निमान्' इति प्रयोज्यभागो विधेयभाग इत्यर्थः ॥ दोषसदसद्भावाभ्यामिति ॥ तथा च सति, सद्दोषपरिहारहेतुः सद्दोषपरिहाराहेतुरसद्दोषपरिहारहेतुरसद्दोषपरिहाराहेतुश्चेत्येवं चतुर्विधमित्यर्थः । दोषपरिहारहेतुत्वं साधारणम् । स च दोषः क्वचित् सन् क्वचित् असन् भवति । तथा दोषपरिहाराहेतुत्वं समम् । सोऽपि दोषः क्वचित् सन् क्वचित् असन् इति भावः ॥ एवमिति ॥ पक्षप्रक्षेपवत् साध्यप्रक्षेपोऽपि सध्यस्वरूपतः साध्यान्तरत इति द्विविध इत्यर्थः ॥ तत्र सद्दोषेति ॥ सद्दोषपरिहारहेतुः स्वरूपतः पक्षप्रक्षेपरूपं प्रतिज्ञाऽन्तरं यथेत्यर्थः ॥ द्वितीयमिति ॥ सद्दोषपरिहारहेतुः पक्षान्तरतः पक्षप्रक्षेप इत्यर्थः ॥ तृतीयमिति ॥ सद्दोषपरिहारहेतुः पक्षविशेषणप्रक्षेप इत्यर्थः । पक्षप्रक्षेपस्य द्विविधत्वात् अस्य तृतीयत्वं मन्तव्यम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥ चतुर्थमिति ॥ सद्दोषपरिहारहेतुः स्वरूपतः साध्यप्रक्षेप इत्यर्थः ॥ पञ्चममिति ॥ सद्दोषपरिहारहेतुः साध्यान्तरतः प्रक्षेप इत्यर्थः ॥ विशेषणासामर्थ्य इति ॥ व्यर्थविशेषणत्व इत्यर्थः । वह्निमात्रसाधने धूमस्यैव समर्थत्वात् इति भावः ॥ कृष्णेति ॥ अगरोः कृष्णत्वात् सुरभित्वाच्च तत्सम्बद्धाग्निजन्यधूमस्यापि सुरभित्वं मलिनत्वञ्चेति ज्ञातव्यम् ॥ षष्ठमिति ॥ सद्दोषपरिहारहेतुः साध्यविशेषणप्रक्षेप इत्यर्थः ।

---

[1] परिहाराहेतु. [2] परिहाराहेतु.

(टी.) उदाहरणे प्रयोज्यभागे प्रयोज्यस्वरूपतदन्तरतद्विशेषणधर्मितद्विशेषणप्रक्षेपभेदेन पंचविधम् । तत्राद्यं यथा 'यो धूमवान् यथा महानसः' इत्यत्र न्यूनतया प्रत्युक्ते 'सोऽग्निमान्' इति । द्वितीयं यथा 'यत् सुरभिमलिनधूमवत् तत् अग्निमत् यथा सम्प्रतिपन्नम्' इत्युक्ते प्रयोज्यभागे न्यूनतया प्रत्युक्ते 'तत् साग्निकृष्णागरुमत्' इति । तृतीयं यथा 'यत् कार्यं तत् कारणपूर्वकं यथा घटः' इत्यत्र न्यूनतया प्रत्युक्ते 'तत् उपादानाऽदिबुद्धिमत्कारणपूर्वकम्' इति । चतुर्थं यथा 'यो धूमवानसावग्निमान्' इत्येवोक्ते प्रागिव प्रत्युक्ते 'यथा महानसः' इति । पंचमं यथा 'शब्दो नित्यः नित्यगुणत्वात् परमाणुरूपवत्' इत्यत्र साध्यवैकल्येऽभिहिते 'अपार्थिवपरमाणुरूपं दृष्टान्तः' इति ।

(रा. टि.) ॥ उदाहरण इति ॥ प्रयोज्यभागस्वरूपाऽदिप्रक्षेपभेदेन[1] पञ्चविधमपि सद्दोषपरिहारहेतुतदहेतु असद्दोषपरिहारहेतुतदहेतुभेदेन चतुर्धा भिन्नं सत् विंशतिप्रभेदं भवति । तत्राऽद्यपञ्चकं धूमानुमानप्रयोगोदाहरणे क्रमेण दर्शयति ॥ तत्राऽद्यमिति ॥ 'पर्वतः साग्निकृष्णागरुमान् सुरभिमलिनधूमवत्त्वात्' इति प्रयोगाभिप्रायेणाऽह ॥ यत् सुरभीति ॥ 'क्षित्यादिकं तदुपादानाऽदिबुद्धिमत्कारणपूर्वकं कार्यत्वात्' इति प्रयोगाशयेनाऽह ॥ यत् कार्यमिति ॥ प्रागिवेति ॥ न्यूनतयेत्यर्थः ।

(श्री. टि.) ॥ उदाहरण इति ॥ प्रयोज्यस्य स्वरूपत एव प्रक्षेप आद्यः, प्रयोज्यान्तरप्रक्षेपो द्वितीयः, प्रयोज्यविशेषणप्रक्षेपस्तृतीयः, दृष्टान्तरूपधर्मिप्रक्षेपश्चतुर्थः, धर्मिविशेषणप्रक्षेपः पञ्चम इत्येवमुदाहरणे प्रतिज्ञाऽन्तरं पञ्चविधमित्यर्थः ॥ नित्यगुणत्वादिति ॥ नित्यस्य गुणत्वात् इत्यर्थः ॥ साध्यवैकल्येति ॥ पार्थिवपरमाणुरूपे नित्यत्वरूपसाध्याभावादित्यर्थः ।

(टी.) निगमनेऽपि प्रतिज्ञायामिवोदाहर्तव्यम् । हेतुप्रक्षेपोऽत्राधिकः । स यथा 'पर्वतोऽग्निमान्' इत्येवोक्ते न्यूनतया प्रत्युक्ते, तस्मात् धूमवत्त्वात्पर्वतोऽग्निमान्' इति । असद्दोषपरिहाराहेतुर्यथा 'पर्वतोऽग्निमान्' इत्यत्र बाधोक्तावुष्णाग्निमानित्यादि । सद्दोषपरिहाराहेतुर्यथा 'शब्दोऽनित्य ऐन्द्रियकत्वात्' इत्यत्र सामान्येनानैकान्तिकत्वोद्भावने 'सर्वगतः शब्दः पक्षः' इत्यादि । असद्दोषपरिहारहेतुर्यथा 'शब्दोऽनित्यः कृतकत्वात्' इत्यत्र सामान्येनानैकान्तिकत्वोद्भावने 'तदपि पक्षः' इत्यादि । न च दोषापरिहारे अर्थान्तरता । प्रकृतोपयोगसद्भावाभिमानेन प्रतिज्ञान्तरत्वस्यैव सिद्धत्वात् । न चेयं हानिरेव । पूर्वाङ्गीकृतस्यात्यागात् । विशेषणाभावस्य प्रागनङ्गीकृतत्वादिति ॥ २ ॥

---

[1] प्रयोज्यभागे प्रयोज्यस्वरूपाऽदि.

(रा. टि.) ॥ प्रतिज्ञायामिवेति ॥ धर्मिधर्म्यन्तरतद्विशेषणसाध्यसाध्यान्तरतद्विशेषणप्रक्षेपभेदेन षड्विधमपि सद्दोषपरिहारहेतुतदहेत्वसद्दोषपरिहारहेतुतदहेतुभेदेन चतुर्विधं सत् चतुर्विंशतिधा भिन्नं भवति प्रतिज्ञाऽन्तरम् । तत्राऽद्यषट्कं प्रतिज्ञायामिव 'तस्मात् अनित्यः' इत्यत्र न्यूनत्वोक्तौ शब्दपदप्रक्षेपः । 'तस्मात् ऐन्द्रियकत्वात् अनित्यः शब्दः' इत्यत्र जातावनैकान्त्योक्तौ 'तस्मात् शब्दः सामान्यं च अनित्यं' इति, 'तस्मात् शब्दोऽनित्यः' इत्यत्र ध्वनिभिः सिद्धत्वोक्तौ[1] 'वर्णात्मकोऽनित्यः' इत्यादिरूपेणोदाहर्तव्यमित्यर्थः ॥ असद्दोषेति ॥ प्रतिज्ञायामिति योज्यम् । धर्मिधर्म्यन्तरतद्विशेषणसाध्यस्वरूपसाध्यान्तरप्रक्षेपोदाहरणानामुपलक्षणत्वेन साध्यविशेषणप्रक्षेपस्य उदाहरणमाह ॥ उष्णाग्निमानित्यादीति ॥ 'अग्निमान् धूमवत्वात्' इत्यत्रानैकान्त्योक्तौ 'पर्वतोऽग्निमान्' इति 'ह्रदोऽग्निमान्' 'काञ्चनोऽद्रिरग्निमान्' इत्यादीन्युदाहरणानि ज्ञेयानीति भावः । सद्दोषेत्यत्रापि प्रतिज्ञायामिति योज्यम् ॥ इत्यादीति ॥ धर्मिस्वरूपतद्धर्म्यन्तरप्रक्षेपोदाहरणाऽदीत्यादिपदार्थः[2] । पूर्वत्र अत्र उत्तरत्र च निगमनेऽप्येवमुदाहर्तव्यमिति भावः ॥ तदपि पक्ष इत्यादीति ॥ एतच्च धर्म्यन्तरप्रक्षेपस्योदाहरणम् । अन्यान्यप्यूह्यानीति भावः ।

अस्य पृथङ्निग्रहस्थानत्वमाक्षिप्य समाधत्ते ॥ न च दोषेति ॥ प्रकृतानुपयुक्तान्वितोक्तिरूपार्थान्तरतेत्यर्थः । विशेषणस्य[3] प्रसक्तत्वात् इत्यत आह ॥ विशेषणेति ॥ अङ्गीकृतत्यागे हि प्रतिज्ञाहानिरिति भावः ॥ २ ॥

(श्री. टि.) ॥ निगमनेऽपि प्रतिज्ञायामिवेति ॥ पक्षतद्विशेषणसाध्यतद्विशेषणप्रक्षेपभेदेन प्रतिज्ञायामिव चातुर्विध्यमुदाहर्तव्यमित्यर्थः । निगमने पक्षप्रक्षेपो यथा 'तस्मात् अग्निमानेव' इत्युक्ते न्यूनतया प्रत्युक्ते 'पर्वतः' इति । निगमने तद्विशेषणप्रक्षेपो यथा 'अयं पर्वतः' इति प्रतिज्ञाय 'तस्मात् पर्वतोऽग्निमान्' इत्युक्ते न्यूनतया प्रत्युक्ते 'अयं पर्वतः' इति । निगमने साध्यप्रक्षेपो यथा 'तस्मात् पर्वतः' इत्युक्ते तथैव दूषिते 'अग्निमान्' इति । निगमने साध्यविशेषणप्रक्षेपो यथा 'पर्वतः साग्निकृष्णागरुमान्' इति प्रतिज्ञाय 'तस्मात् पर्वतोऽग्निमान्' इति निगमने कृते न्यूनतया तस्मिन् प्रत्युक्ते 'साग्निकृष्णागरुमान्' इत्याद्युदाहर्तव्यमित्यर्थः ।

अत्र निगमने ॥ उष्णाग्निमानिति ॥ पर्वतोऽग्निमान्' इत्यत्र बाधोऽसन्नेव । उष्णेति विशेषणे दत्ते तत्परिहारोऽपि न जात इति भावः ॥ सर्वगत इति ॥ वर्णाऽत्मक इत्यर्थः । अत्र दोषः सन्नेव । पक्षे विशेषणदानं तु न परिहारहेतुरित्यर्थः ॥ तदपीति ॥ अत्र यद्यपि दोषोऽसन्नेव तथाऽपि तस्य पक्षत्वोक्त्या 'न हि पक्षे पक्षतुल्ये वा व्यभिचारः' इति न्यायेन दोषपरिहारस्तु भवत्येवेत्यर्थः ।

---

[1] सिद्धसाधनत्वोक्तौ. [2] धर्म्यन्तर [3] विशेषणाभावस्य अप्रकृतत्वात् इत्यत आह.

(श्री. टि.) ननु सद्दोषपरिहाराहेतुरसद्दोषपरिहाराहेतुश्च न पृथङ्निग्रहस्थानम्, पूर्वमङ्कुतदोषस्यापरिहृतत्वेन प्रकृतासङ्गततया अर्थान्तर एवान्तर्भावात् इत्याशङ्क्य निराकरोति।। न चेति।। वस्तुगत्या प्रकृतोपयोगाभावात् अभिमानेनेत्युक्तम्। ननु पूर्वं विशेषणाविशिष्टस्यैव साध्यभागस्य प्रतिज्ञातत्वात् अनन्तरं प्राप्तदोषपरिजिहीर्षया साध्यभागस्य प्रतिज्ञातत्वात् अनन्तरं प्राप्तदोषपरिजिहीर्षया साध्यभागेऽधिकप्रक्षेपेण पूर्वप्रतिज्ञायास्त्यक्तत्वात् इयं प्रतिज्ञाऽन्तरोक्तिः प्रतिज्ञाहानिरेव, न तु स्वतन्त्रं निग्रहस्थानम् इत्याशङ्क्य निराकरोति ।। न चेयमिति ।। कुतो न चेत्यत आह ।। पूर्वेति ।। पूर्वप्रतिज्ञायामेवाधिकं प्रविष्टम् न तु तद्धानिरित्यर्थः। ननु पूर्वं विशेषणाभावोऽङ्गीकृतोऽभूत् इदानीं पुनर्विशेषणोक्तौ प्रतिज्ञाहानिरेवेत्याशङ्कायामाह ।। विशेषणाभावस्येति ।। दूषणे दत्ते विशेषणं दास्यामीत्यभिप्रायेण पूर्वं विशेषणं नोक्तमित्येव। न तु तदभावोऽङ्गीकृतः। अतो नेयं प्रतिज्ञाहानिः। अपि तु स्वतन्त्रमेव निग्रहस्थानमिति भावः ।। २ ।।

### प्रतिज्ञाविरोधः

(टी.) एकवाक्ये अवान्तरवाक्यानां पदानां च मिथो व्याघातः प्रतिज्ञाविरोधः। स च बहुप्रकारः। तत्र प्रतिज्ञायां धर्मिपदयोर्यथा 'श्रोतृत्वे सति बधिरः' इति। साध्यपदयोर्यथा 'विमतो बधिरत्वे सति श्रोता' इति। धर्मिसाध्यपदयोश्चतुर्विधः। तत्र धर्मविधानाद्यथा 'मूको वक्ता' इति। तन्निषेधाद्यथा 'प्रमेयं न प्रमाणसापेक्षम्' इति। धर्मिविधानाद्यथा 'अतीतमस्ति' इति। तन्निषेधाद्यथा 'वर्तमानं नास्ति' इति। हेतुपदयोर्यथा 'मूकत्वे सति वक्तृत्वात्' इति। उदाहरणे साधनपदयोर्हेतुपदवत्। साध्यपदयोः प्रतिज्ञायामिव। परस्परं तु प्रतिज्ञाहेतुविरोधवत्। दृष्टान्तधर्मिणि साध्यधर्मिवत्। साध्यधर्मिपदयोः प्रतिज्ञायामिव चतुर्विधः। उपनयपदयोर्हेतुपदवत्। निगमने प्रतिज्ञावत्। हेत्वंशेन विरोधः प्रतिज्ञाहेतुविरोधवत्।

(रा. टि.) भिन्नभिन्नवाक्येषु अस्ति नास्ति इत्यादिषु अनतिव्याप्त्यर्थमुक्तम् एकवाक्य इति। अव्याप्तिनिरासायावान्तरवाक्यानां पदानां च ग्रहणम् ।। श्रोतृत्वे सति बधिर इति ।। धर्मिनिर्देशोऽयम्। 'चेतनो भवितुमर्हति ज्ञानित्वात्' इति साध्याऽदिकमूह्यम् ।। प्रमेयमिति ।। प्रमाणविषय इत्यर्थः ।। हेतुपदवदिति ।। 'यो मूकत्वे सति वक्ता स चेतनः यथा मैत्रः' इत्येवमित्यर्थः ।। प्रतिज्ञायामिवेति ।। 'यश्चेतनः स बधिरत्वे सति श्रोता' इत्येवमित्यर्थः ।। परस्परं त्विति ।। साध्यहेत्वोरित्यर्थः 'यत्[1] गुणव्यतिरिक्तं तत्तद्व्यतिरिक्तं यथा तद्व्यतिरिक्तं द्रव्यम्' इति वक्ष्यमाणदिशा ज्ञेयमित्यर्थः ।। साध्यधर्मिवदिति ।। 'श्रोतृत्वे सति बधिरवत्' इत्येवमित्यर्थः। प्रतिज्ञायामिव चतुर्विध इति ।। उदाहरण इति सर्वत्रानुबध्यते।

---

[1] यत् गुणाव्यतिरिक्तं तत् गुणव्यतिरिक्तम्। यथा तदव्यतिरिक्तं द्रव्यम्।

(श. टि.) धर्मविधानात् 'मूको वक्ता' इतिवदिति, तन्निषेधात् 'प्रमेयं न प्रमाणसापेक्षम्' इतिवदिति, 'अतीतमस्ति' इतिवदिति, 'वर्तमानं नास्ति' इतिवदित्येवं चतुर्विधो ज्ञेय इति भावः। ॥ **हेतुपदवदिति** ॥ 'तथा चायं मूकत्वे सति वक्ता' इत्येवमित्यर्थः[1] ॥ **प्रतिज्ञावदिति** ॥ 'बधिरत्वे सति श्रोता' इत्येवमित्यर्थः ॥ **हेत्वंशेनेति** ॥ वक्ष्यमाण एवेति भावः।

(श्री. टि.) पदयोर्वाक्ययोर्वाऽपि एकवक्तृकयोर्मिथः।
व्याघातो निग्रहस्थानं स्यात्प्रतिज्ञाविरोधतः॥

इति कारिकाऽनुसारेण प्रतिज्ञाविरोधं लक्षयति ॥ **एकवक्तृक इति** ॥ मिथोविरुद्धे भिन्नकर्तृकवाक्येऽति-[2]व्याप्तिपरिहारायोक्तम् एकवक्तृक इति। महावाक्येऽवान्तरवाक्यानामवान्तरवाक्ये पदानां मिथो व्याघात इति विशदनार्थमुक्तम्[3]। वस्तुतस्तु एकवक्तृकमिथोविरुद्धवाक्यत्वमेव[4] लक्षणं द्रष्टव्यम्।

तत्रावान्तरवाक्यगतपदयोर्मिथो व्याघातं तावदुदाहरति ॥ **तत्रेत्यादिना** ॥ तत्र बहुप्रकारमध्ये ॥ **श्रोतृत्वे सतीति** ॥ 'श्रोतृत्वे सति बधिरः' पक्ष इत्यर्थः ॥ **धर्मिसाध्यपदयोरिति** ॥ प्रतिज्ञायां धर्मि-पदसाध्यपदयोर्विरोधो धर्मविधानात् धर्मनिषेधात् धर्मिविधानात् धर्मिनिषेधाच्च चतुर्विध इत्यर्थः ॥ **प्रमेयमिति** ॥ प्रमाणविषयस्यैव प्रमेयत्वेन प्रमेयपदेनैव प्रमाणसापेक्षत्वप्राप्त्या तस्मिन् प्रमेये प्रमाणसापेक्षत्वरूपधर्मनिषेधप्रति-ज्ञायां धर्मिपदसाध्यपदयोर्विरोधः प्राप्त इत्यर्थः ॥ **हेतुपदवदिति** ॥ 'मूकत्वे सति वक्तृत्वात्' इति हेतुपद-विरोधवत् उदाहरणेऽपि 'यो यो मूकत्वे सति वक्ता' इत्येवं साधनपदयोर्विरोधो द्रष्टव्य इत्यर्थः ॥ **प्रतिज्ञायामिवेति** ॥ 'विमतः श्रोतृत्वे सति बधिरः' इति प्रतिज्ञाऽन्तर्गतसाध्यपदयोर्विरोधवत् उदाहरणेऽपि 'य एतादृशः स श्रोतृत्वे सति बधिरः' इति प्रतिज्ञान्तर्गतसाध्यपदयोर्विरोधो द्रष्टव्य इत्यर्थः ॥ **परस्परं त्विति** ॥ साध्यसाधनपदयोरित्यर्थः ॥ **प्रतिज्ञाहेतुविरोधवदिति** 'द्रव्यं गुणव्यतिरिक्तम् अव्यतिरिक्तत्वात्' इत्यत्र प्रतिज्ञाहेत्वोर्विरोधवत् उदाहरणेऽपि 'यत् यदव्यतिरिक्तं तत् तद्व्यतिरिक्तम्' इत्येवं साध्यसाधनपदयोः परस्परं विरोधो द्रष्टव्य इत्यर्थः। दृष्टान्तधर्मिणि दृष्टान्तरूपे धर्मिणि ॥ **साध्यधर्मिवदिति** ॥ साध्यधर्मी पक्षः तत्र पदविरोधवदित्यर्थः। यथा 'श्रोतृत्वे सति बधिरः पक्षः' इत्यत्र साध्यधर्मिभूतपक्षपदयोर्विरोधः एवमुदाहरणेऽपि 'य एतादृशः स एतादृशः, यथा श्रोतृत्वे सति बधिरः' इत्येवं दृष्टान्तरूपधर्मिपदयोर्विरोधो द्रष्टव्यः ॥ **साध्यधर्मिपदयोरिति** ॥ उदाहरणे साध्यपददृष्टान्तरूपधर्मिपदयोर्विरोधस्तु प्रतिज्ञायामिव धर्मधर्मिविधान-तन्निषेधाभ्यां चतुर्विध इत्यर्थः। तथा हि। उदाहरणे धर्मविधानात् साध्यधर्मिपदयोर्विरोधो यथा 'य एतादृशः

---

[1] तस्मात् बधिरत्वे
[2] वक्तृकवाक्ये।
[3] मुक्तम् ॥ अवान्तरेत्यादि ॥ वस्तुतस्तु
[4] वाक्यपदान्यतरत्वमेव

(श्री॰ टि॰) स वक्ता, यथा मूकः' इति । तन्निषेधाद्यथा 'यत् एतादृशं तत् न प्रमाणसापेक्षम्, यथा प्रमेयम्' इति । उदाहरणे [1]धर्मविधानात् साध्यधर्मिपदयोर्विरोधो यथा 'यत एतादृक् तत् अस्ति, यथाऽतीतम्' इति । तन्निषेधात् यथा 'यत् एतादृक् तत् नास्ति यथा वर्तमानम्' इत्येवं द्रष्टव्यम् ॥ हेतुपदवदिति ॥ श्रोतृत्वे सति बधिरत्वात्' इति हेतुपदयोर्यथा विरोधः एवं 'तथा चायं श्रोतृत्वे सति बधिरः' इत्युपनयान्तर्गतपदयोर्विरोधो द्रष्टव्य इत्यर्थः ॥ प्रतिज्ञावदिति ॥ यथा 'बधिरत्वे सति श्रोता' इति प्रतिज्ञापदयोर्विरोधः एवं 'तस्मात् श्रोतृत्वे सति बधिरः' इति निगमनान्तर्गतपदयोर्विरोधो द्रष्टव्य इत्यर्थः ॥ हेत्वंशेनेति ॥ निगमने साध्यांशस्येति शेषः । यथा 'द्रव्यं गुणव्यतिरिक्तम् अव्यतिरिक्तत्वात्' इत्यत्र प्रतिज्ञाहेत्वोर्विरोधः एवं 'तस्मात् अव्यतिरिक्तत्वात् व्यतिरिक्तमेव' इति निगमनेऽपि साध्यांशस्य हेत्वंशेन विरोधो द्रष्टव्य इत्यर्थः ।

(टी॰) प्रतिज्ञाहेत्वोर्यथा 'द्रव्यं गुणव्यतिरिक्तं अव्यतिरिक्तत्वात्' इति । प्रतिज्ञोदाहरणयोर्यथा 'विप्रतिपन्नो वक्ता मूकवत्' इति । प्रतिज्ञोपनययोः प्रतिज्ञाहेतुविरोधवत् । प्रतिज्ञानिगमनयोर्यथा 'पर्वतोऽग्निमान् तस्मान्निरग्निकः' इति । हेतूदाहरणयोर्यथा 'वक्तृत्वान्मूकवत्' इति । हेतूपनययोर्यथा 'धूमवत्वात् तथा चायं निर्धूमः' इति । हेतुनिगमनयोः प्रतिज्ञाहेतुविरोधवत् । उदाहरणोपनययोर्हेतूदाहरणविरोधवत् । उदाहरणनिगमनयोः प्रतिज्ञोदाहरणविरोधवत् । उपनयनिगमनयोरपि प्रतिज्ञाहेतुविरोधवत् । एवमन्यत्रापि विरोधो द्रष्टव्यः । न च विरुद्धहेत्वाभाससङ्करः । तत्र साध्यविपर्ययव्याप्तिदर्शनेन विरोधः । अत्र पुनः अस्ति नास्तीतिवत् उक्तिमात्रेणेति भेदात् । अत एव प्रथममनुपलब्धेर्दोषान्तरसम्भवेऽप्येतदेवोद्भाव्यमिति ॥ ३ ॥

(रा॰ टि॰) ॥ प्रतिज्ञोपनययोरिति ॥ द्रव्यं गुणव्यतिरिक्तं, तथा चेदं तदव्यतिरिक्तम्, इत्येवमित्यर्थः ॥ प्रतिज्ञाहेतुविरोधवदिति ॥ 'तथा च इदं द्रव्यम् [2]गुणाव्यतिरिक्तत्वात् तद्व्यतिरिक्तम्, इत्येवमित्यर्थः ॥ हेतूदाहरणविरोधवदिति ॥ मूकवत्, तथा चायं वक्ता, इत्येवमित्यर्थः ॥ प्रतिज्ञोदाहरणविरोधवदिति ॥ मूकवत्, तस्मात् विप्रतिपन्नो वक्ता, इत्येवमित्यर्थः ॥ प्रतिज्ञाहेतुविरोधवदिति ॥ तथा चेदं गुणाव्यतिरिक्तं तस्मात् गुणव्यतिरिक्तं द्रव्यम्, इत्येवमित्यर्थः ॥ एवमन्यत्रापीति ॥ दूषणानुमानादावपि 'इदमसाधकं [3]व्याप्त्यादिमत्वादित्यादिरूपेण ध्येय इत्यर्थः । तर्हि बाधाऽदिसाङ्कर्यमित्यत आह ॥ अत एवेति ॥ तस्य विवरणम् प्रथममनुपलब्धेरिति ॥ ३ ॥

---

[1] धर्मिविधानात् [2] गुणव्यतिरिक्तम्, तदव्यतिरिक्तत्वात् । [3] व्याप्त्यादिमत्वात् इत्यादिरूपेण ध्येयमित्यर्थः

(श्री. टि.) एवमवान्तरवाक्यगतपदयोर्विरोधमुदाहृत्येदानीमवान्तरवाक्ययोर्मिथो विरोधमुदाहरति ॥ प्रतिज्ञाहेत्वोर्यथेति ॥ प्रतिज्ञोपनययोरिति ॥ द्रव्यं गुणव्यतिरिक्तम् अव्यतिरिक्तत्वात् इत्यत्र प्रतिज्ञाहेत्वो- र्यथा विरोधः एवं द्रव्यं गुणव्यतिरिक्तम् इति प्रतिज्ञायाः तथा चेदमव्यतिरिक्तम् इत्युपनयस्य च विरोधो द्रष्टव्य इत्यर्थः ॥ हेतुनिगमनयोरिति ॥ द्रव्यं गुणव्यतिरिक्तम् अव्यतिरिक्तत्वात् इति प्रतिज्ञाहेत्वोर्यथा विरोधः एवम् अव्यतिक्तत्वात् इति हेतोः तस्मात् व्यतिरिक्तमेव इति निगमनस्य च विरोधो द्रष्टव्य इत्यर्थः ॥ उदाहरणोपनययोरिति ॥ वक्तृत्वात् इति हेतोः मूकवत् इति दृष्टान्तवचनरूपोदाहरणस्य च यथा विरोधः एवं यत् एवं तत् एवं यथा मूकः, तस्मात् वक्ता, इत्येवमुदाहरणनिगमनयोर्विरोधो द्रष्टव्य इत्यर्थः ॥ उदाहरणनिगमनयोरिति ॥ विमतो वक्ता मूकवत् इति प्रतिज्ञोदाहरणयोर्यथा विरोधः एवं यदेवं तदेवं यथा मूकः, तस्मात् वक्ता, इत्येवं उदाहरणनिगमनयोर्विरोधो द्रष्टव्य इत्यर्थः ॥ उपनयनिगमन- योरिति ॥ द्रव्यं गुणव्यतिरिक्तम् अव्यतिरिक्तत्वात, इत्यत्र यथा प्रतिज्ञाहेत्वोर्विरोधः तथा चेदम् अव्यतिरिक्तम्, तस्मात् व्यतिरिक्तमेव, इत्येवम् उपनयनिगमनयोर्विरोधो द्रष्टव्य इत्यर्थः ॥ एवमन्यत्रापीति ॥ यद्यग्निर्न स्यात् तर्ह्यग्निः स्यात् इति तर्के, नेदं साध्यसाधकं साधकं च इति दूषणवाक्ये च विरोधो द्रष्टव्य इत्यर्थ इति सम्प्रदायः।[1]

ननु द्रव्यं गुणव्यतिरिक्तं अव्यतिरिक्तत्वात् इति प्रतिज्ञाहेतुविरोधस्य नित्यत्वसाधककृतकत्वरूपविरुद्ध- हेत्वाभासात् कथं भेदः? इत्याशङ्क्य निराकरोति ॥ न चेति ॥ तत्रेति ॥ विरुद्धस्थले हेतोः साध्याभाव- व्याप्तिप्रदर्शनेन विरोधः प्रतीयते। अत्र पुनः अस्ति नास्ति इतिवत् व्यतिरिक्तम् अव्यतिरिक्तम् इति उक्तिमात्रादेव प्रथमं झटिति प्रतीयते। ततस्तयोर्भेद इत्यर्थः।

ननु यथाकथञ्चित् तत्र विरुद्धहेत्वाभासरूपदोषान्तरस्यापि सम्भवात् विरुद्ध एवायमिति कस्मात् नोद्भाव्यते? इत्यत आह ॥ अत एवेति ॥ तस्यैव विवरणं प्रथममुपलब्धेरिति। अस्ति नास्ति इतिवत् उक्तिमात्रेण प्रतिज्ञाविरोधस्यैव पुरःस्फूर्तिकत्वात् प्रतिज्ञाविरोधरूपं विग्रहस्थानमेवोद्भाव्यम्। न विरुद्धहेत्वा- भास इत्यर्थः ॥ ३ ॥

प्रतिज्ञासन्न्यासः

(टी.) स्वोक्तापलापः प्रतिज्ञासन्न्यासः। हानिवदवान्तरभेदभिन्नः। चतुर्धा च प्रवर्तते केनेदमुक्तम्? इति वा परमतमेतन्मयोक्तम् इति वा त्वयेदमुक्तम् इति वा परोक्तं मयाऽनू- दितम् इति वेति ॥ ४ ॥

---

[1] तथाचायं वक्ता, इत्युदाहरणोपनययोर्विरोधो द्रष्टव्य इत्यर्थः।

(रा. टि.) ॥ हानिवदिति ॥ साधनापलापो दूषणापलापः । तत्राऽऽद्यः पक्षे साध्यसाधनधर्मितद्विशेषणापलापभेदेन षड्विधः । दृष्टान्तेऽप्येवमित्यादिरूपेण ज्ञेय, इत्यर्थः । उदाहरणानि तु तत्रैव 'पर्वतोऽग्निमान् प्रमेयत्वात्' इत्यादौ अनैकान्त्योद्भावने 'केनेदमुक्तम्' इत्यादिरूपेण चतुर्धा प्रवर्तत इत्यर्थः ॥ ४ ॥

(श्री. टि.) स्वयमुक्तापलापेन प्रतिज्ञान्यासनिग्रहः ।

इति कारिकाऽनुसारेण प्रतिज्ञातं[1] न्यासं लक्षयति ॥ स्वोक्तेति ॥ स्वोक्तस्य स्वयमेवापलाप इत्यर्थः । यद्वा स्वोक्तेति भावे क्तः । ततश्च स्वोक्त्यपलाप इत्यर्थः । अत एवोक्तम् पद्धतौ, सोऽयं प्रमाणविरोध एव, उक्तः प्रमितत्वात् इति ॥ हानिवदिति ॥ प्रतिज्ञाहानिवदित्यर्थः ॥ अवान्तरभेदेति ॥ साध्यापलापसाधनापलाप धर्म्यपलापतद्विशेषणापलापाऽऽदिभेदेन भेदवानित्यर्थः ॥ परमतमिति ॥ आवाभ्यामन्यस्य मतमित्यर्थः ॥ त्वयेदमुक्तमिति ॥ न मयेत्यर्थः ॥ अनुदितमिति ॥ न विहितमित्यर्थः ॥ ४ ॥

### हेत्वन्तरम्

(टी.) दोषपरिजिहीर्षया निर्दिष्टसाधकांशे अधिकप्रक्षेपो हेत्वन्तरम्। हेतुः उदाहरणे प्रयोजकभागः उपनय इति साधकांशः । तत् द्विविधम् साधनदूषणनिष्ठभेदात् । सर्वं स्वरूपतो विशेषतश्चेति द्वेधा । तत्राऽऽद्यं यथा, हेत्वाद्यप्रयोगे न्यूनत्वोद्भावने तदुपादानम् । द्वितीयमपि दोषप्रतीकाराप्रतीकाराभ्यां दोषसदसद्भावाभ्यां च द्वेधा । तत्र साधने हेतौ सद्दोषपरिहारहेतुर्यथा 'शब्दोऽनित्यः ऐन्द्रियकत्वात्' इत्यत्रानैकान्तिकत्वेन दूषिते सामान्यवत्त्वे सतीति । उदाहरणे प्रयोजकभागे यथा 'ऐन्द्रियकः सोऽनित्यः' इत्यत्र न्यूनत्वेऽभिहिते पूर्ववत् विशेषणम् । उपनये यथा 'तथा चायमैन्द्रियकः' इत्युक्ते पूर्ववत् विशेषणम् । दूषणे हेतौ यथा 'नायं साध्यसाधकः सपक्षे सत्वात्' इत्यत्र व्यभिचारेण प्रत्युक्ते 'विपक्षवृत्तित्वे सति' इत्यादि । सद्दोषाप्रतीकारो यथा 'शब्दोऽनित्य ऐन्द्रियकत्वात्' इत्यत्रानैकान्तिकत्वोद्भावने 'प्रमेयत्वे सति' इत्यादि । असद्दोषप्रतीकारो यथा 'पर्वतोऽग्निमान् धूमवत्वात्' इत्यत्र महानसे व्यभिचार इत्युक्ते 'तदन्यत्वे सति' इत्यादि । असद्दोषाप्रतीकारो यथा । तत्रैव 'प्रमेयत्वे सति' इत्यादि । अत्र हेत्वाभासाऽऽदिसम्भवेऽपि तस्य साध्यत्वात् सिद्धं हेत्वन्तरमेवोद्भाव्यमिति ॥ ५ ॥

---

[1] प्रतिज्ञान्यासं.

(श. टि.) विशेषतो विशेषणत इत्यर्थः ॥ हेत्वादीति ॥ आदिपदेन उदाहरणे प्रयोजकभाग उपनयश्च ग्राह्यः ॥ द्वितीयमिति ॥ साधने दूषणे च विशेषणतो हेतुप्रक्षेपरूपमित्यर्थः ॥ द्वेधेति ॥ सद्दोषपरिहारहेतुः तदहेतुश्च, असद्दोषपरिहारहेतुः तदहेतुश्च इति पक्षे हेतुविशेषणप्रक्षेपश्चतुर्धा । दृष्टान्ते उपनयेऽप्येवमिति द्वादशधा इत्युक्तं भवति । प्रमेयत्वे सतीत्यादीत्यादिपदस्य उदाहरणोपनययोरेवं ज्ञेयमित्यर्थः ॥ हेत्वाभासाऽदीति ॥ असिद्धयादिहेत्वाभाससम्भवेऽपीत्यर्थः । आदिपदेन कथान्तरत्वासङ्गतत्वन्यूनत्वाऽदिग्रहः ॥ साध्यत्वादिति ॥ हेत्वन्तरोद्भावनादिति भावः ॥ ५ ॥

(श्री. टि.) हेत्वन्तरं साधकांशे दूषिते तद्विशेषणम् ।

इति कारिकाऽनुसारेण हेत्वन्तरं लक्षयति ॥ दोषेति ॥ प्रतिज्ञाऽन्तरव्यावृत्तये साधकांश इत्युक्तम् । कः साधकांशः ? इत्यत आह ॥ हेतुरिति ॥ प्रयोजकभाग इति ॥ 'यो यो धूमवान्' इत्ययमंश इत्यर्थः ॥ साधनेति ॥ साधनानुमानगतप्रयोजकांशगतं[1] हेत्वन्तरमेकमित्यर्थः ॥ दूषणेति ॥ परप्रतिक्षेपरूपानुमानगतप्रयोजकांशनिष्ठं[2] हेत्वन्तरं द्वितीयमित्यर्थः । सर्वं द्विविधमपि हेत्वन्तरम् । आद्यं स्वरूपतो हेत्वन्तरम् । द्वितीयं विशेषतो हेत्वन्तरम् । प्रतीकारः परिहारः ॥ दोषसदसद्भावाभ्यां च द्वेधेति ॥ एवं सति सद्दोषपरिहारहेतुः तदहेतुश्च असद्दोषपरिहारहेतुः तदहेतुश्च इत्येवं चतुर्विध इत्यर्थः । साधने साधनानुमाने । हेतौ हेतुरूपे साधकांशे । सद्दोषपरिहारहेतुः अधिकप्रक्षेप इति शेषः ॥ अनैकान्तिकत्वेनेति ॥ सामान्ये इति शेषः ॥ सामान्यवत्वे सतीति ॥ सामान्यवत्वे सत्यैन्द्रियकत्वस्य पूर्वहेत्वपेक्षया विशेषहेत्वन्तरमेव[3], विशेषणभेदेन विशिष्टभेदसद्भावादिति भावः । दूषणे परप्रतिक्षेपरूपानुमाने । हेतौ हेतुरूपे साधकांशे ॥ व्यभिचारेणेति ॥ धूमानुमान इत्यर्थः ॥ तत्रैवेति ॥ धूमानुमान एव महानसे व्यभिचारपरिहारायेत्यर्थः ।

ननु सद्दोषाप्रतीकारस्थले 'शब्दोऽनित्यः ऐन्द्रियकत्वात्' इत्यत्र सामान्ये अनैकान्तिकत्वोद्भावने 'प्रमेयत्वे सति' इति विशेषणं दीयते । तत्र हेत्वन्तरं कस्मात् उद्भावनीयम्? सामान्ये पुनरनैकान्त्येन व्यर्थविशेषणासिद्धयादिरूपहेत्वाभासस्यापि सम्भवेन तस्याप्युद्भावनसम्भवात् इत्यत आह ॥ अत्रेति ॥ सद्दोषाप्रतीकारस्थल इत्यर्थः ॥ तस्य साध्यत्वादिति ॥ 'प्रमेयत्वे सति' इति हेत्वन्तरस्य कृतत्वादेव हि अनैकान्त्याऽदिरूपहेत्वाभासप्राप्तिः[4], नान्यथा । अतो हेत्वन्तररूपनिग्रहस्थानेन हेत्वाभासस्य साध्यत्वात् हेत्वन्तरस्य च सिद्धत्वेन पुरःस्फूर्तिकत्वात् तदेवोद्भाव्यमित्यर्थः ॥ ५ ॥

---

[1] गतसाधकांश [2] गतसाधकांश [3] हेत्वन्तरत्वमेव, [4] व्यर्थविशेषणासिद्धयादि

## अर्थान्तरम्

(टी.) प्रकृतानुपयुक्तान्वितोक्तिरर्थान्तरम्। तच्चतुर्विधम्। स्वपरोभयानुभयमतरीतिभेदात्। तत्र स्वमतेन नैयायिकस्य मीमांसकं प्रति यथा 'शब्दोऽनित्यः स चाऽऽकाशविशेषगुणः' इति। परमतेन यथा 'द्रव्यं'[1] इत्यादि। उभयमतेन यथा 'श्रोत्रग्राह्योऽसौ' इत्यादि। अनुभयमतेन यथा 'गन्धाऽऽदिभिः समानाऽऽश्रयोऽसौ' इत्यादि।

अत्र न्यूनाऽऽदिसंभवेऽपि तस्योक्तग्राह्यत्वात् अस्य चोच्यमानग्राह्यत्वेन प्रथमप्राप्तत्वात् इदमेवोद्भाव्यमिति ॥ ६ ॥

(रा. टि.) साधूत्तरेऽनतिव्याप्तये प्रकृतानुपयुक्तेत्युक्तिः। अन्वितोक्तिरूपाधिकनिग्रहस्थानेऽनतिव्याप्तये वा तदुक्तिः। तादृशलौकिकवाक्येऽनतिव्याप्तयेऽन्वितेति। 'द्रव्यं शब्दः' इत्यादौ 'शब्दोऽनित्यः' इति प्रतिज्ञाऽनुवृत्तिर्ज्ञेया।

॥ न्यूनाऽऽदीति ॥ कृतकत्वाऽऽदिहेत्वाद्यनुपन्यासे न्यूनता। तदुपन्यासे च आकाशगुणत्वाऽऽदिना व्याप्यत्वाभाव इति दोषान्तरसम्भवेऽपीत्यर्थः। यद्वा आधिक्यम् आदिपदार्थः ॥ उक्तेति ॥ वक्तव्यस्य सर्वस्योक्तिसमाप्त्यनन्तरं ग्राह्यत्वात् अस्य उक्तिसमय एव ग्राह्यत्वात् इत्यर्थः ॥ ६ ॥

(श्री. टि.)                    प्रकृतानुपयुक्तोक्तिरर्थान्तरमिति स्थितिः।

इति कारिकाऽनुसारेणार्थान्तरं लक्षयति ॥ प्रकृतेति ॥ आधिक्ये अतिव्याप्तिपरिहाराय प्रकृतानुपयुक्तेति विशेषणम्। अपार्थकव्यावृत्तये अन्वितेति विशेषणं द्रष्टव्यम्। कुण्डम् अजाजिनम् इत्यादिवत् अनन्वितं न भवतीत्यर्थः ॥ स्वपरेति ॥ स्वमतरीतिः परमतरीतिः उभयमतरीतिः अनुभयमतरीतिश्चेति भेदात् इत्यर्थः। द्रव्यम् श्रोत्रेत्यादौ 'शब्दोऽनित्यः' इत्यनुवर्तते ॥ गन्धाऽऽदिभिरिति ॥ आकाशे गन्धरसाऽऽदीनां वादिप्रतिवादिभ्यामनङ्गीकारेण शब्दे तत्समानाधिकरण्याभावात् इति भावः।

ननु 'शब्दोऽनित्यः, स चाऽऽकाशविशेषगुणः' इत्यादौ हेत्वाद्यनभिधानेन न्यूनताऽऽदेरपि सम्भवात् तस्यैवोद्भाव्यत्वोपपत्तौ किम् अर्थाऽन्तरेण? इत्यत आह ॥ अत्रेति ॥ अर्थाऽन्तरोदाहरणस्थल इत्यर्थः। तस्य न्यूनताऽऽदेः ॥ उक्तग्राह्यत्वादिति ॥ उक्ते सति उक्त्यनन्तरमिति यावत्। ग्राह्यत्वात् उद्भाव्यत्वात् इत्यर्थः ॥ अस्य चेति ॥ अर्थान्तरस्य चेत्यर्थः ॥ उच्यमानग्राह्यत्वेनेति ॥ उच्यमानदशोद्भाव्यत्वात् इत्यर्थः। यथाऽऽहुः

---

[1] रा. द्रव्यं शब्दः

उक्तप्रायाः केचिदन्येऽनुक्तप्रायास्तथा परे ।
उच्यमानदशाप्राप्ता इति कालस्त्रिधा मतः ॥ इति ।

प्रथमभातत्वात् पुरःस्फूर्तिकत्वात ॥ ६ ॥

### निरर्थकम्

(टी.) अबोधकशब्दप्रयोगो निरर्थकम् । तच्च बहुप्रकारम् । कचटतपेत्यादिमातृकापाठमात्रम् लिङ्गविभक्तिवर्णविपर्यासः कृत्तद्धितसमासाऽऽख्यातविपर्यासः भाषाऽन्तरसङ्करश्चेत्यादि । कथञ्चित् ज्ञापकत्वात् कथमेतन्निग्रहस्थानमिति चेन्मैवम् । न हि कथञ्चिज्ज्ञापकत्वं शब्दधर्मः प्रकरणाऽदिनैव तत्र ज्ञानोदयात् । भाषाऽन्तरसङ्करोऽपि समसमयत्वाभावे निग्रहस्थानम् । अन्यथा ज्ञानसङ्गूहनार्थं स्वभाषया प्रत्यवतिष्ठमानं प्रति तदनभिज्ञस्योत्तराभावप्रसङ्गादिति ॥ ७ ॥

(रा. टि.) लिङ्गेति ॥ विपर्यासपदं प्रत्येकमन्वेति ॥ कथञ्चिदिति ॥ 'घटं तिष्ठति' इत्याद्युक्तावपि अर्थबोधदर्शनात् इति भावः । तत्र जायमानो बोधो न शब्दजन्य इत्याह ॥ प्रकरणाऽदिनेति ॥ 'घट' इत्यादिरनुमितः शब्द आदिपदार्थः ॥ समसमयत्वेति ॥ वादिप्रतिवादिनोर्द्वयोरपि समसङ्केतत्वाभाव इत्यर्थः । अन्यतरस्य भाषापरिज्ञानाभाव इति यावत् ॥ अन्यथेति ॥ तस्य पराजयहेतुत्वाभाव इत्यर्थः ॥ ७ ॥

(श्री. टि.) अवाचकप्रयोगे स्यान्निरर्थकसमुद्भवः ।

इति कारिकाऽनुसारेण निरर्थकं लक्षयति ॥ अबोधकशब्देति ॥ मातृकापाठेति ॥ अक्षरपाठेत्यर्थः ॥ ॥ कथञ्चिदिति ॥ तत्वाप्रतिपत्तिलिङ्गस्वरूपनिग्रहस्थानलक्षणाभावादित्यर्थः ॥ न हीति ॥ किं तु ? सम्यग्ज्ञापकत्वमेव । तत्तु कचटतपेतिमातृकापाठलिङ्गविपर्यासाऽदिभिर्न भवत्येवेति तत्वाप्रतिपत्तिलिङ्गत्वात् युक्तं निग्रहस्थानत्वमिति भावः ।

ननु कथञ्चिज्ज्ञापकत्वस्य शब्दधर्मत्वाभावे कथञ्चिज्ज्ञानमपि तत्र कथं भवति ? इत्यत्र आह ॥ प्रकरणाऽदिनैवेति ॥ न तु शब्देनेत्यर्थः । ननु भाषान्तरसङ्करस्य निग्रहस्थानत्वे वादिप्रतिवादिनोः परस्परं भाषाऽभिज्ञयोर्यत्र 'स्वस्वभाषयैव कथनीयम्' इति समयबन्धेन कथाप्रवृत्तिस्तत्रापि निग्रहस्थानं[1] स्यात् इत्यत आह ॥ भाषाऽन्तरसङ्करोऽपीति ॥ समसमयः 'स्वस्वभाषयैव कथनीयम्' इति सङ्केतबन्धः । समसमयत्वस्याभावे तु

[1] स्थानत्वं स्यात्.

(श्री. टि.) न निग्रहस्थानत्वमिति भावः ॥ अन्यथेति ॥ समसमयत्वाभावदशायामपि निग्रहस्थानत्वानङ्गीकार इत्यर्थः। समसमयत्वाभावदशायामिति शेषः। तदनभिज्ञस्य। तदीयभाषानभिज्ञस्य प्रतिवादिनः॥ उत्तराभावप्रसङ्गादिति ॥ तदनभिज्ञः 'त्वया भाषाऽन्तरसङ्करकरणात् मम तदज्ञानात् तव निरर्थकं नाम निग्रहस्थानम्' इति उत्तरं वदति। तत्र स्यात् इत्यर्थः। तथा च समसमयत्वाभावे निग्रहस्थानं भवत्येवेति भावः ॥ ७ ॥

## अविज्ञातार्थकम्

(टी.) त्रिवारमुक्तेऽपि परिषत्प्रतिवादिभ्यामविज्ञातार्थबोधकपदप्रयोगोऽविज्ञातार्थकम्। तच्चतुर्विधम्। स्वतन्त्रमात्रसिद्धं रूढिमनपेक्ष्य केवलयोगेन प्रयुक्तं निर्णायकाभावेन संशयाऽऽक्रान्तं अतिद्रुतोच्चारितं चेति। आद्यं यथा 'स्फ्यकपालपुरोडाशाऽऽदि' मीमांसकानाम्। द्वितीयं यथा 'कश्यपतनयाधृतिहेतुरयं त्रिणयनतनयासनसमानामधेययुक्तः' इत्यादि। तृतीयं यथा 'श्वेतो धावति' इत्यादि।

तत्राऽऽद्यं परस्परसिद्धान्ताभिज्ञताशौण्डीर्याभिमानेनोपादीयेतापि[1]। उत्तरं तु नोपादेयमेव। ज्ञापनार्थत्वात् शब्दस्य। अनवधानाऽऽदिशङ्कानिरासाय पुनर्वचनं प्राश्निकैरपेक्ष्यते। त्रिरिति नियमश्च। ततः परमज्ञानस्य वचनदोषहेतुत्वनिश्चयात्। न हि प्राश्निकापेक्षयोच्यमाने तेषामनवधानं सम्भवति। नापि परिषदविदुषी, येनादोषमपि न जानीयादिति ॥ ८ ॥

(रा. टि.) ॥ मीमांसकानामिति ॥ स्वतन्त्रमात्रसिद्धमित्यन्वेति ॥ कश्यपतनयेति ॥ भूमिधारणहेतुः पर्वतोऽयमित्यर्थः। त्रिणयनतनयः षण्मुखः तदासनं मयूरशब्दितः शिखी तत्समाननामधेयोऽग्निः तद्युक्त इत्यर्थः ॥ श्वेत इति ॥ शुक्लो वेगेन गच्छति, श्वा इतो धावति शुद्धं करोति इत्यनेकार्थप्रतीतेः। शौण्डीर्यम् महिमा ॥ उपादीयेतापीति ॥ तादृशप्रयोगो न दोषावह इत्यर्थः। प्राश्निकानामनवधानात् अस्वज्ञानम्, परिषदोऽज्ञत्वात् अस्वज्ञानम् इत्यत आह ॥ न हीति ॥ ८ ॥

(श्री. टि.) त्रिमन्द्रयन्तरमुक्तेऽपि प्राश्निकैः प्रतिवादिना।
वाक्यमज्ञायमानार्थमविज्ञातार्थमुच्यते ॥

इति कारिकाऽनुसारेणाविज्ञातार्थं लक्षयति ॥ त्रिवारमुक्तेऽपीति ॥ वादिनेति शेषः। परिषदः प्राश्निकाः। 'परिषत्प्रतिवादिभ्यामविज्ञातार्थम्' इति सूत्रस्थपरिषच्छब्दस्य 'त्रिमन्द्रयन्तरमुक्तेऽपि प्राश्निकैः प्रतिवादिना'

---

[1] श्री. शौण्डर्याभिमा.

इति तार्किकरक्षायां प्राश्निकपरतया व्याख्यातत्वात् इत्यवगन्तव्यम् ॥ अविज्ञातार्थबोधकेति ॥ अविज्ञायमानार्थबोधकपदप्रयोग इत्यर्थः। इदमुपलक्षणम् । अन्वितेत्यपि द्रष्टव्यम् । ताभ्यां च विशेषणाभ्यां क्रमेण निरर्थकापार्थकोभयव्यावृत्तिः ।

॥ स्वतन्त्रमात्रसिद्धमिति ॥ स्फ्यकपालेत्यादि ॥ खड्गाकारः खादिरो यज्ञायुधविशेषः स्फ्यशब्देनोच्यते । कपालं खर्परखण्डः । अश्वशफमात्रः पिष्टमयो हविर्विशेषः पुरोडाशः । आदिपदेन दशापवित्रद्रोणकलशादेः संग्रहः ॥ कश्यपतनयेत्यादि ॥ 'पर्वतोऽग्निमान्' इति वक्तव्ये कश्यपतनयेत्यादि प्रयुज्यते। इदं तु रूढिमनपेक्ष्य केवलयोगेन प्रवृत्तम् । तथा हि, कश्यपतनया भूः । 'क्षोणी ज्या काश्यपी क्षितिः' इत्यमरः। तस्या या धृतिर्धारणा । तद्धेतुः तत्कर्ता भूधरः । त्रिनयनो महारुद्रः । तस्य तनयः षण्मुखः । तद्वाहनं मयूरः। तस्य समानं साधारणं शिखीति नामधेयं यस्य वह्नेः । 'शिखिनौ वह्निबर्हिणौ' इति कोशात् । तेन युक्त इत्यर्थः । इत्यादीत्यदिपदेन 'तद्ध्वजवत्वात्' इत्यस्य संग्रहः ।

तथा गोगजवाहनभोजनभक्षाद्युद्भवपक्षविपक्षजशत्रोः ।
वाहनवैरिकृतासनजुष्टा पातु शिवा वो जगत्त्रयजुष्टा ॥

इत्यादेः संग्रहः । गवा वृषभेन गच्छतीति गोगो रुद्रः । तज्जः षण्मुखः । तस्य वाहनं मयूरः । तस्य भोजनं सर्पः । तस्य भक्षो भक्ष्यम् आहारो वायुः । तस्मादुद्भवो हनुमान् । तस्य पक्षो रामः । तस्य विपक्षो विरोधी रावणः । तज्ज इन्द्रजित् । तस्य शत्रोरिन्द्रस्य । यत् वाहनम् गजः । तद्वैरी सिंहः । तत्कृतं यदासनं सिंहासनम् । तत्र जुष्टा धातूनामनेकार्थत्वात् स्थितेति यावत् । जगत्त्रयेण जुष्टा सेविता । शिवा पार्वती । वः पातु इति तदर्थो द्रष्टव्यः ।

॥ श्वेत इति ॥ श्वित्री शोधनं करोति, श्वा इतो धावति इत्यादिनानार्थप्रतीतेरित्यर्थः । शौण्डीर्यम् चातुर्यम् । तथा चोभयानुमत्यभावे निग्रहस्थानत्वम् , उभयानुमतौ सत्यां न निग्रहस्थानत्वम् इति भावः ।

नन्वाद्यवत् उत्तरेषां त्रयाणामपि किमनियतं निग्रहस्थानम्[1] ? इत्याशङ्क्याऽह ॥ उत्तरं त्विति ॥ उत्तरत्रिकमित्यर्थः । कुतः? इत्यत आह ॥ ज्ञापनार्थत्वादिति ॥ तथा च तदभावे अविज्ञातार्थबोधकत्वमात्रया निग्रहस्थानत्वमेवेति भावः । ननूत्तरत्रिकस्य सर्वथा अनुपादेयत्वे किम् त्रिवारवचननियमेन ? त्रिवारमुक्तेऽपि[2] प्राश्निकादेरबोधे अविज्ञातार्थत्वमस्तु । अतो लक्षणे त्रिवारमुक्तेऽपीति विशेषणं व्यर्थमित्यत आह ॥ अनवधा

---

[1] स्थानत्वम्. [2] एकवार.

नाऽद्वीति ॥ स्वेषामिति शेषः । अनवधानम् मनोऽन्यासङ्गः । एकवारोक्तया अबोधस्य वक्तृदोषानिश्चायकत्वात् इति भावः । तर्हि चतुर्वारमप्यभिधानं किम् न स्यात्? इत्यत आह त्रिरितीति ॥ नियमश्चापेक्ष्यत इति सम्बन्धः । ततः किम्? इत्यत आह ॥ ततः परमिति ॥ त्रिवारोक्त्यनन्तरमपीत्यर्थः ॥ वचनदोषहेतुत्वेति ॥ वादिप्रयुक्तवचनदोषहेतुकत्वनिश्चयात् इत्यर्थः । ननु त्रिवारोक्त्यनन्तरमपि प्राश्निकानामनवधानं किं न स्यात्? अतस्त्रिवारात् अधिकमपि वक्तव्यमेवेत्यत आह ॥ न हीति ॥ प्राश्निकापेक्षयेति ॥ प्राश्निकान् अभिमुखी-कृत्येत्यर्थः । ननु वादिवचनमदुष्टमेव । तथाऽपि प्राश्निकानामज्ञानित्वेन वादिना त्रिवारमुक्तेऽपि तदज्ञानस्य कथं वादिदोषविनिश्चायकत्वम्? इत्यत आह ॥ नापीति ॥ प्राश्निकोऽज्ञानी न हीत्यर्थः ॥ अदोषमपीति ॥ भूयो भूयः सम्यगुक्तमपीत्यर्थः । तथात्वे प्राश्निकत्वमेव न स्यादिति भावः । यथोक्तमनुव्याख्याने स्युः सभ्याः सर्ववेदिनः । प्राश्निकाश्च इति । तथा च अनवधानादिशङ्कानिवारणाय त्रिरिति नियमस्य प्राश्निकैरपेक्षणात् सकृदुक्ताविज्ञातार्थव्यावृत्त्यर्थं त्रिवारमुक्तेऽपीत्युक्तमिति विशेषणकृत्यमनेनोक्तं भवतीति ज्ञातव्यम् ॥ ८ ॥

## अपार्थकम्

(टी.) अनन्वितार्थवाचकपदाऽदिप्रयोगोऽपार्थकम् । तत् त्रिविधम् । सर्वथाऽप्यसम्भवदन्वयं यथा 'दश दाडिमानि षडपूपाः कुण्डमजाजिनम्' इत्यादि । व्यवहितान्वयं यथा 'ओदनं स्नातो ग्रामं सरसि गत्वाऽश्नाति' इत्यादि । सम्भवत्सर्वान्वयपक्षनिरासे सत्यसम्भवदन्वयं चेति ॥ ९ ॥

(रा. टि.) ॥ ओदनमिति ॥ 'सरसि स्नातो ग्रामं गत्वा ओदनमश्नाति' इत्यर्थः ॥ सम्भवदिति ॥ आदौ परिस्फुरत्सर्वान्वयपक्षनिरासे पश्चात् अयोग्यतया असम्भवदन्वयमित्यर्थः । यथा 'जरद्गवः कम्बलपादुका-भ्याम्' इत्यादि ॥ ९ ॥

(श्री. टि.)　　　पदजातं वाक्यजातमनन्वितमपार्थकम् ।

इति कारिकाऽनुसारेणापार्थकं लक्षयति ॥ अनन्वितार्थेति ॥ आदिपदेन वाक्यप्रयोगसंग्रहः । अनन्वितेत्यनेनार्था-न्तरव्यावृत्तिः । वाचकेति निरर्थकस्य ॥ ओदनमित्यादि ॥ 'सरसि स्नातो ग्रामं गत्वा ओदनमश्नाति' इति व्यवधानेनान्वय एवास्ति । अव्यवहितान्वयस्तु बाधित इत्यर्थ. । आदिपदेन

अम्बरमम्बुनि पत्रमरातिः पीतमहीशगणस्य ददाह ।

इत्यादिसंग्रहः ॥ सम्भवदिति ॥ आदौ परिस्फुरत्सर्वान्वयपक्षनिरासानन्तरं अयोग्यताज्ञानेन[1] अन्वयबोध-बलकमित्यर्थः । तथा च अनाकाङ्क्षाऽनासत्त्ययोग्यताभिः त्रैविध्यमित्याशयः ॥ ९ ॥

---

1. बोधवारक.

अप्राप्तकालम्

(टी.) विवक्षितक्रमविपर्यासोऽप्राप्तकालम् । अयं वादजल्पयोः क्रमः । सभ्याऽदिसंग्रहपुरस्सरं कथानियमबन्धे कृते वादिना प्रमाणमभिधायाऽभासोद्धारः कर्तव्यः । प्रतिवादिनाऽपि वादिसाधनमनूद्य दूषयित्वा स्वपक्षे प्रमाणमभिधायाऽभासोद्धारः कर्तव्य इति । तत्र यदि वादी साधनमुक्त्वा कथानियमबन्धनमिच्छति तदाऽऽरम्भविपर्यासः । यदाऽऽभासोद्धारानन्तरं साधनं प्रयुङ्क्ते तदा वादांशविपर्यासः । प्रतिवादी च यदा स्वपक्षे साधनमभिधाय परपक्षं दूषयति तदा वादविपर्यासः । धूमवत्त्वात् पर्वतोऽग्निमान् इत्याद्यवयवविपर्यासः । अग्निमान् पर्वत इत्याद्यवयवांशविपर्यासः । वितण्डायां तु प्रतिवादिनः स्वपक्षसाधनाभावात् वादविपर्यासाभाव इति ॥ १० ॥

(रा. टि.) ॥ आभासोद्धार इति ॥ स च 'नायमाभासः तल्लक्षणहीनत्वात्' इति सामान्यतः 'नायमसिद्धः तल्लक्षणहीनत्वात्' इति विशेषतश्चेति द्वेधा भवति ॥ वादविपर्यासाभाव इति ॥ अन्यः सर्वोऽपि सम्भवतीति भावः ॥ १० ॥

(श्री. टि.) विवक्षितक्रमं वादवादांशावयवाऽदिकम् ।
विपर्यस्तं वदति चेत् प्राप्तैवाप्राप्तकालता ॥

इतिकारिकाऽनुसारेणाप्राप्तकालं लक्षयति ॥ विवक्षितक्रमेति ॥ सभ्याऽदिसंग्रहेति ॥ यद्यपि वादे न सभ्याऽदिसंग्रहोऽस्ति, तथाऽपि विद्यापरीक्षाऽर्थकवादकथाविशेषेऽस्त्येव सभ्याऽदिसंवरणम् । अतस्तदभिप्रायेणेदमित्यवगन्तव्यम् । यथोक्तमनुव्याख्याने

सभासभापप्राश्नीकपूर्वस्तु स्पर्धिनामपि ।
वाद एवोभयार्थः स्यात्क्षिणीतिजयकारकः ॥ इति ।

॥ वादांशेति ॥ साधनम् आभासोद्धारश्चेति वादांशौ तयोर्विपर्यास इत्यर्थः ॥ अवयवेति ॥ प्रतिज्ञाहेतुरूपावयवांशभूतयोः पदयोः विपर्यास इत्यर्थः ॥ वादविपर्यासाभाव इति ॥ एतदभिप्रायेणैव पूर्वं 'अयं हि वादजल्पक्रमः' इत्येवोक्तमित्यवगन्तव्यम् ॥ १० ॥

न्यूनम्

(टी.) अवश्योपादेयानामन्यतमानुपादानं न्यूनम् । तदपि बहुप्रकारम् । कथासमयबन्धमकृत्वा साधनप्रयोगे आरम्भन्यूनम् । साधनमप्रयुज्याऽभासोद्धारे, तत्प्रयुज्य चाऽऽभासानुद्धारे अनुकूलतर्कानुक्तौ च वादांशन्यूनम् । प्रतिवादिनाऽपि वादिसाधनमदूषयित्वा स्वपक्षसाधनाभिधाने, दूष-

(दी.) यित्वा वा तदनभिधाने वादन्यूनम्। प्रतिज्ञाऽऽद्यवयवाभावे अवयवन्यूनम्। धर्म्यादिनुक्तावयवाद्यांशन्यूनम्। इदं च तत्तत्सिद्धान्तरीत्योद्भावनीयम्। न चैवमपसिद्धान्त एव। न हि सिद्धान्तविरुद्धकरणमपसिद्धान्तः। तथात्वे सर्वनिग्रहस्थानानामपि तथात्वप्राप्तेः। किं नाम ? तदभ्युपगमो वस्तुतत्वानुसारेण वेति ॥ ११ ॥

(रा. टि.)॥ तत्तत्सिद्धान्तेति॥ पञ्चावयवत्र्यवयवाऽऽदिनियमतत्क्रमनियमयोरभ्युपगमो यस्मिन् सिद्धान्ते तत्रैव तत्। न त्वनियमसिद्धान्त इत्यर्थः॥ अपसिद्धान्त एवेति॥ स्वाङ्गीकृतनियमविरुद्धोक्तिरूपत्वात् इति भावः। तदभ्युपगमः सिद्धान्तविरुद्धाभ्युपगम इत्यर्थः ॥ वस्तुतत्वानुसारेण वेति॥ उद्भावनीयमित्यनुषङ्गः। वस्तुतत्वविपर्यासेन वा अप्राप्तकालमुद्भावनीयमित्यर्थः॥ ११ ॥

(श्री. टि.) आत्मसिद्धान्तसिद्धेषु वाद्यांशावयवाऽऽदिषु।
एकस्यावचने प्राहुर्न्यूनं न्यूननिग्रहम् ॥

इति कारिकाऽनुसारेण न्यूनं लक्षयति ॥ अवश्येति ॥ ननु प्रतिज्ञाऽऽद्यभावे अवयवन्यूनमित्याद्युक्तमयुक्तम्। तथा हि, यदा हि नैयायिकसौगतयोः कथा प्रवृत्ता तदा सौगतो द्व्यवयवं प्रयुङ्क्ते तदा नैयायिकेन न्यूनेन निगृह्येत। अनिग्रहे वा प्रतिवादी पर्यनुयोज्यम् उपेक्षेत। तत्परिहारार्थं पञ्चावयवप्रयोगे तु अधिकेन निगृह्येत। तथा स्वीकारे चापसिद्धान्तेन। ततः अवयवपरिमाणचिन्तायामर्थान्तरप्रसङ्गः। अशक्या च सा, तत्साधकस्याप्यनुमानस्यानिर्णीतावयवपरिमाणत्वात् इत्याशङ्कायामाह ॥ इदं चेति ॥ न्यूनं नाम निग्रहस्थानमित्यर्थः। तथा च यस्य सिद्धान्ते यावन्तोऽवयवाः प्रयोज्याः तेन स्वसिद्धान्तानुसारेण तावदवयवाप्रयोग एव न्यूनत्वमुद्भावनीयमिति भावः। यथोक्तं प्रबोधसिद्धिकारेण 'स्वसिद्धान्तनिर्णीतप्रयोगावयवपरिमाणापेक्षया न्यूनाऽवतारः' इति। उक्तं च तार्किकरक्षायाम्।

आत्मसिद्धान्तसिद्धेषु वाद्यांशावयवाऽऽदिषु। इत्यादि।

तथा च न्यूनलक्षणे अवश्योपादेयानाम् इत्येतत् स्वस्वसिद्धान्ते अवश्योपादेयत्वेनाभिमतानाम् इति व्याख्येयम्। तेन बौद्धस्य द्व्यवयवप्रयोगे न न्यूनत्वम् तत्सिद्धान्ते अन्यावयवानामवश्योपादेयत्वाभावात् इत्यपि द्रष्टव्यम्।

ननु स्वस्वसिद्धान्ते प्रयोज्यत्वेनाभिमतावयवमध्ये अन्यतमानुपादाने न्यूनत्वम् इत्युक्तम्। तथात्वे अपसिद्धान्त एव स्यात्। स्वसिद्धान्तविरुद्धत्वात् इत्याशङ्क्य निराकरोति ॥ न चैवमिति ॥ करणमाचरणम् ॥ तथात्व इति ॥ सिद्धान्तविरुद्धाऽऽचरणस्य अपसिद्धान्तत्वे प्रतिज्ञाहान्यादिसर्वनिग्रहस्थानानामप्यपसिद्धान्तत्वप्रसङ्गात्। तथा हि 'पर्वतोऽग्निमान् प्रमेयत्वात्' इति वादिना स्वसिद्धान्तेऽभिहितेऽपि[illegible]त्वेन प्रयुक्ते

(श्री. टि.) 'माऽस्तु तर्हि पर्वतोऽग्निमान्' इति यदा वदति तदा तस्य स्वसिद्धान्तविरुद्धाऽऽचरणात् इत्यर्थः ॥ तदभ्युपगम इति ॥ स्वसिद्धान्तविरुद्धाभ्युपगम एव अपसिद्धान्त इत्यर्थः । तथा च प्रकृते न्यूनस्थले स्वसिद्धान्तविरुद्धाचरणसद्भावेऽपि न तदभ्युपगमोऽस्ति[1] । न्यूनस्य गमकत्वाङ्गीकारात् । अतो नात्रापसिद्धान्त उद्भावनीयः । स्वसिद्धान्तविरुद्धाऽऽचरणं तु सभाक्षोभेण स्तम्भितत्वात् इति न्यूनत्वमेवोद्भाव्यम् इति भावः ।

एवं प्रबोधसिद्धिकारमतमुक्त्वोदयनमतमाह ॥ वस्तुतत्वानुसारेण वेति ॥ इदमुद्भावनीयमिति सम्बन्धः । यथोक्तम् उदयनेन यथावस्तु व्यवहर्तव्यम् इति । अयमर्थः, यथावस्तु प्रयोक्तव्यम् । न च वस्तुतत्व एव वादिनां विप्रतिपत्तेः अवश्यं न्यूनाऽवतारसम्भवेन अप्रयोगप्राप्तिरिति वाच्यम्, यस्य यत्र तात्विकत्वाभिमानः तेन तत्प्रयोगानन्तरं परेण न्यूनाऽद्यावुद्भाविते तथारूपताया· साधनात् । न चैवमर्थान्तरताऽऽपातः हेतोरन्यतरासिद्ध्युद्भावनेनासिद्धव्युत्पादनवत् प्रकृतोपयोगसद्भावात् इति ।

अस्मन्मतेऽपि 'यथासिद्धान्तं व्यवहर्तव्यम्' इति पक्ष एव भगवत्पादाना संमतः । यथोक्तमनुव्याख्याने ।

स्वसिद्धान्तानुसारेण ह्यसद्भिरनुमोच्यते इति ।

'यथावस्तु व्यवहर्तव्यम्' इति पक्षस्तु त्रिपञ्चावयवामेव इत्यादिना भगवत्पादैर्दूषितः । अत एव टीकाकारैः त्रिपञ्च इत्याद्यनुव्याख्यानावतारिकायाम् अपर आह इत्यादिना अयं पक्षोऽनूदित इत्यवधेयम् ।

केचित्, एवमपसिद्धान्तस्य न्यूनवचनोन्नेयत्वात् उन्नायकस्य न्यूनस्य प्रागवतार इत्युक्तम् । इदानीं 'यथासिद्धान्तं व्यवहर्तव्यम्' इति नियमकरणादेव न्यूनस्य प्रागवतारः पश्चादपसिद्धान्तस्येत्याह ॥ वस्तुतत्वानुसारेण वेति ॥ वाशब्दोऽत्रोपमायाम् । वस्तुतत्वानुसारेणेवेत्यर्थः । अयमाशयः 'कथायां यथावस्तु वक्तव्यम्' इतिवत् 'यथासिद्धान्तम् व्यवहर्तव्यम्' इति नियमात् सौगतो यदा एकमेवावयवं प्रयुङ्क्ते तदैव न्यूनत्वमुद्भावनीयम्, न त्ववयवान्तरोक्तौ । अतो न दोष इत्याहुः ॥ ११ ॥

अधिकम्

(टी.) अन्वितोपयुक्तापुनरुक्तस्वकृतकार्यप्रयोगोऽधिकम् । तत्पञ्चविधम् । हेतूदाहरणोपनयदूषणानुवादाधिकभेदेन । प्रतिज्ञानिगमनयोराधिक्यं एकार्थत्वे पुनरुक्तं, अन्यार्थत्वे प्रकृतसङ्गतावयों-

[1] इदं वाक्यमधिकमिति भाति.

(टी.) न्तरं, असङ्गतावपार्थकं । द्विविधं चैतत् विशेषतः सामान्यतश्च। तत्राऽद्यं यथा 'धूमवत्त्वादालोकविशेषवत्त्वादिति, धूमवत्त्वादेः' इति वा। द्वितीयं यथा 'यथा महानसः पाकस्थानमिति, यथा महानसाऽदिः' इति वा। तृतीयं यथा 'तथा चायं धूमवानालोकविशेषवानिति, धूमाऽदिमान्' इति वा। चतुर्थं यथा 'अनैकान्तिको हेतुः कालातीतश्चेति, अनैकान्तिकाऽदिः' इति वा। पंचमं तु अदृष्यभागस्य स्ववचनेनानुवादः आदिशब्देन वेति ॥ १२ ॥

(रा. टि.) अपार्थके अर्थान्तरे पुनरुक्ते अकृतकार्ये चानतिव्याप्तये क्रमात् विशेषणानि। ननु प्रतिज्ञायामाधिक्यं निगमने चाऽधिक्यं कुतो न गणितम्? इत्यत आह ॥ प्रतिज्ञेति ॥ एकार्थत्व इति ॥ प्रागुक्तस्य पश्चादुक्तस्य चेत्यर्थः। यथा 'पर्वतोऽग्निमान् पर्वतोऽग्निमान्' इति। प्रतिज्ञायामिव निगमनेऽपि एवमुक्ताविति ध्येयम् ॥ अन्यार्थत्व इति ॥ प्रतिज्ञायामुक्तात् निगमने उक्तस्यान्यार्थत्वे अर्थान्तरत्वम्। यथा 'तस्मात् आर्द्रेन्धनप्रभवाग्निमान्' इत्युक्तावर्थान्तरम्, 'तस्मात् अग्निमान् पाषाणवांश्च' इत्युक्तौ अपार्थकम् इत्यर्थः ॥ आदिशब्देन वेति ॥ दूष्यं सर्वं स्ववचनेनानूद्य पश्चात् 'इत्यादि' इति कथनमित्यर्थः ॥ १२ ॥

(श्री. टि.) अन्वितस्योपयुक्तस्य पुनरुक्तेतरस्य च ।
कृतकार्यकरस्योक्तिरधिकं तत्प्रचक्षते ॥

इति कारिकाऽनुसारेणाधिकं लक्षयति ॥ अन्वितेति ॥ अत्रापार्थकार्थान्तरपुनरुक्तसदुक्तिपरिहाराय क्रमेण विशेषणानि द्रष्टव्यानि। हेतूदाहरणेत्यादौ द्वन्द्वान्ते श्रूयमाणाऽधिक्यपदस्य प्रत्येकं सम्बन्धो द्रष्टव्यः।

ननु प्रतिज्ञाधिक्यं निगमनाऽधिक्यं चात्र कुतो न गृहीतम्? इति चेत् अत्र वक्तव्यम्, यत्र प्रतिज्ञाऽऽधिक्यं निगमनाऽधिक्यं बोध्यते तत्र 'पर्वतोऽग्निमान्, पर्वतोऽग्निमान्' इत्येवं प्रतिज्ञयोः 'तस्मादग्निमानेव, तस्मादग्निमानेव, इत्येवं निगमनयोश्च एकार्थत्वं विवक्षितम्? उत भिन्नार्थत्वम्?। द्वितीयेऽपि तत् किम् किञ्चित् प्रकृतसङ्गतम्? उत सर्वथा प्रकृतासङ्गतम्? इति विकल्पान् हृदि निधाय आद्य आह ॥ प्रतिज्ञेत्यादि ॥ द्वितीये आद्य आह ॥ अन्यार्थत्व इति ॥ प्रकृतसङ्गताविति ॥ 'शब्दोऽनित्यः प्रमेयत्वात् इति हेतुः, हेतुशब्दश्च हिनोतेर्धातोः' इत्यादिवत् किञ्चित् प्रकृतसङ्गतावित्यर्थः। द्वितीये द्वितीय आह ॥ असङ्गताविति ॥ सर्वथा प्रकृतासङ्गतौ। 'कुण्डम् अजाजिनम् दश दाडिमानि' इत्यादिवत् अपार्थकमित्यर्थः। ... एवम् हेत्वाधिक्यम्।

(श्री. टि.) पञ्चविधमपि[1] यथाक्रमं विधाद्वयेन प्रत्येकमुदाहरति ॥ तत्राऽद्यं यथेत्यादिना ॥ विशेषतः कण्ठतः, वाचकशब्देनोपादानमिति यावत्। सामान्यत सामान्याकारेण आदिपदेनेति यावत्। आद्यं हेत्वाधिक्यम् । आलोकेति विशेषतो हेत्वाधिक्यं निदर्शितम् । आलोकसामान्यस्य वह्न्यनुमापकत्वात् विशेषपदम् । धूमवत्त्वाऽदेरिति सामान्यतो हेत्वाधिक्यं निदर्शितम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥ १२ ॥

(टी.) प्रतीतार्थस्य पुनः स्ववचनेन प्रयोजनेन विना अभिधानं पुनरुक्तम्। तत् त्रिविधम्। अर्थतः शब्दतोप्याक्षेपतश्चेति । तत्राऽद्यं यथा 'पर्वतोऽग्निमान् गिरिर्वह्निमान्' इति । द्वितीयं यथा 'पर्वतोऽग्निमान् पर्वतोऽग्निमान्' इति। तृतीयं यथा 'जीवंश्चैत्रो गृहे नास्ति इत्युक्त्वा 'बहिरस्ति' इति ॥ १३ ॥

रा. टि.) निरर्थके अज्ञाने वा अनतिव्याप्तये प्रतीतार्थस्येति । स्ववचनेनाभिधानमित्यन्वयः ॥ १३ ॥

(श्री. टि)

शब्दादाक्षेपतो वाऽपि प्रतीतस्यैव कीर्तनम् ।
प्रयोजनं विनाभूतं पुनरुक्तमिति स्थितिः ॥

इत कारिकाऽनुसारेण पुनरुक्तं लक्षयति ॥ प्रतीतार्थस्येति ॥ स्ववचनेन प्रतीतार्थस्य स्ववचनेन प्रतीतार्थस्य स्ववचनेनाभिधानमिति सम्बन्धः । निगमनव्यावृत्त्यर्थं प्रयोजनं विना इत्युक्तम् । निगमनस्य तु सर्वस्यापि बुद्ध्यारोहः प्रयोजनमित्यर्थः ॥ १३ ॥

अननुभाषणम्

(टी.) वादिनोक्तस्य प्राश्निकैर्विज्ञातार्थस्य वादिना परिषदा वा पुनरनूद्य दूषणोच्चारणयोग्यस्य साक्षामननाविष्कुर्वता कथामविच्छिन्दता यत् अप्रत्युच्चारणम् तत् अननुभाषणम् । तत् पञ्चविधम् । यत्तदित्याद्यनुवादः दूष्यैकदेशानुवादः अन्यथाऽनुवादः केवलं दूषणोक्तिः तूष्णीम्भावश्चेति । सर्वं चैतन्निग्रहस्थानं । तूष्णीम्भावे दूषणाऽप्रतीतेः, दूषणमात्राभिधाने निराश्रयदूषणस्यादूषकत्वात्, अन्यथाऽनुवादे व्यधिकरणत्वात्, दूष्यैकदेशानुवादे विशिष्टादूषणात्, यत्तदित्याद्यनुवादे अननुवादाविशेषात्। न च दूषणस्वरूपयोग्यतया दूष्यविशेषसिद्धिः । सन्दिग्धत्वाऽदिना सर्वस्यापि दूष्यत्वात् । योग्यमेवायं ब्रवीतीति नियमाभावात् । न च पञ्चममज्ञानमप्रतिभा वा । ज्ञातार्थस्य स्फुरदुत्तरस्यापि सभाक्षोभाऽदिना तूष्णीम्भावोपपत्तेः । तथा चाननुभाषणमेव निर्णीतं, स्यादिति ॥ १४ ॥

[1] 'पञ्चविधमपि—यथेत्यादिना' इदं वाक्यम् 'आद्यं हेत्वाधिक्यं' इति वाक्यात् पूर्वं पठनीयमिति भाति ।

(रा. टि.) अविज्ञातार्थेऽप्यविज्ञाते वादिनोर्विज्ञातार्थस्येति । अज्ञानेऽप्यविज्ञाते स्वाज्ञानमित्यादि । विक्षेपेऽनतिव्याप्तये कथामित्यादि । यथाऽऽनाव्यमिति पराजयशब्दितनिग्रहस्थानानां प्रतिज्ञापूर्वं व्युत्क्रमेण ज्ञातव्यमिति ॥ सर्वं चैतदिति ॥ दूषणाऽदीत्यादिपदेन तदर्थज्ञानाऽविग्रहः ॥ सन्दिग्धत्वेति ॥ कस्येदं दूषणमिति सन्देहः । न त्वदुक्तस्येदं[1] दूषणम् किं तु अन्यस्य, इति विपर्ययः । एकदेशदूषणं वा सर्वस्येदं दूषणं वा, इति वा सन्देहाऽदिना सर्वस्यापि दूष्यत्वात् इत्यर्थः । ननु सर्वस्याननुवादेऽपि दूषणं सर्वस्य वक्तैव इत्यत आह ॥ योग्यमेवायं ब्रवीतीति ॥ प्रतिवादीत्यर्थः । यद्वा 'योग्यमेव दूषणं वा अयोग्यं वा' इति सन्दिग्धत्वम्, 'अयोग्यमेव' इति विपरीतत्वम् ताभ्यामित्यर्थः । कुत एवं सन्देहाऽदिः? इत्यत आह योग्यमेवेति ॥१४॥

(श्री. टि.)

> ज्ञातार्थं प्राश्निकैर्वाक्यं त्रिरुक्तं नानुभाषते ।
> योऽनुद्भाव्य स्वमज्ञानं तस्यैवाननुभाषणम् ॥

इति कारिकाऽनुसारेणाननुभाषणं लक्षयति ॥ वादिनोक्तस्येति ॥ प्राश्निकैरित्यनेनाविज्ञातार्थव्यवच्छेदः । परिषदा प्राश्निकेन वादिनेति परिषद्वेति उच्चारणेति च दोषस्योपपादनाय स्वरूपकथनं, न व्यावर्तकम् । स्वाज्ञानमनाविष्कुर्वता इत्यनेन अज्ञानव्यवच्छेदः । तत्राज्ञानाविष्करणस्य वक्ष्यमाणत्वात् । कथामविच्छिन्दता इत्यनेन विक्षेपव्यवच्छेद इति ज्ञातव्यम् । अविच्छिन्दता प्रतिवादिना इति शेषः ॥ तत्पञ्चविधमिति ॥ यत्किंचिदित्याद्यनुवादाऽदिचतुर्णां अप्रत्युच्चारणप्रतिनिधित्वात अननुभाषणत्वमेवेति ज्ञातव्यम् ॥ सर्वञ्चैतदिति ॥ पञ्चविधमप्यननुभाषणमित्यर्थः । प्रत्युत्तरादानस्य चतुर्षु समत्वात् अननुभाषणत्वम् । अप्रत्युच्चारणं[2] हि योग्योत्तरदानाभाव एव ।

कुतः? इत्यतो निग्रहस्थानसामान्यलक्षणयोगात् इत्यभिप्रेत्य व्युत्क्रमेणोपपादयति ॥ तूष्णीम्भाव इत्यादिना ॥ दूषणाऽप्रतीतेरिति ॥ तथा च तूष्णीम्भावस्य अप्रतिपत्तिज्ञापकत्वात् निग्रहस्थानत्वमित्यर्थः । अदूषकत्वात् परपक्षदूषणासमर्थत्वात् इत्यर्थः । तथा च दूषणासमर्थे दूषणसामर्थ्यबुद्धिरूपविप्रतिपत्तिसूचकत्वात् दूषणमात्रस्य निग्रहस्थानत्वमित्याशयः ॥ अन्यथाऽनुवाद इति ॥ व्यधिकरणस्यादूषणत्वेन अदूषणे दूषणत्वबुद्धिरूपविप्रतिपत्तिसूचकत्वात् निग्रहस्थानत्वमित्यर्थः ॥ विशिष्टादूषणादिति ॥ 'शब्दोऽनित्यो गुणत्वे सत्येन्द्रियकत्वात्' इति विशिष्टे हेतौ वादिनोक्तेऽपि 'ऐन्द्रियकत्वात्' इति हेत्वन्तरयुक्तः सामान्ये व्यभिचारात् इति यदा प्रतिवादी ब्रूते तदा गुणत्वविशिष्टहेतोरदूषणेऽपि एकदेशदूषणेन

---

[1] वादुक्तस्येदम्.

[2] एतद्वाक्यानन्तरं 'प्रत्युत्तरादानस्य' इत्यादिना पूर्ववाक्येन, ततः परं '॥ सर्वञ्चैतदिति ॥' इति प्रतीकवाक्येन च भाव्यमिति भाति ।

(श्री.टि.) विशिष्टोऽपि दूषितो भवतीति विरुद्धार्थज्ञानरूपविप्रतिपत्तिसूचकत्वात् निग्रहस्थानत्वमेवेत्यर्थः ॥ **अननुवादाविशेषादिति** ॥ तूष्णीम्भावाविशेषात् इत्यर्थः । तथा च दूष्यविशेषसिद्ध्यर्थमनुवादस्यावश्यकत्वेन यत् तत इत्यादिसामान्यानुवादस्याननुवादाविशेषेण तूष्णीम्भावरूपतया अप्रतिपत्तिज्ञापकत्वात् निग्रहस्थानत्वमेवेत्याशयः ।

दूष्यविशेषसिद्ध्यर्थमनुवादस्यावश्यकत्वमिति यत् उक्तम् तन्न । यत् तत् इत्याद्यनुवादं कृत्वा तमकृत्वा वा व्यभिचाराख्यदोषोद्भावने तद्दूषणस्वरूपयोग्यत्वेन हेतुरेव दूष्यतया आयास्यति इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ **सन्दिग्धत्वाऽदिनेति** ॥ वाद्युक्तप्रतिज्ञाहेतुदृष्टान्तरूपादौ विश्वासाभावेन सन्दिग्धतया सर्वस्यापि दूष्यत्वेन प्रतिवादिना 'व्यभिचार.' इत्युक्तेऽपि 'किमयं व्यभिचारेण प्रतिज्ञां दूषयति हेत्वादिकम् वा ' इति सन्देह एव वादिनो भविष्यतीति न दूषणस्वरूपयोग्यत्वेन हेतोरेव सिद्धिरित्यनुवाद आवश्यक इति भावः ।

ननु न ह्येवं प्रतिवादी मूर्खो येन व्यभिचाराख्यदोषेण प्रतिज्ञां दूषयेत् । तस्मात् अनुवादाभावेऽपि तद्योग्यत्वेन हेतुरेवाऽयास्यतीति तदर्थं नानुवाद आवश्यक इत्यत आह ॥ **योग्यमेवेति** ॥ प्रमाणाबाधितमेवेत्यर्थः । तथा च प्रतिवादिन्याप्तत्वनिश्चयाभावेन प्रमादाऽदेरपि सम्भवात् 'व्यभिचाराऽख्यदोषेण हेतुमेव दूषयति, न प्रतिज्ञाम्' इति नियमाभावेन पुनः सन्देह एव वादिनः स्यात् इति तत्परिहाराय अनुवादस्यावश्यकत्वात्, यत् तत् इत्यनुवादे तूष्णीम्भावसाम्येन अप्रतिपत्तिसूचकत्वात् निग्रहस्थानत्वमेवेति भावः । पञ्चमम् तूष्णीम्भाव· । तथा च अननुभाषणान्तर्भाव इत्याशयः । ज्ञातार्थस्येति अज्ञानव्यवच्छेदः । स्फुरदुत्तरस्यापीत्यनेन अप्रतिभाया इति ज्ञातव्यम् । सभाक्षोभो नाम सभां दृष्ट्वा बुद्धेः क्षुब्धतेत्यवधेयम् । क्षोभः कम्प इत्यप्याहुः । उपसंहरति ॥ **तथा चेति** ॥ पञ्चममिति वर्तते । एवेत्यनन्तरमितीति शेषः ॥ **नान्यदिति** ॥ अज्ञानम् अप्रतिभा वा न भवतीत्यर्थः ॥ १४ ॥

### अज्ञानम्

**(टी.) वादिना त्रिरभिहितस्यापि परिषदा विज्ञातार्थस्य वाक्यस्यार्थाप्रतिपत्तिरज्ञानम् । तच्चाज्ञानम् आविष्करणेन ज्ञातव्यम् । यथा 'नास्यार्थो ज्ञायते मया' इति । अनाविष्करणे तु अननुभाषणमेव ॥ १५ ॥**

(रा. टि.) अविज्ञातार्थेऽनतिव्याप्तये परिषदा विज्ञातार्थस्येति । आविष्कारमेव दर्शयति ॥ **यथेति** ॥

(श्री. टि.) ज्ञातेऽपि वादिवाक्यार्थे प्राश्निकैस्तत्र चेत्पुनः ।
स्वाज्ञानमुद्भावयति तदाऽज्ञानेन निग्रहः ॥

इति कारिकाऽनुसारेणाज्ञानं लक्षयति ॥ वादिनेति ॥ वादिना सकृद्वा द्विवारं वा उक्ते सति तदर्थाप्रतीतेरदूषणत्वात् तत्रातिव्याप्तिपरिहाराय त्रिरभिहितस्य इत्युक्तम् । परिषदेत्यविज्ञातार्थव्यवच्छेदः । ननु तर्ह्यननुभाषणेऽतिव्याप्तिः इत्यत आह ॥ तच्चाज्ञानमिति ॥ आविष्करणप्रकारमेव दर्शयति ॥ यथेति ॥ तथा च लक्षणे अर्थाप्रतिपत्तिरित्यस्य अर्थाप्रतिपत्त्युद्भावनमित्यर्थो द्रष्टव्यः । अत एव कारिकायाम् 'स्वाज्ञानमुद्भावयति' इत्युक्तम् ॥ अनाविष्करणे त्विति ॥ स्वाज्ञानस्येति शेषः ॥ १५ ॥

अप्रतिभा

(टी.) वादिनोक्तस्य प्रत्युत्तराप्रतिपत्तिरप्रतिभा । सा चानूद्य तूष्णीम्भाव एव । अननुवादे त्वननुभाषणत्वात् । श्लोकपाठाऽदावर्थान्तरप्रसङ्गात् इति ॥ १६ ॥

(रा. टि.) अज्ञानेऽनतिव्याप्तये प्रत्युत्तरेति ॥ श्लोकेति ॥ परोक्तमनूद्य दूषणमनुक्त्वा यस्य कस्यचिच्छ्लोकस्य पाठे लोकवार्ताऽऽदौ वा प्रकृतानुपयुक्तेः अर्थान्तरमित्यर्थः ॥ १६ ॥

(श्री. टि.) वाद्युक्तस्यानूदितस्य प्रतिवादी यदोत्तरम् ।
प्रतिपत्तुं न शक्नोति तदाऽस्याऽप्रतिभा भवेत् ॥

इतिकारिकाऽनुसारेणाप्रतिभां लक्षयति ॥ वादिनोक्तस्येति ॥ अननुभाषणेऽतिव्याप्तिं परिहरति ॥ सा चेति ॥ सा चाप्रतिभा । वाद्युक्तमनूद्य प्रतिवादिनो यदा तूष्णीम्भावः तस्मिन् सत्येव उद्भावनीयमित्यर्थः । तथा च लक्षणे वादिनोक्तस्येत्यनन्तरम् अनूदितस्येत्यपि प्राह्यमित्युक्तं भवति । अनूद्येत्यस्य व्यावर्त्यमाह ॥ अननुवादे त्विति ॥

ननु सर्वथोच्चारणाभाव एवाननुभाषणत्वं । वादिनोक्तस्यानूदितस्य प्रत्युत्तराप्रतिपत्तिदशायां प्रकृताऽसङ्गतश्लोकपाठाऽदिकरणदशायां कथम्? इत्यत आह ॥ श्लोकपाठाऽदाविति ॥ अर्थांतरेत्युपलक्षणम् । पठ्यमानश्लोकगायनाऽदेरन्वितत्वे प्रकृतानुपयुक्तत्वे अर्थांतरत्वम्, अनन्वितत्वे अपार्थकत्वम् पदार्थानुपस्थापकत्वे तु निरर्थकत्वम् इति ज्ञातव्यम् ॥ १६ ॥

## विक्षेपः

(टी.) केनचित् व्याजेन कथाविच्छेदो विक्षेपः । यथा 'अद्य मे महत् प्रयोजनमस्ति । तस्मिन्नवसिते वक्ष्यामि' इति ॥ १७ ॥

(रा. टि.) ॥ अवसित इति ॥ समाप्त इत्यर्थः ॥ १७ ॥

(श्री. टि.) कथामभ्युपगम्यैव तद्विच्छेदाय कस्यचित् ।
व्याजस्य वचनं प्राहुर्विक्षेपं नाम निग्रहम् ॥

इतिकारिकाऽनुसारेण विक्षेपं लक्षयति ॥ केनचिदिति ॥ व्याजेन व्याजवचनेन । अत्र कथामुपक्रम्येति वक्तव्यम् । अन्यथा कथोपक्रमाभावकालीने व्याजवचनेऽतिप्रसक्तेः इति ध्येयम् । अत एवोक्तम् पद्धतौ, 'यथा कथामारभ्याह, अद्य मे महत्' इत्यादि । उक्तं च कारिकायां 'कथामभ्युपगम्यैव' इति । अवसिते अवसानम् प्राप्ते ॥ १७ ॥

## मतानुज्ञा

(टी.) अनिष्टभ्रमेणेष्टाऽपादनं मतानुज्ञा । यथा केनचित्स्वस्य चोरत्वमभ्युपेत्य 'त्वं चोरः पुरुषत्वात्' इत्युक्ते 'तर्हि तवापि चोरत्वप्रसङ्ग' इति । न ह्यनेनात्मनश्चोरत्वं परिहृतं । नाप्ययं प्रसङ्गः इष्टापत्तिरूपत्वात् इति ॥ १८ ॥

(रा. टि.) तस्य[1] निग्रहस्थानत्वं साधयति ॥ नहीत्यादिना ॥ प्रसङ्ग इति ॥ तर्करूपप्रसङ्ग इत्यर्थः ॥ १८ ॥

(श्री. टि.) अनिष्टभ्रमतोऽन्येषामिष्टमापादयेद्यदि ।
मतानुज्ञेति तस्य स्यान्निग्रहस्थानमुत्कटम् ॥

इतिकारिकाऽनुसारेण मतानुज्ञां लक्षयति ॥ अनिष्टभ्रमेणेति ॥ इष्टस्यापादनायोगेनासम्भवः स्यात् अत उक्तम् अनिष्टभ्रमेणेति । तत एव पुरुषत्वहेतुबलादेव । अस्येष्टापादानत्वोपपादनायैव स्वस्य चोरत्वमभ्युपगम्य इत्युक्तम् । पुरुषत्वहेतोः स्वात्मनि व्यभिचारपरिहारायैतदुक्तम् इत्यप्याहुः ।

नन्वप्रतिपत्त्यादिहेतुत्वाभावात् कथमिदं निग्रहस्थानम्? इत्यत आह ॥ न ह्यनेनेति ॥ तवापि चोरत्वप्रसङ्ग इत्यापादनेनेत्यर्थः । तथा च स्वस्य चोरत्वेऽपरिहृतेऽपि परिहृतमिति विरुद्धार्थप्रतिपत्तिरूपविप्रति-

[1] मतानुज्ञायाः

(श्री.टि.) प्रतिसूचकत्वान्निग्रहस्थानं भवत्येवेति भावः। प्रकारान्तरेण विप्रतिपत्तिहेतुत्वमुपपादयति ॥ नापीति ॥ प्रसङ्ग आपादनं। समीचीन इति शेषः। कुतो न? इत्यत आह ॥ इष्टापत्तीति ॥ 'तर्कोऽनिष्टप्रसङ्गः स्यात्' इत्युक्तत्वेनात्र तदभावादित्यर्थः। तथा चानिष्टप्रसङ्गरूपविप्रतिपत्तिसूचकत्वाभावेऽपीदं निग्रहस्थानम् इति भावः ॥ १८ ॥

## पर्यनुयोज्योपेक्षणम्

(टी.) अवश्योद्भाव्यतया प्राप्तनिग्रहस्थानानामनुद्भावनं पर्यनुयोज्योपेक्षणम्। न चेदमप्रतिभैव। स्फुरतोऽपि दोषस्याल्पत्वाऽदिनोपेक्षणसम्भवात्। प्राश्निकैरुद्भाव्यमेतत्। वादिनैव वा 'अस्य व्यामोहायेदं मयोक्तं नानेन ज्ञातम्' इति ॥ १९ ॥

(रा. टि.) ॥ निग्रहस्थानेति ॥ पराजयहेतुदोषानुद्भावनमित्यर्थः। कथमिदं ज्ञेयम्? इत्यत आह ॥ प्राश्निकैरिति ॥ वादिनोद्भावनाप्रकारमाह ॥ व्यामोहनायेति ॥ १९ ॥

(श्री. टि.) अवश्योद्भाव्यमापन्नकाले निग्रहमागतं ॥
अनुद्भावयतः पर्यनुयोज्योपेक्षणं भवेत् ॥

इतिकारिकाऽनुसारेण पर्यनुयोज्योपेक्षणं लक्षयति ॥ अवश्योद्भाव्यतयेति ॥ उद्भाव्यतया उद्भावनयोग्यतया ॥ प्राप्तेति ॥ प्राप्तकालेत्यर्थः। अत्रानेकदूषणसंनिपातस्थले आधिक्यभयेन यदा एकमेव दूषणमुद्भाव्यते तदा तदितरदूषणानुद्भावने अतिव्याप्तिनिरासाय अवश्येत्युक्तं। तत्रोद्भावितेतरेषामुद्भावनयोग्यतारूपोद्भाव्यत्वसत्त्वेऽपि अन्यतमोद्भावनेनैव परपराजयस्य जातत्वान् न तावतामवश्योद्भाव्यत्वमिति भावः। एवमपि झडिति संवरणेन तिरोहितोद्भावनावसराणामपशब्दाऽदीनामनुद्भावनेऽतिव्याप्तिपरिहारायोक्तं प्राप्तेति। न च तत्रोद्भावनयोग्यत्वमेव नास्तीति वाच्यम्। अपशब्दादीनामुच्यमानदशाप्राप्तत्वेन तत्र झडिति संवरणेनोद्भावनावसरस्यापगमेऽप्युद्भावनयोग्यत्वानपगमात्। एवं चोक्तस्थले उद्भाव्यत्वसत्त्वेन तन्नियतप्राप्तेरवश्यंभावेऽपि प्राप्तकालत्वाभावात् नातिव्याप्तिरिति ध्येयम् ॥ अप्रतिभैवेति ॥ दोषस्यापरिस्फूर्त्याऽप्यनुद्भावनसम्भवेन अप्रतिभासाङ्कर्यमित्यर्थः। कुतो न च? इत्यत आह ॥ स्फुरतोऽपीति ॥ अल्पत्वाऽदिनेति ॥ क्षुद्रत्वाऽदिनेत्यर्थः। तथा च नाप्रतिभासाङ्कर्यमिति भावः।

नन्विदं निग्रहस्थानं केनोद्भाव्यम्। न तावत् वादिना 'मया अनुमानं कृतं, तत्र अवश्योद्भाव्यतया प्राप्तं व्यभिचाराऽदिनिग्रहस्थानम् अयमुपेक्षितवान्' इति स्वदोषोद्भावनस्य स्वेन कर्तुमयोग्यत्वात्। नापि प्रतिवादिना, स्वस्यैवाजयो निग्रहायोगात्। अतो दुर्घटोद्भावनमेतत् कथं निग्रहस्थानम्? इत्यत आह ॥ प्राश्निकैरिति ॥

---

[1] रा, व्यामोहनाय.

(श्री. टि.) यथोक्तम् वाचस्पतिमिश्रैः 'परिषदैतन्निग्रहस्थानमुद्भावनीयम्' इति। ननु मध्यस्थस्य तन्निग्रहापरिस्फूर्तावनुद्भावनीयत्वमेव तस्य स्यात् इत्यतः पक्षान्तरमाह ॥ वादिनैव वेति ॥ न चात्रोक्तदोषः चातुर्येणोद्भाव्यत्वादित्याशयेनाह ॥ व्यामोहनायेति ॥ परशक्तिं जिज्ञासमानेन मया 'विश्वरूपजयन्तयोर्धूमवत्त्वं हेतुरस्तु' इत्याभासवचनं प्रयुक्तम्। 'नानेन मन्दमतिना ज्ञातम्' इति वदता वादिनैवोद्भाव्यमेतदित्यर्थः ॥ १९ ॥

## निरनुयोज्यानुयोगः

(टी.) अतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनं निरनुयोज्यानुयोगः। तच्चतुर्विधम्। छलं जातिः हान्याद्याभासोऽप्राप्तकाले ग्रहणञ्चेति। छलजाती वक्ष्येते। हान्याद्याभासो द्विविधः। सर्वथा हान्याद्यभावप्राप्तौ तदुद्भावनम् अन्यप्राप्तावन्योद्भावनञ्चेति। तत्राऽद्योऽपि द्विविधः। सादृश्याऽदिना भ्रान्त्या, व्यामोहनाय वेति। द्वितीयो भ्रान्त्यैव। भ्रान्त्या यथा, अनेकविकल्पस्फुरणेन विकल्पयतोऽनिष्टविकल्पत्यागे प्रतिज्ञाहानिरित्यादि। द्वितीयो यथा। प्रतिज्ञाहान्यादौ प्रतिज्ञाऽन्तराऽदि इत्यादि। तत्तदुद्भावनावसरमप्राप्य अतिक्रम्य वा तन्निग्रहस्थानोद्भावनं अप्राप्तकाले ग्रहणम्। अनुक्तोच्यमानोक्तग्राह्यभेदात् त्रिविधो ह्युद्भावनकालः। तत्रोच्यमानग्राह्यमुत्तरं उद्भावयतो निग्रहस्थानम् इत्यादि ॥ २० ॥

(रा. टि.) ॥ अतन्निग्रहेति ॥ अप्राप्तस्य पराजयहेतोरुद्भावनमित्यर्थः ॥ वक्ष्येते इति ॥ छलमसङ्गतम् इत्यादिवाक्यव्याख्याऽवसरे छलं, विरोधो मानस्ववाक्याभ्याम् इत्यादिविरोधभेदोक्तिप्रकरणे जातिश्च वक्ष्यत इत्यर्थः। तत्राद्यमुदाहरति ॥ भ्रान्त्या यथेति ॥ इत्यादीति ॥ गौः शृङ्गवती इत्यत्र गोपदस्यार्थान्तरभ्रान्त्या 'प्रतिज्ञाविरोधः' इत्यादिरादिपदार्थः। व्यामोहनाय वा इत्यस्यापि अनेकविकल्पेत्यादिरेवोदाहरणम् इत्युपेत्य अन्यप्राप्तौ इत्येतदेव द्वितीयकल्पं मत्वोदाहरति ॥ द्वितीयो यथेति ॥ हान्याद्याभासः ॥ अनुक्तेति ॥ ग्राह्यपदं प्रत्येकमन्वेति। अज्ञानाननुभाषणादि अनुक्तग्राह्यं। अर्थान्तराप्राप्तकालाऽदिकमुच्यमानग्राह्यं। न्यूनाधिक्यादि उक्तग्राह्यं ॥ उत्तरमिति ॥ पश्चादित्यर्थः ॥ इत्यादीति ॥ उक्तग्राह्यस्योच्यमानकाल उद्भावनम् इत्यादिरादिपदार्थः ॥ २० ॥

(श्री. टि.)

अतन्निग्रहसम्प्राप्तौ तन्निग्रहनिमित्ततः ॥
निगृह्णतो निग्रहः स्यादचोद्यस्यानुयोगतः ॥

इति कारिकाऽनुसारेण क्रमप्राप्तं निरनुयोज्यानुयोगं लक्षयति ॥ अतन्निग्रहप्राप्ताविति ॥ सर्वथा निग्रहस्थानाप्राप्तौ, निग्रहस्थानान्तरप्राप्तावप्युद्भाव्यमाननिग्रहस्थानाप्राप्तौ चेत्यर्थः ॥ छलजाती वक्ष्येते इति ॥ गृष्टिविवक्षया, जातिर्न मेये इत्यादिना ग्रन्थेनेत्यर्थः ॥ सादृश्याऽदिनेति ॥ सादृश्याऽदिजनितया

(श्री० (टि.) भ्रान्त्येत्यर्थः ॥ **द्वितीय इति** ॥ अन्यप्राप्तावन्योद्भावनमित्यर्थः ॥ **भ्रान्त्यैवेति** ॥ अन्यप्राप्तावन्योद्भावने भ्रान्तिरेव निमित्तम्, न तु व्यामोहोऽपीत्यर्थः ॥ **भ्रान्त्या यथेति** ॥ सर्वथा हान्याद्यप्राप्तौ सादृश्याऽदिजनितभ्रान्त्या तदुद्भावनम् यथेत्यर्थः। व्यामोहनाय तदुद्भावनस्यापीदमेवोदाहरणम् परव्यामोहनार्थमेव हान्याद्यप्राप्तावपि तदुद्भावनसम्भवात्। अतः पृथङ् नोदाहृतम् ॥ **द्वितीयो यथेति** ॥ भ्रान्तिमात्रनिमित्तकमन्यप्राप्तावन्योद्भावनमित्यर्थः । अप्राप्तकाले ग्रहणं लक्षयति ॥ **तत्तदुद्भावनेति** ॥ निग्रहोद्भावनकालमित्यर्थः ॥ **अप्राप्येति** ॥ तदुद्भावनकालप्राप्त्यभावेऽपीत्यर्थः ॥ **अतिक्रम्येति** ॥ उद्भावनावसरमतिक्रम्येत्यर्थः। उद्भावनकालं दर्शयति ॥ **अनुक्तेति** ॥ हि इति

उक्तग्राह्याः केचिदन्येऽनुक्तग्राह्यास्तथा परे ।
उच्यमानदशाग्राह्या इति कालस्त्रिधा मतः ॥

इति परकीयप्रसिद्धिं द्योतयति । उद्भावनावसरमतिक्रम्योद्भावनप्रकारं दर्शयति ॥ **तत्रोच्यमानग्राह्यमिति** ॥ उच्यमानदशोद्भावनीयमपशब्दादिकमित्यर्थः ॥ **इत्यादीति** ॥ उच्यमानग्राह्यमुक्तेः पूर्वमुद्भावयतो निग्रहस्थानम् इत्यादि ज्ञातव्यमित्यर्थः ॥ २० ॥

### अपसिद्धान्तः

(टी.) यत्किञ्चिच्छास्त्रसिद्धान्तमभ्युपेत्य तद्विरुद्धाङ्गीकारोऽपसिद्धान्तः । प्रामाणिकतया अङ्गीकृतोऽर्थः सिद्धान्तः । स चतुर्विधः । सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तभेदात् । सर्वशास्त्राविरुद्धोऽर्थः सर्वतन्त्रसिद्धान्तः । यथा प्रत्यक्षं प्रमाणमिति । स्वशास्त्रमात्रसिद्धोऽर्थः प्रतितन्त्रसिद्धान्तः । यथा नैयायिकानामीश्वरप्रामाण्यम् । एकस्य सिद्धावानुषङ्गिको योऽर्थः सोऽधिकरणसिद्धान्तः। यथा ईश्वरस्य सर्वकर्तृत्वसिद्धौ सार्वज्ञ्यम् । शास्त्रान्तरे परीक्षितः स्वशास्त्रे चानिषिद्धोऽभ्युपगमसिद्धान्तः । यथा मनस इन्द्रियत्वम् ।

अपसिद्धान्तोऽप्यतश्चतुर्विधः । यथा

**इदानीमिव सर्वत्र दृष्टाभाविकमिष्यते**

इति प्रतितन्त्रसिद्धान्तमभ्युपगतवतो मीमांसकस्य सर्गप्रलयाभ्युपगम इत्यादि । न चायं प्रमाणविरोधः । उभयोस्तदाचार्योक्तौ प्रामाण्यासंमतेः । तत्रैव प्रमाणविरोधप्रसरात् । मूलप्रमाणे च सन्देहादिति ॥ २१ ॥

(रा. टि.) अतश्चतुर्विध इति ॥ प्रतियोगिनः सिद्धान्तस्य चातुर्विध्यादित्यर्थः । सर्वतन्त्रसिद्धान्तविरुद्धः अपसिद्धान्तः असम्भवी इति तमनुदाहृत्य द्वितीयादेवोदाहरति ॥ इदानीमिवेति ॥ इत्यादीति ॥ ईश्वरस्य कर्तृत्वसिद्ध्या सार्वज्ञ्यसिद्धिरित्यधिकरणसिद्धान्तमभ्युपगतवतो नैयायिकस्यासार्वज्ञ्याभ्युपगमः मनस इन्द्रियत्वं इत्यभ्युपगमसिद्धान्तमाश्रितस्यानिन्द्रियत्वाभ्युपगम इति आदिपदेन ग्राह्यम् ॥ उभयोरिति ॥ वादिप्रतिवादिनोरित्यर्थः ॥ २१ ॥

(श्री. टि.) सिद्धान्तमेकमालम्ब्य तद्विरुद्धपरिग्रहे ।
अपसिद्धान्ततः सिद्ध निग्रहस्थानमक्षतम् ॥

इतिकारिकानुसारेणापसिद्धान्तं लक्षयति ॥ यत्किञ्चिदिति ॥ ननु कः सिद्धान्तो यद्विरुद्धाङ्गीकारोऽपसिद्धान्तः ? इत्यत आह ॥ प्रामाणिकतयेत्यादि ॥ यथाहुः

अभ्युपेतैः प्रमाणैः स्यादाभिमानिकसिद्धिभिः ।
सिद्धान्तः सर्वतन्त्राऽदिभेदात्स च चतुर्विधः ॥ इति ।

सर्वशास्त्राविरुद्धोऽर्थः स्वतन्त्रेऽधिकृतश्च यः ।
स सर्वतन्त्रसिद्धान्तो यथा मानेन मेयधीः ॥

इतिकारिकां मनसि निधायाऽऽह ॥ सर्वशास्त्रेत्यादि ॥

स्वतन्त्र एव सिद्धार्थः परतन्त्रैर्निवारितः ।
प्रतितन्त्रो यथा न्याये सर्वज्ञस्य प्रमाणता ॥

इतिकारिकानुसारेणाऽऽह ॥ स्वशास्त्रमात्रेति ॥

अनुमेयस्य सिद्ध्यर्थो योऽनुषङ्गेण सिध्यति ।
स स्यादाधारसिद्धान्तो जगत्कर्ता यथेश्वरः ॥

इतिकारिकां हृदि निधायाऽऽह ॥ एकस्य सिद्धाविति ॥ सार्वज्ञ्यमिति ॥ सार्वज्ञ्यस्य सर्वकर्तृत्वान्तर्गतत्वादित्यर्थः ।

साधितः परतन्त्रे यः स्वतन्त्रे च समाश्रितः ।
स अभ्युपगमो न्याये मतसोऽनुमतिर्यथा ॥

(श्री.टि.) इतिकारिकामनुसृत्याऽह ॥ शास्त्रान्तर इति ॥

ननु सिद्धान्तस्य चातुर्विध्येऽपसिद्धान्तस्य किमायातम् ? इत्यत आह ॥ अपसिद्धान्तोऽपीति ॥ अत इति ॥ प्रतियोगिभूतस्य चतुर्विधत्वात्तद्विरुद्धोऽपसिद्धान्तोऽपि चतुर्विध इत्यर्थः । उपलक्षणतया प्रतितन्त्रापसिद्धान्तमुदाहरति ॥ यथेदानीमिवेत्यादि ॥ सर्वत्रेति ॥ भूतभविष्यत्कालयोरित्यर्थः ॥ दृष्टाबाधिकमिति ॥ तथा च सर्गप्रलयौ न स्त इति भावः ॥ इत्यादीति ॥ 'प्रत्यक्षं न प्रमाणम्' इत्यभ्युपगमः सर्वतन्त्रापसिद्धान्तः, ईश्वरस्य सर्वकर्तृत्ववादिमते तदसार्वज्ञ्याङ्गीकारः अधिकरणापसिद्धान्तः, नैयायिकस्य मनसोऽनिन्द्रियत्वाभ्युपगमोऽभ्युपगमापसिद्धान्त इति द्रष्टव्यम् । ननु सर्गप्रलयाभ्युपगमवतो मीमांसकस्य नापसिद्धान्तरूपनिग्रहस्थानं वक्तव्यम् । किं तु ?

इदानीमिव सर्वत्र दृष्टाबाधिकमिष्यते ।

इतिसर्गप्रलयाभावप्रतिपादकाचार्यवचनरूपप्रमाणविरोध एवेत्याशङ्क्य निराकरोति ॥ न चायमिति ॥ कुतो न च ? इत्यत आह ॥ उभयोरिति ॥ वादिप्रतिवादिनोरित्यर्थः । अत्र यद्यपि वादिनो मीमांसकस्य स्वाचार्योक्तौ प्रामाण्यनिश्चयोऽस्त्येव । अतः उभयोरसंमतेः इत्येतदयुक्तम् । तथापि न प्रतिवादिनोऽस्ति । अतो व्यासज्यवृत्तिप्रतियोगिकाभावाभिप्रायेणेदम् । 'एकसत्त्वे द्वयमिह नास्ति' इति प्रतीतिदर्शनादिति ध्येयम् । तदाचार्योक्तौ मीमांसकाचार्योक्तौ ।

ननु प्रतिवादिनः कुतो मीमांसकाचार्योक्तौ प्रामाण्यासंमतिः? इत्यत आह ॥ तत्रैवेति ॥ 'दृष्टाबाधिकमिष्यते' इतिसर्गाद्यभावप्रतिपादकाचार्योक्तावेव सर्गादिप्रतिपादकप्रमाणविरोधप्रसरेण प्रमाणविरुद्धायां तदाचार्योक्तौ प्रतिवादिनः स्वस्य प्रामाण्यासंमत्या प्रमाणविरोधस्य प्रतिवादिनोद्भावयितुमशक्यत्वादपसिद्धान्त एवोद्भाव्य इत्यर्थः ।

ननु न मीमांसकाचार्योक्तौ प्रमाणविरोधः प्रसरति । तस्याः प्रमाणमूलकत्वादिति चेत्तत्राह ॥ मूलप्रमाणे चेति ॥ सर्गाद्यभावप्रतिपादकाचार्यवचनमूलभूतप्रमाणस्वरूपमेवादौ सन्दिग्धम् । सत्त्वे वा तस्य प्रामाण्यं सन्दिग्धम् । सर्गादिप्रतिपादकप्रमाणप्रतिरुद्धत्वादित्यर्थः । सन्देहादित्येतत् सर्गादिप्रतिपादकप्रमाणप्राबल्यानिर्धारणदशायामेव । निश्चिते तु प्राबल्ये तद्बाधात् अप्रामाण्यनिश्चय एवेति द्रष्टव्यम् । यथाऽऽहुः 'न हि प्रतिपक्षो यावज्जीवं प्रतिपक्ष' इति ।

केचित्, ननु माऽस्तूभयोः प्रामाण्यनिश्चयः तथापि प्रमाणविरोधः किं नोद्भाव्यते ? इत्यत आह ॥ तत्रैवेति ॥ यत्रोभयोस्तदाचार्योक्तौ प्रामाण्यनिश्चयस्तत्रैवेत्यर्थः । ननु तथाप्याचार्यवाक्यमूलभूतप्रमाणविरोध एवोद्भाव्यः, न त्वपसिद्धान्त इत्यत आह ॥ मूलप्रमाण इति ॥ इत्याहुः ॥ २१ ॥

हेत्वाभासाः

(टी.) हेतोरुक्तरूपेषु पक्षव्यापकत्वादिषु कैश्चिद्युक्ताः केनचिद्रहिता हेत्वाभासाः। ते चासिद्ध-विरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमसत्प्रतिपक्षाः।

असिद्धः

तत्र व्याप्तस्य पक्षधर्मत्वप्रतीतिः सिद्धिः। तद्रहितोऽसिद्धः। स चतुर्विधः। व्याप्तपक्षतद्धर्म-त्वैतत्प्रतीतिराहित्यभेदात्।

तत्र व्याप्यत्वासिद्धो द्वेधा। स्वरूपतो वैयर्थ्येन चेति। तत्राद्यो यथा 'यत् सत् तत् क्षणिकं यथा घटः' इति। व्यर्थविशेषणासिद्धो यथा 'शब्दोऽनित्यः सामान्यवत्वे सति कृतकत्वात्' इति। व्यर्थविशेष्यासिद्धो यथा 'कृतकत्वे सति सामान्यवत्वात्' इति। आश्रयासिद्धो द्वेधा। धर्मिणः साध्यत्वस्य चाभावात्। तत्राऽद्यो यथा 'प्रधानं नित्यं अकार्यत्वात्' इति। आश्रयैकदेशासिद्धो यथा 'प्रधानपुरुषौ नित्यौ अकार्यत्वात्' इति। द्वितीयो यथा 'परमाणवो नित्याः अकार्यत्वात्' इति। पक्षधर्मत्वासिद्धः पञ्चविधः। तत्र स्वरूपासिद्धो यथा 'शब्दोऽनित्यश्चाक्षुषत्वात्' इति। व्यधिकरणासिद्धो यथा 'घटस्य कृतकत्वात्' इति। विशेषणासिद्धो यथा 'चाक्षुषत्वे सति सामा-न्यवत्वात्' इति। विशेष्यासिद्धो यथा 'सामान्यवत्वे सति चाक्षुषत्वात्' इति। भागासिद्धो यथा 'प्रयत्नानन्तरीयकत्वात्' इति।

(रा. टि.) ॥ पक्षव्यापकत्वादिष्विति ॥ पक्षव्यापकत्वसपक्षवृत्तित्वादिषु पञ्चरूपेष्वित्यर्थः। प्राचीन-रीत्या निर्दिशति ॥ असिद्धेति ॥

॥ व्याप्तेति ॥ त्वप्रत्ययो राहित्यपदं च प्रत्येकमन्वेति ॥ तद्धर्मत्वेति ॥ पक्षधर्मत्वेत्यर्थः ॥ तत्प्रती-तीति ॥ पक्षधर्मत्वप्रतीतीत्यर्थः।

॥ वैयर्थ्येन चेति ॥ विशेषणविशेष्ययोरिति योज्यम् ॥ यत्सदिति ॥ तत्र व्याप्तिग्राहकप्रमाणाभावा-दिति भावः। पक्षत्वराहित्यरूपं द्वेधा विकल्पयति ॥ आश्रयेति ॥ धर्मिण इति ॥ अभावादित्यन्वयः ॥ साध्यत्वस्य चेति ॥ सिषाधयिषितधर्मवत्तया सिद्धत्वहेतुना साध्यत्वस्याभावेनेत्यर्थः ॥ प्रधानमिति ॥ न्याय-

(रा. टि.) मते तस्याभावादिति भावः ॥ **परमाणवो नित्या इति** ॥ न्यायमते नित्यत्वस्य सिद्धत्वाभावादिति[1] भावः। लाघवायैकैकनिर्देशपूर्वमुदाहरणान्येव दर्शयति ॥ **स्वरूपासिद्धो यथेत्यादिना** ॥ शब्दोऽनित्य इति प्रतिज्ञा सर्वत्रान्वेति ॥ **प्रयत्नेति** ॥ मीमांसकं प्रत्युक्ते शब्दोऽनित्यः प्रयत्नानन्तरमुत्पद्यमानत्वरूपप्रयत्नानन्तरी-[2]यकत्वस्य ध्वनिषु सत्त्वेऽपि वर्णेष्वभावादित्यर्थः।

(श्री. टि.)      हेतोः केनापि रूपेण रहिताः कैश्चिदन्विताः।
                 हेत्वाभासाः........................................ ॥

इतिकारिकानुसारेण क्रमप्राप्तान् हेत्वाभासान् लक्षयति ॥ **हेतोरुक्तरूपेष्विति** ॥ पक्षव्यापकत्वादिषु इत्यत्र आदि-पदेन सपक्षसत्वविपक्षव्यावृत्त्यबाधितविषयत्वासत्प्रतिपक्षत्वानाम् ग्रहणम्। घटादावतिव्याप्तिवारणायाऽद्यं विशे-षणम्। सद्धेतुव्यावृत्त्यै द्वितीयमिति बोध्यम्।

तत्रादौ सिद्धिलक्षणकथनपुरःसरमसिद्धिं लक्षयति ॥ **तत्रेत्यादिना** ॥ **तद्रहित इति** ॥ व्याप्तस्य पक्षधर्म-त्वप्रतीत्यभाववानित्यर्थः। अयं च विशिष्टाभावः कचिद्व्याप्त्यभावेन कचित् पक्षाभावेन कापि हेत्वभावेन कचित्प्रतीत्यभावेन चतुर्विधेऽपि लक्ष्येऽनुगत इति ध्येयम् ॥ **एतदिति** ॥ व्याप्त्यादीत्यर्थः। यथाऽऽहुः

व्याप्तस्य पक्षधर्मत्वप्रतीतिः सिद्धिरुच्यते।
असिद्धिस्तदभावे स्याद्धेतोः सा च चतुर्विधा ॥
व्याप्तेः पक्षस्य हेतोश्च तज्ज्ञानस्याप्यभावतः। इति।

॥**वैयर्थ्येन चेति**॥ विशेषणस्य विशेष्यस्य वैयर्थ्येन व्याप्यत्वासिद्धिरित्यर्थः ॥ **यत्सत्तत्क्षणिकमिति**॥ अत्र व्या-प्तिग्राहकप्रमाणाभावेन सत्त्वहेतौ स्वरूपत एव क्षणिकत्वनिरूपितव्याप्त्यभावात् स्वरूपतो व्याप्यत्वासिद्धिरित्यर्थः

॥**शब्दोऽनित्य इत्यादि**॥ ननु सामान्यवत्त्वे सति कृतकत्वे अनित्यत्वनिरूपितव्याप्तिसद्भावात् कथम् व्यर्थविशेषणस्य व्याप्यत्वासिद्धत्वम्? इति चेत। उच्यते, अत्र हि कृतके धर्मिणि कृतकत्वसामान्यवत्त्वे सति कृत-कत्वरूपधर्मद्वयसमावेशो लघुभूतकृतकत्वरूपधर्मावच्छेदेनैव अनित्यत्वव्याप्तिज्ञानसम्भवात् गुरुभूतस्य सामान्यवत्त्वे सति कृतकत्वस्य अनावश्यकत्वेन व्यर्थविशेषणस्य व्याप्यत्वासिद्धत्वम्। यथा नीलधूमवत्त्वम्। कुत एतत्? एकस्मिन्धर्मिणि लघुगुरुधर्मद्वयसमावेशो लघुना व्याप्त्यवच्छेदे गुरोरनावश्यकत्वमिति व्यर्थविशेषणताबीज-सद्भावादिति मन्तव्यम्। एवमेव व्यर्थविशेष्यासिद्धस्यापि व्याप्यत्वासिद्धत्वं द्रष्टव्यम् ॥

---

[1] सिद्धत्वेनः साध्यता.     [2] प्रयत्नानन्तरीयकत्वात् इत्यत्र प्रशस्ता.

(श्री. टि.) धर्मिणोऽभावादित्यन्वयः ॥ साध्यत्वस्य चेति ॥ साध्यस्य सिद्धत्वेन आश्रयस्य साध्यत्वस्य साधयितुं योग्यत्वस्याभावादित्यर्थः । सिद्धसाधनादाश्रयासिद्धिरिति भावः । यथाऽऽहुः,

> आश्रयासिद्धता हेतोः सिद्धधर्मस्य साधने ।
> पक्षो हि संश्रयस्तस्य स च साध्यान्वितो यतः ॥ इति ।

॥ प्रधानमिति ॥ साङ्ख्येन तार्किकादीन् प्रत्येवं साधिते सति तैराश्रयासिद्धिरुद्भाव्यते । तन्मते प्रधानस्वरूपस्यैवाभावादिति भावः ॥ द्वितीयो यथेति ॥ साध्यत्वाभावादाश्रयासिद्धो यथेत्यर्थः ॥ नित्या इति ॥ परमाणुनित्यतायास्तार्किकमते सिद्धत्वादिति भावः ॥ घटस्येति ॥ न हि घटीयं कृतकत्वं शब्देऽस्ति । अतो व्यधिकरणस्यासिद्धत्वं युक्तमिति भावः । चाक्षुषत्वे सतीत्यादिहेतुत्रयेऽपि 'शब्दोऽनित्यः' इति प्रतिज्ञानुवृत्तिर्द्रष्टव्या । विशेषणासिद्धिस्थले विशेष्यस्य पक्षे सत्त्वेऽपि विशेषणाभावेन तद्विशिष्टस्यापि हेतोरभावो द्रष्टव्यः । एवं विशेष्यासिद्धिस्थलेऽपि विशेषणसद्भावेऽपि विशेष्यस्याभावाद्विशिष्टहेतोरप्यभावो मन्तव्यः ॥ प्रयत्नेति ॥ प्रयत्नानन्तरजन्यत्वादित्यर्थः । ध्वनिवर्णात्मकशब्दद्वयस्यापि पक्षत्वेन वर्णात्मकशब्दे मीमांसकरीत्या हेतोरभावाद्भागासिद्धत्वमिति भावः ॥

(टी.) सन्दिग्धव्याप्यत्वासिद्धो यथा 'स श्यामो मित्रातनयत्वात्' । सोपाधिकत्वेन व्याप्यत्वसन्देहात् । सन्दिग्धाश्रयासिद्धो यथा । 'भविष्यद्देवदत्तपुत्रो ब्राह्मणः ब्राह्मणपुत्रत्वात्' इति । सन्दिग्धाश्रयैकदेशासिद्धो यथा 'देवदत्तः तद्भविष्यत्पुत्रश्च वेदयोग्यौ ब्राह्मणपुत्रत्वात्' इति । सन्दिग्धासिद्धो यथा, धूमबाष्पाविवेके 'पर्वतोऽग्निमान् धूमवत्त्वात्' इति । सन्दिग्धविशेषणासिद्धो यथा 'विमतो रागादियुक्तः सर्वदा तत्वज्ञानरहितत्वे सति पुरुषत्वात्' इति । सन्दिग्धविशेष्यासिद्धो यथा 'पुरुषत्वे सति सर्वदा तत्वज्ञानरहितत्वात्' इति । सन्दिग्धभागासिद्धो यथा । एकत्र धूमनिश्चये अन्यत्रानिश्चये 'पर्वतावग्निमन्तौ धूमवत्त्वात्' इति । विशेषणवैयर्थ्यादौ सन्देहो न सम्भवति ॥ २२-१ ॥

(रा. टि.) निश्चितव्याप्यत्वासिद्धानामवान्तरभेदभिन्नानामुदाहरणानि प्रदर्श्य सन्दिग्धत्वेनापि भेदानुगतेन क्रमेण प्राङ्निर्दिश्योदाहृतानामुदाहरणानि निर्देशपूर्वं दर्शयति ॥ सन्दिग्धव्याप्यत्वेति ॥ मित्रा नाम काचित् । तस्याः प्राचीनपुत्राः श्यामा दृष्टा इति, तद्दृष्टान्तेन तः इति मित्रागर्भस्थं पक्षीकृत्य 'स मित्रागर्भस्थः श्यामः' इति

(रा. टि.) साध्यते। तत्र साध्यस्य सन्दिग्धत्वात् तन्निरूपिव्याप्तिमत्त्वम्'[1] इति सन्दिग्धमिति भावः। साध्यसन्देह एव किंनिमित्तः? इत्यत आह ॥ **सोपाधिकत्वेनेति** ॥ श्यामत्वाऽऽपादकशाकपाकजत्वोपाधिसहितत्वेनेत्यर्थः। उपाधेरपि तत्र सन्दिग्धत्वेन तदाहितस्तत्र साध्यसन्देह इति भावः ॥ २२-१ ॥

(श्री. टि.) ॥ **सोपाधिकत्वेनेति** ॥ पक्षीभूते गर्भस्थे शाकपाकजत्वरूपोपाधिसन्देहेन मैत्रीतनयत्वहेतौ श्यामत्वनिरूपितव्याप्तिसन्देहादित्यर्थः। वेदयोग्यौ वेदाध्ययनयोग्यौ ॥ **सर्वदेति** ॥ परबुद्धेरप्रत्यक्षत्वेन सर्वदा तत्त्वज्ञानराहित्यरूपविशेषणस्य सन्दिग्धत्वादिति भावः। एकत्र एकस्मिन्पर्वते। अन्यत्र अपरस्मिन्पर्वते। अनिश्चये सन्देहे।

ननु व्याप्यत्वासिद्धिप्रभेदकथनावसरे सन्दिग्धव्यर्थविशेषणासिद्धोऽपि कुतो नोक्तः? इत्यत आह ॥ **विशेषणवैयर्थ्यादाविति** ॥ अत्र प्रष्टव्यम्, सन्दिग्धव्यर्थविशेषणतास्थले एकस्मिन्धर्मिणीत्यादि तद्बीजम्[2] अस्ति उत नास्ति इति। यद्यस्ति तर्हि विशेषणवैयर्थ्यनिश्चय एव प्राप्तो न सन्देहः। यदि नास्ति तर्हि विशेषणवैयर्थ्यमेव नास्ति कुतः सन्देहः स्यात। अतः सन्दिग्धव्यर्थविशेषणासिद्धो नोक्त इति भावः॥ २२-१ ॥

**विरुद्धः**

**(टी.) पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्धः। स द्विविधः। विद्यमानसपक्षोऽविद्यमानसपक्षश्चेति। प्रत्येकं चतुर्विधः। तत्र सति पक्षे[3] पक्षविपक्षव्यापको यथा 'नित्यः शब्दः कार्यत्वात्' इति। पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा 'सामान्यवत्वे सति अस्मदादिबाह्यैकेन्द्रियग्राह्यत्वात्'[4] इति। पक्षविपक्षैकदेशवृत्तिर्यथा 'प्रयत्नानन्तरीयकत्वात्' इति। पक्षैकदेशवृत्तिविपक्षव्यापको यथा 'पृथिवी नित्या कृतकत्वात्' इति।**

(रा. टि.) ॥ **सामान्यवत्त्वे सतीति** ॥ 'शब्दो नित्यः' इति नित्यत्वप्रतिज्ञा सर्वत्रान्वेति। अस्य हेतो रूपादावनित्ये सत्त्वेऽपि घटादावभावात् पक्षे ध्वनौ वर्णे च भावादिति भावः॥ **प्रयत्नेति** ॥ शब्दनित्यत्वे साध्ये अयं हेतुर्वर्णेषु नास्ति ध्वनिष्वस्ति, विपक्षे घटादावस्ति ज्ञानेच्छादौ नास्तीति भावः॥ **कृतकत्वादिति** ॥ अस्य हेतोः पक्षैकदेशपरमाणुष्वभावात् अनित्ये विपक्षे सर्वत्र सत्त्वादिति भावः। अत्रोक्तपक्षचतुष्टयेऽपि नित्यो गगनादिः सपक्षोऽस्तीति भावः।

---

1 व्याप्तिमत्त्वमपि.    2 व्यर्थविशेषणताबीजम्.    3 सपक्षे.    4 श्री. बाह्येन्द्रिय.

8

(श्री. टि.) अथ विरुद्धं लक्षयति ॥ **पक्षविपक्षयोरेवेति** ॥ यथाऽऽहुः

विरुद्धः स्याद्वर्तमानो हेतुः पक्षविपक्षयोः । इति ।

॥ **प्रत्येकं चतुर्विध इति** ॥ सति सपक्षे पक्षविपक्षव्यापक आद्यः पक्षव्यापको विपक्षैकदेशवृत्तिर्द्वितीयः पक्षैकदेशवृत्तिर्विपक्षैकदेशवृत्तिस्तृतीयः पक्षैकदेशवृत्तिर्विपक्षव्यापकश्चतुर्थः । असति सपक्षेऽप्येवं चातुर्विध्यं द्रष्टव्यम् ।

॥ **कार्यत्वादिति** ॥ अत्र नित्यं गगनादिकं सपक्षः । तार्किकमते कार्यत्वहेतुः पक्षीभूतध्वनिवर्णात्मकशब्दव्यापी विपक्षभूतानित्यभावमात्रव्यापी चेति द्रष्टव्यम् । 'सामान्यवत्त्वे सति' इत्यादिहेतुत्रयेऽपि 'शब्दो नित्यः' इति प्रतिज्ञाऽनुवृत्तिर्द्रष्टव्या । 'सामान्यवत्त्वे सति' इत्यादिहेतुः पक्षव्यापको विपक्षभूतघटादिवृत्तित्वेऽपि धर्माधर्माद्यवृत्तित्वात् विपक्षैकदेशवृत्तिश्चेति मन्तव्यम् । 'एकेन्द्रियग्राह्यत्वात्' इति पाठे तु विपक्षभूतरूपादिवृत्तित्वेऽपि द्वीन्द्रियग्राह्यघटाद्यवृत्तित्वाद्विपक्षैकदेशवृत्तित्वं द्रष्टव्यम् ॥ **प्रयत्नानन्तरीयकत्वादिति** ॥ 'प्रयत्नानन्तरं जन्यत्वात्' इत्यर्थः । एवमुत्तरत्रापि व्याख्येयम् । अयं च हेतुः पक्षैकदेशवृत्तिः ध्वन्यात्मकशब्दे सत्त्वेऽपि वर्णात्मकशब्दे मीमांसकरीत्या अभावात् । विपक्षैकदेशवृत्तिश्च नित्यत्वाभाववति घटादौ सत्त्वेऽपि प्रागभावे अभावात् ॥ **कार्यत्वादिति** ॥ कार्यरूपायां पृथ्व्यां विद्यमानत्वेऽपि परमाणुरूपायां पृथिव्यामभावात् अयं हेतुः पक्षैकदेशवृत्तिः, अनित्यभावमात्रे सत्त्वात् विपक्षव्यापकश्चेति द्रष्टव्यम् ।

**(टी.) असति सपक्षे प्रथमो यथा 'शब्द आकाशविशेषगुणः प्रमेयत्वात्' इति । द्वितीयो यथा 'प्रत्यक्षत्वात्' इति । तृतीयो यथा 'प्रयत्नानन्तरीयकत्वात्' इति । चतुर्थो यथा 'अपदात्मत्वात्' इति ॥ २२-२ ॥**

(रा. टि.) ॥ **प्रथम इति** ॥ पक्षविपक्षव्यापको यथेत्यर्थः ॥ **द्वितीय इति** ॥ पक्षव्यापको विपक्षैकदेशवृत्तिः यथेत्यर्थः ॥ **प्रत्यक्षत्वादिति** ॥ विपक्षे घटादौ भावेऽपि गगनादावभावादिति भावः ॥ **प्रयत्नेति** ॥ पक्षैकदेशे वर्णे विपक्षैकदेशे गगनादावभावादिति भावः ॥ **अपदात्मकत्वादिति** ॥ पदात्मके पक्षैकदेशे अभावेऽपि वर्णादौ सत्त्वात् आकाशविशेषगुणत्वहीने विपक्षे सर्वत्र सत्त्वाच्च इति भावः ॥ २२-२ ॥

(श्री. टि.) ॥ **प्रथम इति** ॥ पक्षविपक्षव्यापक इत्यर्थः ॥ **प्रमेयत्वादिति** ॥ पक्षातिरिक्तस्थले कुत्राप्याकाशविशेषगुणत्वस्याभावात् सपक्षाभावः । पक्षविपक्षव्यापी चायं हेतुरिति द्रष्टव्यम् ॥ **द्वितीय इति** ॥ असति सपक्षे पक्षव्यापको विपक्षैकदेशवृत्तिर्यथेत्यर्थः । 'प्रत्यक्षत्वात्' इत्यादिहेतुत्रयेऽपि 'शब्द आकाशविशेषगुणः' इतिप्रतिज्ञाऽनुवृत्तिर्द्रष्टव्या । 'प्रत्यक्षत्वात्' इतिहेतुः पक्षव्यापकः । आकाशविशेषगुणत्वशून्ये

(श्री. टि.) घटादौ सत्त्वेऽपि परमाणुधर्माधर्मादौ अतीन्द्रियमात्रे अभावात् विपक्षैकदेशवृत्तिर्द्रष्टव्यः ॥ तृतीय इति ॥ असति सपक्षे पक्षविपक्षैकदेशवृत्तिरित्यर्थः ॥ प्रयत्नेति ॥ अयं च हेतुर्ध्वन्यात्मकशब्दे सत्त्वेऽप्युक्तरीत्या वर्णात्मकशब्देऽभावात् पक्षैकदेशवृत्तिः । आकाशविशेषगुणत्वाभाववति घटादौ सत्त्वेऽपि परमाण्वादावभावात् विपक्षैकदेशवृत्तिः ॥ चतुर्थ इति ॥ असति सपक्षे पक्षैकदेशवृत्तिर्विपक्षव्यापक इत्यर्थः ॥ अपदात्मकत्वादिति ॥ अयं च हेतुर्ध्वन्यात्मकशब्दे सत्त्वेऽपि विभक्त्यन्तवर्णानामेव पदत्वेन वर्णात्मकशब्दे अभावात् पक्षैकदेशवृत्तिः । आकाशविशेषणगुणत्वाभाववति सर्वत्र जगति सत्त्वात् विपक्षव्यापक इत्यवधेयम् ॥ २२-२ ॥

### अनैकान्तिकः

(टी.) पक्षत्रयवृत्तिरनैकान्तिकः । सोऽपि बहुविधः । तत्र पक्षत्रयव्यापको यथा । 'शब्दोऽनित्यः प्रमेयत्वात्' इति । पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा 'प्रत्यक्षत्वात्' इति । पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथा 'अयं गौर्विषाणित्वात्' इति । पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा 'नायं गौर्विषाणित्वात्' इति । पक्षत्रयैकदेशवृत्तिर्यथा 'पृथिवी नित्या प्रत्यक्षत्वात्' इति । पक्षसपक्षैकदेशवत्तिर्विपक्षव्यापको यथा 'आत्ममनसी द्रव्ये अमूर्तत्वात्' इति । पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा 'आत्ममनसी न द्रव्ये अमूर्तत्वात्' इति । सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा 'आकाशात्ममनांसि[1] द्रव्याणि क्षणिकविशेषगुणरहितत्वात्' इति ॥ २२-३ ॥

(रा. टि.) ॥ पक्षत्रयेति ॥ पक्षसपक्षविपक्षेष्वित्यर्थः ॥ प्रत्यक्षत्वादिति ॥ शब्दानित्यत्वे साध्ये सपक्षेष्वनित्येषु विपक्षेषु नित्येषु च सर्वत्र प्रत्यक्षत्वस्याभावात् इति भावः । अयमिति पिण्डविशेषनिर्देशः । गोत्वावच्छिन्ने सर्वत्र पक्षे सपक्षे सत्त्वात् गोत्वहीने महिषादौ सत्त्वेपि अश्वादावभावात् इति भावः ॥ अयं न गौरिति ॥ महिषस्य[2] गोत्वे साध्ये पक्षे विपक्षे गोत्वावच्छिन्ने च सर्वत्र विषाणित्वस्य सत्त्वात् सपक्षे गोत्वहीने सर्वत्रासत्त्वात् इति भावः ॥ प्रत्यक्षत्वादिति ॥ तस्य नित्येष्वनित्येषु च सर्वत्राभावात् इति भावः ॥ अमूर्तत्वादिति ॥ तस्य पक्षैकदेशे मनसि सपक्षैकदेशे भूतचतुष्टये चाभावात् द्रव्यत्वहीने विपक्षे गुणकर्मादौ सर्वत्राभावात्[3] इति भावः ॥ क्षणिकविशेषेति ॥ अस्य हेतोः पक्षैकदेशे मनसि भावेऽप्यात्माकाशयोरभावात् अद्रव्ये गुणकर्मादौ सर्वत्राभावात्[4] विपक्षे द्रव्ये च सर्वत्राभावात्[5] इति भावः । अत एव तादृशगुणवतोरात्माकाशयोर्द्वयोरपि पक्षकोटिप्रवेशः कृतः ॥ २२-३ ॥

---

[1] रा. मनांसि न द्रव्याणि. [2] हिषस्यागोत्वे. [3] सर्वत्र भावात्. [4] सर्वत्र भावात्. [5] सर्वत्र भावादिति.

(श्री. टि.) अथानैकांतिकं लक्षयति ॥ **पक्षत्रयवृत्तिरिति** ॥ पक्षाऽदित्रयवृत्तिरित्यर्थः ॥ **प्रमेयत्वादिति** ॥ अस्य हेतोः पक्षाऽदित्रयव्यापकत्वं केवलान्वयित्वात् स्फुटमेव ॥ **प्रत्यक्षत्वादिति** ॥ अत्र 'शब्दोऽनित्यः' इति प्रतिज्ञाऽनुवृत्तिर्द्रष्टव्या । अयं च हेतुः पक्षव्यापकः । अनित्यत्ववति घटादौ सत्त्वेऽपि धर्मादावभावात् सपक्षैकदेशवृत्तिः । अनित्यत्वाभाववति सामान्ये सत्त्वेऽपि परमाण्वादावभावात् विपक्षैकदेशवृत्तिश्चेति ज्ञातव्यम् । अयं पुरोवृत्तिः । गौः गोरूपपदार्थः ॥ **विषाणित्वादिति** ॥ अयं च हेतुः[1] पक्षव्यापकः । गोत्वाभाववति महिषादौ सत्त्वेऽपि घटादावभावाद्विपक्षैकदेशवृत्तिरित्यर्थः ॥ **नायं गौर्विषाणित्वादिति** ॥ अयं च हेतुः[2] पक्षव्यापकः । गोत्वाभाववति महिषादौ सत्त्वेऽपि अश्वादावभावात् सपक्षैकदेशवृत्तिः ॥ **प्रत्यक्षत्वादिति** ॥ अयं च हेतुः कार्यरूपपृथिव्यां सत्त्वेऽपि परमाणुरूपायामभावात् पक्षैकदेशवृत्तिः । तथा नित्यत्ववति सामान्ये सत्त्वेऽपि गगनादावभावात् सपक्षैकदेशवृत्तिः । नित्यत्वाभाववति घटादौ सत्त्वेऽपि धर्मादावभावाद्विपक्षैकदेशवृत्तिश्चेत्यर्थः ॥ **अमूर्तत्वादिति** ॥ इयत्तावच्छिन्नपरिमाणशून्यत्वादित्यर्थः । अयं च हेतुरात्मनि सत्त्वेऽपि मनस्यभावात् पक्षैकदेशवृत्तिः । द्रव्ये गगनादौ सत्त्वेऽपि घटादावभावात् सपक्षैकदेशवृत्तिः । द्रव्यभिन्ने वस्तुनि गुणस्यैवाभावेन निरुक्तहेतोः सत्त्वाद्विपक्षव्यापकः ॥ **अमूर्तत्वादिति** ॥ उक्तरीत्या पक्षैकदेशवृत्तिरयं हेतुर्द्रव्यत्वाभावशून्ये गगने सत्त्वेऽपि घटादावभावात् विपक्षैकदेशवृत्तिः । द्रव्यत्वाभाववति सर्वत्र सत्त्वात् सपक्षव्यापकश्चेत्यर्थः ॥ **क्षणिकेति** ॥ अयं हेतुः पृथिव्यादिद्रव्यषट्कवृत्तित्वात् सपक्षव्यापकः । तथा द्रव्यभिन्ने गुणादौ गुणस्यैवाभावेनोक्तहेतोः सत्त्वात् विपक्षव्यापकः । तथा अस्य हेतोर्मनसि सत्त्वेऽपि शब्दबुद्धिरूपक्षणिकविशेषगुणवतोराकाशात्मनोरभावात् पक्षैकदेशवृत्तिरित्यर्थः ॥ २२ ३ ॥

### अनध्यवसितः

**(टी.) साध्यासाधकः पक्ष एव वर्तमानो हेतुरनध्यवसितः । स चानेकप्रकारः । तत्राविद्यमानसपक्षविपक्षः पक्षव्यापको यथा 'सर्वमनित्यं प्रमेयत्वात्' इति । पक्षैकदेशवृत्तिर्यथा 'कार्यत्वात्' इति । विद्यमानसपक्षविपक्षः पक्षव्यापको यथा 'शब्दो नित्यः आकाशविशेषगुणत्वात्' इति । तदेकदेशवृत्तिर्यथा 'सर्वं द्रव्यमनित्यम् क्रियावत्वात्' इति । [3]विद्यमानविपक्षोऽविद्यमानसपक्षः पक्षव्यापको यथा 'सर्वं [4]कार्यमनित्यं उत्पत्तिमत्वात्' इति । पक्षैकदेशवृत्तिर्यथा 'सावयवत्वात् इति ।**

**एते चासिद्ध्यादयः उभयान्यतरसम्मत्या द्वेधा भवन्ति । विरुद्धादित्रयस्यासिद्धसाङ्कर्येऽपि उभयव्यवहारविषयत्वादविरोधः ॥ २२ ४ ॥**

---

[1] पक्षसपक्षव्यापकः । [2] पक्षविपक्षव्यापकः । [3] रा. अविद्यमानविपक्षो विद्यमानसपक्षः [4] रा. कार्यं नित्यम्.

(रा. टि.) ॥ तदेकदेशेति ॥ पक्षैकदेशेत्यर्थः । विद्यमानसपक्षविपक्षेत्यनुषङ्गः । क्रियावत्त्वस्य पक्षैकदेशे भूतचतुष्टये मनसि च भावात् । अनित्यस्य गुणकर्मादेः नित्यस्य चात्मादेः सत्त्वेन विद्यमानसपक्षविपक्षत्वमिति भावः । 'सर्वं कार्यं नित्यम्' इति नित्यस्य गगनादेः सपक्षत्वेऽप्यनित्यत्वं[1] पक्षीकृतमिति विपक्षाभाव इति भावः ॥ पक्षैकदेशेति ॥ विद्यमानसपक्षोऽविद्यमानविपक्ष इत्यनुषज्यते । सावयवत्वस्य गुणकर्मादौ पक्षैकदेशेऽभावादिति भावः ।

॥ असिद्ध्यादय इति ॥ चत्वार इत्यर्थः ॥ द्वेधा भवन्तीति ॥ यथा 'शब्दोऽनित्यश्चाक्षुषत्वात्' इत्यस्य नित्यत्वानित्यत्ववादिनोरुभयोरपि सम्मत्याऽसिद्धो हेतुः, गुणत्वात्' इतिहेतुर्द्रव्यत्ववादिन एवासिद्धो नोभयोः इत्यादि ज्ञेयमिति भावः ॥ असिद्धसाङ्कर्येऽपीति ॥ 'नित्यः शब्दः कार्यत्वात्' इत्यत्र नित्यत्ववादिनो मते कार्यत्वस्यासिद्धेः, तथा पक्षैकदेशवृत्तीनां विरुद्धादीनां भागासिद्धिसाङ्कर्यादिति भावः । 'उपधेयसाङ्कर्येऽपि तत्तदुपाधेरसाङ्कर्याददोषः' इति तार्किकाः ॥ २२-४ ॥

(श्री. टि.) अथानध्यवसितं लक्षयति ॥ साध्यासाधक इति ॥ व्यतिरेक्यनुमानव्यावृत्त्यर्थं साध्यासाधक इत्युक्तम् । स्वरूपासिद्धव्यावृत्तये पक्षे वर्तमान इत्युक्तम् । साधारणानैकान्तिकव्यवच्छेदार्थम् अवधारणमिति द्रष्टव्यम् । अयमेव असाधारणानैकान्तिक इत्युच्यते । यथाऽऽहुः,

व्यतिरेकादनैकान्तः पक्षमात्रान्वयः परः । इति ।

॥ प्रमेयत्वादिति ॥ अत्र सर्वस्यापि पक्षत्वेन सपक्षविपक्षाभावो द्रष्टव्यः । कार्यत्वात् इत्यत्रापि 'सर्वमनित्यम्' इति प्रतिज्ञैव द्रष्टव्या । पक्षीभूते घटादौ कार्यत्वहेतोः सत्त्वेऽपि गगनादावभावात् पक्षैकदेशवृत्तित्वम् ॥ आकाशविशेषगुणत्वादिति ॥ अयं च हेतुर्गगनादेः सपक्षस्य,घटादेर्विपक्षस्य सत्त्वात् विद्यमानसपक्षविपक्षः । तार्किकमते ध्वन्यात्मके वर्णात्मके च शब्दे सत्त्वात् पक्षव्यापक इत्यर्थः ॥ तदेकदेशवृत्तिरिति ॥ पक्षैकदेशवृत्तिरित्यर्थः । अत्र रूपादिकं सपक्षः घटत्वादिसामान्यं विपक्ष इति मन्तव्यम् ॥ क्रियावत्त्वादिति ॥ अस्य हेतोः पृथिव्यादिचतुष्टये मनसि च सत्त्वेऽपि गगनादिविभुचतुष्टयेऽभावात् पक्षैकदेशवृत्तित्वं द्रष्टव्यम् ॥ उत्पत्तिमत्त्वादिति ॥ अनित्यत्वे साध्ये नित्यं गगनादिकं विपक्षः । सर्वस्यापि कार्यस्य पक्षत्वात् सपक्षाभावः । सर्वस्मिन्कार्ये उत्पत्तिमत्त्वस्य सत्त्वात् पक्षव्यापकोऽयं हेतुरिति द्रष्टव्यम् ॥ सावयवत्वादिति ॥ 'सर्वं कार्यमनित्यम्' इति प्रतिज्ञाऽनुवृत्तिरत्रापि द्रष्टव्या । सावयवत्वहेतोर्द्व्यणुकादौ कार्यद्रव्ये सत्त्वेऽपि कार्ये गुणादावभावात् पक्षैकदेशवृत्तित्वं द्रष्टव्यम् ॥ एते चेति ॥ असिद्ध्यादयश्चत्वार इत्यर्थः ॥ उभयान्यतरसंमत्येति ॥ वादिप्रतिवाद्युभयसंमत्या अन्यतरसंमत्या चेत्यर्थः ।

---

[1] त्यनित्यं सर्वं पक्षी.

(श्री. टि.) ननु विरुद्धानैकान्तिकानध्यवसितानां पृथग्घेत्वाभासत्वं विरुद्धम् असिद्धसाङ्कर्यात् । तथा हि 'पृथिवी नित्या कार्यत्वात्' इति विरुद्धस्य आत्ममनसी न द्रव्ये अमूर्तत्वात्' इत्यनैकान्तिकस्य 'सर्वं द्रव्यमनित्यं क्रियावत्त्वात' इत्यनध्यवसितस्य च हेतोः पक्षैकदेशवृत्तित्वेन भागासिद्धत्वात् इत्यत आह ॥ विरुद्धादित्रयस्येति ॥ उभयव्यवहारेति ॥ विरुद्धादिव्यवहारविषयत्वात् असिद्धव्यवहारविषयत्वाच्च न पृथग्घेत्वाभासत्वविरोध इत्यर्थः ।

नन्वेवमुभयव्यवहारविषयत्वे विनिगमकाभावात् कथमुद्भावनं कार्यमिति चेन्न । विरुद्धादिहेतुषु विरुद्धत्वादिकम् असिद्धत्वं चास्ति । तत्र यत् आदौ परिस्फुरति तस्यैवोद्भावनीयत्वादिति भावः ॥२२-४ ॥

### कालात्ययापदिष्टः

(टी.) प्रमाणबाधितविषयः कालात्ययापदिष्टः । सोऽप्यनेकविधः । तत्र प्रत्यक्षबाधितो यथा 'अग्निरनुष्णः पदार्थत्वात्' इति। प्रत्यक्षबाधितैकदेशो यथा 'जलानलौशी पदार्थत्वात्' इति। अनुमानबाधितो यथा 'देवदत्तश्चक्षूरहितः पुरुषत्वात्' इति । अनुमानबाधितैकदेशो यथा 'देवदत्तश्चक्षुर्विषाणरहितः पुरुषत्वात्' इति । आगमबाधितो यथा 'सुरा ब्राह्मणेन पेया द्रवद्रव्यत्वात् इति । मबाधितैकदेशो यथा 'सुरासोमौ ब्राह्मणेन पेयौ द्रवद्रव्यत्वात्' इति ॥ २२-५ ॥

(रा. टि.) ॥ चक्षूरहित इति ॥ चक्षुष्मत्त्वस्य रूपादिज्ञानरूपकार्यलिङ्गानुमानसिद्धत्वात् इति भावः ॥ ब्राह्मणेन पेयेति ॥ 'न सुरां पिबेत्' इत्यागमेन तन्निषेधात्' इति भावः ॥ २२-५ ॥

(श्री. टि.) अथ कालात्ययापदिष्टं लक्षयति ॥ प्रमाणबाधितविषय इति ॥ प्रमाणबाधितसाध्यक इत्यर्थः ॥ अनुमानबाधित इति ॥ विमतश्चक्षुष्मान् रूपज्ञत्वात्' इत्यनुमानबाधित इत्यर्थः ॥ आगमबाधित इति ॥ 'न सुरां पिबेत्' इत्याद्यागमबाधित इत्यर्थः ॥ २२-५ ॥

### प्रकरणसमः

(टी.) स्वपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः । यथा 'विमतं मिथ्या दृश्यत्वात्' इति । सत्यत्वेऽप्यस्य प्रयोक्तुं शक्यत्वात् । उभयत्र त्रैरूप्यञ्च वादिप्रतिवादिनोराभिमानिकमिति नासम्भवः ॥ २२-६ ॥

(रा. टि.) ननु कथमेकस्य स्वपरक्षसिद्धौ त्रैरूप्यं सम्भवेत् ? मिथ्यात्वपक्षे सपक्षभूते शुक्तिरूप्ये हेतोः सत्त्वेन भाव्यत्वात्, सत्यत्वपक्षे च शुक्तिरूप्यस्य विपक्षत्वेन ततो व्यावृत्त्या भाव्यत्वात्' इत्यत आह ॥ उभयत्रेति ॥ शुक्तिरूप्ये हेतोः सत्त्वमिति मिथ्यावादिनोऽभिमानः सत्त्ववादिनो नेत्यभिमानः इति नासम्भव इत्यर्थः । अन्यथा सत्प्रतिपक्षेऽपि स्वपरपक्षयोर्व्याप्तिमत्त्वं हेतोरसम्भवि स्यात्' इति भावः ॥ २२-६ ॥

(श्री. टि.) अथ प्रकरणसमं लक्षयति ॥ स्वपरपक्षेति ॥ त्रिरूप इति ॥ पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षात् व्यावृत्तिरिति रूपत्रयोपेतमित्यर्थः ॥ विमतं मिथ्येति ॥ दृश्यत्वहेतोः पक्षे सत्त्वात् मिथ्याभूते शुक्तिरूप्ये[1] सत्त्वात् विपक्षात् ब्रह्मणो व्यावृत्तत्वाच्च मायिमते त्रैरूप्यं द्रष्टव्यम् । तथा 'विमतं सत्यं दृश्यत्वात्' इति प्रयोगेऽपि दृश्यत्वहेतोः पक्षे सत्त्वात् सपक्षे ब्रह्मणि सत्त्वात् विपक्षाच्छुक्तिरूप्याद्व्यावृत्तत्वाच्च तत्त्ववादिमते त्रैरूप्यं द्रष्टव्यम् । ननु दृश्यत्वहेतोः कथम् उभयत्र त्रैरूप्यम् ? एकस्मिन् ब्रह्मणि दृश्यत्वहेतोरभावभावयोः एकस्मिन्नेव [2]रूप्ये दृश्यत्वतदभावयोश्च विरुद्धत्वेन लक्षणस्यासम्भवापत्तेः इत्यत आह ॥ उभयत्रेति ॥ स्वपरपक्षयो-रित्यर्थः ॥ २२-६ ॥

### सत्प्रतिपक्षः

(टी.) समबलतयाऽभिमतप्रमाणविरुद्धः सत्प्रतिपक्षः । तत्र प्रत्यक्षविरुद्धो यथा 'विमतः शङ्खः शुक्लः शङ्खत्वात्' इत्यत्र प्रत्यक्षात् 'पीतः किं न स्यात्'? इति । अनुमानविरुद्धो यथा 'आकाशं नित्यं अमूर्तद्रव्यत्वात्' इत्यत्र 'आकाशमनित्यं अस्मदादिबाह्येन्द्रियग्राह्यगुणाश्रयत्वात्' इत्यनुमानात् अनित्यमपि किं न स्यात् ? इति । आगमविरुद्धो यथा 'प्रधानं न स्वतन्त्रं जडत्वात्' इत्यत्र कापिलागमात् 'स्वतन्त्रमपि किं न स्यात् ?' इति ॥ २२-७ ॥

(रा. टि.) ॥ प्रत्यक्षात् पीतोऽपि किं न स्यात् ? इति ॥ कस्यचित्पीतनयनस्य शङ्खेऽपि तथा प्रतीतेर्भावेन प्रत्यक्षात् इत्युक्तम् । तस्य [3]शङ्खत्वशुक्लप्रतीतिसमबलत्वाभावेऽपि आभिमानिकं तदस्तीति भावः । एवमग्रेऽपि ॥ २२-७ ॥

(श्री. टि.) अथ सत्प्रतिपक्षं लक्षयति ॥ समबलतयेति ॥ प्रकरणसमसत्प्रतिपक्षयोर्भेदश्च तेनैव हेतुना साध्याभावसाधनं चेत् प्रकरणसमः हेत्वन्तरेण चेत् सत्प्रतिपक्ष इत्यग्रिमग्रन्थ एव स्पष्टः ॥ २२-७ ॥

---

[1] सपक्षे सत्त्वात्.  [2] शुक्तिरूप्ये.  [3] शङ्खधवलत्वप्रतीति.

उदाहरणाभासाः

(टी.) उदाहरणरूपेषु कैश्चिद्युक्ताः कैश्चिद्रहिता उदाहरणाभासाः। ते चानेकप्रकाराः। तत्र साधर्म्योदाहणे तावत् साध्यवैकल्यम् यथा, मनोऽनित्यं मूर्तत्वात् 'यन्मूर्तं तदनित्यं यथा परमाणुः' इति। साधनवैकल्यम् यथा 'यथा कर्म' इति। उभयवैकल्यम् यथा 'यथाऽऽकाशम्' इति। आश्रयहीनम् यथा 'यथा शशविषाणम्' इति। अव्याप्त्यभिधानम् यथा 'मूर्तत्वात् घटवत्' इति। विपरीतव्याप्त्यभिधानम् यथा 'यदनित्यं तन्मूर्तम् यथा घटः' इति। वैधर्म्योदाहरणे साध्याव्यावृत्तिर्यथा 'यदनित्यं न भवति तत् मूर्तं न भवति यथा कर्म' इति। साधनाव्यावृत्तिर्यथा 'यथा परमाणुः' इति। उभयाव्यावृत्तिर्यथा 'यथा घटः' इति। आश्रयहीनत्वम् पूर्ववत्। अव्याप्त्यभिधानम् यथा 'मूर्तत्वात् आकाशवत्' इति। विपरीतव्याप्त्यभिधानम् यथा 'यन्मूर्तं न भवति तदनित्यं न भवति यथाऽऽकाशम्' इति।

(रा. टि.) ॥ उदाहरणरूपेष्विति ॥ साधनवत् साध्यवत्त्वादिरूपेष्वित्यर्थः[1] ॥ मूर्तत्वादिति ॥ परिच्छिन्नपरिमाणवत्त्वादित्यर्थः। अव्याप्त्यभिधानं व्याप्त्यभिधानाभावः। वैधर्म्योदाहरणे व्यतिरेकव्याप्त्युदाहरणे। दृष्टान्ते साध्यसाधनव्यावृत्त्यादिना भाव्यम्। तदभावे चोदाहरणाभास इति भावेनाह ॥ साध्याव्यावृत्तिर्यथेत्यादिना ॥ य । कर्मेति ॥ तस्यानित्यत्वात् इति भावः।

(श्री. टि.) उदाहरणरूपेष्विति ॥ असन्दिग्धतया साध्यसाधनयोर्दृष्टान्ते सत्त्वम् इत्यादिविवक्षितोदाहरणरूपेष्वित्यर्थः। उदाहरणरूपेषु कैश्चिद्रहिता इत्येवोक्ते घटादावतिव्याप्तिः स्यात्। तत्परिहारायाऽऽद्यं विशेषणम्। सदुदाहरणव्यावृत्त्यै द्वितीयमिति बोध्यम्। साधनवैकल्यं यथा 'यथा कर्म' इत्याद्युत्तरत्रापि 'मनोऽनित्यं मूर्तत्वात्' इत्यनुमानमेव द्रष्टव्यम् ॥ साध्याव्यावृत्तिर्यथेति ॥ वैधर्म्योदाहरणे दृष्टान्ते साध्यव्यावृत्तिर्गुणः तदव्यावृत्तिर्दोष इत्यवधेयम्।

(टी.) सन्दिग्धसाध्यो यथा 'अयं महाराज्यं करिष्यति सोमवंशोद्भूतत्वात् राजपुत्रान्तरवत्' इति। सन्दिग्धसाधनो यथा 'अयं न सर्वज्ञः रागादिमत्वात् रथ्यापुरुषवत्' इति। सन्दिग्धोभयो यथा 'देवदत्तपुत्रः[2] स्वर्गं गमिष्यति धर्मवत्वात् देवतान्तरवत्[3]' इति। सन्दिग्धाश्रयो यथा 'यथा भविष्यद्देवदत्तपुत्रः' इति। एतेष्वेव प्रयोगेषु सन्दिग्धसाध्याव्यावृत्तो यथा 'यथा अन्यो राजपुत्रः' इति। सन्दिग्धसाधनाव्यावृत्तो यथा 'यथा समस्तशास्त्राभिज्ञः' इति। सन्दिग्धोभयाव्यावृत्तो यथा 'यथा रथ्यापुरुषः' इति। सन्दिग्धाश्रयः पूर्ववदिति ॥ २३ ॥

---

[1] साधनवत्. [2] अयं देवदत्तपुत्रः [3] देवदत्तपुत्रान्तरवत्.

(रा. टि.) ॥ सन्दिग्धसाध्य इति ॥ साधर्म्योदाहरणाभास इत्यनुषज्यते। एवमग्रेऽपि। रागादिमत्त्वस्य रथ्यापुरुषे अनिश्चयात् इति भावः। सन्दिग्धसाध्येत्यादौ वैधर्म्योदाहरणाभास इत्यन्वेति ॥ अन्यो राजपुत्र इति ॥ तत्र महाराज्यकरणं सन्दिग्धमिति भावः ॥ पूर्ववदिति ॥ भविष्यद्देवदत्तपुत्र इत्यर्थः ॥ २३ ॥

(श्री. टि.) सन्दिग्धसाध्य इत्यतः पूर्वं साधर्म्योदाहरण इति शेषः ॥ रागादीति ॥ रथ्यापुरुषनिष्ठरागादेर्निश्चेतुमशक्यत्वात् इत्यर्थ । यथा भविष्यद्देवदत्तपुत्र इत्ययं दृष्टन्तः पूर्वोक्तरागादिमत्त्वानुमाने धर्मवत्त्वानुमाने वा द्रष्टव्यः। एतेष्वेव प्रयोगेषु इत्यतः पूर्वं वैधर्म्योदाहरण इति शेषः। अयं महाराज्यं करिष्यति इत्यादिष्वेव त्रिषु प्रयोगेष्वित्यर्थः ॥ पूर्ववदिति ॥ धर्मवत्त्वेन देवदत्तपुत्रस्य स्वर्गगमनसाधने भविष्यद्देवदत्तपुत्रो दृष्टान्तो द्रष्टव्य इत्यर्थः। यद्यप्येतत् सन्दिग्धसाध्यव्यावृत्त्याद्युदाहरणं सन्दिग्धसाध्योदाहरणकथनेनैव[1] सिद्धम् । सन्देहस्योभयकोटिकत्वात्, तथापि तस्यैव विशदनार्थमियमुक्तिरिति ज्ञातव्यम् ॥ २३ ॥

तर्कपराहतिः

(टी.) तर्कपराहतिश्च प्रागुदिताऽऽत्माश्रयाऽऽदिप्रसङ्गदुष्टत्वमिति ॥ २४ ॥

(रा. टि.) ॥ प्रागुदितेति ॥ आत्माश्रयान्योन्याश्रयेत्यादिवाक्यव्याख्यावसरे इति भावः ॥ २४ ॥

(श्री. टि.) ननु क्रमप्राप्तं तर्कपराहतिरूपं निग्रहस्थानं कस्माद्विविच्य न प्रदर्श्यत इत्यत आह ॥ तर्कपराहतिश्चेति ॥ प्रागिति ॥ आत्माश्रयान्योन्याश्रयेत्यादिनेत्यर्थः। तथा च भगवत्पादैरेव विविच्य तस्याः प्रदर्शितत्वात् नास्माभिः प्रदर्श्यत इति भावः ॥ २४ ॥

(टी.) अनुकूलतर्काभावे तु उपाधिव्यभिचारशङ्कया व्याप्यत्वासिद्धिर्भवति ।

यद्यप्युदाहरणाभासादयो हेत्वाभासेष्वन्तर्भवन्ति। तथापि तद्रूपेणोद्भाव्यत्वात् पृथगुपादानमिति।

एतेषु यानि निग्रहस्थानानि तत्वतस्तानि विरोधादिष्वेवान्तर्भूतानि। वक्तृदोषाणां प्रतिज्ञाहान्यादीनां कथमुपपत्तिवचनदोषेषु विरोधादिष्वन्तर्भावः? इत्यत उक्तम् ॥ संवादानुक्तियुता इति ॥ शक्तिवैकल्यात् विप्रतिपन्नप्रमेयाङ्गीकारः संवादः। वक्तव्ये प्राप्ते शक्तिवैकल्यादेव तूष्णीम्भावोऽनुक्तिरिति ।

[1] साध्याद्युदाहरण.

(रा. टि.) नन्वनुकूलतर्काभावोऽपि पञ्चविंशन्निग्रहस्थानतया कुतो न गणनीयः? इत्यतो हेत्वाभास एवान्तर्भवति इत्याह ॥ **अनुकूलेति** ॥ उपाधिव्यभिचारयोः शङ्कयेत्यर्थः ॥ **उदाहरणाभासादय इति** ॥ आदिपदेन प्रतिज्ञाहान्यादिकतिपयनिग्रहस्थानग्रहः ।

**संवादानुक्तियुतास्त एव निग्रहाः** इति प्रागुपात्तवाक्ये त एव विरोधासङ्गतिन्यूनाऽधिक्यरूपा एव **निग्रहाः** इति कस्मात् उक्तम्? इत्यतः परोक्ताशेषनिग्रहस्थानानां विरोधाऽदिचतुष्टयेनैव संग्रहः इति प्राक् अवतारितम् । तानि कानि? इत्यतः अशेषनिग्रहस्थानानि व्यक्तीकृत्य अधुना **त एव निग्रहाः** इत्यंशतात्पर्यम् आह ॥ **एतेष्विति** ॥ **यानि निग्रहस्थानानीति** ॥ प्रतिज्ञाऽन्तरहेत्वन्तराऽश्रयासिद्ध्याद्यन्यानीति भावः । **यद्वा अन्यच्च** इत्यत्र वक्ष्यमाणदिशा अवयवविपर्यासाऽद्यन्यानीत्यर्थः । इतिशब्दः तद्वाक्यखण्डन-[1]तात्पर्योक्तिसमाप्तौ । **संवादोऽनुक्तियुतः** इत्यंशोक्तितात्पर्यम् व्यनक्ति **वक्तृदोषाणामिति** । अन्तर्भावप्रकारमग्रे विवरिष्याम इति भावः ।

(श्री. टि.) ननु अनुकूलतर्काभावाख्यमप्येकं निग्रहस्थानमस्ति । तत्कस्मान्न लक्ष्यते? इत्यत आह ॥ **अनुकूलतर्काभावे त्विति** ॥ **उपाधिव्यभिचारशङ्कयेति** ॥ उपाधिशङ्कया तदायत्तव्यभिचारशङ्कया चेत्यर्थः । तथा च अनुकूलतर्काभावे

> अनुकूलेन तर्केण सनाथे सति साधने ।
> साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भवः ॥

इत्युक्तप्रकारेणोपाध्यादिशङ्कानिरासासम्भवादिति भावः ॥ **व्याप्यत्वासिद्धिर्भवतीति** ॥ निरुपाधिकसम्बन्धरूपव्याप्त्यभावादिति भावः । तथा च हेत्वाभासान्तर्भूतत्वात् न पृथङ्निग्रहस्थानमित्याशयः । यथाऽऽहुः 'अपरस्तूपाधिसद्भावात' इति ॥ **यद्यपीति** ॥ यथाऽऽहुः

> साधारणो विरुद्धो वा दृष्टान्ते साध्यवर्जिते ।
> असाधारणता हेतोस्तस्मिन् साधनवर्जिते ॥ इति ।

अतो नोदाहरणाभासरूपं निग्रहस्थानमपि पृथक् परिसङ्ख्येयमित्यर्थः ॥ **तद्रूपेणेति** ॥ उदाहरणदोषत्वेनेत्यर्थः । साध्यवैकल्याद्युदाहरणाभासोपजीवनेनैवानैकान्त्यविरुद्धादिप्रतीतेरुदाहरणाभासानामेव पुरःस्फूर्तिकत्वात् पृथङ्निग्रहस्थानत्वेनोपादानं युक्तमिति भावः ।

---

[1] खण्डतात्पर्योक्ति.

(श्री. टि.) एतेषु चतुर्विंशतिषु निग्रहस्थानेषु मध्य इत्यर्थः ॥ यानीति ॥ प्रतिज्ञान्तरहेत्वन्तराप्राप्तकालाश्रयासिद्धिव्यधिकरणासिद्धिरूपहेत्वाभासादिव्यतिरिक्तानीत्यर्थः। तत्त्वतो वस्तुगत्या। इदं च पद्धत्युक्तरीत्या द्रष्टव्यम् ॥ इत्यत उक्तमिति ॥ संवादानुक्तिरूपयोर्वक्तृदोषयोरपि द्वयोः सत्त्वात् तत्र तेषामन्तर्भावो युक्त इत्याशयेनोक्तमित्यर्थः।

(टी.) यदुक्तम् त्रीण्येव प्रमाणानीति तदयुक्तम्। साक्षिणः पृथक्प्रमाणत्वात् इत्यतस्तस्य प्रत्यक्षान्तर्भावज्ञापनार्थम् सिंहावलोकनन्यायेन तद्विभागमाह

### प्रत्यक्षकरणविभागः

## प्रत्यक्षं सप्तविधम्

साप्तविध्यं कथम्? इत्यत आह

## साक्षिषडिन्द्रियभेदेन

### साक्षिप्रामाण्यम्

द्विविधमिन्द्रियम्। प्रमातृस्वरूपं तदतिरिक्तश्चेति। तत्र स्वरूपेन्द्रियं साक्षीऽत्युच्यते। स च ज्ञानरूपः। तस्य आत्मस्वरूपत्वम् तद्धर्माश्च सुखाऽदयो[1] बहिश्चाकाशकालाऽदयोऽपि विषयाः। सुखाऽदीनां भिन्नेन्द्रियविषयत्वे कदाचिदपरोक्षभ्रमविषयताऽपातात्। अनन्यथात्वनियमः साक्षिण एव हि धर्मः न त्वन्यस्य। न च कालाऽदेरसाक्षिविषयत्वम्। रूपाऽद्यभावेन चक्षुराद्यविषयत्वात्। मनसो बहिरस्वातन्त्र्याभ्युपगमात्। अननुसंहितव्याप्तीनामपि प्रतीतेः नानुमानात् तज्ज्ञानम्। जातिबधिराणामप्युपलम्भेन नाऽगमविषयताऽपीति।

अस्वरूपं च षड्विधम्। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमनोभेदात्। एवमिन्द्रियाणां भेदेन तत्संनिकर्षाऽत्मकं प्रत्यक्षमपि सप्तविधमिति।

इदं च न सार्वत्रिकमिति। चतुर्विधं हि प्रत्यक्षम्। ईशलक्ष्मीयोग्ययोगिप्रत्यक्षभेदेन। तत्रेशलक्ष्मीप्रत्यक्षं सर्वदा स्वरूपेन्द्रियसंनिकर्षाऽत्मकमेव। स्वातन्त्र्यपारतन्त्र्याभ्यां तद्विशेषः। योगिनामयोगिनां च आ मुक्तेः उभयविधेन्द्रियसंनिकर्षाऽत्मकम्। तत्र योगिनां देशकालवस्तुस्वभावव्यवहितार्थमपि विषयीकरोति। अयोगिनां तु देशकालाऽद्यव्यवहितमेवेति।

---

[1] श्री. सुखदुःखाऽदयो,

(टी.) द्विविधं चैतत् । अतीतवर्तमानतावच्छिन्नविषयम् । यथा 'सोऽयं घटः' इति प्रत्यभिज्ञा-हेतुसंस्कारसहकृतम्[1] । वर्तमानविषयं च । यथा 'अयं घटः' इत्यादिज्ञानहेतुरिति ।

(रा. टि.) ॥ यदुक्तमिति ॥ अनुप्रमाणम् त्रिविधम् इत्यारभ्य लिङ्गविशेषाः इत्यन्तेन ग्रन्थजातेन इति योज्यम् । आत्मस्वरूपत्वघटनाय आह ॥ ज्ञानरूप इति ॥ यद्वा वक्ष्यमाणनैयायिकलक्षणस्य साक्षिणि अव्याप्तिघटनाय आह ॥ ज्ञानरूप इति ॥ इन्द्रियमात्रत्वे तदयोगात् । तद्धर्माः स्वरूपाऽनन्दपरिमाणाविद्याऽदयः ॥ सुखाऽदय इति ॥ मनोधर्माः । मनश्च ग्राह्यम् । आकाशोऽव्याकृतः । आदिपदेन प्राच्यादिदिग्विशेषाः क्षणलवाऽदिकालविशेषाः तयोः अनन्तपरिमाणम् ज्ञानप्रामाण्याप्रामाण्ये इत्येतत् गृह्यते ॥ भिन्नेन्द्रियेति ॥ स्वरूपातिरिक्तप्राकृतेन्द्रियेत्यर्थः ॥ साक्षिण एव हि धर्म इति ॥ तथा च अनन्यथात्वनियमान्यथानुपपत्त्या सुखाऽदिबुद्धेः साक्षिरूपत्वसिद्धेः इति भावः । परिशेषतः कालाऽदेः साक्षिविषयत्वम् साधयति ॥ न चेति ॥

'आकाशात् वायुः' इति श्रौतक्रमानुरोधात् आह ॥ श्रोत्रेत्यादि ॥ इदं चेति ॥ साप्तविध्यम् न सर्वचेतनसम्बन्धि इत्यर्थः । तत व्यनक्ति ॥ चतुर्विधमित्यादिना ॥ देशकालवस्तुस्वभावव्यवहितेति ॥ देशतः कालतः कुड्याऽदिवस्तुतो व्यवहितार्थम् । स्वभावव्यवहितम् धर्माधर्माऽद्यतीन्द्रियम् ॥ द्विविधश्चैतदिति ॥ योग्ययोगिप्रत्यक्षम् वक्ष्यमाणदिशा द्विविधम् इत्यर्थः । तत् आह ॥ अतीतेति ॥

(श्री. टि.) सुखदुःखाऽदय इत्यत्र आदिपदेन ज्ञानेच्छाप्रयत्नद्वेषभयकृपाविद्याऽदीनाम् एतदभावानाम् अज्ञानाऽदीनाम् आत्मस्वरूपस्य मनसश्च ग्रहणम् । कालाऽदय इत्यत्र आदिपदेन द्व्यणुकपरमाणुप्रकृत्यादीनां ग्रहणम् । ननु सुखाऽदीनां प्रमातृस्वरूपभूतसाक्षिरूपेन्द्रियतो भिन्नेन्द्रियविषयत्वम् किं न स्यात्? इत्यत आह ॥ सुखाऽदीनामिति ॥ भिन्नेन्द्रियेति ॥ प्रमातृस्वरूपभिन्नेन्द्रियेत्यर्थः ॥ भ्रमविषयतेति ॥ भिन्नेन्द्रियाणां कदाचित् दोषयुक्तानां भ्रमजनकत्वस्यापि दर्शनात् भावः ॥ आपातादिति ॥ तथात्वे परीक्षानवस्थायाः दुष्परिहरत्वापत्तेरिति भावः । यथोक्तम् अनुव्याख्याने

न परीक्षाऽनवस्था स्यात् साक्षिसिद्धे त्वसंशयात् । इति ।

साक्षिविषयत्वे तु नायं दोष इत्याह ॥ अनन्यथात्वनियम इति ॥ अर्थाव्यभिचारित्वनियम इत्यर्थः ॥ साक्षिण एव हीति ॥

---

[1] श्री. हेतुः संस्कार

(श्री. टि.) साक्षी निर्दोष एवैकः मदाऽङ्गीकार्य एव नः ।

इत्यादिप्रसिद्धिः हिशब्देन दर्शितेति ज्ञातव्यम् । बहिः कालाऽऽदीनां साक्षिविषयत्वम् उक्तम् । तत् उपपादयितुम् आशङ्कते ॥ न चेति ॥ असाक्षिविषयत्वमिति ॥ साक्षीतरप्रत्यक्षाऽऽदिप्रमाणविषयत्वमित्यर्थः । कुतो न ? इति चेत् , साक्षीतरप्रमाणं कालाऽऽदिग्राहकं प्रत्यक्षं वा स्यात् ? उत अनुमानम् ? यद्वा आगमः ? आद्येऽपि तत् प्रत्यक्षं चक्षुरादिरूपं बाह्यं विवक्षितम् ? उत अन्तरिन्द्रियरूपं मनो वा ? नाऽऽद्य इत्याह ॥ रूपादीति ॥ आदिपदेन उद्भूतस्पर्शाऽऽद्यभावात् न स्पार्शनत्वम् इत्यादि द्रष्टव्यम् । न द्वितीय इत्याह ॥ मनस इति ॥ बहिरस्वातन्त्र्येति ॥ चक्षुराद्यधिष्ठानेनैव बहिःपदार्थविषयकज्ञानजनकत्वेन तज्ज्ञानजनने स्वातन्त्र्याभावात् इत्यर्थः ।

ननु परमाणुम् अहं जानामि ' इतिवत् प्रमाणान्तरोपनीतस्य कालाऽऽदेः मानसप्रत्यक्षत्वम् युक्तम् इति चेन्न । तत्र परमाणूपनायकस्य ' त्रसरेणुः सावयवावयवारब्धः जन्यमहत्त्वाधिकरणत्वात् , ' द्व्यणुकम् स्वापेक्षया स्वल्पपरिमाणद्रव्यारब्धम् कार्यद्रव्यत्वात् घटवत् ' इत्याद्यनुमानस्य सत्त्वात् अत्र तदभावात् इति भावः ।

ननु अस्तु तर्हि तृतीयः पक्षः । तथा हि, कालस्य 'परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गः' इति परोक्तरीत्या दिग्विपरीतपरत्वापरत्वाऽऽदिषट्प्रत्ययानुमेयत्वोपपत्तेः । आकाशस्यापि 'शब्दः अष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति गुणत्वात् ' इत्यनुमानवेद्यत्वोपपत्तेः । प्रकृतेरपि

> भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
> कार्यकारणविभागात् अविभागाद्वैश्वरूप्यस्य ॥

इति साङ्ख्योक्तरीत्या कायकारणविभागाद्यनुमानवेद्यत्वोपपत्तेः इत्यत आह ॥ अननुसंहितव्याप्तीनामिति ॥ व्याप्त्याद्यनुसन्धानरहितानामपि मूर्खाणाम् ' इदानीमागतोऽसि, सर्वत्रास्त्यवकाशः' इत्यादिप्रतीतेरित्यर्थः । अननुभूतव्याप्तिकस्य[1] पुंसोऽनुभूयमाने धर्मिणि व्याप्यधर्मस्य अनुभवात् प्रागनुभूतां व्याप्तिं स्मृतवतो व्याप्यस्य हेतोः पक्षे अनुसन्धानं ह्यनुमानम् । न ह्येतावती अनुमानसामग्री मूर्खाणामस्तीति भावः । ननु अस्तु तर्हि 'कालश्च नित्यः प्रकृतिश्च नित्या, अनादिर्वा अयमाकाशः, प्राणः अथाऽऽकाशः' इत्याद्यागमात् कालाऽऽदीनां सिद्धिः इति चतुर्थः पक्षः इत्यत आह ॥ जातिबधिराणामपीति ॥ एतेन अनुमान्[2]द्युपनीतस्य कालादेः मानसप्रत्यक्षेणैव भानमस्तु इत्यपि परास्तं ज्ञातव्यम् ।

---

[1] अनुभूतव्याप्तिकस्य. [2] मानाद्युपनीतस्य.

(श्री.टि.) अस्वरूपं चेति ॥ इन्द्रियमिति शेषः ॥ श्रोत्रत्वक्चक्षुरित्यादि ॥ महान्ति रूपवन्ति द्रव्याणि, केचित् गुणाः, कर्माणि जातयश्च चक्षुस्त्वचोर्विषयाः । वायुस्पर्शोऽपि त्वचो विषयः । शब्दः श्रोत्रस्य, रसस्तद्विशेषाश्च जिह्वायाः, गन्धस्तद्विशेषाश्च घ्राणस्य, मनसस्तु बाह्येऽन्द्रियाधिष्ठानेन एते सर्वे विषयाः इति पद्धत्युक्तरीत्या द्रष्टव्यम् । नन्वेतदयुक्तम् प्रत्यक्षं सप्तविधम् इत्यर्थेन्द्रियसंनिकर्षरूपप्रत्यक्षस्य सप्तविधत्वं प्रतिज्ञाय साक्षिषडिन्द्रियभेदेन इति इन्द्रियसाप्तविध्योक्तेरसङ्गतत्वात् इत्यत आह ॥ एवमिन्द्रियाणां भेदेनेति ॥ इदं चेति ॥ अस्वरूपेन्द्रियषाड्विध्यकथनमित्यर्थः ॥ न सार्वत्रिकमिति ॥ सर्वपुरुषसाधारणं न भवतीत्यर्थः । कुतः ? इत्यतः ईशलक्ष्म्योस्तदभावात् इत्याह ॥ चतुर्विधं हीति ॥ ननु तर्हि ईशलक्ष्मीप्रत्यक्षयोः साम्यं स्यात् इत्यत आह ॥ स्वातन्त्र्येति ॥ उभयोरपि स्वरूपेन्द्रियसंनिकर्षात्मकत्वसाम्येऽपि स्वसत्ताऽदौ स्वतन्त्रमीशप्रत्यक्षम् तदधीनं लक्ष्मीप्रत्यक्षम् इति तयोर्महान्विशेषोऽस्तीत्यर्थः ॥ उभयविधेति ॥ स्वरूपास्वरूपेत्यर्थः । तर्हि तयोः साम्यमेव स्यात् इत्यत आह ॥ योगिनामिति ॥ प्रत्यक्षमिति वर्तते । मथुराऽदिस्थितं देशव्यवहितम् । अतीताऽदिकं कालव्यवहितम् । पर्वताऽदिपरभागावस्थितं वस्तुव्यवहितम् । धर्माधर्माऽदिकं स्वभावव्यवहितमिति विवेकः ॥ अयोगिनां तु इत्यत्रापि प्रत्यक्षम् इत्यस्यानुवृत्तिः । एतत् अयोगिप्रत्यक्षम् ॥ अतीतेति ॥ अतीतता तत्ता वर्तमानता इदन्ता तदुभयावच्छिन्नार्थविषयम् अतीतत्वाऽदिकं यत्रावच्छेदकत्वेन भासत इत्यर्थः ॥ प्रत्यभिज्ञाहेतुरिति ॥ 'सोऽयं घटः' इत्यादिप्रत्यभिज्ञाहेतुभूतं चाक्षुषं प्रत्यक्षमित्यर्थः । ननु अतीतेन संनिकर्षाभावात् कथं तत् अवभासते ? इत्यत उक्तम् ॥ संस्कारसहकृतमिति ॥ यथा खलु शुक्लहरितपीताऽदिरूपाणां चित्ररूपाम्भकत्वम् यथा च दोषसहकृतानामिन्द्रियाणां विपर्ययहेतुत्वम् तथा संस्कारसचिवानामिन्द्रियाणां प्रत्यभिज्ञाहेतुत्वम् भविष्यतीति न काऽप्यनुपपत्तिरिति भावः ।

### तार्किकाभिमतः प्रत्यक्षकरणविभागः

(टी.) निर्विकल्पकसविकल्पकभेदात् द्विविधं प्रत्यक्षमित्येके । यत् द्रव्यगुणाऽदिस्वरूपमात्रावगाहि न तु तद्विशेषणविशेष्यभावविषयं तत् निर्विकल्पकम् । यथा 'यत्किञ्चिदेतत्' इति, ज्ञानसाधनम्, प्राथमिकम् । सञ्ज्ञागुणकर्मजातिविशिष्टार्थविषयं सविकल्पकम् । यथा 'शुक्लो ब्राह्मणो गच्छति' इति । द्वितीयम् इति ।

### सौगताभिमतः प्रत्यक्षकरणविभागः

निर्विकल्पकमेव प्रत्यक्षमित्यपरे ।

### तार्किकसौगतमतखण्डनम्

तदेतदयुक्तम् । गुणाऽदेर्द्रव्येणात्यन्तभेदस्य निर्विशेषाभेदस्य चाभावेन विशिष्टबोधस्यैव साक्षिसिद्धत्वात् ।

(रा. टि.) ॥ **द्विविधं प्रत्यक्षमिति** ॥ करणभूतमित्यर्थः। एक इत्युक्तया तत्रारुचिं सूचयति । तद्बीजं तु अल्पमग्रे। विस्तरेण तु पद्धतौ तर्कताण्डवे च व्यक्तम् । स्वरूपमात्रेति मात्रपदेन सम्बन्धावगाहनं व्यावर्त्यते इत्याह ॥ **नन्विति** ॥ तस्य कदा जन्म ? इत्यत आह ॥ **प्राथमिकमिति** ॥ सविकल्पकात् पूर्वभावि इत्यर्थः ॥ **सञ्ज्ञेति** ॥ देवदत्तेति नामेत्यर्थः । 'शुक्लोऽयम्' इति गुणविशिष्टप्रत्ययः । 'ब्राह्मणः' इति जातिविशिष्टधीः । 'गच्छति' इति कर्मविशिष्टधीः । सञ्ज्ञाविशिष्टधीस्तु 'देवदत्तोऽयम्' इति ॥ **द्वितीयमिति** ॥ निर्विकल्पकानन्तरभावीत्यर्थः । अथावद्द्रव्यभाविगुणाद्यभिप्रायेण आह ॥ **अत्यन्तमेदस्येति** ॥ भेदाभेद एव तत्रेति भावः । यावद्द्रव्यभाविगुणाद्याशयेन आह ॥ **निर्विशेषेति** ॥

(श्री. (टि.) भगवत्पादोक्तविभागदार्ढ्याय परकीयं प्रत्यक्षविभागं दूषयितुमनुवदति ॥ **निर्विकल्पकेत्यादिना** ॥ यथाऽऽहुः

........................द्विविधं च तत् ।
सविकल्पकमित्येकमपरं निर्विकल्पकम् ॥ इति ।

तदाकारं दर्शयति ॥ **यत्किंचिदेतदिति** ॥ 'किञ्चिदेतत्' इत्याकारकं यत् ज्ञानं तत्साधनं तत्करणं प्राथमिकं प्रथमोद्दिष्टं निर्विकल्पकम् इत्यर्थः । यथा आहुः

अविशिष्टार्थविषयं प्रत्यक्षं निर्विकल्पकम् । इति ।

उक्तञ्च अन्यत्र

अस्ति ह्यालोचनाज्ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ इति ।

**संज्ञेति** ॥ नाम इत्यर्थः । शुक्ल इत्यतः पूर्वं देवदत्तोऽयम्' इति पूरणीयम् । यथाऽऽहुः

नामादिभिर्विशिष्टार्थविषयं सविकल्पकम् । इति ।

**सौगतानां** मतमनुवदति ॥ **निर्विकल्पकमेवेति** ॥ यथा आहुः सौगताः

कल्पनाऽपोढमभ्रान्तं प्रत्यक्षम्................इति ।

अयमाशयः, निर्विकल्पकमेव प्रत्यक्षं प्रमाणम् शुद्धवस्तुरूपव्यक्तिमात्रावगाहित्वेन अबाधितार्थविषयकत्वात् । न तु सविकल्पकम् । तस्य सामान्यविषयकत्वात् सामान्यस्य च पारमार्थिकत्वाभावात् । तदपि तुच्छत्वात् । तुच्छत्वं च प्रमाणनिरस्तविधिभावत्वम् अन्यव्यावृत्त्यात्मकत्वम् वा । न च अनुगतव्यवहारान्यथानुपपत्त्या सामान्यसिद्धिः । तस्य अतद्व्यावृत्त्यैव अन्यथासिद्धेः इति ।

(श्री. टि.) ॥ **तदेतदिति** ॥ मतद्वयमप्ययुक्तमित्यर्थः ॥ **निर्विशेषाभेदस्येति** ॥ अत्यन्ताभेदस्येत्यर्थः ॥ **विशिष्टबोधस्यैवेति** ॥ जात्यादिविशिष्टार्थबोधस्यैव इत्यर्थः । सविकल्पकज्ञानस्यैव इति यावत् । एवकारेण वस्तुमात्रावगाहिनिर्विकल्पकव्यवच्छेदः । तथा हि, स्यादिदं प्रत्यक्षद्वैविध्यकल्पनं निर्विकल्पकमात्रकल्पनं च, यदि किञ्चित् स्वरूपमात्रावगाहिज्ञानं प्रामाणिकं स्यात् । न चैतदस्ति । न तावत् तत्र प्रत्यक्षं प्रमाणम् तस्य अतीन्द्रियत्वाभ्युपगमात् । नापि हानाऽदिकार्येण तदनुमानम् । तस्य सविकल्पकसाध्यत्वात् । नापि 'ज्ञानत्वं निष्प्रकारकत्वसमानाधिकरणं सकलज्ञानवृत्तित्वात् व्यतिरेकेण इच्छात्ववत्' इत्यनुमानम् । अप्रयोजकत्वात् । इच्छात्वव्यवहारत्वानुमितित्वाऽदिकम् पक्षीकृत्यापि प्रयोगसम्भवेन निष्प्रकारकेच्छादिसिद्धिप्रसङ्गात् । आगमस्तु नेष्टो दृष्टो वा । तस्मात् न निर्विकल्पकमस्ति । नापि तार्किकाभिमतं गुणाऽदीनां द्रव्येण अत्यन्तभेदमङ्गीकृत्य तद्विशिष्टार्थविषयकज्ञानरूपं सविकल्पकमस्ति । गुणादेर्गुणिना अभेदस्यैव प्रत्यक्षसिद्धत्वात् । न हि गुणगुणिनोर्गवाश्वादिवत् भेदेन उपलम्भोऽस्ति । ननु तर्हि 'पटस्य शौक्ल्यम्' इत्यादिगुणगुण्यादिभेदव्यवहारानुपपत्तिः इति चेत् । न हि वयं गुणादेर्द्रव्येण निर्विशेषाभेदमङ्गीकुर्मः । किं तु ? सविशेषाभेदम् । तत्र विशेषेण भेदकार्यव्यवहाराऽद्युपपत्तेः ।

> भेदहीने त्वपर्यायशब्दान्तरनियामकः ।
> विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ॥

इति विशेषस्य भेदकार्यनिर्वाहकत्वेन प्रमितत्वात् । इदमुपलक्षणम् । क्वचित् अयावद्द्रव्यभाविनो गुणादेः तस्मिन् सत्यपि असत्त्वयुक्तया द्रव्येण भेदोऽप्यस्ति इति द्रष्टव्यम् ॥ खण्डिते भेद ऐक्यश्च' इति तत्त्वविवेकोक्तेः । उक्तञ्च अनुव्याख्याने भेदो नाशे भवेत्तथा इति ।

> भिन्नाश्च भिन्नधर्माश्च पदार्था अखिला अपि । इति श्रुतेश्च ।

ननु यथा भेदसाधकानां व्यपदेशभेदाऽदीनां विशेषाश्रयणेनैव अन्यथासिद्धिरुच्यते एवं सत्यपि तस्मिन् असत्त्वस्यापि विशेषेणैव निर्वाहः क्रियताम् । किं भेदाभेदाभ्युपगमेन ? इति चेन्न । विशेषस्य भेदकार्यव्यवहारमात्रनिर्वाहकत्वेन अभावं प्रति अनिर्वाहकत्वात् । सकलभेदकार्यकारित्वे विशेषो भेद एव स्यात् न तत्प्रतिनिधिः इति । न च भेदाभेदाभ्यामेव सर्वस्योपपत्तेः किं विशेषेण ? इति वाच्यम् । भेदाभेदयोः एकत्र समावेशस्य विरुद्धत्वात् तद्विरोधपरिहारायाप्यन्ततो विशेषस्याङ्गीकर्तव्यत्वात् । न च एतादृशे विशेषे प्रमाणाभाव इति वाच्यम् । प्रत्यक्षसिद्धत्वात् । उक्तं चैतत्सर्वमनुव्याख्याने

> अभेदेन प्रतीतिश्च कार्यकारणपूर्वके ।
> अभावान्ते पदार्थेऽस्ति सविशेषाऽवसीयते
> येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत् ॥ इत्यादि । इति सिद्धान्तसङ्क्षेपः ।

(टी.) एतेनैतदपि निरस्तम्। यदाहुः 'सन्निकर्षः षोढा भिद्यते। संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायः विशेषणविशेष्यभावश्चेति । तत्र चक्षुःस्पर्शनाभ्यां संयोगेन घटादिज्ञानं, मनसा आत्मज्ञानम्। तैः संयुक्तसमवायेन स्वविषयद्रव्यसमवेतगुणकर्मसामान्यज्ञानं, घ्राणेन गन्धज्ञानं, रसनेन रसज्ञानम्। तैरेव संयुक्तसमवेतसमवायेन गुणकर्मसमवेतसामान्यज्ञानम्। श्रोत्रेण समवायेन शब्दज्ञानम्। तेनैव समवेतसमवायेन शब्दसमवेतसामान्यज्ञानम्। तत्तदिन्द्रियैर्विशेषणविशेष्यभावेन स्वस्वविषयवृत्तिसमवायाभावज्ञानम्। सोप्युक्तपञ्चविधसम्बन्धसम्बद्धविशेषणविशेष्यभावत्वेन[1] पञ्चविधः। यथा 'घटे रूपसमवायः' इत्यादि। यथा च 'इह भूतले घटाभावः' इत्यादि।

न हि द्रव्यात् गुणाऽदिकमन्यत्। येन तत्सम्बन्धः समवायः सम्भवति।

(रा. टि.) एतेनेति ॥ गुणादेः द्रव्येण सविशेषाभेदाभ्युपगमेन इत्यर्थः ॥ तैरिति ॥ चक्षुस्पर्शनमनोभिः ॥ स्वविषयेति ॥ घटादिसमवेतात्मसमवेतेत्यर्थः । घ्राणेनेत्यादौ संयुक्तसमवायेनेति योज्यम् ॥ तैरेवेति ॥ चक्षुःस्पर्शनमनोघ्राणरसनैः । स्वस्वसंयुक्तद्रव्यसमवेतगुणकर्मसु तद्गतसामान्यानां समवायादिति भावः ॥ श्रोत्रेणेति ॥ तस्य आकाशात्मकत्वात् शब्दस्य तत्र समवायादिति भावः ॥ तत्तदिन्द्रियैरिति ॥ चक्षुःस्पर्शनमनोघ्राणरसनश्रोत्रेन्द्रियैः स्वस्वसंयुक्तद्रव्यतत्स्थगुणकर्मतद्गतसामान्यशब्दत्वसामान्य[2]वृत्तिसमवायाभावयोः ज्ञानं विशेषणविशेष्यभावरूपसम्बन्धेन इत्यर्थः। तत्प्रकारोऽग्रे व्यक्तः।

॥ सोऽपीति ॥ विशेषणविशेष्यभावोऽपि। संयोगाऽदिपञ्चविधसम्बन्धसम्बद्धेषु द्रव्यतद्गतगुणकर्मतत्सामान्यशब्दतत्सामान्येषु संयुक्तविशेषणविशेष्यभावेन संयुक्तसमवेतविशेषणविशेष्यभावेन संयुक्तसमवेतसमवेतविशेषणविशेष्यभावेन समवेतविशेषणादिभावेन समवेतसमवेतविशेषणादिभावेन समवायाभावयोः ज्ञानम् इति पञ्चविध इत्यर्थः।

तत् किञ्चित् अभिनीय दर्शयति ॥ यथा घटे रूपसमवाय इति ॥ अत्र घटो विशेषणम् समवायो विशेष्यम्। एवमग्रेऽपि। आदिपदेन रूपे रूपत्वसमवायः, रूपत्वे रूपसमवायः तस्य द्विष्ठत्वात्, अनुमानोपनीते गगने शब्दसमवाय इति, शब्दे शब्दत्वसमवाय इति, शब्दत्वे शब्दसमवाय इति ग्राह्यम् ॥ घटाभाव इत्यादीति ॥ आदिपदेन रूपे रसत्वाभावः रूपत्वे रसाभावः, शब्दे रूपत्वाभावः, शब्दत्वे रूपाभाव इति ग्राह्यम्। एतेन इत्युक्तैतच्छब्दार्थं व्यनक्ति ॥ न हीति ॥

---

[1] श्री. सम्बन्धसम्बद्धविशेषण.  [2] शब्दशब्दत्व.

(श्री. टि.) मनसा आत्मज्ञानम् इत्यत्रापि संयोगेन इति वर्तते ॥ घ्राणेनेत्यादि ॥ घ्राणरसनसंयुक्तयोश्चन्दनखण्डगुडयोर्गन्धादेः समवेतत्वात् इत्यर्थः । तैः चक्षुरादीन्द्रियैः ॥ श्रोत्रेणेति ॥ तस्य आकाशात्मकत्वात् इति भावः ॥ समवायाभावेति ॥ समवायाभावयोः ज्ञानमित्यर्थः ॥ तत्तादिन्द्रियैरिति[1] ॥ स्वशब्देन इन्द्रियं तद्विषयो घटादिः तद्वर्ती यो रूपाऽऽदिसमवायः तज्ज्ञानम् , तथा स्वशब्देनोक्तेन्द्रियविषयो भूतलादिः तद्वर्ती यो घटाभावादिः तज्ज्ञानमित्यर्थः ।

ननु विशेषणविशेष्यभावो नेन्द्रियार्थसंनिकर्षः इन्द्रियावृत्तित्वात् । घटरूपसमवाययोः भूतलघटाभावयोरेव हि विशेषणविशेष्यभावः इत्यत इन्द्रियार्थसंनिकर्षत्वं तस्योपपादयति ॥ सोऽपीति ॥ विशेषणविशेष्यभावोऽपि पञ्चविध इति सम्बन्धः । कथम् ? इत्यत उक्तम् ॥ पञ्चविधसम्बन्धवदिति ॥ उक्ता ये पञ्चविधसम्बन्धाः संयोगाऽऽदयः तद्वन्तः तैः सम्बद्धा ये ते ते अर्थाः संयुक्तसंयुक्तसमवेताऽऽद्या इति यावत् । तत्सम्बद्धो यो विशेषणविशेष्यभावः तत्त्वेन पञ्चविध इत्यर्थः ॥ एतत्पञ्चविधसम्बन्धसम्बद्धार्थेति पद्धतिवचनात् । एवं चेन्द्रियसंयुक्तविशेषणविशेष्यभावः प्रथमः इन्द्रियसंयुक्तसमवेतविशेषणविशेष्यभावो द्वितीयः इन्द्रियसंयुक्तसमवेतसमवेतविशेषणविशेष्यभावः तृतीयः इन्द्रियसमवेतविशेषणविशेष्यभावश्चतुर्थः इन्द्रियसमवेतसमवेतविशेषणविशेष्यभावः पञ्चम इति विवेकः । तथा च न विशेषणविशेष्यभावमात्रं संनिकर्षः । येन तस्य इन्द्रियावृत्तित्वेन तत्संनिकर्षताऽनुपपत्तिः । किं तु ? इन्द्रियसंयुक्तविशेषणतादिरेवेति परम्परया इन्द्रियवृत्तित्वात् न दोष इति भावः ।

एतैः संनिकर्षैः समवायाभावज्ञानं क्रमेणोदाहरति ॥ यथेत्यादि ॥ इत्यादीति ॥ अत्र समवायग्रहे इन्द्रियसंयुक्तविशेषणविशेष्यभावादि चतुष्टयमेव । तत्रेन्द्रियसंयुक्तसमवेतसमवेतविशेषणविशेष्यभावस्य अयोगात् । न हि रूपत्वे कस्यचित् समवायोऽस्ति । येन तत्र स विशेषणतया प्रतीयेत । एवं च इन्द्रियसंयुक्तविशेषणविशेष्यभावेन 'घटे रूपसमवायः' इति ज्ञानम् । अत्र इन्द्रियसंयुक्तो घटो विशेषणं रूपसमवायो विशेष्यः । 'रूपसमवायवान् घटः' इत्यादौ विपरीतो विशेषणविशेष्यभावो द्रष्टव्यः । इन्द्रियसंयुक्तसमवेतविशेषणविशेष्यभावेन 'घटरूपे रूपत्वसमवायः' इति ज्ञानम् । इन्द्रियसमवेतविशेषणविशेष्यभावेन शब्दसमवायः[2] इति ज्ञानम् । आकाशाऽऽत्मकश्रोत्रसमवेते शब्दे समवायस्य विशेष्यतया प्रतीतेः । इन्द्रियसमवेतसमवेतविशेषणविशेष्यभावेन 'शब्दे शब्दत्वं समवेतम्' इति ज्ञानम् ।

---

[1] इदं च प्रतीकं ॥ समवायाभावेति ॥ इत्यस्मात् पूर्वमेव वर्तव्यमिति भाति. [2] शब्दे समवायः.

(श्री. टि.) तथा इन्द्रियसंयुक्तविशेषणविशेष्यभावेन 'भूतले घटो नास्ति' इति ज्ञानम्। इन्द्रियसंयुक्तसमवेतविशेषणविशेष्यभावेन[1] 'रूपत्वे रसत्वं नास्ति' इति ज्ञानम्। इन्द्रियसमवेतविशेषणविशेष्यभावेन शब्दे रसत्वाभावज्ञानम्। इन्द्रियसमवेतसमवेतविशेषणविशेष्यभावेन 'शब्दत्वे रसत्वं नास्ति' इति ज्ञानमिति द्रष्टव्यम्। इत्यादि एतेन निरस्तमित्यन्वयः। एतेनेत्युक्तं हेतुं दर्शयति ॥ न हीति ॥ तत्सम्बन्ध इति ॥ तयोः सम्बन्ध इत्यर्थः। समवायस्य भेदनियतत्वात् इत्याशयः।

कार्यकारणयोश्चैव गुणादेः पञ्चकस्य च।
भिन्नस्यैव तु सम्बन्धः समवायोऽन्य ईर्यते ॥

इति भगवत्पादैः परकीयसमवायलक्षणानुवादसमये तस्य भेदनियतत्वाभिधानात् समवायघटिताः संयुक्तसमवायादयः संनिकर्षा न युक्ता इति भावः।

### तार्किकमतेन स्मृतिप्रामाण्याक्षेपः

(टी.) ननु स्मृतिः केवलप्रमाणम् न वा। आद्ये केवलस्योत्पत्तिमतोऽनुप्रमाणजन्यत्वं वाच्यम्। अतः तद्धेतोः संस्कारस्य प्रामाण्यमङ्गीकार्यम्। ततश्च नोक्तविभागो युक्तः। न हि संस्कारो यादृच्छिकसंवादी। येनाप्रमाणमपि केवलस्य हेतुः स्यात्। चक्षुरादिसाम्यात्। न चासावुक्तेऽन्तर्भवति। अनिन्द्रियसन्निकर्षरूपत्वात्। अज्ञातस्यैव करणत्वात् नानुमानागमयोः। द्वितीये केवलप्रमाणलक्षणस्यातिव्याप्तिः। स्मृतेरपि यथार्थज्ञानत्वात् इत्यत आह

## मानसप्रत्यक्षजा स्मृतिः

### तार्किकोक्ताक्षेपनिरसनम्

भवत्येव स्मृतिः केवलप्रमाणम्। न चैवं संस्कारस्य पृथक्प्रामाण्याभ्युपगमप्रसङ्गः। स्मृतेर्मानसप्रत्यक्षत्वाभ्युपगमात्। द्विविधं हि ज्ञानं मनो जनयति। तत्तदिन्द्रियाधिष्ठातृत्वेन तत्तदिन्द्रियविषयम्[2], स्वातन्त्र्येण स्मरणञ्चेति। संस्कारस्तु प्रत्यासत्तिमात्रम्। न तावता प्रत्यक्षजन्यत्वाभावः प्रत्यभिज्ञावदेवेति।

---

[1] 'रूपे रसत्वं नास्ति' इति ज्ञानम्। इन्द्रियसंयुक्तसमवेतसमवेतविशेषणविशेष्यभावेन रूपत्वे.

[2] रा, तत्तदर्थविषयम्.

(टी.) न च वाच्यमतीतेन मनसः सन्निकर्षायोगेनाप्रत्यक्षजन्यत्वं स्मृतेरिति। अतीताऽदिविषययोगिप्रमायामपि तथात्वापातादिति।

(रा. टि.) ॥ उक्तविभाग इति ॥ अनुप्रमाणं त्रिविधम् इत्युक्तविभाग इत्यर्थः ॥ यादृच्छिकसंवादीति ॥ वह्निमति धूलीपटले धूमभ्रम इवेति भावः ॥ केवलस्येति ॥ केवलप्रमाणस्य स्मृतेरित्यर्थः। कदाचित् अयथार्थस्मृतेरपि हेतुत्वात् अप्रमाणम् इत्यत आह ॥ चक्षुरादीति ॥ दोषापवादात् अन्यथाज्ञानजननेऽपि प्रामाण्यानपायादिति भावः ॥ न चासाविति ॥ संस्कार इत्यर्थः ॥ अनुमानागमयोरिति[1] ॥ अन्तर्भवतीत्यनुकर्षः ॥ द्वितीय इति ॥ प्रमाणं न इति पक्षे।

तत्तदर्थविषयमिति ॥ ज्ञानं जनयतीत्यनुकर्षः ॥ स्वातन्त्र्येणेति ॥ इन्द्रियान्तरद्वारं विनेत्यर्थः ॥ न तावतेति ॥ संस्कारसहकारितामात्रेणेत्यर्थः।

(श्री. टि.) यथार्थज्ञानसाधनमनुप्रमाणम्, यथार्थज्ञानं केवलम् इत्युक्तानुप्रमाणकेवलप्रमाणलक्षणयोः संस्कारे स्मृतौ च अतिव्याप्तिं दातुं तार्किकः शङ्कते ॥ नन्वित्यादिना ॥ ईश्वरज्ञानव्यावृत्त्यर्थमुक्तम् उत्पत्तिमतः इति ॥ उक्तविभाग इति ॥ अनुप्रमाणं त्रिविधम् इत्युक्तविभाग इत्यर्थः। ननु यथा यादृच्छिकसंवादिलिङ्गविभ्रमस्य अप्रमाणस्यापि यथार्थज्ञानजनकत्वं दृष्टं तथा संस्कारस्यापि यादृच्छिकसंवादित्वात् स्वयमप्रमाणस्यापि यथार्थज्ञानजनकत्वं किं न स्यात्? इत्याशङ्क्य निषेधति ॥ न हीति ॥ कुतो न यादृच्छिकसंवादी? इत्यत आह ॥ चक्षुरादीति ॥ अन्यथा चक्षुरादीनामपि यादृच्छिकसंवादित्वापत्त्या अप्रामाण्यापत्तेः। न च वाच्यम् केवलस्य चक्षुरादेः प्रामाण्यं नास्त्येव। किं तु? अर्थसंनिकृष्टस्य मनोधिष्ठितस्यैव। न हि तादृशे चक्षुरादिके सति कदाचित् यथार्थज्ञानानुपपत्तिरस्ति[2]। अतो न तत्साम्यम् इति। तर्हि प्रकृतेऽपि न केवलस्य संस्कारस्य स्मृतिकारणत्वं। किं तु? समुद्बुद्धस्यैव। न हि तादृशे संस्कारे सति कदाचित् स्मृत्यनुत्पत्तिरस्ति इत्याशयः। ननु तर्हि प्रत्यक्षाऽदित्रयान्यतमान्तर्भावोऽस्तु इत्याशङ्क्य निषेधति ॥ न चासाविति ॥ असौ संस्कारः। तत्र प्रत्यक्षानन्तर्भावे हेतुमाह ॥ अनिन्द्रियेति ॥ इन्द्रियसंनिकर्षरूपत्वाभावादित्यर्थः। अनुमानागमयोरनन्तर्भावे हेतुमाह ॥ अज्ञातस्यैवेति ॥ तयोर्ज्ञातकरणत्वात् इति भावः ॥ द्वितीय इति ॥ स्मृतेः केवलप्रमाणत्वाभावाङ्गीकार इत्यर्थः ॥ अतिव्याप्तिरिति ॥ स्मृताविति शेषः। कुतः? इत्यतः केवलप्रमाणलक्षणसद्भावात् इत्याह ॥ स्मृतेरपीति ॥

---

1 ॥ नानुमानागमयोरिति ॥ 2 ज्ञानानुत्पत्तिरस्ति.

(श्री. टि.) तर्हि संस्कारेऽतिव्याप्तिः इत्याशङ्क्य परिहरति ॥ न चैवमिति ॥ ननु मनसो बाह्येन्द्रियाधिष्ठानेनैव बाह्यार्थज्ञानजनकत्वात् कथं तदनधिष्ठानेन मनसः स्मृतिजनकत्वम्? इत्यत आह ॥ द्विविधं हीति ॥ स्वातन्त्र्येणेति ॥ बहिरिन्द्रियनैरपेक्ष्येणेत्यर्थः। तदनधिष्ठानेन इति यावत्। न तु सहकार्यन्तरानपेक्षेण[1] इत्यर्थः। उत्तरग्रन्थविरोधापत्तेः। एवं च अनेन स्मृतिरूपयथार्थज्ञानस्य असाधारणफलस्य सत्त्वात् अनुप्रमाणविशेषेन्द्रियरूपता मनस उपपद्यत इत्यपि सूचितम् भवति इति द्रष्टव्यम्। नन्वेवं मनस एव स्मृतिजनकत्वे संस्कारस्य कथम् तज्जनकत्वोक्तिः? इत्यत आह ॥ संस्कारस्त्विति ॥ प्रत्यासत्तिमात्रमिति ॥ योगीन्द्रियाणां योगजधर्म इव मनसः तदर्थसंनिकर्षस्थानीय एवेत्यर्थः। तथा च मनस एव तत्करणत्वेन संस्कारस्य व्यापारमात्रतया करणत्वानङ्गीकारात् यथार्थज्ञानसाधनत्वरूपानुप्रमाणलक्षणस्य न संस्कारेऽतिव्याप्तिरिति भावः। ननु यथाकथञ्चित् संस्कारस्यापि कारणत्वाङ्गीकारात् तस्य च प्रत्यक्षत्वाभावात् तज्जन्यायाः स्मृतेः प्रत्यक्षत्वम् नास्ति इत्याशङ्क्य परिहरति ॥ न च तावतेति ॥ संस्कारजन्यत्वमात्रेण इत्यर्थः ॥ प्रत्यक्षजन्यत्वाभाव इति ॥ मानसप्रत्यक्षजन्यत्वाभाव इत्यर्थः ॥ प्रत्यभिज्ञावदेवेति ॥ यथा 'सोऽयम्' इति प्रत्यभिज्ञायाः संस्कारजन्यत्वेऽपि प्रत्यक्षजत्वाभावो नास्ति। चक्षुषा प्रत्यभिज्ञाप्रत्यक्षे जननीये संस्कारस्य सहकारिमात्रत्वात्, एवं मनसा स्मृतौ जननीयायां संस्कारस्यापि तथात्वात् युक्तं प्रत्यक्षजत्वं स्मृतेः इत्यर्थः।

ननु स्मृतेः कथं मानसप्रत्यक्षजत्वम्। स्मृतौ हि 'सः' इति अतीतत्वं भासते। न च अतीतेनार्थेन मनसः संनिकर्षोऽस्ति। न च संस्काररूपः संनिकर्षोऽस्ति इति वाच्यम्। संयोगादीनां षण्णामेव संनिकर्षत्वेन प्रसिद्धत्वात् संस्कारस्य च तद्रूपत्वाभावेन संनिकर्षत्वस्यैवाभावात्। प्रसिद्धश्च षड्विधः संनिकर्षः प्रकृते नास्ति इति प्रत्यक्षजन्यत्वाभावं स्मृतेराशङ्क्य निषेधति ॥ न च वाच्यमिति ॥ संनिकर्षायोगेनेति ॥ प्रसिद्धषड्विधसंनिकर्षायोगेन इत्यर्थः। कुतो न च वाच्यम्? इति चेत् उच्यते, यदुक्तम् अतीतेन सह मनसः प्रसिद्धषड्विधसंनिकर्षाभावात् स्मृतेः प्रत्यक्षजन्यत्वं नास्ति इति। तदयुक्तम्। तथात्वे योगीश्वराणां जायमाना या अतीताऽदिविषयिणी प्रात्यक्षिकप्रमा तस्या अपि प्रत्यक्षजन्यत्वम् न स्यात्। अतीताऽदिना साकं योगिप्रत्यक्षस्यापि प्रसिद्धषड्विधसंनिकर्षायोगात्। यदि च अतीताऽदिना सह योगिप्रत्यक्षस्य प्रसिद्धषड्विधसंनिकर्षाभावेऽपि योगजधर्मस्यैव प्रत्यासत्तित्वाङ्गीकारात् युक्तम् अतीताऽदिप्रमाया योगिप्रत्यक्षजत्वम् इति ब्रूषे तर्हि वयमपि वदामो मनसा स्मृतौ जननीयायाम् अतीतेन प्रसिद्धषड्विधसंनिकर्षायोगेऽपि संस्कारस्यैव प्रत्यासत्तित्वम् सम्भवति इति युक्तं स्मृतेरपि मानसप्रत्यक्षजत्वम् इति। न च संस्कारस्य प्रत्यासत्तित्वम् अप्रामाणिकम् इति वाच्यम्। योगजधर्मेऽपि साम्यात्। अलौकिकप्रत्यासत्तित्वस्य संस्कारेऽपि समानत्वात् इत्याशयेन आह ॥ अतीतादीति ॥

---

[1] सहकार्यन्तरानपेक्षणेन.

प्राभाकरमतेन स्मृतिप्रामाण्याक्षेपः

(टी.) स्मृतिः केवलप्रमाणमेव न भवति । गृहीतमात्रग्राहित्वात् । अनुवादवत् । अतः कथं प्रत्यक्षप्रमाणजन्यत्वम् ? इत्यत आह

## स्मृत्यनुवादयोर्नाप्रामाण्यम्

(रा. टि.) अनुवादग्रहणं दृष्टान्तार्थम् इतिभावेनोक्तम् अनुवादवत् इति ।

(श्री. टि.) प्राभाकरः शङ्कते ॥ स्मृतिरिति ॥ न भवतीति ॥ अनधिगतार्थगन्तृत्वरूपप्रमाणलक्षणा-भावात् इति भावः । कुतः ? इत्यतः तदुपपादयति ॥ गृहीतमात्रेति ॥ पूर्वानुभवविषयीकृतार्थावगाहित्वात् इत्यर्थः । अनुवादवत् प्रमाणान्तरसिद्धार्थानुवादवाक्यवत् ।

प्राभाकरोक्ताक्षेपनिरासः

(टी.) न हि गृहीतग्राहित्वेन स्मृतेरनुवादस्य चाप्रामाण्यं वाच्यम् । तथा सति प्रत्यक्षाऽदिसि-द्धार्थानुवादकस्य 'अग्निर्हिमस्य भेषजम्' इत्यादेरप्रामाण्यप्रसङ्गात् । अतो गृहीतग्राहित्वेऽपि स्मृते-रनुवादवत् प्रामाण्यमेव यथार्थत्वात् इति ।

(श्री. टि.) ॥ प्रत्यक्षादीति ॥ अग्नेर्हिमनिवारकत्वरूपहिमभेषजत्वस्य स्पार्शनप्रत्यक्षसिद्धत्वात् इत्यर्थः ।

(टी.) अन्यस्त्वाह । न स्मृतिः प्रमाणम् अयथार्थत्वात् । न हि यदा यादृशोऽर्थः स्मर्यते तदाऽसौ तादृशः पूर्वावस्थाया निवृत्तत्वात् । अतो नानुप्रमाणजन्यत्वमिति । तत्राऽऽह

## यथार्थत्वानुभवात्

स्मृतेर्नाप्रामाण्यमित्यनुवर्तते । न हि यदा यादृशोऽर्थो विषयीक्रियते तदा तस्य तादृशत्वे प्रमाणस्य याथार्थ्यम् । तथा सति अतीताऽदिविषयानुमानादेः अयथार्थत्वाऽपातात् । किं नाम ? यद्देशकालतया योऽर्थो यादृशो विषयीक्रियते तस्य तद्देशकालयोस्तादृशत्वे । तादृशं च याथार्थ्यं स्मृतेः साक्षिसिद्धम् । 'तत्र तदा असौ तादृशः' इति स्मृतिरर्थं विषयीकरोति । न हि 'तत्र तदाऽसौ न तादृशः' इति ।

(श्री. टि.) ॥ न हीति ॥ यदा स्मृतिकाले यादृशः तद्देशकालवैशिष्ट्यरूपपूर्वावस्थाविशिष्टः स्मर्यते 'सः' इतीत्यनेन[1] इति शेषः । तथा च स्मृतिकाले तद्देशकालवैशिष्ट्यरूपपूर्वावस्थाया अभावेन अविद्यमानविषयकत्वात् स्मृतेरयाथार्थ्यमेव युक्तम् । उल्लिखितस्य विषयस्य ज्ञानकाले असत्त्वस्यैव अयाथार्थ्यप्रयोजकत्वात् इति भावः ॥ अत इति ॥ तथा च तत्साधनस्य मनसोऽनुप्रमाणत्वानुपपत्तिः इति भावः ।

॥ यद्देशकालतयेति ॥ यद्देशकालसम्बन्धितयेत्यर्थः । यद्देशकालयोः इति यावत् । अधिकरणनिर्देशोऽयम् । योऽर्थः इति धर्मिनिर्देशः । यादृशः इति प्रकारनिर्देशः । तद्देशकालयोः इति सप्तमी । तस्य वस्तुनः तादृशत्वे तत्प्रकारकवैशिष्ट्ये[2] प्रमाणस्य याथार्थ्यम् इति सम्बन्धः ॥ तादृशं चेत्यादि ॥ अनेनेदमुक्तं भवति, ज्ञानोल्लिखितदेशकालयोः विषयस्य असत्त्वमेव ज्ञानायथार्थत्वे तन्त्रम् । न तु उल्लिखितस्य विषयस्य ज्ञानकाले असत्त्वं । तथात्वे अतीतानागतप्रमेययोरपि[3] अयाथार्थ्यापत्तेः । स्मृत्युल्लिखितदेशकालयोश्च स्मृतिविषयः सन् इति साक्षिणा विषयीकृतत्वात् न स्मृतेरयाथार्थ्यमिति ।

### तटस्थशङ्कापरिहारौ

(टी.) न च वाच्यम् न निवृत्तपूर्वावस्थतया स्मृतिरर्थं विषयीकर्तुमीष्टे । तथाऽननुभवात् । अननुभूतविषयत्वे अतिप्रसङ्गात् इति । अननुभूतैतावन्मात्रविषयत्वस्य साक्षिसिद्धत्वेनातिप्रसङ्गायोगात् । तदिदमुक्तम् ॥ यथार्थत्वानुभवादिति ॥

(रा. टि.) कुतो नेष्टे इत्यत आह ॥ तथाऽननुभवादिति ॥

(श्री. टि.) तदाऽसौ तादृशः इति विषयीकरोति, इत्यनेन निवृत्तपूर्वावस्थतया अर्थविषयकत्वं स्मृतेरुक्तम् । तदनुपपन्नमिति तटस्थः शङ्कते ॥ न च वाच्यमित्यादिना ॥ तथेति ॥ निवृत्तपूर्वावस्थत्वेनेत्यर्थः ॥ अतिप्रसङ्गादिति ॥ स्मृतेरननुभूतार्थविषयकत्वे अननुभूतानां काशीस्थपदार्थानामपि स्मरणप्रसङ्ग इत्यर्थः । अयं भावः, पूर्वानुभवजनितः संस्कारः स्मृतिकारणम् । स च अनुभूतार्थविषय एव स्मृतिजननस्येष्टे, न अननुभूतार्थविषये । अतिप्रसङ्गात् । न च अनुभवेन निवृत्तपूर्वावस्थतया अर्थो गृहीतः । तत् कथमनुभवसमानविषयसंस्कारजन्या स्मृतिर्निवृत्तपूर्वावस्थतया अर्थं विषयीकुर्यात् ? इति । कुतो न वाच्यम् ? इत्यत आह ॥ ॥ अननुभूतैतावन्मात्रविषयत्वस्येति ॥ अननुभूतं यत् एतावन्मात्रं निवृत्तपूर्वावस्थत्वं तद्विषयत्वस्येत्यर्थः । स्मृतेरिति शेषः । इदमत्राकूतम् , भवेदेतदेवं यदि संस्कारमात्रजन्यत्वं स्मृतेरभ्युपगच्छामः । न चैवं यतो

---

[1] इत्यनेन इति, [2] तत्प्रकारवैशिष्ट्ये, [3] प्रमेयोरपि,

(श्री. टि.) मनोजन्या स्मृतिः। संस्कारस्तु योगीन्द्रियाणां योगजधर्म इव मनसस्तत्तदर्थसंनिकर्षरूप एव। ततश्च संस्कारसहकृतं मनः अननुभूतामपि निवृत्तपूर्वावस्थां विषयीकुर्वत् स्मरणं जनयेदेव। तथा च अनुभवबलेन इत्थं सहकारिसामर्थ्यकल्पनात् नातिप्रसङ्गः।

ननु स्मृतेः पूर्वावस्थानिवृत्तिविशिष्टार्थविषयकत्वेन विशिष्टज्ञानत्वात् विशिष्टज्ञाने च विशेषणज्ञानस्य कारणत्वात् विशेषणीभूतायाः पूर्वावस्थानिवृत्तेः पूर्वमननुभवात् स्मृतिरूपविशिष्टज्ञानस्यैवायोगः इति चेन्न। विशेषणविशेष्योभयसंनिकर्षाभ्यामेव विशिष्टज्ञानोत्पत्तौ विशेषणज्ञानस्यापि तत्र कारणत्वकल्पने मानाभावात्। न च अनुमितिरूपविशिष्टज्ञानविशेषे साध्यप्रसिद्धिरूपविशेषणज्ञानविशेषस्य हेतुत्वदर्शनात् 'यद्विशेषयोः कार्यकारणभावः असति बाधके तत्सामान्ययोरपि' इति न्यायेन सर्वत्रापि विशिष्टज्ञाने विशेषणज्ञानस्य कारणता इति वाच्यम्। मन्मते सामान्यलक्षणप्रत्यासत्त्यभावेन साध्यतावच्छेदकप्रकारकयत्किंचित्साध्यविषयकप्रसिद्धेरेव कारणत्वेन विशेषणीभूतपक्षीयसाध्यविषयकप्रसिद्धेः अकारणत्वात्। अन्यथा अनुमितावेव पक्षरूपविशेष्यज्ञानस्यापि कारणतोपलम्भात् यद्विशेषयोरिति न्यायेनैव सर्वत्र विशिष्टज्ञाने विशेष्यज्ञानस्यापि कारणत्वापत्तेः।

नन्वथापि इन्द्रियाणां वर्तमानमात्रग्राहित्वात् मनसोऽपि इन्द्रियत्वात् कथं निवृत्तपूर्वावस्थाविषयकस्मरणं जनयेत्? इति चेत् सत्यम्, इन्द्रियाणामिदं सहजशक्तिः यद्वर्तमानमात्रग्राहित्वमिति। तथापि सहकारिसामर्थ्यात् शक्त्यन्तराविर्भावेन अवर्तमानविषयकज्ञानजनकत्वमपि तेषामुपलभ्यते। यथा वर्तमानमात्रग्राहित्वस्वभावस्यापि चक्षुषः संस्काररूपसहकारिसामर्थ्यात् 'सोऽयम्' इति अतीतवर्तमानत्वविशिष्टप्रत्यभिज्ञारूपज्ञानजनकत्वम् एवं प्रकृतेऽपि संस्काररूपसहकारिसामर्थ्यात् मनसोऽपि पूर्वावस्थानिवृत्तिविषयकस्मरणजनकत्वं युक्तमेवेति। यथोक्तम् पद्धतौ सहकारिसामर्थ्यात् करणानां शक्त्यन्तराविर्भाव[1]बहुलमुपलम्भात् इति। उक्तं च अनुव्याख्याने।

प्रत्यक्षं मानसं चैव यदाऽतीतार्थगोचरम्।
तदा स्मृतिप्रमाणत्वमतीतत्वविशेषितम्॥
मानत्वं प्रत्यभिज्ञाया अपि सर्वानुभूतिगम्।
अतीतवर्तमानत्वधर्मिणी सा च दृश्यते॥
न च सा स्मृतिमात्रार्था तदिदन्त्वग्रहैकतः।
अतो न वर्तमानैकनियमः स्यादुग्रहेऽक्षजे॥ इति।

---

[1] र्भावस्य,

(श्री. टि.) ॥ तदिदमुक्तमिति ॥ तथा च यथार्थत्वस्य अननुभूतनिवृत्तपूर्वावस्थाविषयकत्वस्य इति यावत् । अनुभवात् साक्षिसिद्धत्वात् इति मूलार्थो द्रष्टव्यः ।

स्मृतिप्रामाण्ये बाधकाभावः

(टी.) किञ्च स्मृतिप्रामाण्याङ्गीकारे अनिष्टाभावात् तदङ्गीकारो युक्त इत्याह

अहानेश्च

हानिपदमनिष्टमात्रोपलक्षणम् ।

(श्री. टि.) ॥ अहानेश्चेति ॥ स्मृतिप्रामाण्याङ्गीकारे प्रामाणिकहानाभावाच्च इत्यर्थः । नन्वनेन प्रामाणिकहानाभावमात्रमेवोक्तं न तु अप्रमाणिककल्पनाभावः । तथा च अप्रामाणिककल्पनमेतत् इति शङ्का स्यात् । अतो व्याचष्टे ॥ हानिपदमिति ॥ अनिष्टमात्रेति ॥ प्रामाणिकहानाप्रामाणिककल्पनारूपानिष्टमात्रेत्यर्थः । अजहत्स्वार्थलक्षणायां स्वार्थस्यापि लक्ष्यत्वान्न कश्चित्क्षुद्रोपद्रवः । यथाऽऽहुः,

............अनिष्टस्य द्वयी विधा ।
प्रामाणिकपरित्यागस्तथेतरपरिग्रहः ॥ इति ।

सामान्यविशेषभाव एव लक्षणाबीजभूतः सम्बन्धो द्रष्टव्यः । तथा च 'अहानेः' इत्यस्य अनिष्टाभावात् इत्यर्थो द्रष्टव्यः ।

तर्काप्रामाण्यशङ्कापरिहारौ

(टी.) एतेनैव 'तर्को न प्रमाणम् किं तु प्रमाणानामनुग्राहकः । प्रमाणविषयविपर्ययशङ्काव्यवच्छेदस्तदनुग्रहः' इत्येतदपास्तम् । तस्याप्यनुमानवत् यथार्थत्वानुभवात् अहानेश्च इति ।

(रा. टि.) ॥ तर्क इति ॥ व्याप्त्याङ्गीकारे अनिष्टव्यापकप्रसञ्जनरूपतर्क इत्यर्थः ॥ प्रमाणविषयविपर्ययेति ॥ 'सधूमोऽपि पर्वतो निरग्निकोऽस्तु' इत्येवंरूपशङ्का 'अन्यभावाङ्गीकारे प्रतीतधूमस्याभावोऽपि अङ्गीकर्तव्यः स्यात्' इत्यनिष्टप्रसञ्जनेन व्यवच्छिद्यते इति स एवानुग्रह इत्यर्थः । अनुमानवत् धूमज्ञानजन्यवह्निज्ञानस्येव विपर्यये पर्यवसानेन 'तस्मात् न निरग्निकः' इत्युत्पन्नज्ञानस्यापि यथार्थत्वानुभवात् इत्यर्थः ।

(रा. टि.) यद्वा व्याप्तिलिङ्गपरामर्शस्येव[1] अनिष्टप्रसञ्जनमुखेन हेतोरन्यथोपपन्नत्वशङ्काव्यवच्छेदद्वारा अन्यथानुपपन्नस्वरूपव्याप्यत्वबुद्धेः यथार्थत्वानुभवात् इत्यर्थः ।

अथ वा[2] आपाद्यधूमाङ्गीकारस्य प्रमितेर्यथार्थत्वानुभवात् इत्यर्थः ।

यद्वा तर्कताण्डवोक्तरीत्या साध्याभावेन साधनाभावस्य व्यापकत्वप्रमा तर्क्यते अनेन इति करणव्युत्पत्त्या तर्कः । तज्जन्या साधनस्य साध्येन सह व्याप्त्यनुमितिस्तु तर्कणम् इति भावव्युत्पत्त्या तर्कः । तयोरपि प्रमित्योः परामर्शानुमित्योरिव यथार्थत्वानुभवात् इत्यर्थः । 'व्याप्यारोपेण व्यापकारोपस्तर्कः' इति त्वयुक्तम् । बाष्पे धूमभ्रमजन्यभ्रमरूपानुमितावतिव्याप्तेरिति भावः । तर्कस्य प्रामाण्याङ्गीकारे अनिष्टाभावाच्च इत्याह ॥ अहानेश्चेति ॥

(श्री. टि.) ॥ एतेनेति ॥ मूलवाक्यद्वयेनेत्यर्थः । किं तु ? इत्यनन्तरं स्वयमप्रमाणमेव इति शेषः । कोऽयमनुग्रहः? इत्यत आह ॥ प्रमाणेति ॥ यथा आहुः,

प्रत्यक्षादेः प्रमाणस्य तर्कोऽनुग्राहको भवेत् ।
पक्षे विपक्षजिज्ञासाऽवच्छेदस्तदनुग्रहः ॥ इति ।

एतेन इत्युक्तं विशदयति ॥ तस्यापीति ॥ अनुमानवदिति ॥ यथा साधनानुमाने न व्याप्तिमात्रं नापि पक्षधर्मतामात्रं साध्यप्रमितिसाधनम् किं तु ? मिलितमेव, एवम् अनिष्टापादनं विपर्यये पर्यवसानं च उभयं मिलितमेव अनुमितिसाधनं भवतीति तर्कस्य प्रामाण्यमुपपद्यत इत्यर्थः ।

न च विपर्ययपरतन्त्रत्वात् तर्कस्याप्रामाण्यम् इति वाच्यम् । तथात्वे अनुमानस्यापि व्याप्त्यादिपरतन्त्रत्वेन अप्रमाण्यापत्तेरिति द्रष्टव्यम् ।

ननु 'सोऽयं क्वचित् विपरीतशङ्कानिरसनद्वारेण प्रमाणान्तरानुग्राहकोऽपि भवति इति पद्धतौ प्रमाणविषयविपर्यासशङ्कानिरासकत्वरूपस्य प्रमाणानुग्राहकत्वस्याङ्गीकृतत्वात् अत्र पुनः तद्दूषणात् विरोधः इति चेत्, उच्यते अत्र स्वयम् अप्रमाणस्यैव प्रमाणानुग्राहकत्वं यत् परैरुक्तं तदेव दूषितम् । पद्धतौ तु स्वयं प्रमाणभूत एव तर्को न केवलमुक्तरीत्या साधनानुमानवत् स्वातन्त्र्येणानुमापकः, किं तु ? क्वचित् प्रमाणानुग्राहकोऽपि भवति' इत्यर्थोऽभिप्रेतः । अत एव अपिशब्दः । स्वयं प्रमाणभूतस्यापि प्रमाणान्तरानुग्राहकत्वं च प्रत्यक्षस्यानुमानं प्रतीवोपपद्यते । लिङ्गव्याप्त्यादिग्राहकतया प्रत्यक्षस्यापि अनुग्राहकत्वदर्शनात् । अतो न विरोधः ।

---

[1] सलिङ्ग. [2] अथ वा आपादक.

(श्री. टि.) ननु सिद्धान्ते क्वचित् अनुग्राहकत्वम् अङ्गीकृतम्। तत्प्रकारः कथम् ? इति चेत् उच्यते, अनुमानस्थले तर्कनिवर्त्याशङ्का द्विविधा। एका लिङ्गपरामर्शात् पूर्वं 'धूमवानपि कश्चित् निरग्निकः किं न स्यात्' इति व्यभिचारशङ्का। अपरा परामर्शोत्पत्त्यनन्तरं प्रतिप्रमाणोपलम्भेन 'धूमवानपि पर्वतो निरग्निकः किं न स्यात्' इति बाधसत्प्रतिपक्षशङ्का। ततश्च एतन्निवर्तकतर्कसाध्यानुग्रहोऽपि द्विविधः। आद्यो व्यभिचारशङ्कारूपविपरीतशङ्कानिरसनद्वारेण व्याप्तिप्रमाफलकतया लिङ्गपरामर्शरूपप्रमाणनिष्पादनरूपः। द्वितीयस्तु निष्पन्ने लिङ्गपरामर्शे प्रतिप्रमाणशङ्कारूपविपरीतशङ्काविधूननद्वारेण वह्न्यनुमितिरूपकेवलप्रमाणनिष्पादनरूपः। ततश्च अनुमाने अयमुभयविधोऽप्यनुग्रहः तर्कसाध्योऽत्र विवक्षितः। एवं प्रत्यक्षादावपि तर्कसाध्यानुग्रहप्रकारो द्रष्टव्यः इत्यादिकमस्मदाचार्याराधितपूज्यपादैर्वेदेशस्वामिभिः कृतायां पद्धतिटीकायां द्रष्टव्यं ॥ अहानेश्चेतीति ॥ तर्कस्य प्रमाण्याङ्गीकारे अनिष्टाभावाच्च इत्यर्थः।

### विरोधविभागः

(टी.) विरोधाऽदिषु सर्वनिग्रहस्थानानामन्तर्भाव इत्युक्तम्। तत्प्रदर्शनार्थं विरोधे तावद्विषयं विवेचयति।

## विरोधो मानस्ववाक्याभ्याम्

द्विविध इति शेषः। विरोधो[1] द्विविधः। समयबन्धाऽदिरूपवत्यां कथायां सर्वरूपसाधारणोऽसाधारणश्चेति। तत्रासाधारणः प्रमाणेन स्ववाक्येन चेति द्विविधो भवति।

### अपसिद्धान्तजात्योः स्ववाक्यविरोधेऽन्तर्भावः

स्ववाक्यविरोधं विभज्य दर्शयति

## स्ववाक्यविरोधोऽपसिद्धान्तजातिरूपेण

द्विविध इति शेषः। पूर्वाचार्यवचनस्यापि स्वाभ्युपगतत्वेन स्ववाक्यत्वात् अपसिद्धान्तः स्ववाक्यविरोधो भवति।

(रा. टि.) ॥ इत्युक्तमिति ॥ संवादानुक्तियुतास्त एव निग्रहाः इत्यनेनेति भावः ॥ समयबन्धादीति ॥ प्रश्नप्रतिवचनपक्षपरिग्रहाऽदीनि यानि कथायां सर्वाणि रूपाणि तत्साधारण इत्यर्थः ॥ असाधारणश्चेति ॥ असाधारणोऽनुमानमात्रनिष्ठ इत्यर्थः ॥ प्रमाणेनेति ॥ विरोधपदमाकृष्यते।

---

[1] श्री. द्विविधो विरोधः.

(श्री. टि.) मूलोक्तोऽयं विरोधविभागो न सामान्यविभागः किं तु ? विशेषविभाग एव इत्यभिप्रायेन स्वयं विरोधसामान्यविभागमाह ॥ द्विविधो विरोध इति ॥ समयबन्धादि इत्यत्र आदिपदेन प्रमाणलक्षण-धनपरपक्षनिराकरणग्रहणम् । रूपवत्यां अरूपवत्यां ॥ सर्वरूपसाधारण इति ॥ समयबन्धादिसर्वकथारूपानुमा-नोभयसाधारण इत्यर्थः । असाधारणोऽनुमानमात्रनिष्ठः ।

॥ स्ववाक्यविरोधमिति ॥ मानविरोधनिरूपणस्य बहुत्वात् सूचीकटाहन्यायेन तत् उल्लङ्घ्य पश्चात् उद्दिष्टं स्ववाक्यविरोधं विभज्य दर्शयतीत्यर्थः ।

ननु कथम् अपसिद्धान्तस्य स्ववाक्यविरोधप्रभेदत्वं ? पूर्वाचार्यैः प्रामाणिकतया अभ्युपगतार्थविरुद्धाङ्गी-कारस्यैव अपसिद्धान्तत्वात् इत्यत आह ॥ पूर्वाचार्येति ॥

### जातिनिरूपणम्

(टी.) स्वव्याहतिर्जातिः । एकवाक्यविषयत्वादपसिद्धान्तेऽतिप्रसङ्गः । त्रिविधा स्वव्याहतिः एकवाक्यगतपदाऽदेरन्योन्यप्रतिस्पर्धित्वं स्वक्रियाविरोधः तद्वाक्यन्यायेन तद्वाक्यविरोधश्चेति ।

तत्र समयबन्धाऽदौ प्रमाणविरोधाऽदिप्रपञ्चः स्वयमेवोदाहर्तव्य इति सूचयन् आद्यजातिं[1] तावत् प्रतिज्ञायामुदाहरति

## जातिः ‘ न मेये मानापेक्षा ‘ इत्यादिका

मानसापेक्षं[2] हि ज्ञेयं मेयमुच्यते । तस्य प्रमाणनिरपेक्षत्वप्रतिज्ञा ‘मे माता वन्ध्या’ इतिवत् व्याहता भवति । आदिपदेन समयबन्धादावपि इयमेवोदाहर्तव्येति सूचयति ।

द्वितीयजातेरपीदमेवोदाहरणम् ॥ जातिरिति ॥ मेयं मानानपेक्षम् इति वदति । तज्ज्ञापनाय प्रमाणं चाभिधत्ते । अतो ‘ मूकोऽहम् ’ इतिवत् स्वक्रियाविरोध इति ।

(रा. टि.) अपसिद्धान्तेऽपि स्वव्याहतिभावात् अतिव्याप्तिमाशङ्क्याह ॥ एकवाक्येति ॥ एककर्तृक-वाक्ये व्याहतिर्जातिः अपसिद्धान्तस्तु अनेककर्तृकवाक्य इति भेद इति भावः । यद्वा एकस्मिन्नेव वाक्ये विरोधी जातिः । भिन्नवाक्ये अपसिद्धान्त इत्यर्थः ॥ पदादेरिति ॥ आदिपदेन महावाक्यगतावान्तरवाक्यस्य ग्रहः । प्रतिस्पर्धित्वं विरुद्धत्वं । इति त्रिविधेत्यन्वयः ॥ समयबन्धादाविति ॥ कथास्वरूपवादिप्रतिवादिपक्षपरि-ग्रहाऽदिरादिपदार्थः ।

---

1 श्री. आद्यां जातिम् 2 रा. सापेक्षज्ञानं हि मेय

(रा. टि.) मानसापेक्षज्ञानमिति बहुव्रीहिः ॥ मे मातेति ॥ यद्यपि ममेति वाच्यम् 'तेमयावेकवचनस्य' इत्यादेशस्य 'वाक्यादौ न' इति निषेधात् तथापि नञा निर्दिष्टमनित्यम् इति 'इदमः स्मुः' इत्युकारोच्चारणेन ज्ञापनात् साध्वेवेदमिति ज्ञेयम्। 'न विभक्तौ तुस्माः' इति नञा निर्दिष्टस्य नित्यत्वेनैव मकारलोपाभावात् मकाररक्षणार्थम् उकारो व्यर्थः स्यात्। तेन नञा निर्दिष्टमात्रस्यानित्यत्वं ज्ञेयम्। शेषोक्त्या वाक्यं योजयति ॥ इति वदतीत्यादि ॥ यद्वा आदिपदस्य अर्थान्तरोक्तिरियम्।

(श्री. टि.) ननु पूर्वाचार्यवाक्यस्यापि स्वाभ्युपगतत्वेन स्ववाक्यत्वात् तद्विरुद्धाङ्गीकाररूपापसिद्धान्तस्यापि स्वव्याहतत्वेन जातित्वापत्तिः इति चेत् तत्राह ॥ एकवाक्येति ॥ तथा च एकस्मिन्नेव वाक्ये स्वव्याहतिर्जातिः। वाक्यान्तरेण विरुद्धाङ्गीकारोऽपसिद्धान्तः इति तयोर्भेदात् न जातिलक्षणस्यापसिद्धान्ते अतिव्याप्तिरित्यर्थः। परोक्तजातीनां स्वन्यायविरोधात्मकतृतीयजातावन्तर्भावं वक्तुं जातिप्रभेदमाह ॥ त्रिविधेति ॥ एकवाक्यगतेत्यादि ॥ स्ववचनविरोध इत्यर्थः ॥ तद्वाक्यन्यायेनेति ॥ स्वन्यायविरोध इत्यर्थः।

ननु विरोधो मानस्ववाक्याभ्याम् इत्यभिधाय स्ववाक्यविरोधो विभज्य निरूपितः। तत्र स्ववाक्यविरोधः अनुमान एव प्रतिज्ञायां उदाहरणमुखेन भगवत्पादैः प्रदर्श्यते न समयबन्धादौ। तथा समयबन्धादिसाधारणो मानविरोधोऽपि नोदाहरणमुखेन प्रदर्शितः। अतो न्यूनता इत्यत आह ॥ तत्र समयबन्धादाविति ॥ आदिपदेन स्ववाक्यविरोधग्रहणम्। प्रतिज्ञायाम् आद्यां जातिमित्यन्वयः। प्रतिज्ञावाक्यगतपदादेरन्योन्यं प्रतिस्पर्धित्वरूपस्ववचनविरोधरूपामाद्यां जातिमित्यर्थः।

सूचयन्नित्युक्तसूचनाप्रकारमेव दर्शयति ॥ आदिपदेनेति ॥ इयमेवेति ॥ या अनुमाने प्रतिज्ञायामुदाहृता इयमेव स्ववचनविरोधरूपा जातिः समयबन्धादावप्युदाहर्तव्येत्यर्थः। द्वितीयजातेः स्वक्रियाविरोधरूपायाः।

(टी.) तृतीयाया अप्येतदेवोदाहरणम् ॥ जातिरिति ॥ तत्कथम्? इत्यत आह

## मेये मानापेक्षाऽस्तीति च

तेनैव न्यायेन सिद्धत्वात्। यथा 'मेये मानापेक्षा नास्ति' इत्येतन्मेयं मानापेक्षम्। अन्यथा तत्प्रतिज्ञावैयर्थ्यात्। तन्न्यायेनैव 'विप्रतिपन्नमेयेऽपि मानापेक्षाऽस्ति' इत्यस्यार्थस्य साधयितुं शक्यत्वात् इयमेव प्रतिज्ञा तृतीयजात्युदाहरणं भवति।

स्वन्यायविरोधजातेः प्रमाणविरोधेप्यन्तर्भावः

(टी.) न केवलमियं जातिः स्ववाक्यविरोधान्तर्गता । किं तु ? मानविरोधेऽपि इत्याह

## मानविरोधश्च

'विप्रतिपन्नं प्रमेयं प्रमाणसापेक्षं प्रमेयत्वात् मेये मानापेक्षा नास्तीतित्येतन्मेयवत्' इत्यनुमानसम्भवात् प्रमाणविरोधे चेयं जातिरन्तर्भवतीति पूर्वावृत्त्या योजनीयम् ।

(रा. टि.) वाक्यं पूरयति तेनैव न्यायेन सिद्धत्वादिति । जातिरित्यादिवाक्यद्वयम् एकवाक्यतया योजयति ॥ यथेत्यादिना ॥ विप्रतिपन्नमेयेऽपीति ॥ यत् मेयं मानसापेक्षं न इत्युच्यते तत्प्रमेयेऽपीत्यर्थः । ॥ पूर्वावृत्त्येति ॥ दृष्टान्तत्वेन मेयेति वाक्याऽवृत्त्या इत्यर्थः ।

(श्री. टि.) तृतीयायाः स्वन्यायविरोधरूपतृतीयजातेः ॥ अन्यथेति ॥ मानानपेक्षत्व इत्यर्थः ॥ तत्प्रतिज्ञेति ॥ मेयस्य मानानपेक्षत्वप्रतिज्ञेत्यर्थः । तत्र हेत्वादिप्रमाणानभिधाने प्रतिज्ञामात्रस्य विवक्षितार्थासाधकत्वेन वैयर्थ्यापातादिति भावः ॥ तन्न्यायेनेति ॥ 'मेये मानापेक्षा नास्ति' इत्येतदृष्टान्तेनेत्यर्थः ॥ साधयितुमिति ॥ 'विप्रतिपन्नं किंचित्प्रमेयं प्रमाणसापेक्षं प्रमेयत्वात् मेये मानापेक्षा नास्ति इत्येतन्मेयवत्' इति साधयितुं शक्यत्वादित्यर्थः ।

इयं जातिः स्वन्यायविरोधरूपा तृतीयजातिः ॥ पूर्वावृत्त्येति ॥ पूर्वस्य जातिर्न मेये मानपेक्षा इत्यस्य । इयं इत्यध्याहार्यम् । तथा च न मेये मानापेक्षास्ति इत्येवं स्वन्यायविरोधरूपेयं जातिः मानविरोधश्च इति पूर्वावृत्त्या योज्यमित्यर्थः ।

प्रतिज्ञासंन्यासादीनां प्रमाणविरोधादिष्वन्तर्भावः

(टी.) तदनेन प्रतिज्ञासंन्यासविरोधापसिद्धान्तानां निरनुयोज्यानुयोगे च जातेः विरोध एवान्तर्भावः सूचितो भवति । संन्यासस्य मानसिद्धापलापरूपत्वात् । प्रतिज्ञाविरोधस्य एकवाक्यगतपदाऽदिविरोधरूपत्वात् । अपसिद्धान्तस्य साक्षात् ग्रहणात् । परोक्तजातेः प्रतिषेधाऽत्मकतृतीयजातिरूपत्वादिति ।

(रा. टि.) ॥ तदनेनेति ॥ विरोधविभागकथनादिनेत्यर्थः ॥ विरोधेति ॥ प्रतिज्ञाविरोधेत्यर्थः । क्रमेणान्तर्गतिं व्यनक्ति ॥ सन्न्यासस्येति ॥ प्रतिज्ञासंन्यासस्येत्यर्थः । अयं प्रमाणविरोधेऽन्तर्भवतीति भावः ॥ साक्षादिति ॥ स्ववाक्यविरोधोऽपसिद्धान्तजातिरूपेण इत्युक्तेरित्यर्थः ।

(श्री. टि.) ॥ तदनेनेति ॥ विरोधविभागकथनादिनेत्यर्थः ॥ विरोधेति ॥ प्रतिज्ञाविरोधेत्यर्थः ॥ निरनुयोज्यानुयोगे च जातेरिति ॥ छलं जातिः हान्याद्याभासः अप्राप्तकाले ग्रहणं च इति निरनुयोज्यानुयोगस्य चतुर्विधत्वात् निरनुयोज्यानुयोगे विद्यमानायाः तत्प्रभेदरूपाया इति यावत् ॥ विरोध एवेति ॥ मानविरोधस्ववाक्यविरोधरूपद्विविधविरोध एवेत्यर्थः । तत्र प्रतिज्ञासंन्यासस्य मानविरोधेऽन्तर्भाव इत्याह ॥ संन्यासस्येति ॥ उक्तेः प्रमितत्वादिति भावः । प्रतिज्ञाविरोधस्य स्ववचनविरोधेऽन्तर्भाव इत्याह ॥ प्रतिज्ञाविरोधस्येति ॥ साक्षात् ग्रहणादिति ॥ स्ववाक्यविरोधोऽपसिद्धान्तजातिरूपेण इति स्ववाक्यविरोधप्रभेदत्वेन कण्ठत एव ग्रहणादित्यर्थः ।

जातेस्तु स्वन्यायविरोधे अन्तर्भाव इत्याह ॥ परोक्तजातेरिति ॥ आद्यकक्षोद्ग्राह्ये स्थापनानुमाने गते स्वन्यायविरोधे द्वितीयाद्युत्तरकक्षाभाविपरोक्तजातेः अन्तर्भावासम्भवात् उक्तं प्रतिषेधात्मकतृतीयजातीति । परनिराकरणोत्तरात्मकतृतीयजातीत्यर्थः । तथा च परनिराकरणरूपोत्तरे प्राप्यमाणा या स्वन्यायविरोधात्मकतृतीयजातिः तद्रूपत्वात् इति योज्यम् । अत एव दूषणासमर्थमुत्तरं जातिः इति वक्ष्यति । अथ वा परप्रतिषेधरूपस्वन्यायविरोधात्मकास्मदुक्ततृतीयजातिमदुत्तररूपत्वादित्यर्थः । परप्रतिषेधरूपत्वम् उत्तरस्य विशेषणम् । एवं च न स्थापनानुमाने प्राप्यमाणस्वन्यायविरोधे जातेरन्तर्भावः । किं नाम ? प्रथमं वादिना स्थापनाहेतौ प्रयुक्ते सति दूषणाशक्तं प्रतिवाद्युदीरितं यत् उत्तरं द्वितीयाऽदिकक्षाभावि, तत्र प्राप्तो यः स्वन्यायविरोधः तत्र परोक्तजातेरन्तर्भाव इति नान्तर्भावासम्भव इति भावः ।

## परोक्तजातिनिरूपणम्

**(टी). सिद्धमपि दूषणासमर्थमुत्तरम् जातिः । असामर्थ्यं च द्विविधम् । साधारणमसाधारणञ्च । तत्र साधारणं स्वव्याहतिः । असाधारणं तु युक्ताङ्गहीनत्वं अयुक्ताङ्गाधिकत्वं अविषयवृत्तित्वञ्चेति । द्वयं च क्वचित् प्रत्येकं क्वचित् अङ्गाङ्गिभावेन । ताश्च प्रतिधर्मोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः । सर्वत्र प्रमादः प्रतिभाक्षयो वा अवसरः । आरोप्यमाणदोषभ्रान्तिः फलम् ।**

(रा. टि.) तृतीयजातिरूपत्वं कथम् ? इत्यतः परोक्तजातिलक्षणविभागतद्विशेषलक्षणपूर्वं प्रदर्शयति ॥ सिद्धमित्यादिना ॥ छले अनतिव्याप्तये सिद्धमित्युक्तिः ॥ युक्ताङ्गेति ॥ व्याप्त्याद्यङ्गेत्यर्थः ॥ अङ्गाङ्गिभावेनेति ॥ साधारणस्य असाधारणमङ्गमित्यर्थः ॥ ताश्चेति ॥ बहुवचनं वक्ष्यमाणाऽपेक्षया । समपदं प्रतिधर्मसमोत्कर्षसमेत्येवंरूपेण प्रत्येकं सर्वत्रान्वेति । तत्र स्वव्याहतेः सर्वत्र साम्यद्योतनाय । लक्ष्यलक्षणोत्थानबीजपतनावसरफल-

(शा. टि.) भेदेन जातेः सप्ताङ्गानि । तत्र लक्ष्यलक्षणे प्रोक्ते । अवसराद्यङ्गान्याह ॥ सर्वत्रेति ॥ त्रयोविंशति-जात्युत्तरेष्वित्यर्थः । जात्युत्तरवादिना वाद्यनुमाने यो दोष आरोप्यते 'भवत्ययं दोषः' इति तद्विषयभ्रान्तिर्वादिन[1] इत्यर्थः ॥ फलमिति ॥ जात्युत्तरस्येति योज्यं ।

(श्री. टि.) परोक्तजातिस्वरूपाज्ञानेऽन्तर्भावस्य दुर्ज्ञानत्वात् तत्स्वरूपज्ञापनाय

प्रयुक्ते स्थापनाहेतौ दूषणाशक्तमुत्तरं ।

जातिमाहुः.........................॥

इतिकारिकानुसारेण तल्लक्षणमाह ॥ सिद्धमपीति ॥ स्थापनाहेतौ प्रयुक्ते सतीति शेषः । सिद्धं पक्षधर्म-त्वोपेतमित्यर्थः । तेन छलव्यावृत्तिः । छलवादिविवक्षितहेतोरसिद्धत्वात् । तथा हि 'आढ्योऽयं नवकम्बलत्वात्' इति प्रयुक्ते 'कुतोऽस्य नव कम्बलाः ? एक एव कम्बलः प्रत्यक्षसिद्धः' इति वदतः छलवादिनः 'नेदं नवकम्ब-लवत्त्वरूपं साधनं स्वसाध्यसाधकम् असिद्धत्वात्' इति हि विवक्षितम् । तत्र असिद्धत्वात्, इति हेतुर्व्याप्तौ सत्यामपि पक्षभूते वादिहेतौ असिद्धः । अविवक्षितस्यैव सङ्ख्याविशेषस्य हेतुवाक्यार्थत्वेन कल्पनात् । लक्ष्यभूते जातिवाद्यभिमते हेतौ च व्याप्त्यभावेऽपि पक्षधर्मत्वमस्ति । वादिना हेतौ प्रयुक्ते नेदं साध्यसाध कं युक्ताङ्गानपेक्षप्रतिप्रमाणप्रतिरुद्धत्वात् इत्यादिजातिवादिहेतोः वादिसाधननिष्ठत्वात् । अतो नासम्भव इति सम्प्रदायः ।

केचित्सिद्धम् अकल्पितदूषणमित्यर्थः । तेन छलनिरासः । तस्य कल्पितदूषणत्वात् इत्याहुः ॥ असाम-र्थ्यमिति ॥ उत्तरस्येति शेषः । साधारणं सर्वजात्यनुगतम् । असाधारणं सर्वजात्यननुगतम् । युक्ताङ्गम् व्याप्त्यादि । अयुक्ताङ्गम् व्यभिचारादि ॥ अविषयवृत्तित्वमिति ॥ अनुचितस्थलसञ्चाराभ्युपगम इत्यर्थः । एतच्च उत्तरत्रोदाहरणप्रदर्शनावसर एव स्फुटं भविष्यति ॥ द्वयमिति ॥ साधारणमसाधारणञ्चेति द्विविधमप्य-सामर्थ्यं कस्चित् जातिविशेषे प्रत्येकम् अङ्गाङ्गिभावं विना प्राप्नोतीत्यर्थः । जातिविभागमाह ॥ ताश्चेति ॥ द्वन्द्वान्ते निर्दिष्टः समशब्दः प्रत्येकं सम्बध्यते । सर्वजात्युद्भावनकालं दर्शयति ॥ सर्वत्रेति ॥ प्रतिभाहानिः । सभाक्षोभादिना सदुत्तरप्रतिभाहानिः । प्रमादप्रतिभाहानिभ्यां सदसद्विवेकानवधाननिमित्तं असदुत्तरं प्रयुज्यते 'मूकीभावात् असदुत्तरप्रयोगो वरं, पाक्षिकजयसम्भवात्' इति बुद्ध्या प्रवृत्तिरित्यर्थः । यथाऽहुः

प्रमादः प्रतिभाहानिरासामवसरः स्मृतः । इति ।

लक्ष्यं लक्षणमुत्थानं वीतनावसरः फलम् ॥

मूलमित्यङ्गमेतासां.........................॥

[1] भ्रान्तिर्वादिन इत्यर्थः

(श्री. टि.) इति सर्वजातीनां सत्ताऽन्युक्तानि सन्ति। तत्रावसरो दर्शितः। अथ फलं दर्शयति ॥ आरोप्यमाणेति ॥ दोषज्ञानस्य भ्रन्तित्वोपपादनाय आरोप्यमाणेत्युक्तम्।

प्रतिधर्मसमजातिः

(टी.) तत्रानभ्युपेतयुक्त्याङ्गेन प्रतिप्रमाणेन प्रतिपक्षतया प्रत्यवस्थानं प्रतिधर्मसमः। स च साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः. वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः। यथा 'यदि महानससाधर्म्यात् ह्रदवैधर्म्याद् द्वाभ्यां वा धूमवत्वात् पर्वतोऽग्निमान् तर्हि ह्रदसाधर्म्यात् द्रव्यत्वात् निरग्निमान् किं न स्यात् अविशेषात्' इति। तथा 'महानसवैधर्म्यात् पर्वतत्वात् अनग्निकः किं न स्यात्'। एवं द्वाभ्यां प्रत्यक्षाऽदिना च प्रत्यवस्थानोदाहरणं द्रष्टव्यम्।

अत्र युक्त्याङ्गहीनप्रतिप्रमाणोपलम्भो द्वारम्। सत्प्रतिपक्षत्वमारोप्यम्। व्याप्त्याद्यभावात् युक्त्याङ्गहानिः। तदनपेक्षायां 'नेदं साधकं सत्प्रतिपक्षत्वात्' इति जात्युत्तरमपि न दूषणं पदार्थत्वात् इति व्याघात इति ॥ १ ॥

(रा. टि.) प्रत्यवस्थानं दूषणाभिधानमित्यर्थः ॥ प्रत्यक्षादिनेति ॥ यदि घटः इति प्रत्यक्षात् अयं घटः तर्हि श्यामो न इति प्रत्यक्षात् अघटोऽपि किं न स्यात्। नायं घटः इति प्रत्यक्षवैधर्म्यात् घटः इति प्रत्यक्षात् अयं घटः तर्हि पटः[1] इति प्रत्यक्षवैधर्म्यात् द्रव्यम् इति प्रत्यक्षात् अघटोऽपि किं न स्यात् इत्यादिरूपेण द्रष्टव्यमित्यर्थः ॥ द्वारमिति ॥ जात्युत्तरोक्तेर्बीजमित्यर्थः। युक्त्याङ्गहीनं इति वादिना वक्तव्यमिति योज्यम् ॥ तदनपेक्षायामिति ॥ जातिवादिन इति योज्यम् ॥ जात्युत्तरमिति ॥ इति जातिवादिनोक्तमुत्तरमपीत्यर्थः। इति साधयितुं शक्यत्वात व्याघातः इति वादिना वक्तव्यमित्यर्थः। व्याप्त्यपेक्षाया स्वेनैव त्याजितत्वादिति भावः। एवमग्रेऽपि सर्वत्र ध्येयम् ॥ १ ॥

(श्री. टि.) अनभ्युपेतयुक्त्याङ्गात्प्रमाणात्प्रतिरोधतः।
प्रत्यवस्थानमाचख्युः प्रतिधर्मसमां बुधाः ॥

इतिकारिकानुसारेण प्रथमोद्दिष्टां प्रतिधर्मसमजातिं लक्षयति ॥ तत्रेति ॥ उद्दिष्टासु त्रयोविंशतिजातिषु मध्य इत्यर्थः। वादिना स्थापनाहेतौ प्रयुक्ते सतीति शेषः ॥ प्रतिपक्षतया प्रत्यवस्थानमिति ॥ प्रतिपक्षोद्भावनमित्यर्थः। निराश्रयस्य प्रतिपक्षोद्भावनस्य असम्भवपरिहाराय वादिना स्थापनाहेतौ प्रयुक्त इत्युक्तम्। सदुत्तरप्रकरणसमव्यवच्छेदाय अनभ्युपेतयुक्त्याङ्गेन इत्युक्तम्। तत्र अवश्याभ्युपगन्तव्यानां तल्लक्षणाङ्गानां

[1] घटः

(श्री. टि.) वास्तवसत्त्वाभावेऽपि आभिमानिकं तदस्ति । अत्र तु आभिमानिकमपि तत्सत्त्वं न इति भावः। प्रत्यक्षादिनाऽपि प्रतिपक्षचोदनसंग्रहाय सामान्यतः प्रतिप्रमाणेन इत्युक्तम् । प्रमाणत्वेनाभिमतेनेत्यर्थः । युक्ताङ्गहीनस्य वास्तवप्रामाण्यासम्भवात् । प्रकरणसमजातिव्यवच्छेदाय प्रतिपक्षतया प्रत्यवस्थानमित्युक्तम् । तत्र बाधोद्भावनस्य वक्ष्यमाणत्वात् । प्रतिधर्मसमजातिप्रभेदं लक्षणकथनपूर्वकमाह ।। स चेति ।। यथाऽऽहुः

साधर्म्यवैधर्म्यसमौ तद्भेदावेव सूचितौ । इति ।

उभयं मिलित्वोदाहरति ।। यथेत्यादिना ।। महानससाधर्म्यादित्यस्य धूमवत्त्वादित्यादिना अन्वयः। ह्रदवैधर्म्यादित्यस्य तथेत्यादिना अन्वयः । द्वाभ्यामित्यस्य एवं द्वाभ्यामित्यनेन सम्बन्धः । तथा च एवं[1] द्वाभ्यां द्वाभ्याम् इति भवति । आपादकेऽपि द्वाभ्यां समुच्चिताभ्यां साधर्म्यवैधर्म्याभ्यां आपादनेऽपि द्वाभ्यां समुच्चिताभ्यां साधर्म्यवैधर्म्याभ्यां युगपत्प्रत्यवस्थानमित्यर्थः । तथा च यदि महानससाधर्म्यात् धूमवत्त्वात् पर्वतोऽग्निमानिष्यते तर्हि ह्रदसाधर्म्यात् द्रव्यत्वात् निरग्निकः किं न स्यात् द्रव्यत्वाविशेषात् इति साधर्म्येण प्रत्यवस्थानम् । तथा यदि ह्रदवैधर्म्यात् धूमवत्त्वात् पर्वतोऽग्निमानिष्यते तर्हि महानसवैधर्म्यात् पर्वतत्वात् अनग्निकः किं न स्यात् इति वैधर्म्येण प्रत्यवस्थानं द्रष्टव्यम् । एवं द्वाभ्यां प्रत्यवस्थानं च द्रष्टव्यम् । तत्प्रकारस्तु यदि महानससाधर्म्यात् ह्रदवैधर्म्याच्च धूमवत्त्वात् पर्वतोऽग्निमानिष्यते तर्हि महानसवैधर्म्यात् पर्वतत्वात् ह्रदसाधर्म्यात् द्रव्यत्वाच्च पर्वतो निरग्निकोऽपि किं न स्यात् इति ।। प्रत्यक्षादिनेति ।। प्रत्यक्षशब्दाऽभासादिनेत्यर्थः । तद्यथा 'पर्वतोऽग्निमान् धूमवत्त्वात्' इति वादिना स्थापनाहेतौ प्रयुक्ते प्रत्यक्षेण अनुपलम्भात् निरग्निकोऽपि किं न स्यात् इत्यादि ।

जात्युत्तरोत्थाने बीजं दर्शयति ।। अत्रेति ।। द्वारं उत्थानबीजम् । साहचर्यमात्रमेव प्रयोजकं किं व्याप्त्या? इत्यत आह ।। तदिति ।। तदनपेक्षायां व्याप्त्याद्यनपेक्षायाम् । इदं धूमवत्त्वरूपं साधनम् ।। पदार्थत्वादिति व्याघात इति ।। तर्हि वयमपि वदामः 'सत्प्रतिपक्षत्वात् इत्ययं हेतुः असाधकत्वरूपसाध्यसाधको न पदार्थत्वात् संमतवत् । न चात्र व्याप्त्यभावः । साहचर्यमात्रस्य प्रयोजकत्वेन त्वया अङ्गीकृततया व्याप्त्यपेक्षाया अनङ्गीकारात् इदानीं तदङ्गीकारे च विरोधात् इत्येवं स्वन्यायविरोध इति ।। १ ।।

### उत्कर्षसमजातिः

(टी.) वादिसाधनसामर्थ्येन साध्यस्यैव[2] व्याप्तिं विना कस्यचिदनिष्टधर्मस्य दृष्टान्तात् पक्षे उत्कर्षः उत्कर्षसमः । यथा 'यदि धूमवत्त्वात् महानसवत् अग्निमान् पर्वतः तर्हि तत एव स्थाल्यादिमानपि स्यात् । अविशेषादिति ।

---

[1] द्वाभ्यां एवं द्वाभ्यां.  [2] साध्यस्येव.

(टी.) अत्र साधनसाहचर्यदर्शनमुत्थानबीजम्। विशेषविरुद्धत्वमारोप्यम्। व्याप्त्यभावात् युक्ताङ्गहानिः। तदनङ्गीकारे 'नेदं साधकं विशेषविरुद्धत्वात् नित्यत्वसाधककृतकत्ववत्' इति प्रतिषेधहेतावपि नित्यत्वसाधककृतकत्ववत् तत एव हेतोर्धूमवत्वस्यामूर्तवृत्तित्वं च स्यादित्युत्कर्षसाम्यात् व्याघात इति ॥ २ ॥

(रा. टि.) सामर्थ्येन पक्षधर्मत्वरूपेणेत्यर्थः ॥ प्रतिषेधहेतावपीति ॥ जातिवादिनोक्तदूषणहेतावपीत्यर्थः ॥ २ ॥

(श्री. टि.) कस्याप्यनिष्टधर्मस्य वादिसाधनशक्तितः।
दृष्टान्तात्पक्ष उत्कर्ष उत्कर्षसम उच्यते ॥

इतिकारिकानुसारेण उत्कर्षसमजातिं लक्षयति ॥ वादिसाधनेति ॥ अविशेषसमव्यवच्छेदाय वादिसाधनसामर्थ्येनेत्युक्तं। तत्र हेत्वन्तरेणोत्कर्षं वक्ष्यति। सदुत्तरव्यावृत्त्यै व्याप्तिं विनेति। शिष्टं स्वरूपकथनमिति ज्ञेयम्। तत एवं धूमवत्त्वादेव। तद्वदेव इति शेषः। स्थाल्यादीति आदिपदेन व्यञ्जनवत्त्वग्रहणम्। अविशेषात् धूमवत्त्वाविशेषात्।

दर्शनं स्थाल्यादिमत्त्वस्येति शेषः॥ विशेषविरुद्धत्वमिति ॥ हेतोः पक्षधर्मताबललभ्यं यत् पक्षीयं साध्यं तत् विशेषशब्देनोच्यते। यथा 'क्षित्यादिकं सकर्तृकम्' इत्यत्र कार्यत्वहेतोः पक्षधर्मताबललभ्यं सर्वज्ञकर्तृकत्वमिव धूमवत्त्वहेतोः पक्षधर्मताबललभ्यं यत् पक्षीयसाध्यं पर्वतीयवह्निरूपं तेन विरुद्धत्वं तदभावेन व्याप्तत्वम् आरोप्यमित्यर्थः। तथा हि, धूमवत्त्वस्य महानसे स्थाल्यादिमत्त्वेन साहचर्यदर्शनेन पर्वतीयवह्निना तददर्शनात् प्रत्युत तदभावेनैव सहचारदर्शनात विरुद्धत्वम् इति सम्प्रदायः ॥ तदनङ्गीकार इत्यादि ॥ अयं भावः, 'धूमवत्वात् इति हेतुः साध्यसाधको न विरुद्धत्वात् शब्दे नित्यत्वसाधककृतकत्ववत्' इति जातिवादिनत्युक्ते[1] प्रतिषेधहेतावपि विरुद्धत्वं कृतकत्वे यथा साध्यासाधकत्वेन सह दृष्टं एवममूर्तवृत्तित्वेनापि सहचरितं दृष्टम् शब्दस्यामूर्तत्वेन कृतकत्वस्य तद्वृत्तित्वात्। तथा च तद्वदेव धूमवत्त्वेऽप्यमूर्तवृत्तित्वं साधयेत् विरुद्धत्वाविशेषात। धूमवत्त्वे च अमूर्तवृत्तित्वमनिष्टं पर्वतस्य मूर्तत्वेन धूमवत्त्वस्य तद्वृत्तित्वात्। तथा च धूमवत्त्व अमूर्तवृत्ति विरुद्धत्वात् नित्यत्वसाधककृतकत्ववदिति। न चात्र व्याप्त्यभावः। तदनङ्गीकारात् इति स्वव्याघातविरोध इति ॥ २ ॥

---

[1] प्रयुक्ते.

### अपकर्षसमजातिः

(टी.) दृष्टान्ते साध्यस्य साधनस्य वा व्यापकं किंश्चित्[1] धर्ममारोप्य व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति पक्षे तन्निवृत्त्या साध्यसाधनयोरन्यतरापकर्षः अपकर्षसमः। यथा महानसे अग्निमत्त्वस्य धूमवत्त्वस्य वा व्यापकं स्थाल्यादिमत्त्वं पर्वतात् व्यावर्तमानं तत् व्यावर्तयति। व्यापकाभिमतव्यावृत्त्युपलम्भः अत्रो त्थानबीजम्। साध्यापकर्षे बाधितविषयत्वं सत्प्रतिपक्षत्वं वा आरोप्यम्। साधनापकर्षे असिद्धत्वम्। व्याप्त्यभावात् युक्ताङ्गत्यागः। तदनभ्युपगमे 'नेदं साधकं बाधितत्वात् अनुष्णत्वसाधकपदार्थत्ववत्' इति प्रतिषेधहेतावपि पदार्थत्वे असाधकत्वं बाधितविषयत्वं वा सर्वधर्मिनिष्ठत्वेन व्याप्तं दृष्टमिति धूमवत्वात व्यावर्तमानमसाधकत्वाऽद्यपि व्यावर्तयतीत्यपकर्षसाम्यात् व्याहतिरिति ॥ ३ ॥

(रा. टि.)॥ व्याप्यनिवृत्तिरिति ॥ इतिशब्दो हेत्वर्थः ॥ तन्निवृत्त्येति ॥ व्यापकत्वेनारोपितधर्मनिवृत्त्येत्यर्थः॥ पदार्थत्व इति ॥ जातिवादिना दृष्टान्तीकृत इत्यर्थः ॥ ३ ॥

(श्री. टि.) व्यावृत्ते व्यापकाभासे पक्षतो लिङ्गसाध्ययोः।
आकर्षोऽन्यतरस्य स्यादपकर्षसमं स्फुटम् ॥

इतिकारिकाऽनुसारेण अपकर्षसमजातिं लक्षयति ॥ दृष्टान्त इति ॥ तद्व्यावर्तयतीति ॥ तत् अग्निमत्त्वं धूमवत्त्वं वा व्यावर्तयतीत्यर्थः ॥ व्यापकाभिमतेति ॥ धूमवत्त्वव्यापकत्वेनाभिमतस्थाल्यादिमत्त्वव्यावृत्त्युपलम्भ इत्यर्थः ॥ नेदमिति ॥ इदं धूमवत्त्वरूपं साधनं साध्यसाधकं न इत्यर्थः। असाधकत्वं असाधकत्वरूपं साध्यम्। बाधितविषयत्वं बाधितविषयत्वरूपं साधनम् ॥ सर्वधर्मिनिष्ठत्वेनेति॥ पदार्थत्वस्य केवलान्वयित्वेन तत्र सर्वधर्मिनिष्ठत्वसद्भावादित्यर्थः ॥ धूमवत्त्वाद्व्यावर्तमानमिति ॥ ह्रदादावभावेन धूमवत्त्वे सर्वधर्मिनिष्ठत्वाभावात् पक्षीभूतात् धूमवत्त्वात् व्यावृत्तं इत्यर्थः ॥ असाधकत्वाऽद्यपीति ॥ स्वव्याप्यभूतं असाधकत्वम्। आदिपदात् बाधितविषयत्वञ्चेत्यर्थः। तथा च अत्रापि साध्यापकर्षे बाधितविषयत्वम् साधनापकर्षे असिद्धत्वम् इति द्रष्टव्यम्[2] ॥ साम्यादिति ॥ तथा च धूमवत्त्वमसाधकत्वरूपसाध्यसाधकं न भवति बाधितविषयत्वात्। अनुष्णत्वसाधकपदार्थत्ववत्। न चात्र व्याप्त्यभावः। तदनङ्गीकारादिति स्वन्यायविरोध इति ॥ ३ ॥

### वर्ण्यसमजातिः

(टी.) पक्षमात्रविवक्षितरूपवद्धेतुमत्त्वतदभावयोः सपक्षस्यापि साध्यत्वाऽऽपादनं वर्ण्यसमः। असिद्धार्थत्वं आरब्धसाध्यज्ञापनशक्तिमत्त्वं व्याप्तिग्राहकप्रमाणशून्यत्वं संशयसमानविषयत्वं स्वरूपविशेषश्चेत्येतानि हेतोः पक्षमात्रविवक्षितरूपाणि। तत्रासिद्धार्थे पर्वत इव महानसे धूमवत्त्वं वर्तते न वा।

[1] कश्चित्  [2] बाधितविषयत्वं धूमवत्त्वगतासाधकत्व.

(टी.) आद्ये महानसोऽपि साध्यवत्त्वेन साध्यः स्यात्। अन्यथा साध्यवैकल्यापातात्। द्वितीये तद्रूपहेतुमत्तया साध्यः स्यात्। अन्यथा साधनवैकल्यापातात्। एवं रूपान्तरेष्वपि द्रष्टव्यम्।

(रा. टि.) असिद्धार्थत्वमित्यादि बहुव्रीहिः। प्रमाणान्तरानवगतार्थकत्वमित्यर्थः॥ व्याप्तिग्राहकेति॥ तत्सत्त्वे साध्यस्य सिद्धत्वप्राप्तेरिति भावः॥ संशयसमानेति॥ संशयविषयसमानविषयत्वं सन्दिग्धविषयकत्वमिति यावत्। धूमाऽदिस्वरूपविशेषश्चेत्यर्थः। यद्वा शुक्लवर्णाग्रेलिहत्वाऽदिस्वरूपविशेषश्चेत्यर्थः॥ एवं रूपान्तरेष्विति॥ आरब्धज्ञापनशक्तिमद्धूमवत्त्वं महानसेऽस्ति चेत् साध्यवत्त्वेन महानसोऽपि साध्यः स्यात्। न चेत् साधनवत्तया साध्यः स्यादित्यादिरूपेणेति भावः।

(श्री. टि.) हेतोस्तु यादृशं रूपं पक्षमात्रे विवक्षितम्।
तद्रूपहेतुमान् साध्यः सपक्षोऽप्यन्यथा पुनः॥
भवेत्साधनवैकल्यमिति वर्ण्यसमोदयः।

इतिकारिकाऽनुसारेण वर्ण्यसमजातेर्लक्षणमाह॥ पक्षमात्रेति॥ कानि तानि हेतोः पक्षमात्रविवक्षितानि रूपाणि? इत्यत आह॥ असिद्धार्थत्वमित्यादिना॥ साध्यस्य प्रमाणान्तरानिश्चितत्वेन असिद्धार्थत्व एकं पक्षीयहेतो रूपम् हेतुर्हि पक्षे साध्यज्ञापनाय प्रवृत्तशक्तिर्भवति इति[1] आरब्धसाध्यज्ञापनशक्तित्वाख्यं द्वितीयम् पक्षीयसाध्यस्य पूर्वमज्ञातत्वेन तन्निरूपितव्याप्तेः पक्षीयहेतुवृत्तितया ज्ञातुमशक्यत्वात् व्याप्तिग्राहकप्रमाणशून्यत्वाभिधं तृतीयम् सन्दिग्धे न्यायप्रवृत्तेः पक्षीयहेतोः संशयसमानविषयत्वाख्यं चतुर्थम् पक्षीयहेतुस्वरूपविशेषरूपं पञ्चममित्यर्थः। यथा आहुः

असिद्धार्थत्वमारब्धसाध्यज्ञापनशक्तिता।
व्याप्तिप्रमाणशून्यत्वं संशयैकार्थता तथा॥
स्वरूपभेदश्चेत्येतत्पक्षमात्रे विवक्षितम्।
हेतुरूपम्............................। इति।

एवं च पक्षमात्रे हेतोर्विवक्षितानि यानि असिद्धार्थत्वाऽदीनि रूपाणि तद्वान् यः हेतुः तद्वत्त्वतदभावयोः सकाशात्। तद्वत्त्वतदभावाभ्याम् इति यावत्। सपक्षस्यापि साध्यसाधनवत्तया साध्यत्वाऽऽपादनं वर्ण्यसम इत्यर्थः।

---

[1] प्रवृत्तः तज्ज्ञापनशक्तिर्भवति.

(श्री. टि.) उपलक्षणत्वेन एकं रूपं पुरस्कृत्योदाहरति ॥ तत्रेति ॥ असिद्धार्थं असिद्धार्थत्वाऽन्यरूपोपेतं धूमवत्त्वम् इत्यन्वयः ॥ साध्यः स्यादिति ॥ पर्वत इव धूमवत्त्वेन हेतुनेत्यर्थः । अन्यथा साध्यत्वेनासाधने[1] ॥ तद्रूपहेतुमत्त्वयेति ॥ असिद्धार्थत्वाऽन्यरूपवद्धेतुमत्त्वयेत्यर्थः । अन्यथा हेतुमत्तयाऽसाधने ॥ एवमिति ॥ आरब्धसाध्यज्ञापनशक्तित्वरूपोपेतं धूमवत्त्वं पर्वत इव महानसे वर्तते न वा इत्यादिरूपेणेत्यर्थः ।

(टी.) अत्र पक्षमात्रविवक्षितरूपवद्धेतुमत्वादर्शनमुत्थानहेतुः साध्यसाधनवैकल्ये आरोप्ये ॥ 'नायं दृष्टान्तः साधनाङ्गं साध्याऽदिविकलत्वात् संमतवत्' इत्यत्रापि यथोक्तसाध्यत्वस्य वक्तुं शक्यत्वात् व्याघातः । पक्षवृत्तिहेतुरूपाणां सपक्षवर्तिन्यपि सञ्चरणात् अविषयवृत्तित्वञ्च । अयुक्ताङ्गाधिकत्वं वा सपक्षवृत्ति[2]हेतोरयुक्तानामेवासिद्धार्थत्वाऽदीनामङ्गीकारादिति ॥ ४ ॥

(रा. टि.) ॥ यथोक्तसाध्यत्वस्येति ॥ पक्षे विवक्षितासिद्धार्थत्वाऽदिरूपविशिष्टः साध्याऽदिविकलत्वहेतुः त्वदभिमतदृष्टान्तेऽस्ति चेत् असाधनाङ्गत्वरूपसाध्यवत्तया साध्यः स्यात् इत्यादिरूपेणेति भावः ॥ ४ ॥

(श्री. टि.) ॥ हेतुमत्त्वादर्शनमिति ॥ पक्षस इति शेषः । स्वन्यायविरोधमुपपादयति ॥ नायमिति ॥ अयं महानसरूपः साधनाङ्गं धूमवत्त्वेन पर्वते वह्निसाधने अङ्गं इति सम्बन्धः । संमतवत् धूमानुमाने ह्रदवत् इत्यर्थः ॥ यथोक्तेति ॥ उक्तप्रकारेणेत्यर्थः ॥ साध्यत्वस्येति ॥ सपक्षस्यापि हेतुत्वाऽदिमत्तया[3] साध्यत्वस्येत्यर्थः ।

अयं भावः 'नायं दृष्टान्तः साधनाङ्गं साध्यादिविकलत्वात् ह्रदवत्' इत्यत्र पक्षमात्रविवक्षितासिद्धार्थत्वाऽदिरूपोपेतः साध्याऽदिविकलत्वरूपो हेतुः पक्ष इव दृष्टान्ते ह्रदे वर्तते न वा ? आद्ये ह्रदोऽपि साध्यवत्तया साध्यः स्यात् । अन्यथा साध्यवैकल्याऽपातात् । द्वितीये तद्रूपहेतुमत्तया साध्यः स्यात् । अन्यथा साधनवैकल्याऽपातात् इत्येवं वक्तुं शक्यत्वात् व्याघातः इति ।

साधारणं दुष्टत्वबीजमुक्त्वा असाधारणं तदाह ॥ पक्षवृत्तीति ॥ सपक्षवर्तिहेतोः कथमयुक्ताङ्गाधिकत्वम् ? इत्यतः तत् उपपादयति ॥ सपक्षवर्तीति ॥ अयुक्तानामेवेति ॥ सपक्षवर्तिहेतोः सिद्धार्थत्वाऽदीनामेव युक्ताङ्गत्वात् इति भावः ॥ ४ ॥

---

[1] साध्यवत्त्वेनासाधने [2] श्री. वर्ति.

[3] साधनाङ्गत्वाभावरूपसाध्यवत्तया साध्यादिविकलत्वरूपहेतुमत्तया वा साध्यत्वस्येत्यर्थः ।

## अवर्ण्यसमजातिः

(टी.) सपक्षमात्रविवक्षितरूपवद्धेतुमत्वतदभावयोः पक्षस्य असाध्यत्वाऽऽपादनमवर्ण्यसमः । सिद्धार्थत्वं प्रवृत्तसाध्यज्ञापनशक्तिमत्वाभावः व्याप्तिग्राहकप्रमाणवत्वं निश्चयसमानविषयत्वं रूपभेदश्च इत्येतानि हेतोः सपक्षमात्रविवक्षितरूपाणि । तत्र सिद्धार्थे धूमवत्वं महानस इव पर्वते वर्तते न वा ? आद्ये साध्यस्य सिद्धत्वात् पक्षे[1] न साध्यः स्यात् । द्वितीयेऽपि हेतोः स्वरूपासिद्धत्वेन असाध्यः स्यात् इति । एवं रूपान्तरेष्वपि द्रष्टव्यम् । अत्र सपक्षमात्रविवक्षितरूपवद्धेतुमत्तया पक्षस्यासिद्धिः कारणम् । स्वरूपासिद्ध्यादि आरोप्यम् । वर्ण्यसमवदेव दुष्टत्वमूलमिति ॥ ५ ॥

(रा. टि.) ॥ प्रवृत्तसाध्येति ॥ यत् साधयितुं प्रवृत्तं तादृशसाध्येत्यर्थः ॥ रूपभेदश्चेति ॥ पक्षीय हेतुस्वरूपापेक्षयेति योज्यम् ॥ स्वरूपासिद्धत्वेनासाध्यः स्यादिति ॥ पक्षोऽपीत्यनुकर्षः । साधकाभावादिति भावः॥ कारणमिति ॥ एतज्जात्युत्तरोक्तेरिति योज्यम् ॥ वर्ण्यसमवदेवेति ॥ ' नायं हेतुः साध्यसाधकः असिद्धत्वात् शब्दानित्यत्वसाधकचाक्षुषत्ववत् इत्युक्तजात्युत्तरेऽपि एवं विकल्पदूषणयोः सुवचत्वेन स्वव्याघाताऽदिकं जात्युत्तरस्य दुष्टत्वे मूलं ध्येयम् इत्यर्थः ॥ ५ ॥

(श्री. टि.) सपक्षवर्तिनो हेतोर्यादृग्रूपं विवक्षितम् ।
पक्षेऽपि तादृगेव स्यादन्यथाऽसिद्धिहेतुता ॥
सपक्षवत्तदा[2] साध्ये इत्यवर्ण्यसमाकृतिः

इति कारिकाऽनुसारेण अवर्ण्यसमजातिं लक्षयति ॥ सपक्षमात्रेति ॥ कानि तानि हेतोः सपक्षमात्रविवक्षितरूपाणि ? इत्यत आह ॥ सिद्धार्थत्वमित्यादि ॥ एतदर्थः पूर्ववैपरीत्येनावगन्तव्यः । यथा आहुः

............सपक्षे तु तादृग्रूपविपर्ययः । इति ।

उपलक्षणत्वेन एकं रूपं पुरस्कृत्योदाहरति ॥ तत्रेति ॥ न साध्यः स्यादिति ॥ साधयितुं योग्यं साध्यं तद्वान् न स्यात् सिद्धसाधनत्वादित्यर्थः[3] ॥ असाध्यः स्यादिति ॥ साध्यवत्तया साधयितुमशक्यः स्यात् तत्साधकस्य हेतोः स्वरूपासिद्धत्वादित्यर्थः ॥ रूपान्तरेष्विति ॥ प्रकृतसाध्यज्ञापनशक्तित्वाऽऽदिरूपान्तरेष्वित्यर्थः[4] । कारणं उत्थानबीजम् । स्वरूपासिद्ध्यादीत्यादिपदेन सिद्धसाधनत्वं ग्राह्यम् ।

---

[1] रा. पक्षोऽपिनसाध्यः [2] सपक्षवत्तदाऽसाध्यः. [3] हेतोः सिद्धसाधनत्वादित्यर्थः;
[4] प्रवृत्तसाध्यज्ञापनशक्तिमत्वाभावादिरूपान्तरेष्वित्यर्थः;

(श्री. टि.) ॥ वर्ण्यसमवदिति ॥ दुष्टत्वमूलं व्याघाताऽदिकं वर्ण्यसमवदेव द्रष्टव्यमित्यर्थः । तथा हि 'धूमवत्त्वात इति हेतुः साध्यासाधकः स्वरूपासिद्धत्वात् चाक्षुषत्ववत्' इत्यत्रापि सिद्धार्थे स्वरूपासिद्धत्वं सपक्षे चाक्षुषत्व इव पक्षभूते धूमवत्त्वहेतौ वर्तते न वा ? आद्ये साध्यस्य सिद्धत्वात् पक्षोऽपि न साध्यवत्तया साध्यः स्यात् । सिद्धसाधनताऽपत्तेः[1] । द्वितीयेऽपि हेतोः स्वरूपासिद्धत्वेन असाध्यः स्यात् इति वक्तुं शक्यत्वात् व्याघातः । सपक्षवर्तिहेतुरूपाणां पक्षवर्तिन्यपि हेतौ सञ्चरणात् अविषयवृत्तित्वं । पक्षवर्तिहेतोरयुक्तानामेव सिद्धार्थत्वाबज्ञानामङ्गीकारादयुक्ताङ्गाधिकत्वञ्चेति ॥ ५ ॥

### विकल्पसमजातिः

**(टी.) साधनस्य धर्मान्तरेण धर्मान्तरस्य साध्यधर्मेण धर्मान्तरस्य धर्मान्तरेण वा व्यभिचारेण साधनस्यापि साध्यव्यभिचाराऽपादनं विकल्पसमः । तत्र साधनस्य धर्मान्तरेण व्यभिचारस्त्रिविधः । पक्षदृष्टान्तयोः पक्षयोर्दृष्टान्तयोश्चेति । तत्र आद्यो यथा 'महानसे धूमवत्त्वमपर्वतत्वेन सह वर्तमानमपि यथा पक्षे तेन सह न वर्तते, तथा अत्र अग्निमत्वेन सह वर्तमानमपि पक्षे न तथा वर्तेत' इति । द्वितीयो यथा 'यथा गिरिशिखरयोरुच्चनीचत्वाभ्यां धूमवत्त्वस्य व्यभिचारस्तथाऽग्निमत्वेनापि स्यात्' इति । तृतीयो यथा 'यथा महानसयोरल्पत्वमहत्वाभ्यां धूमवत्वं व्यभिचरति तथा अग्निमत्वेनापि व्यभिचरेत्' इति । धर्मान्तरस्य साध्यधर्मेण यथा 'यथा द्रव्यत्वमग्निमत्वव्यभिचारि तथा धूमवत्वमपि स्यात्' इति । धर्मान्तरस्य धर्मान्तरेण यथा 'यथा रूपं रसव्यभिचारि तथा धूमवत्वमग्निमत्वव्यभिचारि स्यादिति ।**

(रा. टि.) धर्मान्तरस्य साध्यधर्मेणेति द्वितीयकोटिः ॥ तथाऽत्रेति ॥ महानस इत्यर्थः ॥ द्वितीय इति ॥ पक्षयोः साधनस्य धर्मान्तरेण व्यभिचारदृष्ट्या साध्येनापि तदापादनपक्ष इत्यर्थः । 'गिरिशिखरौ वह्निमन्तौ धूमवत्त्वात्' इत्यत्र गिरौ उच्चत्वेन शिखरे नीचत्वेन व्यभिचारो यथेत्यर्थः ॥ तृतीयो यथेति ॥ दृष्टान्तयोः साधनस्य धर्मान्तरव्यभिचारेण पक्षे साध्येनापि तदापादनपक्ष इत्यर्थः । महानसयोरित्यत्र स्थूलसूक्ष्मयोरिति योज्यम् ॥ रसव्यभिचारीति ॥ तेजसीति भावः ॥

(श्री. टि.) धर्मस्यैकस्य केनापि धर्मेण व्यभिचारतः ।
हेतोः साध्याभिचारोक्तेर्विकल्पसमजातिता ॥

इतिकारिकानुसारेण विकल्पसमजातिं लक्षयति ॥ साधनस्येति ॥ व्यभिचारेण व्यभिचारदर्शनेन ॥ पक्षदृष्टान्तयोरिति ॥ पक्षे दृष्टान्ते च साधनस्य धर्मान्तरेण व्यभिचारदर्शनेन साध्यधर्मेणापि व्यभि-

---

[1] सिद्धसाधनत्वात्.

(श्री. टि.) चाराऽऽपादनमित्यर्थः ॥ पक्षयोरिति ॥ पक्षद्वये साधनस्य धर्मान्तरेण व्यभिचारदर्शनात् साध्येनापि व्यभिचारापादनमित्यर्थः ॥ दृष्टान्तयोश्चेति ॥ दृष्टान्तद्वये साधनस्य धर्मान्तरेण व्यभिचारदर्शनात् साध्येनापि तदापादनमित्यर्थः । तत्र पक्षे साधनस्य धर्मान्तरेण व्यभिचारदर्शनात् साध्येनापि तदापादनमुदाहरति ॥ तत्राद्यो यथेत्यादि ॥ अत्र महानसे । तथा च 'धूमवत्त्वरूपसाधनस्य अपर्वतत्वरूपधर्मान्तरेण पक्षे व्यभिचारदर्शनात् साध्येन अग्निमत्त्वेनापि व्यभिचारोऽस्तु' इत्यापादनमिति फलितार्थः । तथा 'धूमवत्त्वस्य दृष्टान्तपाषाणत्वरूपधर्मान्तरेण[1] व्यभिचारदर्शनात् पक्षे साध्येनापि व्यभिचारोऽस्तु' इत्येवं दृष्टान्ते साधनस्य धर्मान्तरेण व्यभिचारदर्शनेन पक्षे साध्येनापि व्यभिचारापादनमुदाहर्तव्यम् ॥ गिरिशिखरयोरिति ॥ 'गिरिशिखरौ अग्निमन्तौ धूमवत्त्वात्' इत्यत्र धूमवत्त्वस्य गिर्यधोभागे सत्यपि[2] उच्चत्वस्याभावात् तथोर्ध्वभागे शिखरे धूमवत्त्वसद्भावेऽपि तत्र नीचत्वस्याभावात् इत्येवं 'पक्षयोरेव साधनस्य उच्चत्वनीचत्वरूपधर्मान्तरेण व्यभिचारदर्शनात् अग्निमत्त्वेनापि व्यभिचारः स्यात्' इत्यापादनमित्यर्थः ॥ महानसयोरिति ॥ अत्राल्पमहच्छब्दावणुस्थूलपरौ । तथा च 'पर्वतोऽग्निमान् धूमवत्त्वात् महानसद्वयवत्, इत्यत्रापि धूमवत्त्वस्य महति महानसे सत्त्वेऽपि तत्राल्पत्वस्याभावात् तथा अल्पमहानसे धूमवत्त्वसद्भावेऽपि तत्र महत्त्वस्याभावात् इत्येवं 'दृष्टान्तद्वये साधनस्य अल्पत्वमहत्त्वरूपधर्मान्तरेण व्यभिचारदर्शनात् अग्निमत्त्वेनापि व्यभिचरेत्' इत्यापादनमित्यर्थः ॥ रसव्यभिचारीति ॥ तेजस्यभावादिति भावः ।

(टी.) अत्र क्वचिद्व्यभिचारदर्शनमुत्थानहेतुः । अनैकान्तिकत्वमारोप्यम् । अन्यत्र व्यभिचारेणात्र व्यभिचाराऽऽपादने व्याप्त्यभावात् युक्ताङ्गहानिः[3] । तदनङ्गीकारे 'नेदं साधकं अनैकान्तिकत्वात्' इति प्रतिषेधहेतोरपि तथात्वाऽऽपातेन व्याघातः' इति ॥ ६ ॥

(रा. टि.) ॥ युक्ताङ्गहीन इति ॥ विकल्पसम इति योज्यम् ॥ तदिति ॥ व्याप्त्यनङ्गीकार इत्यर्थः ॥ तथात्वापातेनेति ॥ 'यथा रूपं रसव्यभिचारि तथा अनैकान्तिकत्वमपि असाधकत्वव्यभिचारि इत्याद्यापातेनेत्यर्थः ॥ ६ ॥

(श्री. टि.) ॥ व्यभिचारदर्शनमिति ॥ साधनस्य धर्मान्तरेण धर्मान्तरस्य साध्यधर्मेण धर्मान्तरेण[4] व्यभिचारदर्शनमित्यर्थः ॥ अत्रेति ॥ पक्षेऽपि साध्यव्यभिचारापादन इत्यर्थः ॥ तथात्वापातेनेति ॥ साधनस्य धर्मान्तरेण धर्मान्तरस्य साध्यधर्मेण धर्मान्तरस्य धर्मान्तरेण व्यभिचारदर्शनात् साध्येनापि व्यभिचारित्वापातेनेत्यर्थः । तथा हि 'धूमवत्त्वात् इति साधनं साध्यासाधकं अनैकान्तिकत्वात्' इत्यत्र अनैकान्तिकत्वरूपसाधनस्य साधकत्वरूपधर्मान्तरेण व्यभिचारदर्शनात् तथा[5] रूपादिरूपधर्मान्तरस्य रसादिरूपधर्मान्तरेण

---

[1] दृष्टान्ते पाषाणत्व. [2] सत्त्वेपि उच्चत्व. [3] रा. युक्ताङ्गहीनः.
[4] धर्मान्तरस्य धर्मान्तरेण [5] साधकत्वरूपधर्मान्तरस्य असाधकत्वरूपसाध्यधर्मेण व्यभिचारदर्शनात् तथा.

(श्री. टि.) व्यभिचारदर्शनात् अनैकान्तिकत्वरूपसाधनस्यापि असाधकत्वरूपसाध्येन व्यभिचारापादनसम्भवात्। न चात्र व्याप्त्यभावः। तदनङ्गीकारात् इति स्वन्यायविरोध इति भावः ॥ ६ ॥

साध्यसमजातिः

(टी.) पक्षाऽदीनां सिद्धानामपि तेनैव हेतुना साध्यत्वाऽऽपादनं साध्यसमः। यथा पर्वताऽदिसिद्ध्यर्थमपि धूमवत्त्वमेव प्रयोक्तव्यम्। अन्यथा क्रोडीकृतधर्म्यादिविषयस्य लिङ्गस्य तत्राप्रयोजकत्वे साध्येऽपि तथात्वाऽऽपातात्। दृष्टान्तेऽपि साध्यसिद्ध्यर्थमयमेव हेतुः प्रयोक्तव्यः। अन्यथा पक्षेऽपि अप्रयोजकत्वाऽऽपातात्। अन्यत्समानम्। तथा च तत्सिद्ध्यर्थं यावत् न प्रयुज्यते तावदाश्रयाऽसिद्ध्यादीति।

(रा. टि.) ॥ पक्षादीनामिति ॥ धर्मिसाधनदृष्टान्तव्याप्त्यादीनामित्यर्थः ॥ क्रोडीकृतेति ॥ समुदायीकृतधर्मिसाध्यसाधनादिविषयकस्य लिङ्गस्य इत्यर्थः ॥ अन्यथा पक्षेऽपीति ॥ वह्निमत्त्वसाधनेऽपीत्यर्थः ॥ अन्यदिति ॥ पक्षे दृष्टान्ते च साधनसिद्ध्यर्थमयमेव हेतुः प्रयोक्तव्यः। अन्यथा पक्षेऽपि अप्रयोजकः स्यात् इति व्याप्तिसिद्ध्यर्थं दृष्टान्तमहानसाऽदिसिद्ध्यर्थं इत्यादि एवमेव ज्ञेयमित्यर्थः।

(श्री. टि.) दृष्टान्तहेतुपक्षाणां सिद्धानामपि साध्यवत्।
साध्यत्वापादनं तस्माल्लिङ्गात् साध्यसमो भवेत्

इतिकारिकाऽनुसारेण साध्यसमजातिं लक्षयति ॥ पक्षाऽदीनामिति ॥ आदिपदेन लिङ्गदृष्टान्तग्रहणम् ॥ सिद्धानामपीति ॥ प्रमाणान्तरेण सिद्धानामपीत्यर्थः। वर्ण्यसमव्यावृत्त्यर्थं तेनैव हेतुनेत्युक्तम् ॥ धूमवत्त्वमेवेति ॥ सिद्धस्यैव धर्म्यादेरनुमानाङ्गत्वात् प्रमाणान्तरात्तत्सिद्धेरनुचितत्वात् इदमेव धूमवत्त्वं तत्सिद्ध्यर्थं प्रयोक्तव्यं इति जातिवादिनोऽभिमान इत्यर्थः ॥ अन्यथेति ॥ पर्वताऽदिसिद्ध्यर्थमपि अस्यैव हेतोः अप्रयोग इत्यर्थः ॥ क्रोडीकृतेति ॥ 'तस्मात् पर्वतोऽग्निमान्' इति विशेषणविशेष्यभावापन्नधर्मिलिङ्गलिङ्गिविषयकानुमितिजनकत्वस्वभावस्य लिङ्गस्य इत्यर्थः। लिङ्गोपहितलैङ्गिकभानपक्षाभिप्रायेणेदं मन्तव्यम् ॥ तत्रेति ॥ धर्मिलिङ्गयोरित्यर्थः ॥ साध्येऽपीति ॥ पक्षे साध्यसिद्धावपि अप्रयोजकत्वापातात् इत्यर्थः। तथा च लिङ्गधर्मिणो अपोह्य साध्यमात्रप्रतीतेः लिङ्गादजायमानत्वात् तेनैव हेतुना धर्म्यादेरपि साधनमावश्यकमिति भावः ॥ पक्षेऽपीति ॥ पक्षे साध्यसिद्धावपि ॥ अन्यत्समानमिति ॥ दृष्टान्तरूपधर्मिसिद्ध्यर्थमपि अयमेव हेतुः प्रयोक्तव्यः। अन्यथा तत्र अप्रयोजकस्य अन्यत्रापि अप्रयोजकत्वा-

(श्री. टि.) पातात् इत्यर्थः ॥ तत्सिद्ध्यर्थमिति ॥ तेषां पक्षहेतुदृष्टान्तानां सिद्ध्यर्थमित्यर्थः ॥ न प्रयुज्यत इति ॥ अयमेव हेतुरिति शेषः ॥ तावदिति ॥ पक्षादीनामसिद्ध्येत्यर्थः । आश्रयासिद्ध्यादीत्यादिपदेन स्वरूपासिद्धिग्रहणम् ।

(टी.) अत्र विशिष्टसाधकत्वाभिमान उत्थानहेतुः । आश्रयाऽसिद्ध्यादिकमारोप्यम् । एवं प्रतिषेधहेतावपि वक्तुं शक्यत्वात् व्याघातः । अयुक्ताङ्गाधिकत्वञ्च तेनैव हेतुना सिद्धेरयुक्तत्वात् । सिद्धत्वमात्रेण साध्यसिद्धिदर्शनादिति ॥ ७ ॥

(रा. टि.) ॥ प्रतिषेधहेतावपीति ॥ 'धूमवत्त्वं असाधकं आश्रयासिद्ध्यादित्वात् संमतवत्' इत्यत्र त्वदुक्तो हेतुः धूमवत्त्वाऽद्याश्रयादौ प्रयोक्तव्यः तत्र अप्रयोजकत्वे असाधकत्वरूपसाध्येऽपि अप्रयोजकः स्यात् । एवं च आश्रयासिद्धत्वाऽदिकं त्वदीयहेतोः इति वक्तुं शक्यत्वात् इत्यर्थः ॥ ७ ॥

(श्री. टि.) ॥ विशिष्टेति ॥ कोडीकृतधर्म्यादीत्यर्थः ॥ साधकत्वेति ॥ लिङ्गस्येति शेषः ॥ एवं प्रतिषेधहेतावपीति ॥ अयमर्थः 'धूमवत्त्वात् इतिहेतुः साध्यसाधको न भवति आश्रयासिद्धत्वात् स्वरूपासिद्धत्वाच्च गगनारविन्दसौरभ्यसाधकारविन्दत्ववत् , चाक्षुषत्ववच्च' इत्यत्रापि पक्षाऽदिसिद्ध्यर्थं आश्रयासिद्धत्वाऽदिरूपं लिङ्गमेव प्रयोक्तव्यम् । अन्यथा कोडीकृतधर्म्यादिविषयस्य लिङ्गस्य तत्र अप्रयोजकस्य साध्येऽपि तथात्वापातात् । दृष्टान्तेऽपि साध्यसिद्ध्यर्थं दृष्टान्तधर्मिसिद्ध्यर्थं च अयमेव हेतुः प्रयोक्तव्यः । अन्यथा पक्षेऽपि अप्रयोजकत्वापातात् । तथा च तत्सिद्ध्यर्थं यावन्न प्रयुज्यते तावदाश्रयादि[1] इत्यपि वक्तुमशक्यत्वात् स्वन्यायविरोध इति ॥ सिद्धेरिति ॥ दृष्टान्तहेतुपक्षाणां सिद्धेरित्यर्थः । नन्वनुमानाङ्गभूतपक्षाऽदिसिद्धिः तावदपेक्षिता । अन्यथा आश्रयासिद्ध्याद्यापत्तेः । तेनैव हेतुना चेत्सिद्धिरयुक्ता तर्हि कथं तेषां सिद्धिः ? इत्यत आह ॥ सिद्धत्वेति ॥ प्रमाणान्तरेण पक्षादीनां सिद्धत्वमात्रेणेत्यर्थः ॥ साध्यसिद्धिदर्शनादिति ॥ साध्यसिद्ध्यङ्गत्वदर्शनादित्यर्थः ॥७॥

### प्राप्तिसमजातिः

(टी.) साधनस्य साध्याप्राप्तिपक्षनिरासेन प्राप्तिपक्षमवशेष्य तद्दूषणं प्राप्तिसमः । यथा धूमवत्वज्ञानं अग्निमत्वज्ञानं प्राप्य उत्पादयति अप्राप्य वा । द्वितीयेऽतिप्रसङ्गात् प्राप्येति वक्तव्यम् । सता च प्राप्तिः इति प्रागेव अग्निमत्वज्ञानसद्भावात् व्यर्थमनुमानम् । एवं धूमवत्वज्ञानं अग्निमत्वं ज्ञापयति प्राप्य अप्राप्य वा । द्वितीये अतिप्रसङ्गात् प्राप्य इति वक्तव्यम् । लिङ्गज्ञानस्य साध्यप्राप्तिश्च विषयविषयिभाव एव सम्भवति । तथा च धूमवत्वज्ञाने वह्निमत्वस्यापि स्फुरणात् व्यर्थमनुमानमिति ।

---

[1] तावदाश्रयासिद्ध्यादि इत्यपि वक्तुं शक्यत्वात्.

(रा. टि ) उत्पत्तौ प्रदर्श्य ज्ञप्तावपि प्राप्तिसमप्रकारं दर्शयति ॥ एवं धूमवत्त्वज्ञानमिति ॥

(श्री. टि.) प्राप्य साध्यं साधयति हेतुश्चेत्प्राप्तिकर्मणः ।
साध्यस्य पूर्वं सिद्धिः स्यादिति प्राप्तिसमोदयः ॥

इतिकारिकानुसारेण प्राप्तिसमजातिं लक्षयति ॥ **साधनस्येति** ॥ कृतज्ञप्तिसाधारणीऽयं जातिः इत्यभिप्रेत्य कृतौ तावद्विकल्पयति ॥ **यथेति** ॥ प्राप्य सम्बध्य ॥ **अतिप्रसङ्गादिति** ॥ काष्ठासम्बद्धस्याप्यग्नेर्दाहजनकत्वप्रसङ्गादित्यतिप्रसङ्गात् इत्यर्थः ॥ **प्रागेवेति** ॥ धूमवत्त्वज्ञानेऽग्निमत्त्वज्ञाननिरूपितसम्बन्धात् प्रागेवेत्यर्थः । ज्ञप्तौ विकल्पयति ॥ **एवमिति** ॥ **अग्निमत्त्वमिति** ॥ अग्निमतो भावः अग्निरेव तमित्यर्थः ॥ **धूमज्ञानमग्निं प्राप्य ज्ञापयति चेत्** इति पद्धतिवचनात् ॥ **अतिप्रसङ्गादिति** ॥ प्रकाश्यासम्बद्धस्यापि दीपस्य प्रकाशकत्वप्रसङ्गादित्यतिप्रसङ्गादित्यर्थः ॥ **विषयविषयिभाव इति** ॥ लिङ्गज्ञानस्य साध्येन संयोगादिरूपायाः प्राप्तेरसम्भवात् ज्ञानज्ञेययोर्विषयविषयिभाव एव सम्भावित इत्यर्थः ॥ **स्फुरणादिति** ॥ धूमज्ञानस्य यदा वह्निविषयकत्वं प्राप्तं तदा धूमज्ञाने धूमवत् वह्नेरपि स्फुरणं जातमेवेत्यर्थः ।

(टी.) **अप्राप्तावतिप्रसङ्गः अत्रोत्थानबीजम् । साध्यात् पूर्वं सिद्धेः साधनविशेषणस्याभावात् विशेषणासिद्धिरारोप्या । प्रतिषेधहेतावपि 'प्रतिषेधं प्राप्य अप्राप्य वा' इत्यादेः साम्यात् व्याघातः । अयुक्ताङ्गाधिकत्वं च कार्यप्राप्तेरयुक्तत्वात्, कारणप्राप्तिसद्भावात्, विषयविषयिभावस्य चायुक्तत्वात्, साध्यव्याप्तलिङ्गविषयकत्वस्य च सत्वात् इति ॥ ८ ॥**

(रा. टि.) ॥ **साध्यात पूर्वं सिद्धेरिति** ॥ अनुमित्युदयात्पूर्वमेव वह्निमत्त्वादिव्यापकसिद्धिः साधनस्य विशेषणमुपेत्योक्तं साधनविशेषणस्याभावादिति ॥ **प्रतिषेधहेतावपीति** ॥ 'नायं हेतुः साधकः विशेषणासिद्धत्वात् इति जातिवादिनोक्तदूषणहेतावपीत्यर्थः ॥ **प्रतिषेधमिति** ॥ असाधकत्वमित्यर्थः ॥ **कार्येति** ॥ कार्येण प्राप्तेरित्यर्थः ॥ **कारणेति** ॥ कारणेन प्राप्तिस्त्वित्यर्थः । यद्वा कार्यस्य प्राप्तिः कार्यप्राप्तिः । एवं कारणप्राप्तिरित्यपि ज्ञेयम् । ननु तत्पक्षेऽप्युक्तो दोष इत्यत आह ॥ **विषयेति** ॥ तर्हि कः? इत्यत आह ॥ **साध्यव्याप्तेति** ॥ ८ ॥

(श्री. टि.) ॥ **साधनविशेषणस्येति** ॥ साधनविशेषणभूतायाः साध्यात पूर्वं सिद्धेः सिद्धत्वस्येति यावत् अभावादित्यर्थः । साध्यात् पूर्वं उत्पत्तिज्ञप्त्यपरपर्याया सिद्धिर्हि हेतोर्विशेषणं तदत्र कृतिज्ञप्तिपक्षयोर्न सम्भवतीति विशेषणासिद्धिः । तथा हि, कृतिपक्षे अप्राप्तावतिप्रसङ्गात प्राप्य इति वक्तव्यम् । सता च प्राप्तिः इति यदा अङ्गीकृतं तदा सम्बन्धस्योभयनिष्ठत्वेन अन्यतरस्यासत्त्वे असम्भवात् कार्यस्यापि अवश्यं सत्त्वे अङ्गीकार्ये कार्यकारणयोरुभयोरप्येकदैव सत्त्वेनाविशेषात् साधनस्य साध्यात्पूर्वं

(श्री. टि.) सिद्ध्यभावः उत्पत्त्यभावः प्राप्तः । एवं ज्ञप्तिपक्षेऽपि अप्राप्य ज्ञापकत्वे अतिप्रसङ्गात् प्राप्य इति वक्तव्यम् । लिङ्गज्ञानस्य साध्येन विषयविषयिभावरूपा प्राप्तिः यदा अङ्गीकृता तदा ज्ञाप्यज्ञापकयोरुभयोरप्येक-ज्ञानविषयत्वप्राप्त्या साध्यात् पूर्व साधनस्य सिद्ध्यभावो ज्ञप्त्यभाव. प्राप्त इत्याशयः ।

॥ प्रतिषेधहेतावपीति ॥ अयमर्थः, 'धूमवत्त्वात् इतिहेतुः साध्यासाधकः विशेषणासिद्धत्वात्' इति प्रतिषेधहेतावपि कृतिपक्षे विशेषणासिद्धत्वज्ञानं साध्यासाधकत्वज्ञानं प्राप्य उत्पादयति अप्राप्य वा ? द्वितीये अतिप्रसङ्गात् प्राप्य इति वक्तव्यम् । सता च प्राप्तिरिति प्राप्तेः प्रागेव साध्यासाधकत्वज्ञानसद्भावात् व्यर्थमनुमानं स्यात् । एवं ज्ञप्तिपक्षेऽपि विशेषणासिद्धत्वज्ञानं साध्यासाधकत्वं प्राप्य ज्ञापयति अप्राप्य वा । द्वितीये अतिप्रसङ्गात् प्राप्य इति वक्तव्यम् । लिङ्गज्ञानस्य साध्यप्राप्तिश्च विषयविषयिभाव एवेति विशेषणासिद्धत्वरूप-लिङ्गज्ञान एव साध्यासाधकत्वरूपलिङ्गिनोऽपि स्फुरणात् व्यर्थमनुमानं इति साम्यात् स्वन्यायेन व्याघातः इति ।

कृतिपक्षे अयुक्ताङ्गाधिकत्वमुपपादयति ॥ कार्यप्राप्तेरिति ॥ कारणस्य इति शेषः । पूर्वभाविरूपकारणस्य पश्चाद्भाविरूपकार्यस्वरूपेण प्राप्तेः सम्बन्धस्य अनपेक्षितत्वेन अयुक्तत्वात् तस्याश्च सता च प्राप्तिः इति वदता त्वया स्वीकृतत्वात् अयुक्ताङ्गाधिकत्वमित्यर्थः । ननु कारणे कार्यस्वरूपेण प्राप्तेरनपेक्षितत्वे कथं तज्जनकत्वं अतिप्रसङ्गात् इत्यत आह ॥ कारणप्राप्तीति ॥ कारणे प्राप्तिसद्भावात् । कार्यनिरूपितायाः कार्यजननसामर्थ्य-रूपाया एव प्राप्तेः सम्बन्धस्य सत्त्वेन अङ्गीकृतत्वादित्यर्थः । तथा च 'यत् यज्जनने समर्थं तत् तत्र कारणं' इत्यङ्गीकारात् नातिप्रसङ्ग इति भावः । यथोक्तं पद्धतौ अत्र कृतौ सामर्थ्यलक्षणप्राप्तिसद्भावेन अतिप्रसङ्गा-भावात् स्वरूपप्राप्तिरनपेक्षितैव इति ।

ज्ञप्तिपक्षे अयुक्ताङ्गाधिकत्वमुपपादयति ॥ विषयेति ॥ लिङ्गज्ञानस्य लिङ्गेनैव विषयविषयिभावसम्बन्धस्य युक्तत्वेन लिङ्गिना अयुक्तत्वात् तस्य च त्वया स्वीकारात् ज्ञप्तिपक्षेऽपि अयुक्ताङ्गाधिकत्वमित्यर्थः । ननु विषयविषयिभावसम्बन्धस्य अयुक्तत्वे अन्यस्य सम्बन्धस्याभावात् असम्बद्धस्य ज्ञापकत्वे च अतिप्रसङ्ग इत्यत आह ॥ साध्यव्याप्तेति ॥ विषयत्वस्य विषयकत्वरूपसम्बन्धस्येत्यर्थः । अतो नातिप्रसङ्ग इति भावः ॥ ८ ॥

### अप्राप्तिसमजातिः

(टी.) प्राप्तिपक्षनिरासेन अप्राप्तिपक्षे शेषयित्वा तद्दूषणम् अप्राप्तिसमः । यथा, पूर्ववत् प्राप्तिपक्षस्य दुष्टत्वात् अप्राप्य इति वक्तव्यम् । न च तत् युक्तम् । न हि अप्राप्याग्निः काष्ठं दहति । न हि अप्राप्य दीपः प्रकाश्यं प्रकाशयति ।

प्राप्तावुक्तानुपपत्तिदर्शनमुत्थानहेतुः । साध्यप्राप्तेर्हेतुविशेषणत्वेन विशेषणासिद्धिरारोप्या । पूर्ववत् दुष्टत्वमूलम् इति ॥ ९ ॥

(रा. टि). ॥ दुष्टत्वादिति ॥ हेतोर्विशेषणासिद्धत्वरूपदोषयुक्तत्वप्रसङ्गात् इत्यर्थः ॥ विशेषणत्वेन इत्यनन्तरं इह च तदभावात् इति योज्यम् ॥ पूर्ववद्दुष्टत्वमूलमिति ॥ 'नायं हेतुः साधकः विशेषणासिद्धत्वात्' इति प्रतिषेधहेतावपि प्रतिषेधेन प्राप्तिपक्षं निरस्य परिशिष्टाप्राप्तिपक्षे विशेषणासिद्धेः सुवचत्वात् व्याघातः अप्राप्तिसमजातेर्दुष्टत्वमूलं ज्ञेयमित्यर्थः ॥ ९ ॥

(श्री. टि.) अप्राप्य साधयेत्साध्यं हेतुः सर्वं च साधयेत् ।
अप्राप्तेरविशिष्टत्वादित्यप्राप्तिसमस्थितिः ॥

इतिकारिकानुसारेण अप्राप्तिसमजातिं लक्षयति ॥ प्राप्तिपक्षेति ॥ इयमपि कृतिज्ञप्तिसाधारणी जातिः ॥ पूर्ववदिति ॥ कृतौ ज्ञप्तौ च उक्तरीत्या अनुमानवैयर्थ्यप्रसङ्गेन प्राप्तिपक्षस्य दुष्टत्वादित्यर्थः ॥ अप्राप्येतीति ॥ धूमवत्त्वज्ञानं अग्निमत्त्वज्ञानम् एवं धूमवत्त्वज्ञानं अग्निं च अप्राप्यैव उत्पादयति ज्ञापयति च इति वक्तव्यमित्यर्थः ।

कुतो न युक्तम्? इत्यतः कृतिपक्षे अतिप्रसङ्गं सूचयति ॥ न हीति ॥ तथा च 'अप्राप्याप्यग्निः काष्ठदाहं कुर्यात् इत्यतिप्रसङ्ग इति भावः । ज्ञप्तिपक्षे अतिप्रसङ्गं सूचयति ॥ न हीति ॥ तथा च 'अप्राप्यापि दीपः प्रकाश्यं प्रकाशयेत्' इत्यतिप्रसङ्ग इति भावः ॥ अनुपपत्तीति ॥ अनुमानवैयर्थ्यानुपपत्तीत्यर्थः ॥ हेतुविशेषणत्वेनेति ॥ अप्राप्तिपक्षे च तदनङ्गीकारात् विशेषणासिद्धिरित्यर्थः ॥ पूर्ववदिति ॥ प्राप्तिसमवदेव व्याघातरूपं दुष्टत्वमूलं द्रष्टव्यमित्यर्थः । तथा हि 'नायं धूमवत्त्वहेतुः साध्यसाधकः विशेषणासिद्धत्वात्' इति प्रतिषेधहेतावपि प्राप्तिपक्षस्य अनुमानवैयर्थ्येन दुष्टत्वात् विशेषणासिद्धत्वज्ञानं असाधकत्वज्ञानं असाधकत्वं च अप्राप्यैव उत्पादयति ज्ञापयति च इति वक्तव्यम् तदयुक्तं अतिप्रसङ्गात् इति स्वन्यायेन व्याघात इति ॥ ९ ॥

प्रसङ्गसमजातिः

(टी.) सिद्धस्यापि पक्षादेः उत्पादकज्ञापकानवस्थाप्रसञ्जनं प्रसङ्गसमः। यथा, पर्वतस्यापि किम् उत्पादकम्? तस्यापि अन्यत् इत्यनवस्था। कस्यचित् कारणाभावे अन्यस्यापि तत्प्रसङ्गात्। तथा प्रमाणेऽपि किं प्रमाणं? तत्राप्यन्यदित्यनवस्था। कस्यचित् प्रमाणान्तरं विना सिद्धावन्यत्रापि तथा त्वाऽपातादिति। कारणाऽदिनियमाभिमानोऽत्र द्वारम्। तर्कपराहतिरारोप्या। जात्युत्तरेऽप्येवं वक्तुं शक्यत्वात् व्याघातः। अनवस्थाङ्गमूलक्षतेरभावात् युक्ताङ्गहानिश्चेति ॥ १० ॥

(रा. टि.) ॥ जात्युत्तरेऽप्येवमिति ॥ 'नायं हेतुः साधकः अनवस्थारूपतर्कपराहतत्वात्' इति जात्युत्तरेऽपि अयं हेतुः इत्युक्तहेतोः उत्पादकानवस्थायाः त्वदुक्तप्रमाणेऽपि प्रमाणान्तरानवस्थायाः सुवचत्वात् व्याघात इत्यर्थः ॥ मूलक्षतेरभावादिति ॥ बीजाङ्कुरानवस्थाया इवेति भावः ॥ १० ॥

(श्री· टि.) सिद्धे दृष्टान्तहेत्वादौ साधनप्रश्नपूर्वकम् ।
अनवस्थाभासवचः प्रसङ्गसमजातिता ॥

इतिकारिकानुसारेण प्रसङ्गसमजातिं लक्षयति ॥ **सिद्धस्यापीति** ॥ कृतिज्ञप्तिसाधारणीयमपि जातिः । पक्षादेरित्यादिपदेन हेतुदृष्टान्तग्रहणम् । कृतौ अनवस्थां व्युत्पादयति ॥ **यथेति** ॥ **कारणाभाव इति** ॥ कारणाभावेऽप्युत्पत्तिमङ्गीकृत्यापि नानवस्थापरिहार इत्यर्थः । अन्यस्यापि पर्वतस्यापि । ज्ञप्तौ अनवस्थां व्युत्पादयति ॥ **तथेति** ॥ **प्रमाणेऽपीति** ॥ पक्षीभूतपर्वतादिज्ञापकप्रमाणेऽपीत्यर्थः ॥ **प्रमाणान्तरं विना सिद्धाविति** ॥ प्रमाणान्तरं विनाऽपि तज्ज्ञानमङ्गीकृत्य अनवस्थापरिहारे सतीत्यर्थः ।

कारणादीत्यादिपदेन ज्ञापकप्रमाणसंग्रहः ॥ **तर्कपराहतिरिति** ॥ अनवस्थारूपप्रतिकूलतर्कपराहतिरित्यर्थः ॥ **जात्युत्तरेऽपीति** ॥ 'नेदमनुमानं साधकं तर्कपराहतत्वात् संमतवत्' इत्यनुमानेऽपि पक्षादीनां सद्भावेन तदुत्पादकज्ञापकपरम्परयाऽपि अनवस्थायाः वक्तुं शक्यत्वात् स्वव्याघातविरोध इत्यर्थः ॥ **अनवस्थाङ्गेति** ॥

मूलक्षयकरीं प्राहुरनवस्थां हि दूषणम् ।

इतिवचनादिति भावः ॥ **मूलक्षतेरिति** ॥ यदर्थं उत्तरोत्तरानुसरणं तत् मूलम् उत्पत्तिर्ज्ञप्तिर्वा । तत्परिक्षयाभावादित्यर्थः । अयं भावः 'यदि अनवस्थितासिद्धपक्षादिकारणज्ञापकपरम्परा अङ्गीक्रियते तर्हि अनवस्था स्यात्' न चेयमनवस्था अङ्गीकर्तुमुचिता अप्रामाणिकत्वात् तस्मात् प्रकृतकार्यं न सम्भवति' इत्येवं अनवस्थायाः मूलक्षयकारिता वक्तव्या । न चैवं प्रकृते सम्भवति । अनवस्था हि तर्कविशेषः । तर्कस्तु अप्रामाणिककल्पनाऽऽत्मकानिष्टाऽऽपादनरूपः । एवं च प्रकृतानां अनुमानाङ्गभूतानां पक्षाऽदीनां प्रत्यक्षाऽदिप्रमाणसिद्धत्वेन तद्विषयकानवस्थायाः बीजाङ्कुरानवस्थावत् मूलोपपादकतया दोषत्वासम्भवात् । यथोक्तम् पद्धतौ **अत्र सिद्धविषयत्वेन अनवस्थाऽसम्भवेन मूलक्षयाभावात् अदोषत्वमिति वाच्यम्** इति ॥ १० ॥

**प्रतिदृष्टान्तसमजातिः**

(टी.) **हेतुं विना प्रतिदृष्टान्तमात्रेण बाधप्रतिरोधोद्भावनं प्रतिदृष्टान्तसमः । यथा 'ह्रदवत् पर्वतो निरग्निरेव' इति । 'निरग्निकोऽपि किं न स्यात्' इति वा । अत्र हेतुरनङ्गं साध्यातिदेशे इत्यभिमान उत्थानबीजम् । बाधादि आरोप्यम् । बाधाद्यङ्गस्य अधिकबलादेरनभ्युपगमात् युक्ताङ्गत्यागः । साधनस्य हेतुसाहित्यात् । अत्र तदनुपन्यासात् । तस्यानङ्गत्वे 'प्रतिदृष्टान्तो न दूषकः रासभादिवत्' इति व्याघात इति ॥ ११ ॥**

(रा. टि.) क्रमेण बाधप्रतिरोधौ व्यनक्ति ॥ यथा ह्रदवदित्यादिना ॥ साध्यातिदेश इति ॥ 'ह्रदवत् पर्वतो निरग्निरेव' इत्यनग्नित्वाऽप्यतिदेशो हेतुरङ्गं नेत्यर्थः । युक्ताङ्गहानिं व्यनक्ति ॥ साधनस्येति ॥ साध्यसत्त्वसमर्थस्येत्यर्थः ॥ अत्रेति ॥ जात्युत्तर इत्यर्थः । इति सुवचत्वात् व्याघात इति योज्यम् ॥ ११ ॥

(श्री. टि.) अनङ्गत्वधिया हेतोः प्रतिदृष्टान्तमात्रतः ।
प्रत्यवस्थानमाचख्युः प्रतिदृष्टान्तलक्षणम् ॥

इतिकारिकानुसारेण प्रतिदृष्टान्तसमजातिं लक्षयति ॥ हेतुं विनेति ॥ 'निरग्निरेव' इति बाधोद्भावनप्रकारः । 'निरग्निकोऽपि' इति सत्प्रतिपक्षोद्भावनप्रकारः ।

॥ साध्यातिदेश इति ॥ अतिदेशो ज्ञानम् । तथा च साध्यज्ञाने हेतुरनङ्गम् । किं नाम ? दृष्टान्त एव इत्यभिमान इत्यर्थः ॥ बाधाद्यङ्गस्येति ॥ बाधे अधिकबलत्वमङ्गम् प्रतिरोधे तु तुल्यबलत्वम् । तदुभयमपि प्रतिदृष्टान्तमात्रस्य नास्ति इत्यभ्युपगमादित्यर्थः । प्रकारान्तरेण युक्ताङ्गत्यागं दर्शयति ॥ साधनस्येति ॥ भावे ल्युडन्तोऽयं शब्दः । तथा च विवक्षितार्थसिद्धेरित्यर्थः । हेतुसाहित्यात् हेतुसाहित्यसापेक्षतानियमादित्यर्थः ॥ तदनुपन्यासादिति ॥ हेत्वनुपन्यासादित्यर्थः । तथा च न्यूनतया युक्ताङ्गहानिरिति भावः । यथोक्तं पद्धतौ अत्र न्यूनत्वं वाच्यम् इति । तस्य हेतोः ॥ प्रतिदृष्टान्त इति ॥ यद्दृष्टान्तमात्रेण बाधाऽदिकमुद्भाव्यते स ह्रदादिरूपः प्रतिदृष्टान्त इत्यर्थः । न च हेत्वनभिधानात् न्यूनतेति वाच्यं तस्य त्वया अङ्गत्वानङ्गीकारात् इति स्वन्यायविरोध इत्यर्थः ॥ ११ ॥

अनुत्पत्तिसमजातिः

(टी.) पक्षाऽदीनां प्रागुत्पत्तेः हेतुवृत्त्यभावेन असिद्ध्याद्युद्भावनं अनुत्पत्तिसमः । यथा पर्वतस्योत्पत्तेः प्रागपि पक्षत्वात् अनुत्पन्ने तस्मिन् अग्नेः धूमवत्त्वस्याश्रयभागासिद्धिः इत्यादि । अत्र अनुत्पन्नस्य स्वकार्यसामर्थ्याभिमानमुत्थानकारणम्[1] । असिद्ध्यादि आरोप्यम् । जात्युत्तरेऽप्येवं वक्तुं शक्यत्वात् व्याघातः । अनुत्पन्नस्याङ्गत्वादेरयुक्ताङ्गाधिक्यादीति[2] चेति ॥ १२ ॥

(रा. टि.) ॥ आश्रयेति ॥ आश्रयासिद्धिरिति वा आश्रयभागे असिद्धिरिति वा अर्थः । इत्यादीति अदिपदेन दृष्टान्तस्योत्पत्तेः प्राक् तत्र साध्यसाधनयोरभावेन साध्यादिविकलो दृष्टान्त इति वा पर्वतस्योत्पत्तेः प्राक् साध्यस्याप्यभावेन बाध इति वा माह्यं ॥ जात्युत्तरेऽपीति ॥ 'धूमवत्त्वं असाधकं असिद्धत्वात् इत्यत्रो-

---

[1] श्री. मान उत्थानकारणम्

[2] त्वादेरयोगात् अयुक्ता.

(रा. टि.) त्पत्तेः प्राग्धूमवत्त्वे धर्मिणि त्वदभिमतासिद्धत्वहेतोरभावात् असिद्धत्वहेतुरसिद्धः इति वक्तुं शक्यत्वादित्यर्थः ॥ अक्षत्वादेरिति ॥ सपक्षत्वं अदृष्टान्तत्वं आदिपदार्थः[1] ॥ आधिक्यादीति ॥ अविषयवृत्तित्वं आदिपदार्थः ॥ १२ ॥

(श्री. टि.) अनुत्पन्ने साधनाङ्गे हेतुवृत्तेरभावतः ।
भागासिद्धिप्रसङ्गः स्यादनुत्पत्तिसमो मतः ॥

इतिकारिकानुसारेण अनुत्पत्तिसमजातेर्लक्षणमाह ॥ पक्षाऽदीनामिति ॥ आदिपदेन लिङ्गसाध्यदृष्टान्तानां ग्रहणम् । सदुत्तरे असिद्ध्युद्भावने अतिव्याप्तिवारणाय पक्षाऽदीनामुत्पत्तेः प्रागित्युक्तम् ॥ आश्रयभागेति ॥ उत्पन्नत्वावस्थायां हेतोः सत्त्वेऽपि अनुत्पन्नत्वावस्थायामभावात् अनुत्पन्नाश्रयभागे असिद्धिरित्यर्थः ॥ इत्यादीति ॥ लिङ्गानुत्पत्तौ यथा 'इदं गुरु पतनवत्त्वात्' इत्युक्ते पतनोत्पत्तेः प्रागवस्थायामपि गुरुत्वस्य साध्यत्वेन तदवस्थस्यापि पक्षत्वात् भागासिद्धो हेतुरिति, साध्यानुत्पत्तौ यथा 'घटो गन्धवान् पार्थिवत्वात्' इत्युक्ते प्रथमक्षणे गन्धवत्त्वरूपव्यापकाभावात् व्याप्यस्य पार्थिवत्वस्याप्यभावापत्त्या भागासिद्धो हेतुरिति, दृष्टान्तानुत्पत्तौ यथा 'आत्मा द्रव्यं गुणवत्त्वात् घटवत्' इत्युक्ते प्रथमक्षणे घट एव निर्गुण इति दृष्टान्ते भागासिद्धो हेतुरिति द्रष्टव्यम् ।

अनुत्पन्नस्य पक्षादेः ॥ स्वकार्यसामर्थ्याभिमान इति ॥ स्वकार्यसामर्थ्यं साधनाङ्गस्वरूपं तदभिमान इत्यर्थः । अत एवोक्तम् 'पर्वतस्योत्पत्तेः प्रागपि पक्षत्वात्' इति ॥ स्वकार्यासामर्थ्येति पाठस्तु विचार्यार्थकः । अनुत्पन्नस्य यत् स्वकार्यासामर्थ्यं तत् वास्तवमेव न त्वाभिमानिकम् । अतो नास्योत्थामबीजत्वं युक्तमिति । असिद्ध्यादीत्यादिपदेन विरोधो ग्राह्यः । 'विरोधासिद्धी आरोप्ये' इति वरदराजीयोक्तेः । अनुत्पन्नस्य साधनाङ्गतायाः प्रत्यक्षादिविरुद्धत्वादित्यर्थः ॥ जात्युत्तरेऽपीति ॥ 'धूमवत्त्वात् इति हेतुः न साध्यसाधकः भागासिद्धत्वात्' इति जात्युत्तरेऽपि पक्षीभूतस्य धूमवत्त्वादिति हेतोः उत्पत्तेः प्रागपि पक्षत्वात् अनुत्पन्ने तस्मिन् भागासिद्धत्वाख्यहेतोः अवृत्तेः आश्रयभागे असिद्धिः इति वक्तुं शक्यत्वात् स्वन्यायविरोध इत्यर्थः ॥ अनुत्पन्नस्येति ॥ अनुत्पन्नस्य पक्षादेः साधनाङ्गताया अयुक्ताया एव स्वीकारात् अयुक्ताङ्गाधिकत्वमित्यर्थः । द्वितीयादिपदेन अविषयवृत्तित्वसंग्रहः । प्रथमादिपदेन तदुपपादकसंग्रहः । तथा हि, हेतुवृत्तेः उत्पन्न एव पक्षो विषयो न त्वनुत्पन्नोऽपि । तथा च अनुत्पन्नस्य पर्वतत्वाभावेन अपक्षतया विषयत्वाभावात् तत्र हेतुवृत्त्यङ्गीकारात् अविषयवृत्तित्वमिति भावः ॥ १२ ॥

---

[1] पक्षत्वं सपक्षत्वं दृष्टान्तत्वं.

संशयसमः

(टी.) सत्यपि निर्णयकारणे संशयकारणमात्रेण संशयापादनं संशयसमः। यथा 'यदि धूमवत्वात् अग्निमत्वनिश्चयः तर्हि ह्रदमहानससाधर्म्येण द्रव्यत्वेन तत्संशयः स्यात्' इत्यादि। अत्र समानधर्मा[1]ऽदिमात्रदर्शनं तद्रहितस्यैव निश्चायकत्वाभिमानश्चोत्थानहेतुः। सत्प्रतिपक्षत्वमारोप्यम्। निर्णयकारणराहित्यस्य संशयाङ्गत्वानङ्गीकारात् संशयकारणराहित्यस्यायुक्तस्यैव निर्णयाङ्गताङ्गीकारात् युक्ताङ्गहानिः अयुक्ताङ्गाधिक्यश्च। अन्यथा दूषकादूषकसाधर्म्याऽदिना जातावपि संशयप्रसङ्गसाम्यात् व्याघात इति ॥ १३ ॥

(रा. टि.) ॥ अन्यथेति ॥ निर्णयकारणराहित्यस्य संशयाङ्गत्वानङ्गीकारे संशयकारणराहित्यस्य निर्णयाङ्गत्वाङ्गीकारे च 'नायं हेतुः साधकः सत्प्रतिपक्षत्वात्' इति जात्युत्तरेऽपि अदूषकरासभसाधर्म्येण वस्तुत्वेन महानसवैधर्म्येण हेतुत्वादिना वा त्वदुक्तहेतुना अनिश्चय साधकत्वसंशयः किं न स्यात् इति साम्याद्व्याघात इत्यर्थः ॥ १३ ॥

(श्री. टि.) सन्देहहेतुसद्भावात्सति निर्णयकारणे।
संशयस्य प्रसङ्गो यः स संशयसमो भवेत् ॥

इतिकारिकानुसारेण संशयसमजातिं लक्षयति ॥ सत्यपीति ॥ निर्णयकारणे विशेषदर्शने ॥ संशयकारणमात्रेणेति ॥ समानधर्माऽदिरूपसंशयकारणमात्रेणेत्यर्थः। अत्र विशेषादर्शनसहकृतसमानधर्माऽदिना संशयापादनरूपे सदुत्तरे अतिव्याप्तिः स्यात् तत्परिहाराय मात्रपदम्। विशेषादर्शनासहकृतत्वं मात्रशब्दार्थः इत्याशयेन तद्विवरणाय सत्यपि निर्णयकारण इत्युक्तमिति ज्ञातव्यम्।

समानधर्ममात्रदर्शनं संशयकारणमिति शेषः। इत्यभिमान इति सम्बन्धः॥ तद्रहितस्यैवेति ॥ निर्णायकस्येति शेषः। समानधर्मरहितस्यैवेत्यर्थः। न तु विशेषदर्शनसहकृतस्येति एवार्थः॥ निर्णयेति ॥ निर्णयकारणं विशेषदर्शनम्। तद्राहित्यस्य विशेषादर्शनस्येति यावत्। अनङ्गीकारात् युक्ताङ्गहानिरिति सम्बन्धः। संशयकारणं समानधर्मा[2]ऽदि तद्राहित्यमात्रस्येत्यर्थः। अन[3]ङ्गीकारादयुक्ताङ्गाधिकत्वमिति सम्बन्धः ॥ अन्यथेति ॥ निर्णायकाभावसहकृतस्यैव समान[4]धर्मादेः संशयकारणत्वात् अत्र च निर्णायकसद्भावात् न संशय इत्यनङ्गीकारे प्रत्युत निर्णायकं न संशयप्रतिबन्धकमित्यङ्गीकारे चेत्यर्थः। दूषकादूषकसाधर्म्यं पदार्थ[5]त्वादिति ॥ जातावि-

[1] श्री. धर्ममात्रदर्शनं [2] धर्मज्ञाने. [3] अङ्गीकारात्. [4] धर्मज्ञानस्य. [5] पदार्थत्वादि.

(श्री. टि.) पीति ॥ तथा च 'धूमवत्त्वात्' इति हेतुः साध्यासाधकः सत्प्रतिपक्षत्वात्' इति जात्युत्तरेऽपि 'यदि सत्प्रतिपक्षत्वात् साध्यासाधकत्वनिश्चयः ? तर्हि दूषकादूषकसाधारणेन पदार्थत्वादिना असाधकत्वसंशयोऽपि किं न स्यात्' इति संशयप्रसङ्गसाम्यात् स्वव्याघातविरोध इत्यर्थः ॥ १३ ॥

### प्रकरणसमः

(टी.) अङ्गीकृतानधिकबलत्वेन[1] बाधचोदनं प्रकरणसमः । यथा 'द्रव्यत्वात् पर्वतो नाग्निमानेव' इति । अत्र प्रतिप्रमाणोपलम्भ उत्थानहेतुः । बाध आरोप्यः । बाधकत्वेऽधिकबलवत्त्वस्याङ्गीकारात् युक्ताङ्गहानिः । बाधकस्याधिकबलत्वानङ्गीकारे स्थापनयैव जातेर्बाधकप्राप्तेर्व्याहतिरिति[2] ॥ १४ ॥

(रा. टि.) ॥ स्थापन इवेति पाठे बाधुक्तानुमान इव जात्युत्तरेऽपि 'नायं हेतुः साधकः बाधितविषयत्वात् इत्यत्र वस्तुत्वात् साधक एवायं हेतुरिति बाधकप्राप्तेरित्यर्थः ॥ स्थापनयैवेति पाठे बाधनुमानेनैव बाधाप्राप्तेरित्यर्थः ॥ १४ ॥

(श्री. टि.) तुल्यत्वमभ्युपेत्यैव परहेतोः स्वहेतुना ।
बाधेन प्रत्यवस्थानं प्रक्रियासम इष्यते ॥

इतिकारिकानुसारेण प्रकरणसमजातेर्लक्षणमाह ॥ अङ्गीकृतेति ॥ यथेत्यनन्तरं 'धूमवत्त्वात् पर्वतोऽग्निमान्' इति स्थापनाहेतौ प्रयुक्त इति शेषः । स्थापनया स्थापनयुक्त्या ॥ जातेरिति ॥ अग्निप्रतिषेधहेतोर्द्रव्यत्वस्य स्थापनाहेतुबाधकत्वोपयोगिनः तदपेक्षया अधिकबलवत्त्वस्याभावेऽपि तद्बाधकत्वोक्तौ स्थापनाहेतुनैव जातेः प्रतिषेधहेतोर्बाधप्राप्तेः स्वव्याघातविरोधः । न च प्रतिषेधहेत्वपेक्षया स्थापनाहेतोरधिकबलवत्त्वाभावात् कथं तेन प्रतिषेधहेतोर्बाधप्राप्तिः? इति वाच्यम् बाधकत्वे अधिकबलवत्त्वस्य त्वया तन्त्रताऽनङ्गीकारादिति भावः ॥ १४ ॥

### अहेतुसमः

(टी.) हेतोः साध्यात् पूर्वापरसहभावनिरासेन अहेतुत्वचोदनं अहेतुसमः । यथा धूमवत्वज्ञानं अग्निमत्वज्ञानात् अग्निमत्वाद्वा किं पूर्वभावि उतानन्तरभावि उत तेन सहभावीति । नाद्यः । साध्याभावे तस्य साधनत्वायोगात् । न द्वितीयः । साधनाभावे साध्यस्य तत्त्वायोगात् । न तृतीयः । अविशेषेण साध्यसाधनभावायोगादिति ।

(रा. टि.) ॥ साध्यस्य तत्त्वायोगादिति ॥ साध्यत्वायोगादित्यर्थः ।

---

[1] बलेन.  [2] बाधकप्राप्तेर्व्याहतिरिति.

(श्री० टि०) हेतोर्विकल्प्य साध्यार्थपूर्वापरसहोदयम् ।
त्रेधाऽपि तस्य हेतुत्वभङ्गोऽहेतुसमो भवेत् ॥

इतिकारिकानुसारेण अहेतुसमजातिं लक्षयति ॥ हेतोरिति ॥ कृतिज्ञप्तिसाधारणीऽयं जातिः । भावशब्दस्य पूर्वापरशब्दाभ्यामपि सम्बन्धो द्रष्टव्यः । अग्निमत्त्वज्ञानादिति कृतिपक्षाभिप्रायेण अग्निमत्त्वाद्वेति ज्ञप्तिपक्षाभिप्रायेणेति मन्तव्यम् । तस्य धूमवत्त्वज्ञानस्य ॥ साधनत्वायोगादिति ॥ साध्यं साध्यते अनेनेति साध्यसिद्धिकरणत्वरूपसाधनत्वस्य साध्यनिरूप्यत्वेन पूर्वं साध्याभावे किमपेक्ष्येदं साधनं स्यादिति साधनत्वायोगादित्यर्थः ॥ तत्त्वायोगादिति ॥ साधनाभावेऽपि जायमानस्य साधनजन्यसिद्धिकर्मत्वरूपं साध्यत्वं न युक्तम् । तथा च पूर्वसिद्धं यत् साध्यं तत् प्रति कथमिदं साधनं स्यात् ? इत्यर्थः ।

(टी.) प्रतितर्कप्रतीतिरत्रोत्थानहेतुः । अन्योन्याश्रयत्वमारोप्यम् । प्रतिषेधोऽपि किं प्रतिषेध्यात् पूर्वभावीत्यादेर्वक्तुं शक्यत्वात् व्याघातः । कृतौ पूर्वभाविना पश्चाद्भाविजन्मदर्शनात् ज्ञप्तौ च यथायथं पूर्वभाव्यादिना पश्चाद्भाव्यादेः सिद्धिदर्शनात् तर्कस्य व्याप्तिहीनत्वेन युक्ताङ्गहानिश्च । साधनत्वादिव्यवहारस्य बुद्धिस्थसाध्यादिनोपपत्तेः । व्यापारेष्वन्यानपेक्षणात् । सहभावे च सिद्ध्यसिद्धिभ्यां विशेषादिति ॥ १५ ॥

(रा. टि.) ॥ अन्योन्याश्रयत्वमिति ॥ साधनत्वसिद्धौ साध्यत्वस्य सिद्धिः । तत्सिद्धौ तत्सिद्धिः इत्येवंरूपेणेति भावः ॥ प्रतिषेधहेतावपीति ॥ 'नायं हेतुः साध्यसाधकः अन्योन्याश्रयत्वापादनरूपतर्कपराहतत्वात्' इति हेतावपीत्यर्थः ॥ प्रतिषेधोऽपीति पाठे हेतुरिति योज्यम् ॥ कृताविति ॥ उत्पत्तावित्यर्थः ॥ सिद्धिदर्शनादिति ॥ ज्ञप्तिदर्शनादित्यर्थः ॥ तर्कस्येति ॥ पूर्वभाविनः साधनत्वायोगात् इत्याद्यापादनरूपाहेतुसमस्येत्यर्थः ॥ सिद्ध्यसिद्धिभ्यामिति ॥ सिद्धस्य साधनत्वं असिद्धस्य साध्यत्वं इति सिद्धत्वादिविशेषेण सहभावेऽपि रूपरसयोरिव साध्यसाधनभावोपपत्तेरिति भावः ॥ १५ ॥

(श्री.टि) ॥ प्रतितर्कप्रतीतिरिति ॥ 'साधनत्वं न स्यात्' इत्यादिप्रतितर्कप्रतीतिरित्यर्थः ॥ अन्योन्याश्रयत्वमिति ॥ अन्योन्याश्रयलक्षणप्रतितर्कपराहतिरित्यर्थः । साधनत्वं साध्यनिरूपितं साध्यत्वं च साधननिरूपितमिति 'तदभावे तदभावः' इत्यन्योन्याश्रयो द्रष्टव्यः ॥ प्रतिषेध इति ॥ प्रतिषेधकहेतुरपीत्यर्थः । तथा हि 'विवादो हेतुः साध्यासाधकः अन्योन्याश्रयत्वरूपप्रतितर्कपराहतत्वात्' इति प्रतिषेधकोऽपि यदि प्रतिषेध्यात् पूर्वभावी तदा प्रतिषेध्यस्यैवाभावे किमपेक्ष्यायं प्रतिषेधकः स्यादिति प्रतिषेधकत्वायोगः । यदि च पश्चाद्भावी तदा प्रतिषेधकस्यैवाभावे तस्य प्रतिषेध्यत्वानुपपत्तेः पूर्वसिद्धं प्रतिषेध्यं प्रति कथमयं प्रतिषेधकः स्यात् । सहभावे तु अविशेषात् प्रतिषेध्यप्रतिषेधकभावानुपपत्तिः इति वक्तुं शक्यत्वेन स्वन्यायविरोध इत्यर्थः ।

(श्री. टि.) कृतौ तावत् अयुक्ताङ्गाधिकत्वमुपपादयति ॥ कृताविति ॥ तथा च भिन्नकालीनयोरेव जन्यजनकभावदर्शनात् पूर्वं साध्यसत्त्वमनुपयोगि किं तु तज्ज्ञानमेव । त्वया तु अयुक्तमेव पूर्वं साध्यसत्त्वं आपादनाङ्गं इत्यङ्गीकृत्य साध्याभावे साधनस्य साधनत्वायोगादिति दूषणात् अयुक्ताङ्गाधिकत्वमिति भावः ।

ज्ञप्तिपक्षेऽपि अयुक्ताङ्गाधिकत्वमुपपादयति ॥ ज्ञप्तौ चेति ॥ प्रथमाऽदिपदेन पश्चाद्भाविसहभाविनोर्ग्रहणम् । द्वितीयाऽदिपदेन तु पूर्वभाविसहभाविनोर्ग्रहणम् । सिद्धिर्ज्ञप्तिः । तथा च पूर्वभाविन्या विशिष्टमेघोन्नत्या पश्चाद्भाविवृष्ट्यनुमितेः पश्चाद्भाविना धूमेन पूर्वभाविवह्न्यनुमितेः रूपसहभाविना रसेन रूपानुमितेश्च दर्शनेन अत्रापि पूर्वं साध्यादिसत्त्वस्यानुपयोगित्वेन तज्ज्ञानस्यैवोपयोगित्वात् त्वया च अयुक्तस्यैव पूर्वं साध्यादिसत्त्वस्य आपादनाङ्गतया अङ्गीकारात् अयुक्ताङ्गाधिकत्वमित्यर्थः ॥ व्याप्तीति ॥ 'धूमवत्त्वज्ञानस्य अग्निमत्त्वज्ञानात् अग्नेर्वा पूर्वभावित्वे तस्य साधनत्वं न स्यात् इति तर्के दृष्टान्ताभावेन व्याप्तिहीनत्वात् व्याप्तिरूपं यत् आपादने युक्तमङ्गं तद्धानिरित्यर्थः ।

ननु कृतिपक्षे पूर्वभावापरभावयोरङ्गीकारे साधनत्वादिकमेव न स्यात् । साधनत्वादेः साध्यादिनिरूप्यत्वेन तदभावे अयोगात् इत्युक्तत्वेन साध्यादेः पूर्वसत्त्वमवश्यमङ्गीकार्यम् अतो न युक्ताङ्गाधिकत्वमिति[1] चेत् अत्र प्रष्टव्यं, साध्याऽद्यभावे साधनत्वाऽदिकं न स्यात् इति कोऽर्थः । साध्याऽद्यभावे साधनत्वाऽदिव्यवहारो न स्यात् इति वा यद्वा साध्याऽद्यभावे साधनाऽदेः कुत्रापि स्वकार्ये प्रवृत्तिरेव न स्यादिति । नाद्य इत्याह ॥ साधनत्वादिव्यवहारस्येति ॥ प्रथमद्वितीयादिपदाभ्यां साध्यसाधनयोः क्रमेण ग्रहणं ॥ बुद्धिस्थेति ॥ भाविनोऽपि साध्याऽदेर्बुद्धिस्थत्वादिति भावः ॥ उपपत्तेरिति ॥ न साध्यादिस्वरूपसत्तामपेक्षत इत्यर्थः । नापि द्वितीय इत्याह ॥ व्यापारेष्विति ॥ प्रवृत्तिष्वित्यर्थः ॥ अन्यानपेक्षणादिति ॥ अन्याधीनत्वानपेक्षणादित्यर्थः । साधनस्य या स्वकार्यजनने प्रवृत्तिः सा स्वशक्त्यधीनैव न साध्यरूपपराधीना । न हि दण्डस्य घटस्य जनने प्रवृत्तिर्घटाधीना । किं तु ? स्वसामर्थ्यनिबन्धनैव दृष्टा । एवं साध्यस्यापि या स्वकार्यजनने प्रवृत्तिः सापि स्वशक्त्यधीनैव न साधनाधीना । न हि घटस्य जलाऽहरणाऽदिरूपस्वकार्यजनने प्रवृत्तिः दण्डाधीना किं तु ? स्वसामर्थ्यनिबन्धनैव दृष्टेति । यथोक्तं पद्धतौ साधनशक्तेः परानपेक्षत्वात् इति । उक्तं च वरदराजीये 'तद्व्यापारश्च स्वशक्तिमात्रेण भवन्न प्रतियोग्यधीनवृत्तिः' इति । ननु ज्ञप्तिपक्षे पूर्वभावापरभावपक्षयोः अयुक्ताङ्गाधिकत्वमस्तु पूर्वभाविना अपरभाविना[2]ऽपरभाविना च पूर्वभाविनो ज्ञप्तिदर्शनेन पूर्वं साध्यादिसत्त्वस्य अनुपयोगित्वात् । जातिवादिना च तदङ्गीकारात् । सहभावपक्षे तु कथमयुक्ताङ्गाधिकत्वं ? अविशेषण[3] साध्यसाधनभावायोगेन पूर्वं साध्यादिसत्त्वस्यावश्यमङ्गीकार्यत्वात् इत्यत आह ॥ सहभावे चेति ॥ सिद्ध्यसिद्धिभ्या-

---

[1] नायुक्ता. [2] भाविनोऽ. [3] अविशेषेण.

(श्री. टि.) मिति ॥ प्रसिद्ध्यप्रसिद्धिभ्यामित्यर्थः ॥ विशेषादिति ॥ प्रसिद्धस्य साधनत्वं अप्रसिद्धस्य साध्यत्वं अङ्गीकृतमिति साध्यसाधनभावरूपो विशेषो युक्त एवेति न पूर्वं साध्यादिसत्त्वमङ्गीकार्यमिति अयुक्ताङ्गाधिकत्वमेवेत्यर्थः ॥ १५ ॥

### अर्थापत्तिसमः

(टी.) व्याप्तिं विना वाद्युक्तिमात्रेण 'अर्थात् इदमाक्षिप्तं' इत्यभिमानेनोक्तविपरीतारोपणेन दोषाभिधानं अर्थापत्तिसमः । यथा 'पर्वतोऽग्निमान्' इत्युक्ते अर्थात् आपद्यते 'अन्यत् अनग्निमत्' इति। तथा च साध्यविकलो दृष्टान्त इत्यादि । अत्र 'विशेषविधिः शेषनिषेधं गमयति' इत्यभिमानमुत्थानबीजम् । साध्यविकलत्वादि आरोप्यम् । व्याप्तेरभावात् युक्ताङ्गहानिः । तदनपेक्षणे 'धूमवत्वं असाधकं' इत्युक्ते अर्थादापद्यते 'अन्यत् सर्वं साधकं' इति । तथा च दृष्टान्ताभावः इति व्याघातः इति ॥ १६ ॥

(रा. टि.) उक्तविपरीतेति ॥ वाद्युक्तविपरीतेत्यर्थः ॥ साध्यविकलत्वादीति ॥ साधनविकलत्वं आदिपदार्थः । इति सुवचत्वात् व्याघातः इति योज्यम् ॥ १६ ॥

(श्री. टि.) व्याप्तिं विना वादिवाक्यादर्थाक्षेपाभिमानतः ।
विपरीतसमारोपमर्थापत्तिसमं विदुः ॥

इतिकारिकानुसारेण अर्थापत्तिसमजातिं लक्षयति ॥ व्याप्तिं विनेति ॥ इत्यादीति आदिशब्दार्थस्तु 'अनित्यसाधर्म्यात् शब्दोऽनित्य.' इत्युक्ते अर्थात् आपन्नं 'नित्यसाधर्म्यान्नित्यः' इति । तथा च प्रतिरोधः इत्यादिना वरदजातीयोक्तो द्रष्टव्यः । साध्यविकलत्वादीत्यत्र आदिपदेन प्रतिरोधादिग्रहणम् ॥ तथा च दृष्टान्ताभाव इति ॥ पक्षातिरिक्ते सर्वत्र अर्थात् साधकत्वस्य लब्धत्वेन असाधकत्वे दृष्टान्ताभावेन तत्र साध्यस्यापि सुतरामभावात्साध्यवैकल्यमिति स्वन्यायविरोध इत्यर्थः ॥ १६ ॥

### अविशेषसमः

(टी.) साधनप्रतिबन्द्या तदितरधर्मेण तद्वत्तां सर्वपदार्थानामविशेषापादनं अविशेषसमः । यथा 'यदि धूमवत्वात् पर्वतमहानसयोरग्निमत्वाविशेषः तर्हि द्रव्यत्वात् सर्वद्रव्याणां अनित्यत्वं स्यादिति। कस्यचिद्धर्मस्य किञ्चिदसाधकत्वदर्शनमत्रोत्थानबीजम् । तर्कपराहतिः आरोप्या । व्याप्तिहीनत्वात् तर्कस्य युक्ताङ्गहानिरिति । अन्यथा 'अस्य संप्रतिपन्नस्य च तर्कपराहतत्वेनासाधकत्वाविशेषे पदार्थत्वात् सर्वस्यानित्यत्वाविशेषः स्यात्' इति व्याघात इति ॥ १७ ॥

(रा. टि.) अस्य सम्प्रतिपन्नस्य चेति ॥ 'धूमवत्त्वं असाधकं तर्कपराहतत्वात् तर्कपराहतहेत्वन्तरवत्' इत्यत्र त्वया पक्षीकृतधूमवत्त्वस्य दृष्टान्तीकृतस्य चेत्यर्थः ॥ १७ ॥

(श्री. टि.) धर्मेणैकेन केषाञ्चिदविशेषप्रसञ्जनम् ।
साधनप्रतिबन्धा यत्सोऽविशेषसमो मतः ॥

इतिकारिकानुसारेण अविशेषसमजातिं लक्षयति ॥ साधनप्रतिबन्धेति ॥ तदितरधर्मेणेति ॥ वादिसाधनव्यतिरिक्तधर्मेणेत्यर्थः । उत्कर्षसमव्यवच्छेदायेदं विशेषणमिति मन्तव्यम् ॥ कस्यचिदित्यादि ॥ द्रव्यत्वस्य सर्वद्रव्यानित्यत्वसाधकत्वदर्शनं जात्युत्तरोत्थानबीजमित्यर्थः ॥ अन्यथेति ॥ व्याप्त्याद्यनङ्गीकार इत्यर्थः । अस्य धूमानुमानस्य ॥ सम्प्रतिपन्नस्येति ॥ तर्कपराहततया असाधकत्वेन सम्प्रतिपन्नस्य कस्यचिदित्यर्थः ॥ तर्केति ॥ 'द्रव्यत्वात् सर्वद्रव्याणामनित्यत्वं स्यात्' इति तर्कपराहतत्वेनेत्यर्थः । तथा च 'धूमानुमानस्य सम्प्रतिपन्नकिञ्चिदनुमानस्य चेत्युभयोः तर्कपराहतत्वेन यदि असाधकत्वाविशेषः तर्हि पदार्थत्वात् सर्वपदार्थानां नित्यत्वेनापि अविशेषः स्यात् इति स्वन्यायविरोधः । न चात्र व्याप्त्यभावः । त्वया पूर्वं तदङ्गत्वानङ्गीकारादित्यर्थः ॥ १७ ॥

### उपपत्तिसमः

(टी.) मत्पक्षेऽपि किञ्चित् प्रमाणं भविष्यतीति तदुपपादनमुपपत्तिसमः । यथा 'धूमवत्त्वं यथा अस्ति त्वत्पक्षे प्रमाणं तथा मत्पक्षेऽपि किञ्चित् भविष्यति पक्षत्वात्' इति । अत्र सामान्यतः प्रमाणसम्भावना उत्थानबीजम् । बाधः प्रतिरोधो वा आरोप्यः । तस्यापि कश्चित् दोषो भविष्यतीति वक्तुं[1] शक्यत्वात् व्याघातः । युक्ताङ्गहानिश्च । उपन्यस्तं प्रत्यनुपन्यस्तस्य प्राबल्यादेर्बाधाद्यङ्गस्यानिश्चयादिति ॥ १८ ॥

(रा. टि.) ॥ तदुपपादनमिति ॥ हेतूपन्यासेनेति भावः ॥ तस्यापीति ॥ 'धूमवत्त्वं असाधकं बाधदिमत्त्वात्' इत्यत्र धूमवत्त्वहेतोः बाधितत्वादिदोष इव 'बाधितत्वात् सत्प्रतिपक्षत्वात् इति त्वदुक्तहेतावपि कश्चिद्दोषो भविष्यति हेतुत्वात्' इति त्वदुक्तहेतोरपि दूषयितुं शक्यत्वात् व्याघात इत्यर्थः । युक्ताङ्गहानिं व्यनक्ति ॥ उपन्यस्तं प्रतीति ॥ १८ ॥

(श्री. टि.) अस्मत्पक्षेऽपि किमपि प्रमाणमुपपत्स्यते ।
त्वत्पक्षवदिति प्राप्तिरुपपत्तिसमो मतः ॥

---

[1] श्री. निर्वक्तुम्.

(श्री टि.) इतिकारिकानुसारेण उपपत्तिसमजातिं लक्षयति ॥ मत्पक्षेऽपीति ॥ बाध इत्यादि ॥ मत्पक्षीयप्रमाणस्य प्रबलत्वे तद्विरुद्धस्य त्वत्पक्षस्य बाधः । समबलत्वे तु प्रतिरोध इत्यर्थः ॥ तस्यापीति ॥ मत्पक्षेऽपि किञ्चिद् प्रमाणं भविष्यतीति सामान्यत उपन्यस्तस्यापीत्यर्थः । निर्वक्तुमितिपाठे नितरां वक्तुमित्यर्थः । युक्ताङ्गहानिमुपपादयति ॥ उपन्यस्तं प्रतीति ॥ उपन्यस्तप्रमाणं प्रतीत्यर्थः ॥ अनुपन्यस्तस्येति ॥ किञ्चिद्भविष्यतीति सामान्येनैवोपन्यासेऽपि कण्ठतोऽनुपन्यस्तस्य प्रमाणस्येत्यर्थः । प्राबल्यादेरित्यादिपदेन समबलत्वग्रहणम् बाधादीत्यादिपदेन प्रतिरोधग्रहणम् । बाधाद्यङ्गस्य प्राबल्यादेरिति सम्बन्धः ॥ अनिश्चयादिति ॥ निश्चयेन निरूपणासम्भवादित्यर्थः । यथोक्तं वरदराजीये 'अनुपन्यस्तप्रमाणस्य प्राबल्यसाम्ययोर्निरूपणासम्भवात् इति ॥ १८ ॥

### उपलब्धिसमः

(टी.) वादिवाक्यस्यावधारणे तात्पर्यमारोप्य विकल्प्य तद्दूषणमुपलब्धिसमः । यथा 'पर्वतोऽग्निमान्' इत्युक्ते किं पर्वत एवाग्निमान्? उत पर्वतोऽग्निमानेव? इति । नाद्यः महानसादेरप्यग्निमत्वात् । न द्वितीयः कदाचिदनग्निमत्वात् इत्यादि ।

वाक्यस्यावधारणे तात्पर्यान्वयम्भावाभिमानोऽत्रोऽस्थानबीजम् । बाधाद्यारोप्यम् । जात्युत्तरेऽपि अस्य साम्यात् व्याघातः । अयुक्ता-ङ्गाधिकत्वं च अन्ययोगायोगव्यवच्छेदस्यायोगादिति ॥ १९ ॥

(रा. टि.) बाधाद्यारोप्यमिति ॥ साध्यवैकल्यमादिपदार्थः ॥ जात्युत्तरेऽपीति ॥ 'धूमवत्त्वं असाधकं बाधादिदुष्टत्वात् संमतवत्' इत्यत्रापीत्यर्थः ॥ १९ ॥

(श्री. टि.) अवधारणतात्पर्यं वादिवाक्ये विकल्प्य यत् ।
तद्बाधात्प्रत्यवस्थानमुपलब्धिसमो मतः ॥

इतिकारिकानुसारेण उपलब्धिसमजातेर्लक्षणमाह ॥ वादिवाक्यस्येति ॥ पर्वत एवेति ॥ अस्य एवकारस्य विशेष्यसङ्गतत्वात् तस्य च विशेष्यतावच्छेदकानाक्रान्ते विशेषणसम्बन्धव्यवच्छेदोऽर्थ इति द्रष्टव्यम् ॥ पर्वतोऽग्निमानेवेति ॥ अस्य च एवकारस्य विशेषणसङ्गतत्वात् तस्य च इतरपदार्थतावच्छेदके एवकारसमभिव्याहृतपदार्थतावच्छेदकव्याप्यत्वमर्थ इत्यवधेयम् ॥ कदाचिदनग्निमत्त्वादिति ॥ अग्निं विनापि कदाचित् पर्वतस्योपलभ्यमानत्वेन साध्याभावेऽपि धर्म्युपलब्धेर्बाध इत्यर्थः । इत्यादीति आदिपदेन तस्यामेव प्रतिज्ञायां धूमवत्त्वात् इत्युक्ते धूमः किं धर्मिणा अन्ययोगव्यवच्छेदेन पर्वते सम्बध्यते? उत अयोगव्यवच्छेदेन? । न प्रथमः वृक्षादेरपि उपलब्धेः । न द्वितीयः धूमाभावेऽपि कदाचित् पर्वतस्योपलब्धेः । ततश्च साधनाभावेऽपि धर्मी उपलभ्यत इति असिद्धिः इत्यादि ग्राह्यम् । बाधादीति आदिपदेन असिद्धिग्रहणम् ।

(श्री. टि.) ॥ जात्युत्तरेऽपीति ॥ अयं भावः, 'धूमवत्त्वात् इति हेतुः साध्यासाधकः बाधितत्वात्' इति प्रतिषेधानुमानेऽपि किं पक्षीभूतो धूमवत्त्वहेतुरेव साध्यासाधकः? उत साध्यासाधक एव ? इति । न प्रथमः प्रमेयत्वादेरपि वह्न्यसाधकत्वदर्शनात् । न द्वितीयः धूमवत्त्वहेतोः वह्निरूपसाध्यासाधकत्वेऽपि अभिधेयत्वरूप-साध्यसाधकत्वदर्शनात् बाधः इत्येवं अवधारणे तात्पर्यमारोप्य विकल्पदूषणयोः साम्यात् स्वन्यायविरोध इति । कथं ? इत्यत आह ॥ अन्ययोगायोगव्यवच्छेदस्येति ॥ अन्ययोगायोगयोर्व्यवच्छेदस्येत्यर्थः । 'एकसत्त्वे द्वयमिह नास्ति' इति प्रतीतिसिद्धव्यासज्यवृत्तिप्रतियोगिकाभावाभिप्रायेणेदम् । इह च अन्ययोगव्यवच्छेदस्य अयुक्तत्वेऽपि अयोगव्यवच्छेदस्य अङ्गीकारात् । उभयं विहाय वाक्यार्थायोगात् । न च अयोगव्यवच्छेदाङ्गीकारे उक्तदोष इति वाच्यम् इदानीं वह्निमत्त्वस्य साध्यत्वेन तदयोगव्यवच्छेदोपपत्तेः इति । अत एव 'तस्माद्वह्निमानेव' इति निगमनमिति सम्प्रदायः । उक्तं च वरदराजीये 'अयोगव्यवच्छेदमात्रेण अवधारणोपपत्तौ' इति । तथा च अयोगव्यवच्छेदमात्रेण अवधारणोपपत्तौ अन्ययोगव्यवच्छेदेन अवधारणस्य अयुक्तस्यैव त्वया अङ्गीकारात् अयुक्ताङ्गाधिकत्वं इति भावः ॥ १९ ॥

### अनुपलब्धिसमः

(टी.) उपलब्ध्यादिविषयिधर्माणां स्वात्मनि तदतद्रूपतां विकल्प्य उभयथा व्याघातापादनं अनुपलब्धिसमः । यथा 'उपलब्धत्वात् इदमस्ति' इत्युक्ते सा उपलब्धिः स्वस्मिन् [1]उपलब्धितया वर्तते न वा । आद्ये नोपलब्धिः प्रमेयवदुपलब्धत्वात् । द्वितीयेऽपि तथा । प्रमेयवत् स्वात्मनि तथा अवृत्तेः । तथा च उपलब्धित्वमसिद्धम् । एवं 'अनुपलब्धेरिदं नास्ति' इत्युक्ते अनुपलब्धिः स्वात्मनि अनुपलब्धितया वर्तते चेत् प्रमेयवदसती स्यात् । अवृत्तौ घटवत् नानुपलब्धिः । अनुपलब्ध्यभावात् अनुपलब्धत्वासिद्धिः इत्यादि ।

(रा. टि.) ॥ स्वस्मिन्नुपलब्धिरूपेणेति ॥ स्वविषयकत्वेन वर्तते न वा इत्यर्थः ॥ उपलब्धत्वादिति ॥ उपलब्धिविषयत्वादित्यर्थः ॥ तथेति ॥ नोपलब्धिरित्यर्थः ॥ तथाऽवृत्तेरिति ॥ उपलब्धिरूपेण अवृत्तेरित्यर्थः । प्रमेयं घटादिकं स्वात्मनि उपलब्धिरूपेण अवर्तमानत्वात् यथा नोपलब्धिः तथेति ॥ प्रमेयवदसती स्यादिति ॥ घटादिप्रमेये अनुपलब्धिः अनुपलब्धितया उपलब्ध्यभावरूपतया वर्तमाना चेत् तदा घटाभाव-सिद्ध्या घटो यथा असन् तथा अनुपलब्धितया स्वविषये वर्तते चेत् तदा स्वस्य अभाव एव सिध्येत् न तु [2]स्वयमिति स्वयमसती स्यादित्यर्थः ॥ घटवदिति ॥ घटो यथा स्वात्मनि अनुपलब्धत्वेन न वर्तत इति नानुपलब्धिः तथेयमपीत्यर्थः । इत्यादीति आदिपदेन विषयिधर्मान्तरेऽप्येवमिति ग्राह्यम् ॥

---

[1] रा. उपलब्धिरूपेण वर्तते न वा.

[2] अविषयत्वेन.

(श्री. टि.) स्वस्मिन्विषयिधर्माणां तदतद्रूपकल्पनात् ।
विपर्ययप्रसङ्गः स्याज्जातिश्चानुपलब्धितः ॥

इतिकारिकानुसारेण अनुपलब्धिसमजातिं लक्षयति ॥ उपलब्ध्यादीति ॥ आदिपदेन अनुपलब्धिः इच्छानिच्छे द्वेषाद्वेषौ कृत्यकृती उपपत्त्यनुपपत्ती व्यवहृत्यव्यवहृती भेदाभेदावित्येवमादयो वरदराजीयोक्ता ग्राह्याः ॥ विषयिधर्माणामिति ॥ विषयनिरूप्यधर्माणामित्यर्थः । उपलब्ध्यादयश्च ते विषयिधर्माश्चेति विग्रहः । स्वात्मनि-उपलब्ध्यादिस्वरूपे । विषयसप्तमीऽयम् ॥ तदतद्रूपतामिति ॥ तद्रूपतां अतद्रूपतां चेत्यर्थः । तद्रूपतां उपलब्ध्यादिरूपतां उपलब्ध्यादिरूपत्वेन वृत्तिमित्यर्थः । अतद्रूपतां उपलब्ध्यादिरूपत्वेन अवृत्तिमित्यर्थः । उभयथा पक्षद्वयेऽपि । व्याघाताऽऽपादनं उपलब्धित्वाऽऽदिव्याघाताऽऽपादनम् ।

स्वस्मिन्विषये ॥ उपलब्धितयेति ॥ उपलब्धिरूपेणेत्यर्थः । स्वविषयतया वर्तत इति यावत् । कथं' इत्यत आह ॥ प्रमेयवदिति ॥ घटादिवदित्यर्थ. । तथा च यद्युपलब्धिः स्वविषये उपलब्धितया वर्तेत इत्यङ्गीक्रियते स्वविषयकतया वर्तत इत्यङ्गीक्रियत इति यावत् । तर्हि तस्या उपलब्धेः उपलब्धिविषयत्वेन घटादिवत् उपलब्धत्वस्यैव प्राप्त्या उपलब्धित्वं न स्यात् । ततश्च तद्विषयो लिङ्गादिः नोपलब्धः स्यात् । तथा चोपलब्धत्वात् इदमस्ति ' इत्यत्र उपलब्धत्वमसिद्धमिति भावः ॥ तथेति ॥ न उपलब्धिरित्यर्थः । तदुपपादयति ॥ प्रमेयवदिति ॥ स्वात्मन्युपलब्धिरूपेणावर्तमानघटादिवदित्यर्थः । अस्वविषयकघटादिवदिति यावत् ॥ स्वात्मनीति ॥ स्वविषये उपलब्धिरूपेणावृत्तेरित्यर्थः । अस्वविषयकत्वादिति यावत् । तथा च यद्युपलब्धिः स्वात्मन्युपलब्धिरूपेण न वर्तत इत्यङ्गीक्रियते स्वविषयिणी न भवतीत्यङ्गीक्रियत इति यावत् । तर्हि अस्वविषयकघटादिवत् यथा घटादीनामुपलब्धित्वं नास्ति तद्वदिति यावत् । अस्या अप्युपलब्धित्वं न स्यादिति तद्विषयो लिङ्गादिर्नोपलब्धः स्यादिति उपलब्धत्वमसिद्धमित्यर्थः ।

॥ अनुपलब्धेरिति ॥ अनुपलब्धत्वादित्यर्थः । स्वात्मनि स्वविषये । अनुपलब्धितया अनुपलब्धिरूपेण स्वविषयकतयेति यावत् ॥ प्रमेयवदसती स्यादिति ॥ अयमर्थः, यदि अनुपलब्धिः स्वात्मनि अनुपलब्धिरूपेण वर्तेत इत्यङ्गीक्रियते स्वविषयकतया वर्तेत इत्यङ्गीक्रियत इति यावत्, तर्हि यथा घटादिरूपप्रमेयविषयकोपलब्ध्यभावे घटादीनामसत्त्वमेव प्राप्नोति वस्तुसिद्धेर्ज्ञानैकाधीनत्वात् । एवमनुपलब्धिविषयकानुपलब्ध्यङ्गीकारे अनुपलब्धिविषयकोपलब्ध्यभावप्राप्त्या अनुपलब्ध्यभावात् अनुपलब्धिरूपपदार्थस्यैवाभावापत्तेः । वस्तुसिद्धेर्ज्ञानैकाधीनत्वात् । तथा च अनुपलब्धेरेवाभावे तद्विषयो नानुपलब्धः स्यात् । एवं च ' अनुपलब्धत्वात् इदं नास्ति ' इत्यत्र अनुपलब्धत्वस्यासिद्धिरित्यर्थः ।

(श्री.टि.) ॥ अवृत्ताविति ॥ अयं भावः, यदि अनुपलब्धिः स्वात्मनि अनुपलब्धिरूपेण न वर्तत इत्यङ्गी-क्रियते अनुपलब्धिः स्वविषयिणी नभवति इति अङ्गीक्रियते अनुपलब्धिविषयकानुपलब्धि नास्तीत्यङ्गीक्रियत इति यावत्, तर्हि यथा घटादिपदार्थविषयकानुपलब्ध्यभावे घटादिपदार्थानामुपलब्धत्वमेव प्राप्तं एवं अनुपलब्धि-रूपपदार्थविषयकानुपलब्धिर्नास्ति इत्यङ्गीकारे अनुपलब्धिविषयकोपलब्ध्यभावाभावापत्त्या अनुपलब्धिरूपपदार्थस्य उपलब्धिविषयत्वेन उपलब्धत्वमेव प्राप्तं इति [1]अनुपलब्धित्वं स्यात्। तथा च तद्विषयो नानुपलब्धः स्यादिति अनुपलब्धत्वस्य असिद्धिरिति।

(टी.) अत्र विषयिधर्मोपलब्धिः उत्थानबीजम्। असिद्ध्याद्यारोप्यम्। 'असिद्धो हेतुः' इत्यत्रापि असिद्धिः स्वात्मनि तथा वर्तते न वेति जातावपि सम्भवात् व्याघातः। अयुक्ताङ्गाधिकत्वञ्च स्वात्मनि तथावृत्तेरयुक्तत्वात्। विषये तथावृत्त्या तत्त्वोपपत्तेरिति ॥ २० ॥

(रा. टि.) असिद्धिः स्वात्मनि तथा वर्तते न वेति ॥ असिद्धित्वेन वर्तते चेत् तर्हि सा [2]हेतुरित्य-सिद्धा न त्वसिद्धिः। नेति पक्षेऽपि धूमवत्त्वादिरिव नासिद्धिः। अत उभयथा असिद्ध्यभावात [3]असिद्धत्वमिति सुवचत्वाद्व्याघात इत्यर्थः ॥ विषये तथा वृत्त्येति ॥ घटादिविषयापेक्षया उपलब्धत्वादिना वर्तमानत्वहेतुना उपलब्धित्वाद्युपपत्तेरित्यर्थः ॥ २० ॥

(श्री. टि.) ॥ विषयिधर्मोपलब्धिरिति ॥ विषयिनिरूप्यधर्मोपलब्धिरित्यर्थः ॥ असिद्धो हेतु-रित्यत्रापीत्यादि ॥ अयमर्थः, उपलब्धत्वात् इदमस्ति इत्यादौ 'उपलब्धत्वादिरूपो हेतुः अस्तित्वादिरूप-साध्यासाधकः असिद्धत्वात्' इति प्रतिषेधहेतावपि असिद्धिः स्वात्मनि असिद्धिरूपतया वर्तते न वा। यदि असिद्धि. स्वविषये असिद्धिरूपेण वर्तत इत्यङ्गीक्रियते असिद्धेः स्वात्मविषयकत्वमङ्गीक्रियत इति यावत्, तर्हि अस्या असिद्धेः असिद्धिविषयत्वेन असिद्धत्वमेव प्राप्तं न तु असिद्धित्वम् तथा च असिद्धित्वाभावे तद्विषयो लिङ्गादिर्नासिद्धः स्यात् इति असिद्धत्वरूपहेतोः असिद्धिः स्यात्। यदि च असिद्धिः स्वात्मनि असिद्धिरूपतया न वर्तते इति अङ्गीक्रियते असिद्धिः स्वात्मविषयिणी न भवतीति अङ्गीक्रियत इति यावत्, तर्हि असिद्धेः अस्वविषयकत्वे असिद्धिविषयकासिद्ध्यभावः प्राप्तः। तथा च असिद्धिरूपपदार्थविषयकसिद्ध्यभावाभावे असिद्धिरूपपदार्थस्य सिद्धत्वमेव प्राप्तमिति [4]नासिद्धत्वम्। असिद्धित्वाभावे च तद्विषयो नासिद्धः स्यादिति असिद्धत्वरूपहेतोः असिद्धिः स्यादिति स्वन्यायविरोध इति।

---

[1] अनुपलब्धित्वं न स्यात्. [2] हेतुरित्यसिद्धा. [3] असिद्धत्वमसिद्धमिति. [4] नासिद्धित्वम्.

(श्री॰ टि.) अन्ये तु असिद्धिः स्वात्मनि असिद्धिरूपेण न वर्तते चेत् तर्हि [1]घटादिवदसिद्धत्व न स्यादिति तद्विषयत्वाभावात् असिद्धत्वस्य असिद्धिः इत्याहुः । [2]तदुपपादयति ॥ स्वात्मनीति ॥ घटादीनां स्ववृत्तेः अदृष्टत्वात् उपलब्ध्यादीनामपि स्ववृत्त्ययोगेन तस्याश्च त्वया अङ्गीकारात् अयुक्ताङ्गाधिकत्वमित्यर्थः । ननु उपलब्ध्यादिधर्माणां सविषयकत्वात् स्वात्मनि वृत्त्यभावे [3]स्वविषयकत्वाभावप्राप्त्या उपलब्धित्वादिकमेव न स्यात् इत्यतः स्वविषयकत्व अङ्गीकार्ये सति कथमयुक्ताङ्गाधिकत्वं? इत्यत आह ॥ विषय इति ॥ घटादिरूपे विषय इत्यर्थः । तथा उपलब्धित्वादिरूपेण । तत्त्वोपपत्तेः उपलब्धित्वोपपत्तेः । तथा च उपलब्ध्यादिधर्माणां स्वात्मनि वृत्त्ययोगेन स्वविषयकत्वाभावेन स्वापेक्षया उपलब्धित्वाद्यभावेऽपि घटादिविषयविषयकत्वेन तदपेक्षया उपलब्धित्वाद्युपपत्तेः इति भावः ॥ २० ॥

### नित्यसमः

(टी.) विवक्षितस्य कस्यचिद्धर्मस्य तदतद्रूपतां विकल्प्य तद्दूषणेन धर्मिणः तद्विशिष्टत्वभङ्गो नित्यसमः । यथा 'शब्दोऽनित्यः' इत्युक्ते अनित्यत्वं नित्यमनित्यं वा । आद्ये शब्दोऽपि तथा स्यात् । न हि धर्मो नित्यः धर्मी चानित्य इति युज्यते । द्वितीये यदाऽनित्यत्वाभावस्तदा शब्दस्य नित्यत्वमिति सारूप्येण । वैरूप्येण तु अनित्यत्वं शब्दात् भिन्नमभिन्नं वा । आद्ये अनवस्था । द्वितीये अन्यतरमात्रावशेषे आश्रयासिद्ध्यादीत्यादि ।

अत्र धर्मधर्मिभावदर्शनमुत्थानबीजम् । तर्कपराहतिरारोप्या । धर्मधर्मिभावनिरासे जातेरप्यनुत्थानात् व्याघातः । तर्कस्य व्याप्त्यभावात् युक्ताङ्गहानिश्चेति ॥ २१ ॥

(रा. टि.) ॥ विवक्षितस्येति ॥ सिषाधयिषितस्य धर्मस्येत्यर्थः ॥ इति सारूप्येणेति ॥ साध्यं यत् तद्रूपतद्विरोधिरूपेण विकल्प्य दूषणाभिधानमित्यर्थः ॥ वैरूप्येणेति ॥ साध्यापेक्षया वैरूप्येणेत्यर्थः ॥ अनवस्थेति ॥ भेदपरम्परयेति भावः । अनित्यत्वावशेषपक्षे दोषमाह ॥ आश्रयासिद्ध्यादीत्यादीति ॥ शब्दमात्रावशेषे च साध्यासिद्धिरिति प्रथमादिपदार्थः । द्वितीयादिपदेन धर्मान्तरेष्वप्येवमित्यर्थः ॥ जातेरपीति ॥ 'इदं असाधकं आश्रयासिद्ध्यादेः' इत्युक्तजातेरपि असाधकत्वं धर्मितो भिन्नं अभिन्नं वा इत्यादिविकल्पदूषणयोः सम्भवात् इति भावः ॥ व्याप्त्यभावादिति ॥ अनित्यत्वं नाम ध्वंसः तस्य नित्यत्वेऽपि प्रतियोगिनो नित्यताऽनापत्तेः नित्यजात्याश्रयस्य घटादेः नित्यताऽनुपलम्भादिति भावः ॥ २१ ॥

---

[1] घटादिवदसिद्धित्वं. [2] एतद्वाक्यात् पूर्वं ॥ अयुक्ताङ्गाधिकत्वञ्च ॥ इति प्रतीकधारणेन भाव्यमिति भाति, [3] सविषयकत्वाभाव.

(श्री. टि.) धर्मस्य तदतद्रूपविकल्पानुपपत्तितः ।
धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत् ॥

इतिकारिकानुसारेण नित्यसमजातेर्लक्षणमाह ॥ विवक्षितस्येति ॥ तथेति ॥ नित्य इत्यर्थः ॥ सारूप्येणेति ॥ अनित्यत्वं नित्यं अनित्यं वा इति साध्यसाधर्म्येण विकल्प्य तद्दूषणेन इयं जातिः प्रवर्तत इत्यर्थः ॥ वैरूप्येणेति ॥ अनित्यत्वं शब्दात् भिन्नं अभिन्नं वा इति साध्यवैधर्म्येण विकल्प्य तद्दूषणेन प्रवर्तत इत्यर्थः ॥ अनवस्थेति ॥ भिन्नत्वं नाम भेदवत्त्वं । तथा च भेदः किं भेदिभ्यां भिन्नः ? उत अभिन्नः ? इत्यादिविकल्पप्रसरात् अनवस्था इत्यर्थः ॥ अन्यतरमात्रावशेष इति ॥ अनित्यत्वस्य शब्दाभिन्नत्वेन अन्यतरमात्रावशेषेपि अनित्यत्वमेवास्ति न शब्दः इति प्राप्त्या आश्रयासिद्धिः । आदिशब्देन यदा च अन्यतरमात्रावशेषेण शब्द एवास्ति नानित्यत्वरूपं साध्यमिति प्राप्तं तदा बाध इति द्रष्टव्यम् । इत्यादीति आदिपदेन कार्यकार्याऽश्रितानाश्रितसत्यासत्यसदसत्स्थिरास्थिरैकानेकानुवृत्तानुवृत्तविशेषणाविशेषणसापेक्षानपेक्षक्रमाक्रमवाच्यावाच्यपरोक्षापरोक्षवर्तमानावर्तमानहेयाहेयसहितासहितविरुद्धाविरुद्धज्ञानाज्ञानेष्टानिष्टद्विष्टाद्विष्टकृताकृतशक्ताशक्तोत्पन्नानुत्पन्नव्यवहृताव्यवहृतसन्दिग्धासन्दिग्धेत्याद्यवान्तरविकल्पक्रमाः वैरूप्येण एतज्जातिप्रवृत्तिपक्षे सङ्गृहीता भवन्ति । तथा च एतज्जातिवादिनो विशिष्टस्वरूपनिराकरणमात्रे तात्पर्यं इत्यवगन्तव्यम् ।

तर्कपराहतिरिति ॥ 'अन्यतरमात्रावशेषे सति आश्रयासिद्ध्यादिकं स्यात्' इति प्रतिकूलतर्कपराहतिरित्यर्थः ॥ धर्मधर्मिभावेति ॥ उक्तरीत्या धर्मिणः शब्दस्य अनित्यत्वरूपधर्मवैशिष्ट्यभङ्गेन शब्दानित्यत्वयोः धर्मधर्मिभावनिरासे क्रियमाणे सतीत्यर्थः ॥ जातेरपीति ॥ 'शब्दोऽनित्यः कृतकत्वात्' इत्यत्र कृतकत्वरूपो हेतुः अनित्यत्वरूपसाध्यसाधको न भवति आश्रयासिद्धत्वात् इति प्रतिषेधानुमानेऽपि असाधकत्वरूपं साध्यं पक्षीभूतात् कृतकत्वरूपहेतोः सकाशात् भिन्नं अभिन्नं वा । आद्ये अनवस्था, द्वितीये अन्यतरमात्रावशेषे सति आश्रयासिद्ध्यादि इत्यापादनसम्भवेन पक्षीभूते कृतकत्वहेतौ असाधकत्वरूपसाध्यवैशिष्ट्यभङ्गेन जातेरपि अनुत्थानप्रसङ्गात् स्वव्यायविरोध इत्यर्थः ॥ व्याप्त्यभावादिति ॥ 'अनित्यत्वस्य शब्दाद्भिन्नत्वे अनवस्था स्यात्' इतितर्कमूलभूतव्याप्तौ दृष्टान्ताभावादिति भावः ॥ २१ ॥

अनित्यसमः

(टी.) वादिसाधनप्रतिबन्द्या धर्मान्तरेण सर्वस्य साध्यधर्मवत्त्वापादनमनित्यसमः । यथा 'यदि महानसवत् धूमवत्त्वात् पर्वतोऽग्निमान् तर्हि सत्त्वात् सर्वमप्यग्निमत् स्यात्' इति । अविशेषसमायां तु सर्वाविशेषमात्रापादनम् । अन्यत् समानम् ।

व्याप्त्यभावात् युक्ताङ्गहानिः । तदनभ्युगमे 'यदि असाधकप्रतिबन्दीग्रस्तत्वात् इदमसाधकं तर्हि पदार्थत्वात् सर्वमप्यसाधकं स्यात्' इति व्याघात इति ॥ २२ ॥

(रा. टि.) पौनरुक्त्यं निराह ॥ अविशेषेति ॥ सर्वाविशेषेति ॥ धर्मान्तरेण अत्र तु साध्यधर्मेण इति भेदः इति भावः ॥ अन्यदिति ॥ उत्थानबीजादिकमित्यर्थः ॥ २२ ॥

(श्री. टि.) साधर्म्यादेर्विपक्षस्य सपक्षत्वप्रसञ्जनं ।
साधनप्रतिबन्धा यत्सद्यनित्यसमो मतः ॥

इतिकारिकानुसारेण अनित्यसमजातिं लक्षयति ॥ वादिसाधनेति ॥ नन्वेवमविशेषसमजातिसाङ्कर्यम् । तत्रापि वादिसाधनप्रतिबन्धा तदितरधर्मेण तद्वतां सर्वपदार्थानां विशेषापादनसद्भावात् । उक्तञ्च कारिकायां

धर्मेणैकेन केषाञ्चिदविशेषप्रसञ्जनम् ।
साधनप्रतिबन्धा यत्सोऽविशेषसमो मतः ॥ इति ।

तत्राह ॥ अविशेषसमायां त्विति ॥ सर्वाविशेषमात्रापादनमिति ॥ 'यदि धूमवत्त्वात् पर्वतमहानसयोः अग्निमत्त्वाविशेषः तर्हि द्रव्यत्वात् सर्वद्रव्याणामनित्यत्वं स्यात्' इत्येवमविशेषसमायां सर्वपदार्थानां केवलमनित्यत्वादिधर्मान्तरेणैव अविशेषापादनमभिप्रेतम् अत्र पुनः साध्यधर्मवत्त्वापादनमिति भेदात् । अत एवोक्तं कारिकायां 'अविशेषप्रसञ्जनम्, सपक्षत्वप्रसञ्जनम्' इति ॥ अन्यत्समानमिति ॥ कस्यचिद्धर्मस्य किञ्चिदसाधकत्वदर्शनं उत्थानबीजम्, तर्कपराहतिरारोप्या इत्येवं उत्थानबीजं आरोप्यं च अविशेषसमजातिवदेव द्रष्टव्यमित्यर्थः ॥ व्याप्त्यभावादिति ॥ 'यत्र सत्त्वं तत्र अग्निमत्त्वं' इति व्याप्त्यभावादित्यर्थः ॥ तदनभ्युपगम इति ॥ व्याप्त्यनभ्युगम इत्यर्थः ॥ असाधकेति ॥ 'सत्त्वात् सर्वमपि अग्निमत् स्यात्' इति तर्कस्य व्यभिचारेण दुष्टत्वात् असाधकत्वमित्यर्थः । इदं धूमवत्त्वरूपं साधनं । तथा च 'धूमवत्त्वात् इतिहेतुः साध्यसाधको न भवति तर्कपराहतत्वात्' इति प्रतिषेधानुमानेऽपि 'यदि असाधकोक्ततर्कप्रतिबन्दीग्रस्तत्वात् इदं धूमवत्त्वं साध्यासाधकं स्यात् तर्हि पदार्थत्वात् सर्वमपि असाधकं स्यात्, इत्येवं सर्वस्यापि असाधकत्वरूपसाध्यधर्मवत्त्वापादनसम्भवात् स्वन्यायविरोध इति भावः ॥ २२ ॥

कार्यसमः

(टी.) पक्षादीनामन्यतमस्यासिद्धिमुद्भाव्य तत्साधकत्वेन स्वयमेवोत्प्रेक्षितस्य दूषणेन वादिसाधनभङ्गः कार्यसमः । यथा 'पर्वतोऽग्निमान्' इत्युक्ते पर्वतस्यैवाभावादाश्रयासिद्धिः । 'यदि प्रतीयमानत्वात् सोऽस्तीत्युच्यते तन्न । शुक्तिरजतादौ व्यभिचारात्' इति ।

व्यवहर्तव्यद्वैतमत्र हेतुरुत्थानस्य । तत्पदज्ञासिद्धिरारोप्या । अस्य ज्ञातावपि तुल्यत्वेन व्याघातः । उत्प्रेक्षितदोषेण वादुक्तस्यासाधकत्वोक्तेरविषयवृत्तित्वञ्चेति ॥ २३ ॥

(रा. टि.) ॥ व्यवहर्तव्यद्वैतमिति ॥ व्यवहर्तव्यवस्तुषु सत्त्वादिभेदेन द्वैविध्यमित्यर्थः ॥ तत्तदङ्गेति ॥ आश्रयव्याप्तिपक्षधर्मताद्यङ्गेत्यर्थः ॥ अस्य जातावपीति ॥ धूमवत्त्वं असाधकं आश्रयासिद्ध्यादेः इत्यत्रापि 'धूमवत्त्वं असिद्धं, प्रतीतत्वात् अस्ति चेत् शुक्तिरूप्यादौ प्रतीतिर्व्यभिचारिणी, तथा च आश्रयासिद्धिः' इति दोषस्य जातावपि तुल्यत्वेनेत्यर्थः ॥ २३ ॥

(श्री. टि.) असिद्धतां वादिहेतोरुक्त्वा तं साधयेत्स्वयम् ।
तद्दूषणान्मूलहेतुभङ्गः कार्यसमो भवेत् ॥

इतिकारिकानुसारेण कार्यसमजातेर्लक्षणमाह ॥ पक्षादीनामिति ॥ व्यभिचारादिति ॥ 'यत्र प्रतीयमानत्वं तत्र सत्त्वं' इति व्याप्तेः व्यभिचारादित्यर्थः । इतिशब्दः प्रभृत्यर्थकः । तथा च धूमवत्त्वस्यैवाभावात् स्वरूपासिद्धिः । यदि प्रतीतत्वात् सोऽस्ति इत्युच्येत तन्न । शुक्तिरजतादौ व्यभिचारात् इत्यादिकमूह्यम् ॥ व्यवहर्तव्यद्वैतमिति ॥ प्रतीति [1]जन्यविषयव्यवहारविषयस्य क्वचित् सत्त्वं क्वचित् असत्त्वञ्च इति द्वैविध्यदर्शनमित्यर्थः ॥ तत्तदङ्गासिद्धिरिति ॥ तस्य तस्य सदाश्रयत्वपक्षधर्मत्वादिरूपस्य अङ्गस्य असिद्धिरित्यर्थः ॥ अस्येति ॥ स्वोत्प्रेक्षितदूषणेन वादिसाधनभङ्गस्येत्यर्थः ॥ जातावपीति ॥ तथा च 'धूमवत्त्वादिति हेतुः साध्यासाधकः आश्रयासिद्ध्यादेः' इति प्रतिषेधानुमानेऽपि पक्षस्यैवाभावात् आश्रयासिद्धिः । यदि प्रतीयमानत्वात् सोऽस्ति इत्युच्येत तन्न । शुक्तिरजतादौ व्यभिचारात् इति वक्तुं शक्यत्वेन स्वन्यायविरोध इत्यर्थः ॥ उत्प्रेक्षितेति ॥ स्वयमेव पक्षादिसाधकत्वेनोत्प्रेक्षितेत्यर्थः ॥ अविषयवृत्तित्वं चेति ॥ पक्षादिसाधकत्वेन वाद्युक्तस्यैव दोषप्रयुक्तासाधकत्वोक्तिविषयत्वेन स्वयमेवोत्प्रेक्षितस्य तदविषयत्वात् अविषयवृत्तित्वमित्यर्थः ॥ २३ ॥

छलस्य असङ्गतस्वन्यायविरोधयोरन्तर्भावः

(टी.) अथ निरनुयोज्यानुयोगांशस्य छलस्यापि उक्तान्तर्भावमाह

## छलमसङ्गतम्

परोक्तस्यार्थान्तरं परिकल्प्य तद्दूषणेन परोक्तभङ्गः छलम् । परोक्तदूषणस्यैव सङ्गतत्वेन अनुक्तारोपितदूषणं छलं असङ्गते अन्तर्भवति ।

(रा. टि.) ॥ अथेति ॥ अतिहान्याद्याभासाप्राप्तकालग्रहणरूपत्रयस्योक्त्यनन्तरमिति वा जातेरन्तर्भावोक्त्यनन्तरमिति वा अर्थः ॥ असङ्गत इति ॥ आकाङ्क्षाभावरूपे असङ्गते अन्तर्भवतीत्यर्थः ।

[1] जन्यव्यवहारविषयस्य.

(श्री. टि.) ॥ अथेति ॥ परोक्तजातीनां अन्तर्भावकथनानन्तरमित्यर्थः ॥ निरनुयोज्यानुयोगांशस्येति ॥ तत्प्रमेयरूपस्येत्यर्थः ॥ उक्तान्तर्भावमिति ॥ उक्तेषु विरोधादिनिग्रहस्थानषट्केषु अन्तर्भावमाहेत्यर्थः । छलस्वरूपाज्ञाने अन्तर्भावस्य दुर्ज्ञानत्वात्

कंचिदर्थमभिप्रेत्य प्रयुक्ते वचने पुनः ।
अनिष्टमर्थमारोप्य तन्निषेधश्छलं मतं ॥

इतिकारिकानुसारेण छललक्षणमाह ॥ परोक्तस्येति ॥ असङ्गत्यन्तर्भावमुपपादयति ॥ परोक्तेति ॥ अनुक्तेति ॥ परानुक्तेत्यर्थः ॥ आरोपितेति ॥ स्वारोपितेत्यर्थः ।

छलस्य विरोधेऽपि अन्तर्भावः

(टी.) न केवलमसङ्गतं छलम् । किं तर्हि ? इत्यत आह

अन्यच्च

असङ्गतात् अन्योऽर्थदोषो विरोधः । तत्राप्यन्तर्भवति छलम् । छलवाक्यस्याप्यर्थान्तरं परिकल्प्य दूषणसम्भवेन स्ववचनन्यायेन स्वविरोधेऽन्तर्भावात् ।

प्रतिज्ञाहान्याद्याभासाप्राप्तकालयोः असङ्गतान्तर्भावः

निरनुयोज्यानुयोगांशान्तरद्वयस्याप्यसङ्गतान्तर्भावमाह

अन्यच्च

उक्तात् छलात् जातेश्च अन्यत् निरनुयोज्यानुयोगांशद्वयं च असङ्गतमेव । प्राप्तस्यैव हान्यादेरुद्भावनप्राप्तकाल एव ग्रहणस्य च सङ्गतत्वात् ।

(रा. टि) ॥ स्ववचनन्यायेन स्वविरोध इति ॥ आनुकूल्यतौल्याद्यन्तर्भावादित्यर्थः ।

(श्री. टि.) न केवलं छलमसङ्गतमित्यन्वयः । असङ्गतादन्यो य इति शेषः ॥ स्ववचनविरोध इति ॥ विरोधो द्विविधः प्रमाणविरोधः स्ववाक्यविरोधश्चेति । स्ववाक्यविरोधोऽपि द्विविधः अपसिद्धान्तो जातिरिति । स्वव्याहतिरूपा जातिः स्ववचनस्वक्रियास्वन्यायविरोधभेदेन त्रिविधा । तत्र स्ववचनविरोधे छलस्य अन्तर्भाव इत्यर्थः । छलवाक्ये स्ववचनविरोधप्रकारं च स्वयमेव विवरिष्यति ।

(श्री· टि·) ॥ अंशांतरद्वयस्यापीति ॥ हान्याद्याभासस्य अप्राप्तकाले ग्रहणस्य चेत्यर्थः ॥ प्राप्तस्यैवेति ॥ प्राप्तस्यैव प्रतिज्ञाहान्यादेः उद्भावनस्य सङ्गतत्वेन सर्वथा हान्याद्यप्राप्तौ तदुद्भावनरूपस्य अन्यप्राप्तौ अन्योद्भावनरूपस्य च हान्याद्याभासस्य असङ्गतत्वादित्यर्थः ॥ प्राप्तकाल एवेति ॥ प्राप्तकाल एवोद्भावनस्य सङ्गतत्वेन उद्भावनावसरे अप्राप्य अतिक्रम्य वा तन्निग्रहोद्भावनरूपाप्राप्तकालग्रहणस्यापि असङ्गतत्वादित्यर्थः ।

अर्थान्तरादीनां असङ्गतान्तर्भावः

(टी.) निग्रहस्थानान्तरस्यापि असङ्गतान्तर्भावमाह

अन्यच्च

उक्तात् अन्यदपि निग्रहस्थानं किञ्चित् असङ्गतमेव। यथा अर्थान्तरम्। प्रकृतोपयोगिन एव सङ्गतत्वात्। परबोधनार्थं प्रवृत्तस्य तदङ्गपदप्रयोग एव सङ्गत इति निरर्थकमपि। अत एव अविज्ञातार्थम्। अपार्थकस्य स्फुटस्तत्रान्तर्भावः। अप्राप्तकाले तु अवयवविपर्यासादि निग्रहस्थानमेव न भवति अर्थाविरोधात् छन्दोभङ्गादिवत्। अर्थविरोधि असङ्गतमेव। विवक्षितक्रमानुल्लङ्घने हि सङ्गतिः स्यात्। अन्यथानुभाषणं च, उक्तानुवादस्यैव सङ्गतत्वात्। प्राप्तदूषणोद्भावनस्यैव सङ्गतत्वेन पर्यनुयोज्योपेक्षणमपि [1]असङ्गतिरेवेति।

(रा. टि.) ॥ उक्तादन्यदिति ॥ प्रतिज्ञासंन्यासप्रतिज्ञाविरोधापसिद्धान्तरूपात् अन्यदित्यर्थः। तथा निरनुयोज्यानुयोगांशचतुष्टयाच्च अन्यदित्यर्थः। आद्यत्रयस्य मानविरोधश्च इत्यत्र, जातेः स्वन्यायविरोधे, अवशिष्टत्रयस्य असङ्गतौ अन्तर्गतेरुक्तत्वादिति भावः॥ निरर्थकमपीति॥ अबोधकपदादिप्रयोगरूपत्वात् तस्येति भावः ॥ अत एवेति ॥ परबोधाङ्गपदप्रयोगस्य सङ्गतत्वादेव परिषत्प्रतिवादिभ्यां अविज्ञातार्थपदप्रयोगरूपं अविज्ञातार्थमपि असङ्गतमित्यर्थः ॥ अपार्थकस्येति ॥ अनन्वितार्थपदप्रयोगरूपत्वात् तस्य इति भावः ॥ अप्राप्तकाल इति ॥ क्रमविपर्यासरूपाप्राप्तकालनिग्रहस्थानमध्ये 'धूमवत्त्वात् पर्वतोऽग्निमान्' इत्याद्यवयवविपर्यासः 'अग्निमान् पर्वतः' इत्यवयवांशविपर्यासश्च न निग्रहस्थानमित्यर्थः । आरम्भविपर्यासवादांशविपर्यासादेः अर्थविरोधित्वात् कथम्? इत्यत आह ॥ छन्दोभङ्गादिवदिति ॥ 'अन्यच्च असङ्गतम्' इत्यस्यार्थान्तरमाह ॥ अन्यथानुभाषणं चेति ॥ असङ्गतमित्यनुकर्षः ॥ पर्यनुयोज्येति ॥ [2]अवयवशोद्भाव्यतया प्राप्तानुद्भावनानुरूपत्वात्तस्येति भावः ।

[1] असङ्गतमेव इति पाठेन भाव्यमिति भाति. [2] अवश्योद्भाव्यतया प्राप्तानुद्भावनरूपत्वात्तस्येति.

(श्री. टि.) ॥ उक्तादिति ॥ निरनुयोज्यानुयोगादित्यर्थः ॥ तदङ्गेति ॥ परबोधनाङ्गेत्यर्थः ॥ निरर्थकमपीति ॥ असङ्गतमेवेत्यर्थः ॥ अत एवेति ॥ परबोधनार्थं प्रवृत्तस्य पुरुषस्य परबोधनाङ्गपदप्रयोगस्यैव सङ्गतत्वेन अज्ञायमानार्थकपदप्रयोगरूपाविज्ञातार्थमपि असङ्गतमेवेत्यर्थः ॥ स्फुट इति ॥ अन्वितार्थवाचकपदप्रयोगस्यैव सङ्गतत्वेन अनन्वितार्थवाचकपदप्रयोगरूपापार्थकस्यापि तत्र असङ्गतौ अन्तर्भावः स्फुट इत्यर्थः ॥ अवयवविपर्यासादीति ॥ 'धूमवत्त्वात् पर्वतोऽग्निमान्' इत्यवयवविपर्यासः । आदिपदेन 'अग्निमान् पर्वतः' इत्यवयवांशविपर्यासो ग्राह्यः । कुतो न भवति ? इत्यतः अन्वयबोधप्रतिबन्धाभावादित्याह ॥ अर्थेति ॥ तत्र दृष्टान्तमाह ॥ छन्दोभङ्गादिवदिति ॥ यथा अष्टाक्षरोपेतपादचतुष्टयवत्त्वं अनुष्टुप्छन्दसो लक्षणम् । तत्र एकस्य पादस्य दैवात् नवाक्षरत्वेऽपि अन्वयबोधप्रतिबन्धकत्वाभावात् छन्दोभङ्गो न दूषणम् ' न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यां ' इति वचनात् । तथा प्रकृतेऽपि अवयवविपर्यासादेरपि अन्वयबोधप्रतिबन्धकत्वाभावात् न निग्रहस्थानत्वेन दोषत्वमित्यर्थः । आदिपदेन गणव्यत्यासो ग्राह्यः ॥ अर्थविरोधीति ॥ अवयवविपर्यासादीति वर्तते । अन्वयबोधविरोधि यत् ' निर्धूमत्वात् पर्वतोऽग्निमान् ' इत्याद्यवयवविपर्यासादि तत् असङ्गतमेवेत्यर्थः । कुतः ? इत्यतः तदुपपादयति ॥ विवक्षितक्रमेति ॥ अन्वयबोधानुकूलत्वेन वक्तुमिष्टो यः क्रमः तदुल्लङ्घनाभाव एव हि सङ्गतिः स्यात् । तदुल्लङ्घने त्वसङ्गतिरेवेत्यर्थः ॥ अन्यथानुभाषणं चेति ॥ अनुभाषणमनुवादः । यत्तदित्याद्यनुवादः कृत्स्नैकदेशानुवादः अन्यथानुवादः केवलं दूषणोक्तिः तूष्णीम्भावश्चेत्यननुभाषणं पञ्चविधमस्ति । तन्मध्ये अन्यथानुवादरूपं यदननुभाषणं तदपि असङ्गतमेवेत्यर्थः । कुतः ? इत्यतः तदुपपादयति ॥ उक्तानुवादस्यैवेति ॥ परोक्तानुवादस्यैवेत्यर्थः । पर्यनुयोज्योपेक्षणस्य असङ्गतत्वोपपादनायोक्तं प्राप्तदूषणेति । अवश्योद्भाव्यतया प्राप्तनिग्रहस्थानरूपदूषणोद्भावनस्यैव सङ्गतत्वेन तदनुद्भावनरूपं पर्यनुयोज्योपेक्षणमपि असङ्गतमेवेत्यर्थः ।

**अवशिष्टनिग्रहस्थानानां संवादादिषु अन्तर्भावः**

(टी.) एवमुक्तादन्यच्च यथासम्भवमुक्तान्तर्भूतं द्रष्टव्यमित्याह

## अन्यच्च

यथा, प्रतिज्ञाहानिः संवादे, अन्तर्भवति । अर्थतो हानिरसङ्गतावपि । प्रकृतदोषपरिहारे प्राप्ते ' अन्यथास्तु ' इत्यस्य सङ्गत्यदर्शनात् । एवं प्रतिज्ञान्तरमपि । अविशिष्टदूषणाभ्युपगमात् तद्दूषणपरिहारस्यैव सङ्गतत्वात् । हेत्वन्तरमप्यनेनोक्तम् । न्यूनाधिके न्यूनाधिक्योः । तत्र अवयवन्यूनमदूषणमित्युक्तम् । एवं आभासानुद्धारः अनुकूलतर्कानुक्तिश्च । अनुपपत्तितोक्तेरेव दोषत्वात् । तर्कस्य पृथक्प्रमाणत्वात् । पुनरुक्तमधिकम् । उक्तात्

(टी.) अन्यत् अननुभाषणं न्यूनम् । तूष्णीम्भावः अनुक्तौ । अज्ञानं अप्रतिभा विक्षेपश्च, यत्किञ्चिदुक्तावपि प्रकृतोपयोगाभिमानाद्यभावात् । न ह्यनुक्तिरप्यात्यन्तिकी । किं तु ? प्रकृतोपयोगाभिमानादिना अनुक्तिः । मतानुज्ञायाः प्रयोजनविशेषात् पृथगन्तर्भावं वक्ष्यतीति । न चानेन त्रिविधो विरोधः इत्यादेर्गतार्थता । अनुमानविरोधविवेकाभावे हेत्वाभासादेरुक्तान्तर्भावाप्रतीतेः इति ।

(रा. टि.) ॥ प्रतिज्ञान्तरमपीति ॥ असङ्गतमित्यन्तेति ॥ उक्तमिति ॥ असङ्गतमिति व्याख्यातमित्यर्थः ॥ न्यूनाधिकयोरिति ॥ अन्तर्गते इति योज्यम् ॥ अदूषणमित्युक्तमिति ॥ सा प्रतिज्ञाहेतुदृष्टान्तरूपा इत्यादिप्रकरणव्याख्यावसरे उक्तमित्यर्थः । अनुक्तिश्च इत्यनन्तरं अदूषणमित्यनुषङ्गः । तर्कपराहतिरूपचरमनिग्रहस्थानस्य कुत्र अन्तर्भावः? इत्यतोऽनुमान एवेति भावेन आह ॥ तर्कस्येति ॥ उक्तादिति ॥ अन्यथानुभाषणात् अन्यत्, यत् तत् इत्याद्यनुवादादिरूपमित्यर्थः । विक्षेपश्चेत्यनन्तरं अनुक्तौ इत्यनुषङ्गः । विक्षेपे 'अद्य मे महत्प्रयोजनं' इत्याद्युक्तेः कथ अनुक्तित्वम् ? इत्यत आह ॥ यत्किञ्चिदिति ॥ वक्ष्यतीति ॥ इष्टापत्तिः सिद्धसाधनत्वादसङ्गतमेव इति वक्ष्यति प्रकरणान्त इत्यर्थः । ॥ न चानेनेति ॥ अन्यच्चेत्यनेनेत्यर्थः ॥ इत्यादेरिति ॥ अनुपदमग्रे वक्ष्यमाणस्येत्यर्थः । तस्यापि अन्तर्भावोक्त्यर्थं प्रवृत्तत्वादिति भावः । पुरुषदोषभूतनिग्रहस्थानादेः अन्तर्भावोक्त्यर्थं अन्यच्च इत्येतत् । त्रिविधो विरोधः इत्यादि तु पराभिमेत हेत्वाभासानां अन्तर्भावाय अनुमानविरोधविभागकीर्तनं इत्यगतार्थतेति भावः ।

(श्री. टि.) ॥ उक्तादिति ॥ अन्तर्भूतत्वेन उक्तात् अन्यत् परोक्तं निग्रहस्थानमित्यर्थः ॥ प्रतिज्ञाहानिरिति ॥ कण्ठतः प्रतिज्ञाहानिरित्यर्थः । पर्वतं निरग्निकं मन्यमानं प्रति 'पर्वतोऽग्निमान् प्रमेयत्वात्' इति प्रयुक्ते परेण अनैकान्तिकत्वोद्भावने 'मा भूत् तर्हि पर्वतोऽग्निमान्' इति वदति । तथा चैवं कण्ठतः क्रियमाणायाः प्रतिज्ञाहानेः विप्रतिपन्नप्रमेयाङ्गीकाररूपत्वेन संवाद एव अन्तर्भाव इत्याशयः ॥ असङ्गतावपीति ॥ न केवलमुक्तरीत्या संवादे । किं तु ? असङ्गतावप्यन्तर्भवतीत्यर्थः । असङ्गत्यन्तर्भावमुपपादयति ॥ प्रकृतेति ॥ अन्यथास्त्वित्यस्येति ॥ 'अन्यथाऽस्तु' इत्येवमात्मिकाया अर्थतो हानेरित्यर्थः । ननु कण्ठतो हानिरसङ्गतावपि कस्मान्नान्तर्भवति ? इति चेन्न । 'दुष्टः पक्षो मास्तु' इत्याकारिकायाः तस्याः पूर्वदोषपरिहारात्मकत्वेन असङ्गतत्वाभावात् । 'अन्यथाऽस्तु' इत्येवं सामान्योक्तिरूपाया अर्थतो हानेः पूर्वदोषपरिहारात्मकत्वाभावेन असङ्गत्वात् इत्याहुः ।

॥ एवं प्रतिज्ञान्तरमपीति ॥ अर्थतो हानिवत् प्रतिज्ञान्तरमपि संवादे असङ्गतौ च अन्तर्भवतीत्यर्थः । तत्र संवादान्तर्भावमुपपादयति ॥ अविशिष्टेति ॥ 'शब्दोऽनित्यः' इत्युक्ते ध्वनिभिः सिद्धसाधनतोद्भावने

(श्री. टि.) वर्णात्मकः शब्दः पक्ष इत्यादि वदति। तत्र विशेषणाविशिष्टतया पक्षादौ प्रयुक्ते सति तत्र परोद्भावितदूषणस्य अभ्युपगमात् संवाद इत्यर्थः। असङ्गत्यन्तर्भावमुपपादयति ॥ तद्दूषणेति ॥ अविशिष्टदूषणेत्यर्थः। अविशिष्टतया प्रयुक्ते परो दूषणं यदोद्भावयति तदा अविशिष्टपक्षं अङ्गीकृत्यैव तद्दूषणपरिहारकरणं सङ्गतम्। विशेषणं प्रक्षिप्य तद्दूषणपरिहारे तु असङ्गतिरेवेति भावः।

नन्वेवं पद्धतिविरोधः। तत्र हि अत्र वक्तव्यं, किं पूर्वैव कथा अनुवर्तते? उत कथान्तरम्? नाऽऽद्यः एकस्य साधनस्य दूषणस्य वा स्थितौ भङ्गे वा कथायाः परिसमाप्तत्वात्। न द्वितीयः तथा सति प्रथममेव विशिष्टस्योपात्तत्वेन प्रतिज्ञान्तराभावात् इत्येवं प्रतिज्ञान्तरस्य निग्रहस्थानताया एव दूषितत्वात्। अतोऽत्र अन्तर्भावकथनं न युक्तमिति चेत् उच्यते, पूर्वैव कथा अनुवर्तत इत्यङ्गीकारात्। यदत्रोक्तं 'एकस्य साधनस्य दूषणस्य वा स्थितौ भङ्गे वा कथायाः परिसमाप्तत्वात्' इति, तदपि सत्यं, तथाऽपि कथापरिसमाप्त्यनन्तरमपि पुनर्विशेषणं प्रक्षिप्य प्रतिज्ञान्तरकरणे तस्या असङ्गत्यन्तर्भावस्य अत्राभिप्रेतत्वात्। उक्तं च पद्धतौ सत्यं, निवृत्तयोरपि जल्पवितण्डयोः पुनर्विशेषणं प्रक्षिपतः को दोषः? इति चेत् असङ्गत्यादिकमिति ब्रूमः इति। अभ्युपगमवादेनेयमुक्तिरित्यप्याहुः।

॥ हेत्वन्तरमपीति ॥ प्रतिज्ञान्तरस्य संवादासङ्गत्योरन्तर्भावकथनेन हेत्वन्तरमपि तयोरन्तर्भूतत्वेनोक्तप्रायम्। समानन्यायत्वादित्यर्थः ॥ इत्युक्तमिति ॥ हेतुगर्भा प्रतिज्ञा केवलापि इत्यादिग्रन्थेनेत्यर्थः। साधनं प्रयुज्य आभासानुद्धारे अनुकूलतर्कानुक्तौ च वादांशन्यूनं इत्युक्तं। तदपि न दूषणमित्याह ॥ एवमिति ॥ कुतो न दूषणम्? इत्यत आह ॥ अबुभुत्सितोक्तेरेवेति ॥ पराबुभुत्सितोक्तेरित्यर्थः। स्वस्येति शेषः। तेन एवकारान्वयसम्बन्धः। अयं भावः, आदौ अनुमानमात्रं वादिना प्रयोक्तव्यं। पश्चात् प्रतिवादिना असिद्ध्याद्याभासे अप्रयोजकत्वे च शङ्किते सति, अनन्तरं वादिना 'नायं हेतुराभासः तल्लक्षणरहितत्वात्' इत्याभासोद्धारः कार्यः अनुकूलतर्कश्च वक्तव्यः। तेनाभासादिके आनाशङ्कितेऽपि आदावेव स्वेनैव आभासोद्धारादिके कृते सति पराबुभुत्सितोक्तिरूपत्वेन तस्याः स्वस्यैव असङ्गतिरूपदोषकारित्वात् साधनं प्रयुज्य आभासानुद्धारादिरूपं वादांशन्यूनमपि न दूषणमिति।

साधनं प्रयुज्य अनुकूलतर्कानुक्तेः अदोषत्वे युक्त्यन्तरं चाह ॥ तर्कस्येति ॥ तर्कस्य दूषणानुमानरूपत्वेन साधनानुमानात् पृथक्प्रमाणतया प्रथममेकं साधनानुमानरूपं प्रमाणमभिधाय अप्रयोजकताशङ्काभावेऽपि पुनः तर्करूपप्रमाणोक्तौ अधिकेन निगृह्येतेति न तदनुक्तिर्दूषणमित्यर्थः॥ उक्तादन्यदिति ॥ अन्यथानुवादाद् अन्यत् यत्तदित्याद्यनुवादादिरूपं यत् अननुभाषणत्रयं तत् न्यूनमित्यर्थः। तूष्णीम्भावरूपप्रथमाननुभाषणस्य अनुक्तौ अन्तर्भाव इत्याह ॥ तूष्णीम्भाव इति ॥ विक्षेपश्चेत्यनन्तरं अनुक्तौ इत्यनुवर्तनीयम्। ननु प्रत्युत्तराप्रतिपत्तिरूपाया अप्रतिभाया अनुक्त्यन्तर्भावसम्भवेऽपि न अज्ञानविक्षेपयोः तत्रान्तर्भावो युक्तः। अज्ञानस्य

(श्री. टि.) 'नास्यार्थो ज्ञायते मया' इत्युक्तिरूपत्वात्, विक्षेपस्य च 'अद्य मे महत् प्रयोजनमस्ति, तस्मिन् अवसिते वक्ष्यामि' इत्युक्तिरूपत्वात् इत्यत आह ॥ यत्किञ्चिदुक्तावपीति ॥ नन्वस्तु प्रकृतोपयोगाभिमानाभावः तथापि कथं उक्तिसामान्याभावरूपानुक्तौ अन्तर्भावः ? इत्यत आह ॥ न हीति ॥ आत्यन्तिकी । उक्तिसामान्याभावरूपा ॥ अनुक्तिरिति ॥ उत्त्यभाव एवेत्यर्थः । तथा च अज्ञानविक्षेपयोरपि प्रकृतोपयोगाभिमानेन उक्त्यभाव-सद्भावात् प्रकृतोपयोगाभिमानेन उक्त्यभावरूपानुक्तौ अन्तर्भावो युक्त इति भावः । न च तूष्णीम्भावोऽनुक्तिरिति पूर्वमनुक्तिलक्षणस्योक्तत्वात् तद्विरोध इति वाच्यम् । यत्किञ्चिदुक्तेरपि प्रकृतोपयोगाभिमानाभावेन तूष्णीम्भावतुल्यत्वात् इत्याशयात् ।

ननु मतानुज्ञायाः कुतोऽन्तर्भावो नोच्यते ? न चोत्तरत्रोच्यत इति अत्रानुक्तिरिति वाच्यं अन्तर्भाव-कथनप्रसङ्गेऽन्तर्भावमनुक्त्वा उत्तरत्र कथने प्रयोजनाभावादित्यत आह ॥ मतानुज्ञाया इति ॥ इष्टापादनरूपाया इत्यर्थः ॥ प्रयोजनविशेषादिति ॥ दूषणानुमानरूपे तर्के अपसिद्धान्तप्रमाणबाधासिद्धीनां अदोषत्वेऽपि इष्टापादनरूपाया मतानुज्ञायाः दोषत्वं अस्त्येव इति प्रमेयसूचनरूपप्रयोजनविशेषादित्यर्थः ॥ पृथगिति ॥ कण्ठत एव मतानुज्ञास्वरूपानुवादपूर्वकं असङ्गत्यन्तर्भावं इष्टापत्तिः सिद्धसाधनत्वादसङ्गतमेव इति वाक्येन भगवानाचार्य एव वक्ष्यतीत्यर्थः ।

ननु विरोधो मानस्ववाक्याभ्याम् इत्यादिना ग्रन्थेन विरोधविभागस्योक्तत्वात् त्रिविधो विरोधः इत्यादिनाऽपि विरोधविभागस्यैवोच्यमानत्वेन गतार्थता इत्येवं मन्दानां शङ्कां प्रतिषेधति ॥ न चानेनेति ॥ विरोधो मानस्ववाक्याभ्याम् इत्यादिनेत्यर्थः । कुतो न गतार्थता ? इति चेन्न । विरोधो द्विविधः समयबन्धादिसाधारणः असाधारणश्चेति । तत्र समयबन्धादिसाधारण एव विरोधो विरोधो मानस्ववाक्याभ्याम् इत्यादिना विभज्य निरूपितः । अत्र पुनः यः असाधारणः अनुमानमात्रनिष्ठो विरोधः स एव विभज्य निरूप्यते । न च तत्र प्रयोजनाभावः । अनुमानमात्रनिष्ठविरोधानां समयबन्धादिसाधारणविरोधात् विवेकज्ञानाभावे परनिरूपित-हेत्वाभासानां अनुमानमात्रनिष्ठविरोधेषु अन्तर्भावस्य दुर्ज्ञानत्वापत्तेरित्याह ॥ अनुमानविरोधेति ॥ अनुमान-विरोधस्य समयबन्धादिसाधारणविरोधात् विवेकाभावे विवेकज्ञानाभाव इत्यर्थः ॥ उक्तान्तर्भावेति ॥ उक्तेषु षट्सु निग्रहस्थानेषु मध्ये विरोधप्रभेदरूपो यः असाधारणविरोधः अनुमानमात्रनिष्ठविरोध इति यावत् । तत्रान्तर्भावप्रतीत्यसम्भवादित्यर्थः ।

### छलविभागलक्षणोदाहरणानि

(टी.) छलं त्रिविधम् वाक्छलं सामान्यच्छलं उपचारच्छलञ्चेति ।

तत्र मुख्यार्थविवक्षया [1]प्रत्युक्तस्य मुख्यार्थान्तरकल्पनया तद्दूषणं वाक्छलम् ।

---

[1] प्रयुक्तस्य.

(टी.) अभिप्रायान्तरकल्पनया तद्दूषणं सामान्यछलम्। अमुख्यार्थाभिप्रायेण प्रयुक्तस्य मुख्यार्थकल्पनया दूषणमुपचारछलम्।

तत्र वाक्छलादेरसङ्गताद्यन्तर्भावस्फुरणायोपलक्षणतया वाक्छलमुदाहरति

**गृष्टिविवक्षया 'गां आनय' इत्युक्ते पृथिवीविवक्षया 'गवानयनमशक्यम्' इतिवत्**

एकवारप्रसूता गौः गृष्टिः। द्वितीयं यथा 'अनूचानोऽयं ब्राह्मणः' इत्युक्ते 'युक्त मेव हि ब्राह्मणे अनूचानत्वम्' इति सम्भावनाभिप्रायेण परेणाभिहिते ब्राह्मणत्वस्य हेतुत्वाभिप्रायकल्पनया 'नैवं, व्रात्ये व्यभिचारात्' इति प्रतिषेधः। तृतीयं यथा 'सिंहो देवदत्तः' इत्युक्ते 'नैवं, सटाद्यभावात्' इति। अत्र 'गवानयनं न विधेयं अशक्यत्वात्' इत्यादिछलवाक्ये 'गवा नयनम्' इत्येतदयुक्तं अनन्वितत्वात्' इत्यादेश्छलस्य प्रवृत्तेर्विरोधत्वं ज्ञातव्यम्।

(रा. टि.) ॥ अनन्वितत्वादिति ॥ गवा इति तृतीयान्तेन नयनमिति नेत्रवाचिपदस्य अन्वयाभावादिति भावः।

(श्री.टि.) छलमसङ्गतमित्युक्तं। तस्य असङ्गत्यन्तर्भावप्रतिपत्तिसौकार्याय

तच्च त्रेधा वाक्छलादिविभेदत इतीरितम्।

इतिकारिकानुसारेण तद्विभागमाह ॥ छलं त्रिविधमिति ॥

........................तत्र तु वाक्छलं।
अभिप्रायवैपरीत्येन कल्पितार्थस्य बाधनम्॥

इतिकारिकानुसारेण वाक्छलं लक्षयति ॥ तत्र मुख्यार्थेति ॥ त्रिविधछलमध्य इत्यर्थः।

सामान्यछलमेतत्स्यादिति सामान्ययोगतः।
तात्पर्यवैपरीत्येन कल्पितार्थस्य बाधनम्॥

इतिकारिकानुसारेण सामान्यछललक्षणमाह ॥ अभिप्रायान्तरेति ॥

उपचारप्रयोगेषु गौणलक्षणकेषु यः।
[1]मुख्यार्थसम्भवाद्बाध उपचारछलं तु तत्॥

---

[1] 'मुख्यार्थासम्भवाद्बाधः' इति पाठेन भाव्यमिति भाति.

(श्री. टि.) इतिकारिकानुसारेण उपचारछललक्षणमाह ॥ अमुख्यार्थेति ॥ अनूचानः सदाचारसम्पन्नः ॥ हेतुत्वेति ॥ अनूचानत्व इत्यर्थः। व्रात्यो व्रतभ्रष्टो दुराचारीति यावत्। सटाः स्कन्धसंस्थाः केशाः। आदिपदेन लाङ्गूलग्रहणं।

पूर्वं छलमसङ्गतम् इति असङ्गत्यन्तर्भावं छलस्योक्त्वा अन्यच्च इतिवाक्येन स्ववचनविरोधेऽप्यन्तर्भाव उक्तः। तमुपपादयति ॥ अत्रेति ॥ गवानयनं पृथिव्यानयनं ॥ अनन्वितत्वादिति ॥ गवा इतितृतीयान्तपदस्य चक्षुर्वाचकस्य नयनमिति प्रथमान्तपदस्य च अनन्वितत्वात् इत्यर्थः ॥ इत्यादेरिति ॥ इत्यादिप्रकारेणेत्यर्थः ॥ छलस्य प्रवृत्तेरिति ॥ छलवाक्येऽप्यर्थान्तरपरिकल्पनेन दूषणप्रवृत्तेरित्यर्थः ॥ विरोधत्वमिति ॥ स्ववचन-विरोधत्वमित्यर्थः।

### शब्दानां मुख्यार्थादिनिरूपणम्

(टी.) रूढ्या योगेन वा प्रतिपाद्योऽर्थो मुख्यः। बहुलप्रयोगमात्रसिद्धा रूढिः प्रवृत्तिनि-मित्तविवक्षया प्रवृत्तिर्योगः। अखण्डवृत्ती रूढिः अवयववृत्तिर्योग इति वा। गौण्या लक्षणया वा वृत्त्या शब्दबोध्योऽर्थः अमुख्यः। मुख्यार्थगुणयुक्तार्थान्तरवृत्तिर्गौणी। मुख्यार्थसम्बन्धिन्यर्थान्तरे वृत्तिर्लक्षणेति।

(रा. टि.) प्रसङ्गप्राप्तमुख्यार्थादेर्लक्षणमाह ॥ रूढ्येति ॥ योगरूढेः समाहारवृत्तित्वेन वृत्त्यन्तरत्वाभावात् द्वयोरेवोक्तिः ॥ मुख्यार्थगुणेति ॥ मुख्यार्थगुणसदृशगुणयुक्तेत्यर्थः ॥

(श्री. टि.) मुख्यार्थविवक्षयेत्यादिना वाक्छललक्षणमुक्तम्। तत्र कोऽसौ मुख्यार्थः? इत्यतः तं दर्शयति ॥ रूढ्येति ॥ बहुलप्रयोगमात्रसिद्धेति ॥ प्रयोगमात्रबाहुल्यानुमिता रूढिरित्यर्थः। यथा घटादिशब्दानां कुम्भा-दाविति द्रष्टव्यं।

प्रयोगमात्रबाहुल्यं रूढिरित्यभिधीयते।

इत्यनुव्याख्यानस्याप्येवमेवार्थो वर्णनीयः।

........................बहुलातिप्रयोगतः।
रूढमित्येव साध्यं स्यात्...............।

इति निरवकाशनामपादीयानुव्याख्यानोक्तेः।

रूढिर्हि द्विविधा मता....................।

(श्री. टि.) इत्यनुव्याख्यानस्थरूढिपदस्य रूढिरिति रूढिज्ञापको बहुलातिप्रयोगो लक्ष्यते इति सुधायां व्याख्यातत्वाच्च । तथा च 'घटादिशब्दाः कुम्भादौ रूढाः प्रयोगमात्रबाहुल्यवत्त्वात् व्यतिरेकेण यौगिकशब्दवत्' इत्यनुमानं द्रष्टव्यं। अत्र मात्रपदेन अवयवार्थमुख्यार्थगुणसादृश्यमुख्यार्थसम्बन्धसापेक्षताव्युदासः। तेन अवयवार्थापेक्षया भेकादौ प्रयुज्यमाने केवलयौगिके पङ्कजादिशब्दे, मुख्यार्थगुणसादृश्यं निमित्तीकृत्य बटौ प्रयुज्यमाने सिंहादिशब्दे, मुख्यार्थसम्बन्धं निमित्तीकृत्य तीरादौ प्रयुज्यमाने लाक्षणिके गङ्गादिशब्दे च व्यभिचारपरिहार इति ज्ञातव्यं। बहुलेति स्वरूपसङ्कीर्तनं बाहुल्यमिति स्वरूपकथनं इति सुधावचनात्। अत्र यद्यपि प्रयोगमात्रबाहुल्यानुमेयाऽखण्डशक्त्या प्रतिपादकत्वरूपा रूढिः प्रयोगाघटिता अन्यैवास्ति तथापि रूढ्यनुमापकप्रयोगोऽपि असाधारणधर्मत्वात् गोत्वानुमापकसास्नादिमत्त्वमिव तल्लक्षणमपि भवतीत्यभिप्रेत्येदमुक्तमिति मन्तव्यम्। योगलक्षणमाह ॥ प्रवृत्तीति॥ यथा पङ्कजादिशब्दानां भेकादौ। अत्र प्रवृत्तिनिमित्तापेक्षप्रयोगबाहुल्यं योगरूढिः इति रूढ्यनुमापकप्रयोगगर्भं योगरूढिलक्षणं द्रष्टव्यम्।

एवं ज्ञापकमुखं रूढिलक्षणमुक्त्वा प्रयोगमात्रबाहुल्यानुमेयाऽखण्डशक्त्या प्रतिपादकत्वरूपा रूढिः प्रयोगाघटिता अन्यैवास्ति इत्याशयेन ज्ञाप्यमुखलक्षणमाह ॥ अखण्डवृत्तिरिति ॥ अवयवार्थनिरपेक्षेत्यर्थः। वृत्तिः प्रतिपादकत्वं। प्रवृत्तिनिमित्तापेक्षया प्रवृत्तिर्योग इति योगलक्षणस्य घटत्वादिरूपप्रवृत्तिनिमित्तसापेक्षरूढ्यां अतिव्याप्तत्वात् लक्षणान्तरमाह ॥ अवयववृत्तिरिति ॥ अवयवार्थमपेक्ष्य वृत्तिरित्यर्थः।

नन्वस्मिन्पक्षे योगरूढिलक्षणं विरुद्धत्वादयुक्तमिति चेत्। सत्यं, तथापि ज्ञापकमुखमेव रूढिलक्षणमङ्गीकृत्य प्रयोगबाहुल्यापेक्षा अवयववृत्तिर्योगरूढिरिति रूढ्यनुमापकप्रयोगगर्भमेव तल्लक्षणं बोद्धव्यं। अवयवशक्तिसापेक्षसमुदायशक्त्या अर्थप्रतिपादकत्वरूपं अपरं च योगरूढिलक्षणं रूढ्यनुमापकप्रयोगाघटितं तर्कताण्डवोक्तमनुसन्धेयम्। वस्तुतस्तु, अवयववृत्तिर्योगः रूढिस्त्वखण्डवृत्तिः। न ह्येतयोरेकत्र समावेशो युज्यते विरोधात् इत्याशङ्क्य सुधायामेव न हि योगरूढयोः समाहारो योगरूढिरिति ब्रूमो येन विरोधः स्यात्। किं नाम? यथा रूढलक्षणा लक्षणामात्रात् रूढगौणी च गौणीमात्रात् प्रयोगप्राचुर्येण भिद्यते तथा प्रवृत्तिनिमित्तापेक्षत्वात् रूढिमात्रात् प्रयोगबाहुल्येन योगमात्राच्च भिन्ना तृतीयेयं वृत्तिः इति समाहितत्वेन न कोपि दोष इति।

### अनुमानविरोधविभागः

(टी.) हेत्वाभासादेः क्वान्तर्भावः? इत्यतस्तं वक्तुमनुमानविरोधविभागमाह

## त्रिविधो विरोधः

अनुमानस्य साधारणोऽसाधारणश्च सम्भावित इति शेषः।

(टी.) कथं त्रैविध्यम्? इत्यत आह

## प्रतिज्ञाहेतुदृष्टान्तभेदेन

अत्र प्रतिज्ञापदेन पक्षोऽप्युपलक्ष्यते। हेतुपदेन लिङ्गञ्च। तथा दृष्टान्तपदेनोदाहरणम्। विरोधस्योभयदूषणत्वात्। प्रतिज्ञादिभेदेन साधनांशानां त्रैविध्यात् तद्विरोधस्त्रिविधः। विरोधपदं संयोज्य वा योज्यम्। तत्र प्रतिज्ञाविरोधः साधारणः। अन्यावसाधारणौ।

(रा. टि.) उभयेति॥ अर्थवचनोभयदोषत्वात् उभयमप्यत्र ग्राह्यम्। अर्थद्वारा वचनस्यापि दोषत्वात् उभयेत्युक्तम्। विरोधविभागं प्रतिज्ञाय प्रतिज्ञादिभेदकीर्तनं अयुक्तमित्यत आह॥ प्रतिज्ञादीति॥ साधारण इति॥ स्ववाक्यविरोधस्यापि प्रतिज्ञाविरोधत्वात् तस्य च अनुमानात् अन्यत्रापि प्रश्नोत्तरापसिद्धान्तजात्युत्तरादावपि सम्भवादिति भावः।

(श्री. टि.) ननु विरोधो मानस्ववाक्याभ्याम् इत्यनेन सम्यग्विरोधप्रभेदस्य निरूपितत्वात् त्रिविधो विरोधः इति पुनर्विरोधविभागकथनमनुपपन्नम् इत्यतः तद्वाक्यमवतारयति॥ हेत्वाभासादेरिति॥ तं वक्तुमिति॥ उक्तदोषेष्वेव अशेषानुमानदोषाणाम् अन्तर्भाव इत्यतः तं अन्तर्भावं वक्तुमित्यर्थः॥ अनुमानस्येत्यादि॥ अनुमानस्य सम्भावितो विरोधः प्रतिज्ञादिविरोधभेदेन त्रिविधः। तन्मध्ये कश्चित् साधारणः कश्चित् असाधारण इति योज्यम्। अनुमाने साधारणासाधारणविरोधयोः न नियमः इत्याशयेन सम्भावित इत्युक्तम्॥

॥ प्रतिज्ञापदेनेति॥ पक्षवचनवाचिना प्रतिज्ञापदेनेत्यर्थः॥ हेतुपदेनेति॥ लिङ्गवचनवाचिना हेतुपदेनेत्यर्थः॥ दृष्टान्तपदेनेति॥ साध्यसमानधर्मविशिष्टधर्मिवाचिनेत्यर्थः। उदाहरणं तद्वचनरूपं। उपलक्षणे निमित्तमाह॥ विरोधस्येति॥ उभयेति॥ साक्षात् अर्थदोषः तद्द्वारा वचनस्य इत्येवं विरोधस्य अर्थवचनदोषत्वादित्यर्थः। ननु विरोधस्य त्रैविध्यं प्रतिज्ञाय अनुमानावयवानां त्रैविध्योक्तिरनुपपन्ना इत्यत आह॥ प्रतिज्ञादिभेदेनेति॥ साधनांशानामनुमानावयवानां। तद्विरोधः अनुमानविरोधः। विरोधे त्रैविध्यं प्रतिज्ञाय अनुमानावयवानां त्रैविध्योक्तिरनुपपन्ना इति शङ्काऽपनोदाय विरोधपदाध्याहारेण मूलं योजयति॥ विरोधपदं संयोज्य वेति॥ तथा च प्रतिज्ञाविरोधहेतुविरोधदृष्टान्तविरोधभेदेन इति मूलयोजना द्रष्टव्या। अनुमानस्य सम्भावितो विरोधः प्रतिज्ञाऽऽदिविरोधभेदेन त्रिविधः। तन्मध्ये कश्चित् साधारणः कश्चित् असाधारणः इत्युक्तं। तत् विवेकेन दर्शयति॥ तत्रेति॥ त्रिविधविरोधमध्ये॥ साधारण इति॥ अनुमानसमवबन्धादिसाधारण इत्यर्थः। अन्यौ हेतुविरोधदृष्टान्तविरोधौ। असाधारणौ अनुमानमात्रनिष्ठौ।

प्रतिज्ञाविरोधः

(टी.) प्रतिज्ञाविरोधं लक्षयति ।

## प्रमाणविरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोधः

**अत्र प्रमाणविरोध एव हेत्वाभासानामन्तर्भावात् तस्य ग्रहणं, न स्ववाक्यविरोधस्य ।**

(रा. टि.) प्रमाणस्ववाक्यविरुद्धार्थेति कुतो नोक्तं ? इत्यत आह ॥ अत्र प्रमाणविरोध एवेति ॥ न स्ववाक्यविरोधस्येति ॥ ग्रहणमित्यनुकर्षः ।

(श्री. टि.) ननु प्रमाणविरोधवत् स्ववाक्यविरोधस्यापि प्रतिज्ञाविरोधत्वात् प्रमाणस्ववाक्यविरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोधः इति कुतो नोक्तम् ? इत्यत आह ॥ अत्रेति ॥ नेति ॥ स्ववाक्यविरोधे हेत्वाभासानामनन्तर्भावात् तदन्तर्भावकथनायैवास्य ग्रन्थस्य प्रवृत्तत्वादित्याशयः ।

हेतुविरोधः

(टी.) हेतुविरोधं दर्शयति

## हेतुस्वरूपासिद्धिरव्याप्तिश्चेति हेतुविरोधः

**अत्र प्रथमहेतुशब्देन लिङ्गमुच्यते । यत् यत्र वादिना विवक्षितं तत्र तस्याप्रमितिः स्वरूपासिद्धिः ।**

(रा. टि.) ॥ लिङ्गमुच्यत इति ॥ द्वितीयं तु अर्थवचनोभयपरमिति भावः ।

(श्री. टि.) ननु हेतुस्वरूपासिद्धिरिति कथमुक्तं ? लिङ्गवचनं हेतुः । तथा च 'शब्दोऽनित्यः चाक्षुषत्वात्' इत्यत्र चाक्षुषत्वरूपलिङ्गवचनस्वरूपस्य सिद्धत्वादित्यत आह ॥ अत्र प्रथमेति ॥ द्वितीयहेतुशब्देन तु लिङ्गं तद्वचनं चोच्यते । विरोधस्योभयदूषणत्वादिति भावः । हेतुस्वरूपासिद्धिरित्यस्य हेतुस्वरूपस्य पक्षे असिद्धिः इत्यर्थकत्वे 'ऊर्ध्वदेशो वृष्टिमान् अधोदेशे नदीपूरात्, रोहिण्युदय आसन्नः कृत्तिकाया उदितत्वात्, अयं प्रदेशः कुलालासत्तिमान् चक्रस्य भ्रमणात्, समुद्रः अभिवृद्धो भवितुमर्हति चन्द्रस्योदितत्वात्, उपरि सविता भूमेरालोकवत्त्वात्' इत्यादिव्यधिकरणानुमानेष्वपि पक्षे हेतुस्वरूपस्याभावेन असिद्ध्यापत्त्या असाधकत्वापातेन आश्रयसाध्यव्यधिकरणासिद्ध्यो न दूषणम् इति वक्ष्यमाणविरोधः स्यादित्यत आह ॥ यद्यत्रेति ॥ अनेन एवं मूलं योजितं भवति । रूपशब्दोऽत्र स्थानवाची ।

(श्री. टि.) स्वरूपे रूपशब्दः स्यात्प्रकारस्थानयोरपि ।

इत्यभिधानात् । एव च हेतोः स्वरूपे स्वोचिते स्थाने असिद्धिः प्रमित्यभाव इति । तथा च हेतोः समुचितदेशसिद्धेरेव प्रयोजकत्वेन पक्षधर्मताया अप्रयोजकत्वात् नोक्तदोष इति भावः । 'यत् यत्र वादिनो विवक्षितं तत्र तस्य असत्त्वं' इत्येवोक्तौ यत्र विवक्षितस्थले हेतुस्वरूपस्य सत्त्वेऽपि तत्प्रमित्यभावः तत्र असिद्धिर्न स्यात् अतः अज्ञानासिद्धिसंग्रहायोक्तम् तत्र तस्याप्रमितिरिति ।

दृष्टान्तविरोधः

(टी.) दृष्टान्तविरोधं दर्शयति

## साध्यस्य साधनस्य वा अननुगमो दृष्टान्तविरोधः

[1]उभयोर्वेति ग्राह्यम् । अननुगमो अनुगत्यप्रमितिः । साधर्म्यदृष्टान्तस्यायं विरोधः । साध्यस्य साधनस्य उभयोर्वा व्यावृत्त्यप्रमितिर्वैधर्म्यदृष्टान्तविरोधोऽपि द्रष्टव्यः । अनेन पक्षसाधनदृष्टान्तलक्षणराहित्यं प्रतिज्ञाहेत्वादिविरोधलक्षणं सूचितं भवति । [2]तल्लक्षणविभागादि संग्रहेणैव ज्ञापयितुमियमुक्तिः ।

(रा. टि.) ॥ उभयोर्वेति ग्राह्यमिति ॥ उभयवैकल्यस्थले तत्त्वेन रूपेण अनुद्भाव्यत्वेऽपि अन्यतरवैकल्यस्य तत्रापि उद्भाव्यत्वात् उभयोर्वेत्युक्तम् । अन्यथा तादृशस्थले अग्रे दृश्यत्वहेतुदृष्टान्ते दोषोद्भावनस्याप्राप्तिप्रसङ्गात् इति तर्कताण्डव एव व्याख्यातमिदं वाक्यम् ॥ अनेन पक्षेति ॥ साध्यधर्म[3]विशिष्टत्वरूपपक्षलक्षणराहित्यं प्रतिज्ञाविरोधः, साधनत्वाभिव्यञ्जकविभक्त्यन्तलिङ्गवचनत्वराहित्यं हेतुविरोधः, व्याप्तिप्रदर्शनपूर्वकं सम्यग्दृष्टान्तवचनत्वहीन उदाहरणाभासः इति प्रतिज्ञाविरोधादिलक्षणं अनेन प्रमाणविरुद्धार्थेत्यादिकथनेनोक्तं भवतीत्यर्थः ॥ इयमुक्तिरिति ॥ प्रमाणविरुद्धार्थेत्याद्युक्तिरित्यर्थः ।

(श्री. टि.) ॥ उभयोश्चेति ग्राह्यमिति ॥ रीत्येति शेषः । उभयोर्वादिप्रतिवादिनो रीत्या चशब्दात् अन्यतररीत्या च दूषणमिति ग्राह्यमित्यर्थः । यथोक्तमनुव्याख्याने

.....................एकपक्षेऽपि दूषणं ।
साध्यसाधनवैकल्यं दृष्टांतस्य........॥ इति ।

---

[1] श्री. उभयोश्चेति. [2] श्री. तल्लक्षणं विभागादि. [3] विशिष्टवचनत्वरूपपक्षवचनलक्षण.

(श्री. टि.) व्याख्यातं च सुधायां यद्वा दृष्टान्तस्य साध्यसाधनवैकल्यमपि व्यभिचारादिवत् उभया-न्यतररीत्या द्विविधं प्रतिपत्तव्यं न पुनरेकविधमेव। अभिमानतो द्वैविध्यस्यापि सम्भवादित्याह ॥ साध्येति ॥ एकपक्षेऽपि दूषणमित्यनुवर्तते इति।

'साध्यस्य साधनस्य वा अननुगमो दृष्टान्तविरोधः' इत्येव न। किं तु ? 'उभयोः साध्यसाधनयोश्च अननुगमो दृष्टान्तविरोध इति ग्राह्यम्' इत्येवं उभयोश्चेति ग्राह्यं इति वाक्यव्याख्यानं तु, साध्यसाधनवैकल्यं दृष्टातस्य इत्यनुव्याख्यानेन तथा साध्यसाधनवैकल्यमेव दृष्टान्तस्य दूषणं नापरम्। तथा हि, उभयवैकल्यं तावत् पृथङ्न वाच्यम्। एकैकवैकल्येनैव दृष्टान्तस्य दुष्टत्वे समुदितवैकल्यकल्पनावैय-र्थ्यात्। अन्यथैकैकवैकल्यस्य दूषणत्वाङ्गीकारासम्भवात्। सम्भवमात्रेण पृथग्वचने अनैकान्तिक-कालातीतत्वं नाम हेत्वाभासान्तरं वाच्यं स्यात् इति सुधया, अन्यतरवैकल्येनैव दृष्टान्तस्य दुष्टत्वे उभयवैकल्यं पृथङ्न गणनीयम्। तस्मात्साध्यवैकल्यं साधनवैकल्यं च द्वयमेव दृष्टान्तदूषणम्' इति पद्धत्या च विरुद्धम्। नचेदं पररीत्योक्तमिति वाच्यम्। स्वमतनिरूपणपराचार्यवाक्यस्य परीत्या व्याख्यानस्य अकौशलापादकत्वात्।

न च 'मनोऽनित्यं मूर्तत्वात्' इत्यनुमाने परमाणुवत् कर्मवच्च इत्यत्र क्रमेण साध्यवैकल्यसाधनवैकल्ययो-रेव दोषत्वम्। यदा तु तत्रैव प्रयोगे गगनं दृष्टान्ततयोपात्तं तत्रैकैकवैकल्यमात्रस्यायोगेन दृष्टान्तदोष एव नास्तीति दोषान्तरमेव वाच्यमिति शङ्का स्यात्। अतः तादृशस्थले सम्भावितत्वेन उभयवैकल्यमेव वाच्यमित्या-शयेनैव उभयोश्चेति ग्राह्यम् इत्युक्तमिति वाच्यम्। सम्भवमात्रेण पृथग्वचने अनैकान्तिककालातीतत्वं नाम हेत्वाभासान्तरं वाच्यं स्यात् इति सुधाविरोधापत्तेरिति द्रष्टव्यम्।

तर्कताण्डवे तु, या तु, 'साध्यस्य साधनस्य वाऽननुगमो दृष्टान्तविरोधः इति प्रमाणलक्षणव्याख्या-वसरे टीकाकारीया ' उभयोर्वेति ग्राह्यम्' इत्युक्तिः, सा यथा मनोऽनित्यं मूर्तत्वात् परमाणुवत् कर्मवत् इत्यत्र क्रमेण साध्यवैकल्यं साधनवैकल्यं च दोषः तथा गगनवत् इत्यादावुभयवैकल्याख्यौ दोषौ स्तः इत्यभिप्रेत्यैव, न तूभयवैकल्यदूषणस्य पृथग्दूषणत्वमित्यभिप्रेत्य, अन्यथा एकैकवैकल्येन दृष्टान्तस्य दुष्टत्वे समुदितकल्पनावैयर्थ्यात् इत्यादिसुधया, उभयवैकल्यं पृथङ्न गणनीयम् इति पद्धत्या च विरोधात् इत्युक्तम्।

दृष्टान्ते साध्यस्य साधनस्य वा सत्त्वेऽपि यत्र तत्प्रमित्यभावः तस्यापि दोषत्वसंग्रहाय अनुगत्यप्रमितिः इत्युक्तम्। वैधर्म्यदृष्टान्ते साध्यसाधनयोरननुगमो गुण एव इत्यत आह ॥ साधर्म्येति ॥ उभयोर्वेति वाशब्दः साधनस्येत्यनेनापि सम्बध्यते। उभयोः वादिप्रतिवादिनो रीत्या वाशब्दात् अन्यतररीत्या चेति व्याख्येयम्।

(श्री. टि.) दृष्टान्ते साध्यसाधनयोर्व्यावृत्तिसद्भावेऽपि यत्र तत्प्रमित्यभावः तस्यापि दोषत्वसंग्रहाय व्यावृत्त्यप्रमितिः इत्युक्तम्। साधर्म्यदृष्टान्तस्यायं गुण एव इत्यतो वैधर्म्यदृष्टान्त इत्युक्तम्।

नन्वेवं पद्धतिविरोधः तत्र व्यतिरेकव्याप्तेः प्रकृतसाध्यसिद्धावनुपयोगात् इत्यादिना व्यतिरेकव्याप्तिं निराकृत्य वैधर्म्योदाहरणस्यानुपयुक्तत्वात्तदाभासकथनमनुपयुक्तम् इत्युक्तत्वादिति चेत् सत्यं, यद्यपि प्रकृतसाध्यसिद्धौ व्यतिरेकव्याप्तिरनुपयुक्तैव तथापि प्रकृतसाध्यसिद्ध्युपयुक्तान्वयव्याप्तिसाधकत्वेन परम्परयोपयोगस्य कथं तर्हि केवलव्यतिरेकिणः संव्यवहारः? इत्थम् इत्यादिना तत्रैवाभिहितत्वात् तदभिप्रायेणेदमुक्तमित्यविरोध इति द्रष्टव्यम्।

ननु प्रमाणविरुद्धार्थप्रतिज्ञा इत्यनेन वक्ष्यमाणरीत्या बाधसत्प्रतिपक्षरूपं द्वैविध्यमेव प्रतिज्ञाविरोधस्योक्तम्। न तु तल्लक्षणम्। अतः प्रतिज्ञाविरोधं लक्षयतीति कथमुक्तं? एवं हेतुस्वरूपासिद्धिः इत्यादिवाक्यद्वयेनापि हेतुविरोधदृष्टान्तविरोधयोर्विभाग एवोक्तो न तु लक्षणम्। अतो न्यूनता इत्यत आह ॥ अनेनेति ॥ वाक्यत्रयेणेत्यर्थः ॥ लक्षणेति ॥ साध्यधर्मविशिष्टः पक्षः, लिङ्गं हेतुः, निदर्शनं दृष्टान्तः इत्युक्तलक्षणेत्यर्थः। ननु लक्षणमनुक्त्वा विभागोक्तौ किं प्रयोजनम्? इत्यत आह ॥ तल्लक्षणमिति ॥ तेषां प्रतिज्ञाविरोधादीनां लक्षणमित्यर्थः ॥ इयमुक्तिरिति ॥ प्रमाणविरुद्धार्थप्रतिज्ञेत्याद्युक्तिरित्यर्थः।

### सप्रतिसाधनस्य प्रमाणविरोधान्तर्भावः

(टी.) बाध एव प्रमाणविरोध इति मन्वान आह। सप्रतिसाधनोऽप्यन्योऽनुमानविरोधोऽस्ति। अतः कथमेवं त्रैविध्यं? इति। तत्राह

## प्रतिज्ञायाः समबलविरोध एव सप्रतिसाधनः

द्विविधो हि प्रतिज्ञायाः प्रमाणविरोधः प्रबलप्रमाणेन समबलेन चेति। आद्यो बाधकत्वेन। द्वितीयः प्रतिबन्धकत्वेन। तत्र योऽयं प्रतिज्ञायाः समबलेन प्रमाणेन विरोधः स सप्रतिसाधनसञ्ज्ञो भवति। अतो युक्तमुक्तमिति।

### बाधसप्रतिसाधनयोः हेतुविरोधत्वनिरासः

एवकारेणास्य हेतुविरोधत्वं व्यवच्छिनत्ति। प्रतिज्ञामात्र एवास्य स्फुरणात्। व्याप्त्यादिहेत्वङ्गस्यानेनाखण्डितत्वाच्च। एतेन प्रबलप्रमाणविरोधस्यापि हेतुविरोधत्वं प्रत्युक्तम्।

(रा. टि.) प्रमाणविरुद्धार्थेत्युक्त्यैव प्रबलसमबलप्रमाणद्वयविरोधस्यापि लाभादुत्तरवाक्यं पुनरुक्तमित्यत आह ॥ **बाध एवेति** ॥ पूर्वत्र प्रमाणपदेन प्रबलप्रमाणमभिप्रेतमिति मन्वानः शिष्यः । आह शङ्कत इत्यर्थः । तामेव शङ्कामाह ॥ **सप्रतिसाधनोऽपीति** ॥

(श्री. टि.) ननु प्रमाणविरुद्धार्थप्रतिज्ञेत्यनेनैव सप्रतिसाधनस्यापि सङ्गृहीतत्वात् कथमियं शङ्का? इत्यत उक्तम् ॥ **बाध एवेत्यादि** ॥ **कथमेवं त्रैविध्यमिति** ॥ तथा च चतुर्विधो विरोधः प्रतिज्ञाहेतुदृष्टान्तसप्रतिसाधनभेदे न इति वक्तव्यमिति भावः ॥ **बाधकत्वेनेति** ॥ साध्याभावप्रमाजनकत्वेन प्रतिज्ञाविरोध इत्यर्थः ॥ **प्रतिबन्धकत्वेनेति** ॥ कारणीभूताभावप्रतियोगित्वेन प्रतिज्ञाविरोध इत्यर्थः ॥ **युक्तमुक्तमिति** ॥ त्रिविधो विरोध इत्युक्तं युक्तमित्यर्थः । **हेतुविरोधत्वमिति** ॥ अत एव तार्किकाः 'असत्प्रतिपक्षत्वं हेतुरूपम्' इत्याहुः । तत् एवकारेण व्यवच्छिनत्तीत्यर्थः । तदेवोपपादयति ॥ **प्रतिज्ञामात्र एवेति** ॥ अस्य सप्रतिसाधनस्य । तथा च प्रतिज्ञाविरोध एवायमिति भावः । किञ्च अस्य हेतुदोषत्वे हेतुनिष्ठव्याप्त्याद्यङ्गविघटकत्वं वक्तव्यम् । तदिह नास्तीत्याह **व्याप्त्यादीति** ॥ **एतेनेति** ॥ प्रतिज्ञामात्र एव स्फुरणेनेत्यर्थः ।

**उपाधेः सप्रतिसाधनोन्नायकत्वम्**

(टी.) उपाधिविरोधोऽप्यन्योऽस्तीत्याह

## स एवोपाधिदोषोऽपि

**नोपाधिः स्वयमेव दोषः । किं तु दोषोन्नायक एव । स चोपाधिना उन्नेयो दोषः उपाधिदोषः प्रतिज्ञायाः समबलविरोध एवान्तर्भवतीति नोक्तविरोधः । प्रकृतसाध्यव्यापकः प्रकृतसाधनाव्यापकः उपाधिः । स हि पक्षात् व्यावर्तमानः साध्यं व्यावर्तयन् प्रतिपक्षोन्नायको भवति । उपाध्यभावस्य साध्याभावे लिङ्गत्वात् । उपाधेर्हि पक्षात् व्यावृत्तिः स्वव्यावृत्त्या साध्यव्यावर्तने शक्तिश्चापेक्षिता । तत्र साध्यव्यापक इत्येवोक्ते साधनव्यापकस्य साधनस्येव पक्षे वर्तमानत्वात् साध्यव्यापकोऽप्युपाधिर्न पक्षात् साध्यं व्यावर्तयेदिति साधनाव्यापकत्वं ग्राह्यम् । तावत्येवोच्यमाने साध्याव्यापकस्य पक्षात् व्यावृत्तावपि साध्यव्यावर्तनसामर्थ्याभावात् वैयर्थ्यं स्यादिति साध्यव्यापकत्वमपि ग्राह्यम् । तथा च साधनाव्यापकत्वात् पक्षात् व्यावृत्त उपाधिः साध्यव्यापकत्वात् व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति साध्यं व्यावर्तयतीति ।**

(रा. टि.) यत्किञ्चित्साध्यव्यापकादावनतिप्रसङ्गाय प्रकृतेत्युक्तिः । लक्षणगतपदकृत्यं वक्तुमाह ॥ **उपाधेर्हीति** ॥

(श्री. टि.) ॥ अन्योऽस्तीति ॥ तथा च त्रिविधो विरोधः इत्युक्तमसदिति भावः। दोषः सप्रतिसाधनरूपः ॥ उक्तेति ॥ अनुमानविरोधत्रैविध्येत्यर्थः। उपाधिनोन्नेयस्य दोषस्य उपाधिस्वरूपाज्ञाने दुर्ज्ञानत्वात् उपाधिलक्षणमाह ॥ प्रकृतेति ॥ शब्दोऽनित्यः कृतकत्वात् इत्यत्र आर्द्रेन्धनसंयोगस्यापि उपाधित्वं स्यात्। तस्यापि धूमरूपसाध्यव्यापकत्वात् अग्निरूपसाधनाव्यापकत्वाच्च इत्यतः प्रकृतेत्याद्युक्तम्।

कथमुपाध्यभावस्य साध्याभावे लिङ्गत्वम्? इत्यतो विशेषणद्वयकृत्यप्रदर्शनव्याजेन तत्प्रकारं दर्शयति ॥ उपाधेर्हीत्यादिना ॥ साध्यव्यापक इत्येवोक्ते 'घटोऽनित्यः सावयवत्वात्' इत्यत्र कृतकत्वं उपाधिः स्यात्। अतः साधनाव्यापक इत्युक्तं इत्यभिप्रेत्योपपादयति ॥ तत्र साध्यव्यापक इत्येवोक्त इति ॥ साधनस्येवेति ॥ पक्षीभूते घटे सावयवत्ववत् कृतकत्वस्यापि सत्त्वादिति भावः ॥ साध्यव्यापकोऽपीति ॥

कृतसावयवत्वादिप्रयुक्ता च विनाशिता।

इतिवचनात् कृतकत्वस्य अनित्यत्वरूपसाध्यव्यापकत्वादिति भावः। साधनाव्यापक इत्येवोक्ते 'शब्दोऽनित्यः कृतकत्वात्' इत्यत्र सावयवत्वं उपाधिः स्यात्। अतः साध्यव्यापक इत्युक्तमित्यभिप्रेत्योपपादयति ॥ तावत्येवोच्यमान इति ॥ साध्याव्यापकस्येति ॥ अनित्यत्वरूपसाध्यवति गुणादौ सावयवत्वाभावादिति भावः ॥ पक्षाद्व्यावृत्तावपीति ॥ कृतकत्ववत्यपि शब्दे सावयवत्वाभावादिति भावः।

### सोपाधिकस्य व्याप्यत्वासिद्धत्वमतम्

(टी.) उपाधिगतव्याप्यत्वोपजीवनात् सोपाधिको हेतुर्व्याप्यत्वासिद्धो भवतीत्येके।

### [सोपाधिकस्य व्यभिचारित्वमतम्

साध्यरहितस्य पक्षस्यैव विपक्षत्वात् तत्र वर्तमानो हेतुः व्यभिचारी स्यादित्यपरे।

### पूर्वोक्तमतद्वयनिरासः

तत् एवकारेण व्यवच्छिद्यते। यदा उपाधिव्यावृत्त्या पक्षे साध्याभावः सिद्धः तदैव परानुमानं दुष्टं स्यादिति पश्चाद्भाविना दोषेण पिष्टं पिष्टं स्यादिति। साध्याभावाविनाभाव्यभावत्वस्य अवश्याभ्युपगमनीयत्वात् प्रथमप्राप्तपरित्यागेन दोषान्तरान्वेषणे गौरवं च स्यात्। विषमव्याप्तौ व्याप्यत्वासिद्ध्यनुपपत्तिश्चेति।

(रा. टि.) साध्यसमव्याप्तोपाध्यभिप्रायेणाह ॥ **उपाधिगतव्याप्यत्वेति** ॥ **साध्याभावेति** ॥

साध्याभावाविनाभावी स उपाधिर्यदत्ययः ।

इत्युक्तदिशा उपाधेः साध्यव्याप्तत्वमङ्गीकुर्वता साध्याभावाविनाभावी योऽभावः तत्प्रतियोगित्वरूपस्यावश्याभ्युपेयत्वात् साध्याभावव्याप्याभावस्य लिङ्गत्वात् प्रतिपक्षत्वमेवेति भावः ॥ **विषमेति** ॥ 'गिरिः धूमवान् अग्निमत्त्वात्' इत्यत्र 'आर्द्रेन्धनवत्त्वरूपोपाधेः विषमव्याप्तिमतः साध्यव्याप्यत्वाभावेन तन्निष्ठव्याप्यत्वोपजीवनाभावात् हेतोः व्याप्यत्वासिद्धिः अयुक्तैव स्यात् । प्रतिपक्षस्तु तत्रापि सम्भवत्येवेति भावः । एतच्चोपाधेः प्रतिपक्षोन्नायकत्वाभिधानं विप्रतिपत्त्युत्तरकालोपस्थितोपाधिविषयं । ततः प्राग्व्याप्तिग्रहणकालोपस्थितोपाधिस्तु व्याप्यत्वासिद्धौ अन्तर्भवतीति ज्ञेयम् । तेन **व्याप्यत्वासिद्धो द्विविधः साध्यसम्बन्धरहितः सोपाधिकश्च** इति पद्धतिवाक्याविरोधः ।

(श्री. टि.) एवकारव्यावर्त्यं दर्शयति ॥ **उपाधिगतेति** ॥ उप समीपे स्वनिष्ठं धर्मं आदधाति इति उपाधिशब्दनिर्वचनेन समव्याप्तस्यैव उपाधित्वावगमादिति भावः । यथा आहुः

स्वसम्बन्धेन यः स्वीयं धर्ममन्यत्र योजयेत् ।
स उपाधिर्यथा लोके जपादिः स्फटिकादिषु ॥ इति ।

॥ **व्याप्यत्वासिद्धो भवतीति** ॥ यथा आहुः पदार्थविदः 'व्याप्यत्वासिद्धो द्विविधः एको व्याप्तिग्राहकप्रमाणाभावात् अपरस्तु उपाधिसद्भावादिति'। द्वितीयमतं तावद्दूषयति ॥ **यदेति** ॥ **दुष्टं स्यादिति** ॥ सत्प्रतिपक्षरूपदोषेणैवेत्यर्थः ॥ **दोषेणेति** ॥ व्यभिचाररूपदोषेणेत्यर्थः ॥ **पिष्टं पिष्टं स्यादिति** ॥ तथा च तस्य दोषस्य वैयर्थ्यात् तदुद्भावने आधिक्येन निग्रह इति भावः । उपाधिव्यावृत्त्या पक्षे साध्याभावसिद्धिरेव मया नाङ्गीक्रियते इत्याशङ्कां परिहरन् गौरवरूपं दोषान्तरं चाह ॥ **साध्याभावेति** ॥ अभावतस्येति बहुव्रीहिः । तथा च साध्याभावेन साकं यः अविनाभावः तद्वान्यः अभावः उपाध्यभावः तद्रूपत्वस्य तत्प्रतियोगित्वस्येति भावत् ।

एकः साध्याविनाभावे मिथः सम्बन्धशून्ययोः ।
साध्याभावाविनाभावी स उपाधिर्यदत्ययः ॥

इतिवचनादित्यर्थः ॥ **अवश्याभ्युपगमनीयत्वादिति** ॥ उपाधेरिति शेषः । अन्यथा पक्षस्य विपक्षत्वाभावेन तत्र व्यभिचारोऽपि न स्यादिति भावः । तथा च यत्रोपाध्यभावः तत्र साध्याभावः इति व्याप्त्या पक्षे साध्याभावसिद्धौ सत्प्रतिपक्षस्यैव प्रथमप्राप्तत्वात् तत्परित्यागेन व्यभिचाररूपदोषान्तरान्वेषणे गौरवं च व्याप्ति-

(श्री. टि.) त्यर्थः । आद्यं मतं दूषयति ॥ विषमव्याप्ताविति ॥ विषमव्याप्तिमच्छाकपाकजत्वोपाधिमति मित्रातनयत्वात् इति हेतावित्यर्थः । तथा च तत्र उपाधौ साध्यव्याप्यत्वाभावेन स्वनिष्ठधर्मासञ्जकत्वस्य वक्तुमशक्यत्वादिति भावः ।

ननु साध्यव्यापकवैलोम्यमव्याप्तिः साधनस्य च ।

इत्यनुव्याख्याने भगवत्पादैः उपाधेः अव्याप्त्युन्नायकत्वस्य चशब्दात् सत्प्रतिपक्षोन्नायकत्वस्य चोक्तत्वात् अत्र पुनः स एवोपाधिदोषोऽपि इत्युपाधेः सत्प्रतिपक्षोन्नायकत्वमेव अङ्गीकृत्य अव्याप्त्युन्नायकत्वस्य एवकारेण व्यावर्तितत्वात् स्ववचनविरोध इति चेत् उच्यते, पक्षादिप्रविभागात् पूर्वं व्याप्तिग्रहणवेलायां उपस्थितस्य उपाधेः अव्याप्त्युन्नायकत्वमेव न सत्प्रतिपक्षोन्नायकत्वं । पक्षादिप्रविभागानन्तरं उपस्थितस्य तु सत्प्रतिपक्षोन्नायकत्वमेव नाव्याप्त्युन्नायकत्वं इति विवेकसद्भावेन पक्षादिप्रविभागोत्तरकालोपस्थितोपाध्यपेक्षया एतद्ग्रन्थस्य प्रवृत्तत्वात् न विरोध इति द्रष्टव्यं । यथोक्तं सुधायां तस्मादनुमानोत्तरकालं सत्प्रतिपक्षतैवेत्युचितं । एतदेवाभिप्रेत्य 'स एवोपाधिदोषोपि' इत्यादिवचनम् इति ।

### विश्वमिथ्यात्वानुमाने प्रतिज्ञादिविरोधः

(टी.) प्रतिज्ञाविरोधादेरुदाहरणमाह

सर्वे एते दृश्यत्वानुमाने द्रष्टव्याः

'विवादपदं मिथ्या दृश्यत्वात् यत् दृश्यं तत् मिथ्या यथा शुक्तिरजतं तथा चेदं दृश्यं तस्मान्मिथ्या' इत्येतदनुमानं प्रतिज्ञाविरोधादीनामुदाहरणं ज्ञातव्यमिति ।

### विश्वमिथ्यात्वप्रतिज्ञायाः प्रबलप्रमाणविरोधः

तत्कथम्? इत्यतः प्रतिज्ञायाः प्रबलप्रमाणविरोधं तावदुपपादयति

प्रत्यक्षागमादिभिर्जगतः सत्यत्वात्

सन् घटः इत्यादिप्रत्यक्षेण, विश्वं सत्यमित्याद्यागमेन, विवादपदं सत्यं अर्थक्रियाकारित्वात् इत्याद्यनुमानेन च जगतः सत्यत्वावधारणात् जगन्मिथ्या इति प्रतिज्ञा प्रबलप्रमाणविरुद्धा भवति ।

(रा. टि.) ॥ विवादपदमिति ॥ सत्यत्वमिथ्यात्वाभ्यां विवादस्थानं शुक्तिरूप्यासद्ब्रह्मान्यत् जगत् इत्यर्थः ॥ मिथ्येति ॥ असदित्यर्थः ॥ दृश्यत्वादिति ॥ ज्ञानविषयत्वादित्यर्थः ।

विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वां ।

हे मघवानौ धनादिमन्तौ युवयोः विश्वं सत्यमित् सत्यमेव ।[1] अलमहमेव प्रतिपन्नः । किं तु ? आपोऽपि सर्वा देवता अपि वां सत्यजगत्सर्जनादिकं कर्म जानन्ति इति द्विरूपं परमेश्वरं प्रत्युच्यते 'यच्चिकेत सत्यं' इत्याद्यागमेनेत्यर्थः ॥ अर्थेति ॥ जलाहरणशीतनिवर्तनादिवस्तुकार्यकरत्वादित्यर्थः । आदिपदेन प्रमितिविषयत्वबाधशून्यतादिग्रहः ।

(श्रीं. टि.) ॥ विवादपदमिति ॥ 'सर्वं मिथ्या' इत्युक्ते ब्रह्मणि प्रमाणबाधः शुक्तिरजतादौ सिद्धार्थता च स्यात् । अतो विवादपदमित्युक्तं । तथा च ब्रह्मप्रमान्येन वा सप्रकारेण वा अबाध्यत्वे सति असद्विलक्षणत्वे सति ब्रह्मान्यत् इत्यर्थः । यद्वा सत्यत्वमिथ्यात्वाभ्यां वादिप्रतिवादिनोः विप्रतिपत्तिविषयीभूतं वियदादि इत्यर्थः ।

**विश्वमिथ्यात्वानुमाने स्वरूपासिद्धिः**

(टी.) हेतोः स्वरूपासिद्धिमुपपादयति ।

## तत्पक्षे दृश्यत्वस्य च मिथ्यात्वात्

'यत् दृश्यं तत् मिथ्या' इति व्याप्तिमङ्गीकुर्वता दृश्यत्वस्यापि मिथ्यात्वमङ्गीकर्तव्यम् । अन्यथा दृश्यत्वस्य व्यभिचारापातात् । अतो दृश्यत्वहेतोर्मिथ्यात्वात् दृश्यत्वहेतुर्वादिनः स्वरूपासिद्ध एव ।

न मिथ्येत्यसदुच्यते । येन हेतोः स्वरूपासिद्धिः स्यात् । किं नाम ? अनिर्वचनीयमेव । अतः अनिर्वचनीयदृश्यत्वस्य भावान्न स्वरूपासिद्धिरित्यत आह

## अनिर्वचनीयस्य प्रतिवादिनोऽसिद्धत्वात्

अनिर्वचनीयस्य दृश्यत्वस्य हेतुत्वाङ्गीकारेऽपि प्रतिवादिनः स्वरूपासिद्धिर्भवत्येव । प्रतिवादिना जगति अनिर्वाच्यदृश्यत्वस्यानङ्गीकृतत्वादिति ।

यथा अग्निमत्वे साध्ये मलिनत्वामलिनत्वादिविशेषानपहाय धूममात्रं हेतुः तथा अनवधारितानिर्वचनीयत्वादिविशेषं दृश्यत्वमात्रं जगन्मिथ्यात्वे हेतुः किं न स्यात्? इत्यत आह ॥ अनिर्वचनीयस्येति ॥ शक्यते वक्तुं धूममात्रमग्निमत्वे हेतुरिति । मलिनधूमादौ वादिप्रतिवादिनोर्धूम-

[1] न केवलमहमेव.

(टी.) त्वसंमतेः । न चैवं प्रकृते । अनिर्वचनीयदृश्यत्वस्य प्रतिवादिनोऽसिद्धत्वात् । न हि गगननलिनासिद्धौ नलिनत्वसामान्यं तत्राङ्गीकर्तुं शक्यत इति ।

(रा. टि.) ॥ दृश्यत्वस्यापीति ॥ हेतूकृतस्येति योज्यम् । अस्य दृश्यत्वहेतोः अज्ञानासिद्धिपरिहाराय दृश्यत्वस्यापि दृश्यत्वमङ्गीकार्यमिति भावेनोक्तं अन्यथा व्यभिचारापातादिति ॥ वादिन इति ॥ अनुमानप्रयोक्तुरित्यर्थः ।

शङ्कते ॥ नेति ॥ अनिर्वचनीयमिति ॥ सदसद्विलक्षणमित्यर्थः । तदेव वाक्यं अन्यथापि अवतारयति ॥ यथेति ॥ अनवधारितेत्यादि बहुव्रीहिः । आदिपदेन असत्त्वग्रहः । असदृश्यत्वात् इति वा अनिर्वचनीयदृश्यत्वात् इति वा नोच्यते । किं तु ? दृश्यत्वमात्रमित्यर्थः ।

(श्री. टि.) ॥ अन्यथेति ॥ दृश्यत्वस्य सत्यत्वाङ्गीकारे दृश्यत्वे दृश्यत्वमस्ति न वा इति प्रष्टव्यं । द्वितीये हेतोः अज्ञानासिद्धिः । आद्ये दृश्यत्वोपेते दृश्यत्व एव मिथ्यात्वरूपसाध्याभावेन व्यभिचारः स्यादित्यर्थः ॥ मिथ्यात्वादिति ॥ असत्त्वादित्यर्थः ।

शङ्कते ॥ न मिथ्येत्यसदुच्यत इति ॥ भावादिति ॥ मन्मत इति शेषः । अनिर्वचनीयस्येत्यनन्तरं पूर्ववाक्यात् दृश्यत्वस्य इत्यनुवर्तत इत्यभिप्रेत्य व्याचष्टे ॥ अनिर्वचनीयस्य दृश्यत्वस्येति ॥

शङ्कते ॥ यथेत्यादिना ॥ अमलिनत्वादीत्यादिपदेन एतद्देशकालसंलग्नत्वानेतद्देशकालसंलग्नत्वादिसंग्रहः ।

### विश्वमिथ्यात्वानुमाने दृश्यत्वहेतोर्व्यभिचारः

(टी.) दृश्यत्वहेतोरव्याप्तिमुपपादयति

## आत्मनोऽपि दृश्यत्वात्

सत्यत्वेनाङ्गीकृतस्यात्मनो विपक्षत्वात् तत्र च दृश्यत्वहेतोर्वर्तमानत्वात् व्याप्तिहीनोऽप्यसौ भवति । एतेन व्यतिरेकदृष्टान्तात् साधनाव्यावृत्तिश्चोपपादिता भवति ।

### विश्वमिथ्यात्वानुमाने दृष्टान्ते साध्यवैकल्यम्

शुक्तिरजतादिदृष्टान्ते साध्याननुगममुपपादयति

## शुक्तिरजतादेरनिर्वचनीयत्वाभावात्

मिथ्यापदेन अनिर्वचनीयत्वमभिमतं वादिनः । तच्च दृष्टान्ते शुक्तिरजतादौ न विद्यते। 'असदेव रजतं प्रत्यभात्' इति बाधकप्रत्ययेन असत्त्वावधारणात् । अतः शुक्तिरजतादिदृष्टान्तः साध्यविकलो भवति ।

(रा. टि.) ॥ तत्र च दृश्यत्वहेतोर्वर्तमानत्वादिति ॥ अन्यथा आत्मा इत्यादिव्यवहारायोग इति भावः ।

(श्री. टि.) ॥ तत्र च दृश्यत्वहेतोर्वर्तमानत्वादिति ॥ आत्मनोऽपि वेदान्तजन्यवृत्तिव्याप्यत्वादित्यर्थः । अन्यथा ब्रह्मपराणां वेदान्तानां ब्रह्मज्ञानार्थं श्रवणादिविधेश्च वैयर्थ्यं स्यात् । ब्रह्म विचारयितुमारब्धयोः गुरुशिष्ययोः मौनं मौढ्यञ्च स्यात् । 'ब्रह्मजिज्ञासा ब्रह्मज्ञानं' इत्यादौ कर्मणि षष्ठी 'तमेव धीरो विज्ञाय' इत्यादौ द्वितीया 'दृश्यते त्वग्र्यया बुद्ध्या' इत्यादौ तिङ् 'आत्मा वा अरे द्रष्टव्यः' इत्यादौ तव्यादिश्च न स्यादिति भावः ।

॥ एतेनेति ॥ आत्मनोऽपि दृश्यत्वात् इति वाक्येनेत्यर्थः ॥ व्यतिरेकदृष्टान्तादिति ॥ व्यतिरेकव्याप्तौ दृष्टान्तभूतात् आत्मनः सकाशात् साधनस्य अव्यावृत्तिश्चोपपादिता भवतीत्यर्थः । व्यतिरेकव्याप्तौ दृष्टान्ते साधनव्यावृत्तिरङ्गम् । तदव्यावृत्तिश्च दोष इति भावः ।

**विश्वमिथ्यात्वानुमाने दृष्टान्ते साधनवैकल्यम्**

(टी.) तत्र साधनाननुगमं चोपपादयति

## अनिर्वचनीयदृश्यत्वाभावात्

अनिर्वचनीयं हि दृश्यत्वं साधनमभिमतम् । न तत् शुक्तिरजतादौ वर्तत इति दृष्टान्तः साधनविकलो भवति । अनिर्वचनीयतया अभिमतस्य शुक्तिरजतादेर्दृश्यत्वाभावादिति वा । शुक्त्यादेरेव दृग्विषयत्वेन [1]'रजतादिकं दृष्टम्' इति भ्रममात्रम् । तन्मतेऽपि अनिर्वचनीयस्य दृश्यत्वाभावादिति वा । [2]तैरपि शुक्तिरजतादेः न ऐन्द्रियकदृग्विषयत्वं अङ्गीकृतम् । प्रतीतिसमय एवोदयाभ्युपगमात् । इन्द्रियस्याधिष्ठानग्रहण एव व्यापारोररीकरणात् । शुक्त्याद्यवच्छिन्नाऽत्माविद्याकल्पितमारोपिततयैव अवभासत इति तत्प्रक्रिया ।

(रा. टि.) अनिर्वचनीयदृश्यत्वाभावादित्युक्ते अन्यादृशदृश्यत्वमस्तीति प्रतिभाति । तच्च सिद्धान्तविरुद्धं । अत आह ॥ अनिर्वचनीयतयेत्यादि ॥ षष्ठीतत्पुरुषो न कर्मधारय इति भावः । तदुपपादयति ॥ शुक्त्यादेरिति ॥ अधिष्ठानस्यैवेत्यर्थः । यत्सन्निकृष्टकरणेन यत् ज्ञानमुत्पद्यते स तस्य विषय इति विषयत्वनिरुक्तेः, रजतस्य च सत्त्वाभावेन सन्निकर्षाभावादिति भावः । नचैवं रजतं दृष्टमित्यनुव्यवसायविरोध इत्यतो भ्रमः स इत्याह ॥ रजतं दृष्टमिति ॥ भ्रममात्रमिति ॥ प्रकारान्तरेणापि वाक्यार्थमाह ॥ तन्मतेऽपीति ॥ मायावादि-

[1] श्री. रा. 'रजतं दृष्टम्'. [2] श्री. तैरपि हि.

(रा. टि.) मतेऽपीत्यर्थः ॥ नैन्द्रियकेति ॥ तादृशज्ञानस्यैवात्र दृक्पदेन विवक्षितत्वादिति भावः । कुतः? इत्यत आह प्रतीतिसमय इति ॥ प्रतीत्येककाल इत्यर्थः । प्रतीतिर्यदोदेति तत्काल एव निर्वचनीयरजतोत्पत्तेः अङ्गीकारात् नेन्द्रियसन्निकर्षजं तत् ज्ञानमित्यर्थः । नन्वेवं चक्षुरन्वयव्यतिरेकानुविधानानुपपत्तिः इत्यत आह ॥ इन्द्रियस्येति ॥ कथं तर्हि तदवभासः? इत्यत आह ॥ शुक्त्यादीति ॥ ब्रह्मचैतन्यं हि व्याप्तं व्यावहारिकैः घटपटशुक्त्यादिसर्वपदार्थैः तत्रतत्रस्थैः आकाश इव अवच्छिद्यते कवलीक्रियते । तथा च शुक्त्यवच्छिन्नचैतन्यगताज्ञानं दुष्टेन्द्रियसन्निकर्षेण जातशुक्त्याकारवृत्त्या क्षुभितं सत् रजतात्मना तदवभासात्मना च परिणमत इति अविद्याकल्पितं आरोपिततया अवभासत इत्युक्तम् । शुक्तिज्ञानं अन्तःकरणवृत्तिः, रजतप्रतीतिस्तु अविद्यावृत्तिः इति 'इदं रजतम्' इति द्विविधं ज्ञानमिति तत्प्रक्रियेत्यर्थः ।

(श्री. टि.) अनिर्वचनीयं च तत् दृश्यत्वं चेति कर्मधारयमभिप्रेत्य व्याचष्टे ॥ अनिर्वचनीयं हीति ॥ न तदिति ॥ प्रतिवादिनो मम मत इति शेषः ।

अनिर्वचनीयस्य दृश्यत्वाभावादिति षष्ठीविग्रहमभिप्रेत्य व्याचष्टे ॥ अनिर्वचनीयतया अभिमतस्येति ॥ ननु शुक्तिरजतस्य कथं दृश्यत्वाभावः? 'रजतं दृष्टं' इत्यनुव्यवसायेन तस्य दृश्यत्वावगाहनात् इत्यतो रजतं दृष्टमिति भ्रममात्रत्वात् इति मिथ्यात्वानुमानखण्डनोक्तप्रकारेण तत्र दृश्यत्वाभावमुपपादयति ॥ शुक्त्यादेरेवेति ॥ इदमत्राकूतम् , दृग्विषयत्वं हि दृश्यत्वमत्राभिप्रेतम् 'यत्सन्निकृष्टकरणेन यत् ज्ञानमुत्पद्यते स तस्य विषयः' इति अनित्यज्ञाने व्यवस्था । रजतज्ञानं च शुक्तिकासन्निकृष्टेन इन्द्रियेण जातमिति सैव तस्य विषयो न रजतम् । तस्य असत्त्वेन तेन साकं इन्द्रियस्य सन्निकर्षाभावात् । अत एव 'अन्यत् अन्यात्मना अवगाहते' इति भ्रमः । तथा च 'रजतं दृष्टं' इति योऽनुव्यवसायः स भ्रम एव इति शुक्तिरजतस्य दृश्यत्वाभावात् साधनवैकल्यमिति भावः ।

॥ तन्मतेऽपीति ॥ मायावादिनो मतेऽपीत्यर्थः ॥ अनिर्वचनीयस्येति ॥ प्रातिभासिकस्य रजतस्येत्यर्थः । तदुपपादयति ॥ तैरपि हीति ॥ नैन्द्रियकदृग्विषयत्वमिति ॥ इन्द्रियद्वारा बहिर्निःसृतान्तःकरणपरिणामरूपवृत्तिविषयत्वं नाङ्गीकृतमित्यर्थः । ननु मायावादिभिः शुक्तिरजतादेः इन्द्रियजन्यान्तःकरणवृत्तिरूपज्ञानविषयत्वं कुतो नाङ्गीकृतम्? इत्यत आह ॥ प्रतीतिसमय एवेति ॥ प्रतिभासमात्रशरीरत्वरूपप्रातिभासिकत्वाभ्युपगमादित्यर्थः । अयं भावः, शुक्तिरजतस्य इन्द्रियजन्यज्ञानविषयत्वे ज्ञानात् पूर्वं सत्त्वेन भाव्यम् । तथा च 'रजतस्य ज्ञानात् पूर्वं सत्त्वसिद्धौ इन्द्रियस्य तत्सन्निकर्षसिद्धिः, तत्सिद्धौ च तज्जन्यप्रतिभासमात्रशरीररूपरजतसिद्धिः' इत्यन्योन्याश्रयः स्यादिति । ननु 'रजतज्ञानं इन्द्रियसम्प्रयोगजन्यं अनन्यथासिद्धेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वात् , इत्यनुमानेन शुक्तिरजतस्यापि इन्द्रियजन्यज्ञानविषयत्वसिद्धेः न साधनवैकल्यं इत्यतो विशेषणासिद्धत्वादनुमानमयुक्तमित्याह ॥ इन्द्रियस्येति ॥ अधिष्ठानेति ॥ अधिष्ठानभूतशुक्तिग्रहण इत्यर्थः ।

(श्री. टि.) ननु यदि शुक्तिरजतादेः प्रतीतिसमय एवोदयाभ्युपगमेन इन्द्रियजन्यज्ञानविषयत्वं तैर्नाङ्गीकृतं तर्हि तन्मते तस्य ज्ञानविषयत्वमेव न स्यादिति चेत् तत्राह ॥ शुक्त्यादीति ॥ शुक्त्यवच्छिन्नो योऽयमात्मा इदमंशावच्छिन्नचैतन्यमिति यावत् । तत्रत्या या अविद्या तया कल्पितमित्यर्थः । अयं भावः, यथा तटाकोदकं छिद्राद्बहिर्निर्गत्य कुल्यात्मना केदारान् प्रविश्य चतुष्कोणत्वाद्याकारेण परिणमते तद्वत् सावयवं तैजसमन्तःकरणं चक्षुरादिद्वारा बहिर्निर्गत्य विषयान् व्याप्य तदाकारं भवति । सोऽयमन्तःकरणपरिणामो वृत्तिरित्युच्यते । यथोक्तम्

स्वच्छेऽन्तःकरणेऽशनिप्रसृमरे नेत्रादिमार्गोद्गते

तत्तद्बाह्यचयात्मना परिणते बिम्बीभवन्ती चितिः ।

एकाऽप्यर्थमनोविशेषकवशाद्द्वैतं प्रपन्ना हर

त्यज्ञानं प्रकटीकरोति विषयान् ज्ञाते मयेदं त्विति ॥ इति ।

तथा च 'इदं रजतं' इत्यत्र तन्मते वृत्तिद्वयमस्ति । तत्र अन्तःकरणवृत्तिप्रतिबिम्बितचैतन्याभिव्यक्तं यत् अधिष्ठान चैतन्यं तदेव च ज्ञानं । तद्विषयत्वं इदमंशस्यैवास्ति । तथा च तदंशे अन्तःकरणवृत्तिः । अनन्तरं इदमंशावच्छिन्नचैतन्यस्था अविद्या दोषवशात् क्षुब्धा सती रजताकारेण तज्ज्ञानाकारेण च परिणमते । तथा च रजतांशे अविद्यावृत्तिः । सोयमर्थज्ञानात्मको भ्रम इत्युच्यते । तथा च इदमंशावच्छिन्नचैतन्यस्थाऽविद्याकल्पितं रजतं आरोपिततयैवावभासते अविद्यावृत्तिप्रतिबिम्बितसाक्षिचैतन्यविषयतया अवभासत इति यावत् । तथा च रजतस्य इन्द्रियजन्यान्तःकरणवृत्तिप्रतिफलितचिद्विषयत्वाभावेऽपि अविद्यावृत्तिप्रतिफलितचिद्विषयत्वात् युक्तं तन्मते तस्य ज्ञानविषयत्वमिति ॥

॥ इति तत्प्रक्रियेति ॥ सा च प्रक्रिया अप्रामाणिकी इत्याशयः ॥ इति तु प्रक्रियामात्रमित्यपि क्वचित्पाठः । तथा हि, 'इदं रजतं' इत्यत्र इदमंशे अन्तःकरणवृत्तिः रजतांशे अविद्यावृत्तिः इति कल्पने प्राभाकरमत इव ज्ञानद्वित्वापत्त्या विशिष्टज्ञानाभावापत्तेः । न च चैतन्यरूपफलैक्येन ज्ञानैक्यव्यवहारः इति वाच्यं । चैतन्यरूपफलस्यैव शशविषाणवदप्रामाणिकत्वात् । हन्त, तर्हि 'अयं घटः' इत्यादिज्ञानेष्वप्येवं कल्पनाप्रसङ्गेन 'इदं रजतम्' इति ज्ञानात् तेषां भेदाभावापत्तेः इत्याद्यालोचनीयमिति संक्षेपः ।

तथा च रजतांशे अविद्यावृत्तेः अप्रामाणिकत्वात् प्रतीतिसमयमात्रवर्तितया प्रातिभासिकस्य रजतस्य इन्द्रियजन्यान्तःकरणपरिणामरूपवृत्तिविषयत्वरूपदृश्यत्वस्य च परेणैवानङ्गीकृतत्वात् दृष्टान्ते साधनवैकल्यं सुस्थमेवेति भावः ।

## विश्वमिथ्यात्वानुमाने सत्प्रतिसाधनत्वम्

(टी.) प्राक् दृष्टान्तविरोधाभिधानानन्तरं प्रतिज्ञायाः समबलप्रमाणविरोधस्य सत्प्रतिसाधनसञ्ज्ञा विहिता । अतस्तेनैव क्रमेण तमुपपादयति

## मानसिद्धत्वादिति सत्प्रतिसाधनत्वाच्च

(टी.) 'जगत् सत्यं मानसिद्धत्वात् ब्रह्मवत्' इत्यपि वक्तुं शक्यत्वात् जगन्मिथ्येति प्रतिज्ञा सत्प्रतिपक्षा भवति। चशब्देन अमानसिद्धत्वमुपाधिं सूचयति। तद्धि मिथ्यात्वव्यापकं शुक्तिरजतादौ दृष्टम्। दृश्यत्वाव्यापकं च, जगति दृश्यत्वे विद्यमानेऽप्यभावात्। अतो जगतो व्यावर्तमानं अमानसिद्धत्वं मिथ्यात्वमपि व्यावर्तयतीति।

(रा. टि.) दृष्टान्तदोषोक्त्यनन्तरं प्रतिज्ञादोषोक्तेः अनवसरत्वं आशङ्क्य तस्य समाधानमाह ॥ प्राग्दृष्टान्तेति ॥ प्रतिज्ञायाः समबलविरोधः इत्यनेनाभिहित इत्यर्थः ॥ तमिति ॥ सत्प्रतिसाधनमित्यर्थः ॥ सत्प्रतिपक्षेति ॥ सत्प्रतिपक्षभूतसाधनवतीत्यर्थः।

(श्री. टि.) ननु प्रत्यक्षागमादिभिरिति वाक्येन प्रबलप्रमाणविरोधाभिधानानन्तरं समबलप्रमाणविरोध उद्भावनीयः उभयोरपि प्रतिज्ञाविरोधत्वात्। अतो हेतुविरोधवत् दृष्टान्तविरोधाभिधानानन्तरं समबलप्रमाणविरोधोद्भावनं असङ्गतमित्यत आह ॥ प्रागिति ॥ अभिधानानन्तरमिति ॥ साध्यस्य साधनस्य वा इति वाक्येनेत्यर्थः ॥ विहितेति ॥ प्रतिज्ञायाः समबलप्रमाणेन इति वाक्येनेत्यर्थः ॥ जगदिति ॥ विमतमित्यर्थः। अत एव मिथ्यात्वानुमानखण्डने विमतं सत्यं प्रमाणदृष्टत्वात् इत्येव प्रयुक्तमिति द्रष्टव्यम्। तेन न ब्रह्मणि सिद्धार्थता शुक्तिरजतादौ च न बाध इति भावः ॥ अमानसिद्धत्वमिति ॥ मानासिद्धत्वमित्यर्थः। प्रमाणविरुद्धत्वमिति यावत् ॥ प्रमाणविरुद्धत्वमुपाधिः इति मिथ्यात्वानुमानखण्डनवचनात्। उपाधित्वमुपपादयति ॥ तद्धीति ॥ अभावादिति ॥ उपाधेरिति शेषः।

नन्वत्र प्रमाणबाध्यत्वरूपं मिथ्यात्वं साध्यं। तदेव च प्रमाणविरुद्धत्वं। न हि स्वस्मिन् स्वयमुपाधिः। व्याप्यव्यापकभावस्य भिन्नाश्रयत्वादिति चेत् मैवम् अन्यथाप्रतिपत्तिपूर्वकं तदुन्मूलनेन सम्यग्बोधो बाधः। प्रमाणविरोधस्तु विपरीतप्रमाणविषयत्वमात्रमिति भेदात्। यथा मार्गे गच्छतः 'इदं रजतं' इति ज्ञानाभावेऽपि आदावेव 'नेदं रजतं' इति रजताभावविषयिण्येव प्रमा भवति। सेयं विपरीतप्रमेत्युच्यते।

ननु तर्हि अनुपसञ्जातबाधभ्रमस्थले ईश्वरीयविपरीतप्रमाविषयत्वसद्भावेन उपाधौ सत्यपि निरुक्तबाध्यत्वरूपसाध्याभावेन समव्याप्त्यभाव इति चेन्न समव्याप्तेरनपेक्षितत्वात्। तथात्वे विषमव्याप्तस्य उपाधित्वाभावापत्तेः। समव्याप्तिपक्षेऽपि न दोषः। तत्रापि निरुक्तबाधार्हत्वस्य सत्त्वात्। प्रपञ्चस्यापि प्रमाणविरुद्धत्वात् साधनव्यापकोऽयमुपाधिरिति चेन्न प्रतीतप्रमाणानामन्यत्र अन्यथा व्याख्यातत्वात्। दृश्यत्वेनैव हेतुना पक्षे उपाधेः साधने मिथ्यात्वस्योपाधित्वात्। मित्रातनयत्वेन श्यामत्वे साध्ये शाकपाकजत्वस्य, अस्मिन् साध्ये

(श्री. टि.) [1]श्यामत्वस्यैव अन्योन्योपाधिभावेनाप्यनुमानस्याभासत्वात् । लोके च कस्यचिदर्थस्य सत्यत्वमिथ्यात्वयोर्विप्रतिपत्तौ, दर्शनं सत्यतायां प्रमाणविरोधं च मिथ्यात्वे अनुसरन्ति । ततो मिथ्यात्वे तदेव प्रयोजकमिति विज्ञायत इति संक्षेपः ।

### वर्तमानमात्रग्राहिणा प्रत्यक्षेण विश्वमिथ्यात्वप्रतिज्ञाया अविरोधाशङ्का

(टी.) यदुक्तं 'जगन्मिथ्या' इति प्रतिज्ञा प्रत्यक्षविरुद्धेति । तदयुक्तम् । अनुमानेन त्रैकाल्यत्रिकालीनबाध्यत्वं साध्यते । न च तदभावं गोचरयितुं प्रत्यक्षमीष्टे येन तद्विरोधोऽनुमानस्य स्यात् । वर्तमानमात्रग्राहित्वात् प्रत्यक्षस्य । न हि भिन्नविषययोर्बाध्यबाधकभावोऽस्ति । न हि भवति आमघटश्यामताप्रत्यक्षेण पाकरक्तताप्रमाणस्य बाध इत्याशङ्क्य परिहरति

जगत्सत्यत्वग्राहिप्रत्यक्षस्य वर्तमानमात्रग्राहित्वे अनुमानागमप्रामाण्यग्राहिणोऽपि प्रत्यक्षत्वाविशेषात् उत्तरक्षणे प्रामाण्यं न सेत्स्यतीति भेदादिवाक्यानामेव प्रामाण्यं स्यात्

### प्रत्यक्षस्य वर्तमानमात्रग्राहितानियमनिरासः

यो जगत्सत्यत्वग्राहिप्रत्यक्षस्य वर्तमानमात्रग्राहित्वं अङ्गीकुर्यात् स प्रष्टव्यः जगन्मिथ्यात्वग्राहिणः अनुमानस्य ' नेह नानास्ति किञ्चन ' इत्याद्यागमस्य च प्रामाण्यं केन गृह्यत ? इति । न तावत् स्वेन। स्वप्रामाण्यविषयत्वाननुभवात् । नाप्यनुमानाद्यन्तरेण। अनवस्थापातात् । प्रत्यक्षेण चेत् तर्हि तस्यानुमानागमप्रामाण्यग्राहिणः प्रत्यक्षस्यापि प्रत्यक्षत्वाविशेषात् वर्तमानमात्रग्राहित्वं स्यात् । तथा च न तेनोत्तरक्षणे अनुमानादिप्रामाण्यसिद्धिः । जगन्मिथ्यात्वानुमानादेः उत्तरक्षणे प्रामाण्यासिद्धौ च ' द्वा सुपर्णा ' इत्यादिभेदवाक्यानां ' विश्वं सत्यं ' इत्यादिविश्वसत्यत्ववाक्यानां मानसिद्धत्वाद्यनुमानानां चोत्तरक्षणे प्रामाण्यं स्यात् । परस्परविरुद्धयोः अन्यतरनिषेधस्य अन्यतर[2]विधिनान्तरीयकत्वनियमादिति । न चोत्तरक्षणे अनुमानादिप्रामाण्यग्राहकं प्रत्यक्षान्तरं भविष्यतीति वाच्यम् । उक्तरीत्या तत्र प्रामाण्याभावस्य वक्तुं शक्यत्वात् ।

(रा. टि.) ॥ अनुमानस्येति ॥ दृश्यत्वरूपलिङ्गज्ञानस्य तज्जन्यमिथ्यात्वानुमितेर्वा इत्यर्थः ॥ इत्याद्यागमस्य चेति ॥ ' नेह नाना ' इत्यादिवाक्यज्ञानस्य वा तज्जन्यविश्वमिथ्यात्वज्ञानस्य वा इत्यर्थः ॥ नान्तरीयकत्वेति ॥अविनाभूतत्वेत्यर्थः ॥ उक्तरीत्येति ॥ ' तस्यापि [3]वर्तमानग्राहितया उत्तरक्षणे प्रामाण्यं न स्यात ' इत्युक्तरीत्येत्यर्थः ।

---

[1] श्यामत्वस्यैव. [2] श्री, विधिनान्तरीयकत्वादिति. [3] वर्तमानमात्रग्राहितया.

(श्री. टि.) बाध्यत्वं सत्ताप्रतिषेधः । नन्वेष्यत्कालीनबाधाभावं गोचरयितुं प्रत्यक्षं कुतो नेष्टे ? इत्यत आह ॥ **वर्तमानमात्रेति** ॥ वर्तमानकाल एव पदार्थानां सत्ताग्राहित्वादित्यर्थः । तेन मात्रशब्दस्य कात्स्न्यार्थकत्वं कल्पयित्वा 'कथं प्रत्यक्षस्य वर्तमानाशेषार्थग्राहित्वं ?' इत्याशङ्क्य वर्तमानयोग्यार्थग्राहित्वमेव वर्तमानग्राहित्वं विवक्षितमिति व्याख्यानक्लेशो निरस्त इति ज्ञातव्यम् । ननु वर्तमानकालीनसत्ताग्राहिणापि प्रत्यक्षेण एष्यत्कालीनबाध्यत्वसाधकानुमानस्य बाधः किं न स्यात् ? इत्यत आह ॥ **न हीति** ॥ प्रत्यक्षस्य ग्राह्याभावावगाहित्वाभावादिति भावः । ननु भिन्नविषययोरपि बाध्यबाधकभावोऽस्तु को दोषः ? इत्यत आह ॥ **न हीति** ॥ **पाकरक्ततेति** ॥ तेजःसंयोगेन उत्तरत्र जायमाना या रक्तता तदवगाहिप्रमाणस्येत्यर्थः ॥ **स्वेनेति** ॥ अनुमानेन आगमेन चेत्यर्थः ॥ **स्वप्रामाण्येति** ॥ स्वस्य स्वप्रामाण्यविषयकत्वाननुभवादित्यर्थः । भेदादिवाक्यानां इत्यत्रादिशब्दार्थमाह ॥ **विश्वं सत्यमिति** ॥ भेदादिवाक्यानां इत्येतदप्युपलक्षणमित्यभिप्रेत्याह ॥ [1]**मानसिद्धत्वादिति** ॥ **नान्तरीयकत्वादिति** ॥ व्याप्तत्वादित्यर्थः । गूढाभिसन्धिराशङ्कते ॥ **न चोत्तरक्षण इति** ॥ **प्रत्यक्षान्तरमिति** ॥ प्रसिद्धचक्षुरादिप्रत्यक्षविलक्षणमित्यर्थः । कुतो न च वाच्यं ? इत्यतः अविदिताशय इवोत्तरमाह ॥ **उक्तरीत्येति** ॥ अनुमानादिप्रामाण्यग्राहकप्रत्यक्षान्तरस्यापि प्रत्यक्षत्वाविशेषेण वर्तमानमात्रग्राहित्वात् इत्युक्तरीत्या तदुत्तरक्षणे तत्र अनुमानादौ प्रामाण्याभावस्य प्रामाण्यग्राहकत्वाभावस्य वक्तुं शक्यत्वादित्यर्थः ।

### साक्षिप्रमाणस्य भाव्यर्थग्राहित्वम्

(टी.) ननु न सर्वप्रत्यक्षं वर्तमानमात्रग्राहीत्युच्यते । किं तु ? साक्षिव्यतिरिक्तमेव । साक्षी तु एष्यदपि गृह्णाति । अतस्तेन उत्तरक्षणेऽपि अनुमानागमप्रामाण्यं सेत्स्यति इत्याशङ्क्य परिहरति

## तस्य साक्षिसिद्धत्वं चेत् जगत्सत्यत्वमपि साक्षिसिद्धम्

यदि अनुमानादिप्रामाण्यस्य साक्षिसिद्धत्वमुच्यते हन्त तर्हि जगत्सत्यत्वमपि साक्षिप्रत्यक्षसिद्धमिति ब्रूमः । [2]तथा च साक्षिणो वर्तमानमात्रग्राहित्वाभावात् तेन एष्यत्कालीनजगद्बाधाभावसिद्धिसम्भवात् प्रत्यक्षविरोधोऽनुमानस्य दुर्वार एवेति ।

(रा. टि.) शङ्कते ॥ **न सर्वेति** ॥ अनुमानागमप्रामाण्यमित्यत्र प्रागिवार्थो ध्येयः ॥ **हन्त तर्हीति** ॥ हन्तेति हर्षे । जगत्सत्यत्वमपीति सुखदुःखाद्यान्तरजगदभिप्रायं वा ज्ञानप्रामाण्यग्रहणमेव तद्विषयसत्त्वग्रहणमित्यभिप्रायं वा ।

(श्री. टि.) मायावादी स्वाशयमुद्घाटयन् आशङ्कते ॥ **न सर्वप्रत्यक्षमित्यादिना** ॥ तथापि साक्षिसिद्धत्वेऽपि प्रत्यक्षविरोधोऽनुमानस्य दुर्वार एवेत्यन्वयः ।

---

[1] मानसिद्धत्वादीति, [2] श्री. तथापि साक्षिणो,

सम्भावितव्यभिचारेण प्रत्यक्षेण विश्वमिथ्यात्वप्रतिज्ञाया अविरोधाशङ्का

(टी.) अन्यस्त्वाह, न प्रत्यक्षेणानुमानस्य विरोधः। प्रत्यक्षस्य तत्र तत्र शुक्तिरजतादौ व्यभिचारो दृश्यते। ततश्च न तत्प्रामाण्ये विश्वासः सम्भवति। अविश्वस्तप्रामाण्येन च कथमनुमानस्य विरोधः स्यात्? इति।

तन्निरासः

तत्राह

व्यभिचारश्चेदागमार्थानुमानिर्दोषत्वाध्यवसाये च समः

प्रत्यक्षस्य व्यभिचारदर्शनात् अविश्वसनीयत्वं वदन् वादी प्रष्टव्यः 'नेह नानास्ति किञ्चन' इत्यागमस्य अशेषभेदाभावोऽर्थः, दृश्यत्वानुमानं निर्दोषं, मानसिद्धत्वाद्यनुमानं सदोषं इत्यध्यवसायः केन प्रमाणेन? इति। न तावत् स्वेनैव। अननुभवात्। नाप्यागमाद्यन्तरेण। अनवस्थापातात्। प्रत्यक्षेण चेत्, तर्हि प्रत्यक्षस्य तत्र तत्र व्यभिचारदर्शनात् इदमपि प्रत्यक्षमविश्वसनीयं। तथा च न तेनागमार्थाध्यवसायः सिध्यतीति। अनुमाया अनिर्दोषत्वाध्यवसाय इति च योज्यम्। यद्यप्यत्र पूर्वोक्तमेवानिष्टं शक्यते वक्तुम् तथापि तत् शिष्यैरेव शक्यते ज्ञातुमिति दूषणान्तरमेवोक्तम्। अभेदागमस्याभेदार्थत्वाध्यवसायानुपपत्तिरेवानिष्टा।

(रा. टि.) अशेषभेदाभावोऽर्थः इत्यत्रापि अग्रेतनं इत्यध्यवसाय इतिपदमाकृष्यते। केन प्रमाणेनेति इतिशब्दस्य प्रष्टव्य इति पूर्वेणान्वयः। [1]मानसिद्धत्वात् इत्यादि स्वोक्तं मूलारूढं दर्शयितुमाह ॥ इति च योज्यमिति ॥ एतच्च निर्दोषानुमाया इत्याद्यग्रेतनग्रन्थघटनायेति ज्ञातव्यम्। [2]पूर्वरणेत्यादिसूत्रेण गुणेन समासनिषेधात् कथमत्र समासः? इति चेत् 'तदशिष्यं सञ्ज्ञाप्रमाणत्वात्' इति पाणिनिनिर्देशात् न दोष इति भावः ॥ पूर्वोक्तमेवेति ॥ अनुमानागमप्रामाण्यग्राहिणोऽप्यनाश्वासापत्तिरित्यादिरूपेण पूर्वोक्तमेवेत्यर्थः। अरुच्या दोषान्तरोक्तिरिति भ्रमनिरासायाह ॥ अभेदेति ॥

(श्री. टि.) ॥ ततश्चेति ॥

ज्ञानस्य व्यभिचारित्वे विश्वासः किंनिबन्धनः।

इति वचनादिति भावः। अविश्वस्तप्रामाण्येन प्रत्यक्षेणेति शेषः ॥ स्वेनैवेति ॥ स्वेनैव स्वार्थाध्यवसायस्य स्वनिष्ठनिर्दोषत्वाध्यवसायस्य च अदर्शनादित्यर्थः ॥ इदमपीति ॥ अभेदागमस्य अभेदोऽर्थ इत्यध्यवसायकं अनुमानादेर्निर्दोषत्वाध्यवसायकं च प्रत्यक्षमित्यर्थः। अविश्वसनीयं स्यादिति शेषः। आगमार्थाध्यवसायः

[1] मानसिद्धत्वादि इत्यादि.   [2] पूर्वसदृशेत्यादिसूत्रेण.

(श्री. टि.) आगमार्थाद्यध्यवसायः। पूर्वं अनुमायाः निर्दोषत्वाध्यवसाय इति पदं विच्छिद्य 'मानसिद्धत्वानुमानस्य सदोषत्वाध्यवसाय' इति शेषपूरणेन मूलं योजितं। इदानीं अनुमानिर्दोषत्वाध्यवसाये च इत्यत्र अकारप्रश्लेषेणापि योजने मानसिद्धत्वाद्यनुमानस्य अनिर्दोषत्वाध्यवसाये सदोषत्वाध्यवसाय इति यावत्, इत्येतत् मूलारूढमपि भवतीत्याशयेनाह ॥ अनुमाया इति ॥ अत्रेति ॥ प्रत्यक्षस्य तत्र तत्र शुक्तिरजतादौ व्यभिचारदर्शनेन तत्प्रामाण्ये विश्वासासम्भवेन अविश्वस्तप्रामाण्येन प्रत्यक्षेण कथमनुमानस्य विरोधः? इत्याशङ्कायामित्यर्थः ॥ पूर्वोक्तमेवेति ॥ पूर्वोक्तरीत्युपेतमित्यर्थः । पूर्वोक्तन्यायेनेति यावत्। तथा हि, प्रत्यक्षप्रामाण्यस्य अविश्वसनीयत्वं वदन् प्रष्टव्यः मिथ्यात्वग्राहकानुमानागमप्रामाण्यं केन गृह्यते? इति । न तावत्स्वेन । स्वप्रामाण्यविषयकत्वाननुभवात् । नाप्यनुमानान्तरेण । अनवस्थापातात् । अतः प्रत्यक्षेणैवेति वक्तव्यम् । तस्यापि प्रत्यक्षत्वाविशेषेण अविश्वस्तप्रामाण्यकतया कथं तेन तत्प्रामाण्यसिद्धिः? तदसिद्धौ च भेदादिवाक्यानामेव प्रामाण्यं स्यात् । ननु न सर्वस्यापि प्रत्यक्षस्य व्यभिचारेण अविश्वसनीयप्रामाण्यकत्वं ब्रूमः। किं तु? साक्षिव्यतिरिक्तस्यैव। साक्षिणस्तु अव्यभिचरितत्वनियमेन अविश्वसनीयत्वाभावात् तेन मिथ्यात्वग्राहकानुमानादिप्रामाण्यं सुगृहीतं भविष्यतीति चेत् तर्हि जगत्सत्यत्वमपि अव्यभिचरितत्वनियमोपेततया विश्वस्तप्रामाण्यकेन साक्षिप्रत्यक्षेणैव गृहीतमिति युक्तस्तेनानुमानस्य विरोधः इति पूर्वोक्तन्यायेन अनिष्टं वक्तुं शक्यत इति भावः ॥ दूषणान्तरमेवेति ॥ [1]ननु व्यभिचारश्चेत् इतिवाक्येन आगमार्थाद्यध्यवसायो न स्यात् इति दूषणान्तरमेवोक्तमित्यर्थः। व्यभिचारश्चेत् इति वाक्योक्तं आगमार्थाद्यध्यवसायानुपपत्तिरूपमेव दूषणं परस्य अनिष्टं वा? न वा? आद्ये तेनैवालं। अत इत्युत्तरवाक्यं व्यर्थं । द्वितीये तदुक्तिर्व्यर्था इत्याशङ्कायां आद्यं पक्षमङ्गीकृत्य उत्तरवाक्यमवतारयति ॥ अभेदागमस्येति ॥ अनिष्टेति ॥ परस्येति शेषः।

केचित्तु आगमार्थाध्यवसायो न स्यादिति अस्माभिरापादिते इष्टापत्तिः परेण वक्तुं न शक्यत इत्याह ॥ अभेदागमस्येति॥ अनिष्टैवेति एवकारान्वय इत्याहुः।

(टी.) अधिकं चाह

अत उत्तरदिवसे अभेदवाक्यस्य भेदोऽर्थः स्यात्

'नेहनाना' इति वाक्यस्याभेदोऽर्थ इत्यध्यवसायानुपपत्तौ भेदोऽर्थः स्यात्। परस्परविरुद्धयोः अन्यतरनिषेधस्य अन्यतरविधिनान्तरीयकत्वनियमादिति।

---

[1] 'ननु' इत्येतदधिकमिति भाति.

(टी.) प्रत्यक्षस्य वर्तमानमात्रग्राहित्वाभ्युपगमेऽप्ययं दोषः समान इति सूचयितुं उत्तरदिवस इत्युक्तम्। तथा हि, यदि प्रत्यक्षं वर्तमानमात्रग्राहि तर्हि 'नेह नाना' इति वाक्यस्य अभेदोऽर्थ इत्यध्यवसायहेतोः प्रत्यक्षस्यापि तथात्वापत्त्या उत्तरदिवसेऽपि तदर्थत्वाध्यवसायो न स्यात् इति सिद्धं कृत्वा आह ॥ अत इति ॥

(रा. टि.) 'अभेदोऽर्थ इत्यध्यवसायस्यापि प्रत्यक्षत्वेन वर्तमानमात्रग्राहित्वात् इत्युक्तेः मूले अभावात् उत्तरदिवस इत्युक्तिमात्रेण कथं सूचनम्? इत्यत आह ॥ तथा हीत्यादिना ॥

(श्री. टि.) नन्वस्मिन्पक्षे अतोऽभेदवाक्यस्य भेदोऽर्थः स्यात् इत्येतावत एव उपयुक्तत्वेन उत्तरदिवसे इत्येतद्व्यर्थं इत्यतः तत्सार्थक्यमुपपादयति ॥ प्रत्यक्षस्येति ॥ अयं दोष इति ॥ व्यभिचारश्चेत् इतिवाक्योक्त आगमार्थाद्यध्यवसायानुपपत्तिरूपो दोष इत्यर्थः। उत्तरदिवस इत्यनेन सूचितं दोषसाम्यमुपपादयति ॥ तथा हीत्यादिना ॥ तथात्वापत्त्या [1]वर्तमानग्राहकत्वापत्त्या ॥ तदर्थत्वेति ॥ अभेदार्थत्वेत्यर्थः ॥ इति सिद्धं कृत्वाऽऽहेति ॥ इति दूषणं व्यभिचारश्चेत् इतिवाक्योक्तन्यायेन प्रत्यक्षस्य वर्तमानमात्रग्राहित्वाभ्युपगमपक्षेऽप्युत्तरदिवस इत्यनेन सिद्धं कृत्वा। 'अभेदागमस्याभेदोऽर्थः' इत्यध्यवसायहेतोः प्रत्यक्षस्यापि वर्तमानमात्रग्राहित्वापत्त्या उत्तरदिवसेऽपि तदर्थत्वाध्यवसायानुपपत्तिरेव परस्यानिष्टा। अधिकं च दूषणं अतोऽभेदवाक्यस्य भेदोऽर्थः स्यात् इतिवाक्येनाहेत्यर्थः।

(टी.) दृश्यत्वानुमानिर्दोषत्वाध्यवसायायोगे अनिष्टमाह

**निर्दोषानुमायाः सदोषत्वम्**

निर्दोषत्वेनाभ्युपगतानुमायाः प्रत्यक्षेण क्वचित् व्यभिचारदर्शनेन अविश्वसनीयेन निर्दोषत्वाध्यवसायानुपपत्तौ सदोषत्वं स्यात्। अभावाभावे भावनियमात्।

मानसिद्धत्वाद्यनुमानं सदोषमित्यध्यवसायानुपपत्तौ दोषमाह

**सदोषानुमाया निर्दोषत्वम्**

सदोषानुमायाः सदोषत्वेनाभ्युपगताया अनुमायाः।

---

[1] वर्तमानमात्रग्राहकत्वापत्त्या.

(टी.) न केवलं प्रत्यक्षस्याविश्वसनीयत्वाङ्गीकृतौ आगमार्थाव्यवस्था। किं तु! सर्वव्यवस्थानां प्रत्यक्षमूलत्वेन न काऽपि व्यवस्था सिध्यतीति सर्वव्यवहारोच्छेदः स्यादित्याह

## इत्यव्यवस्था

उक्तप्रकारसूचनार्थ इतिशब्दः।

(रा. टि.) ॥ उक्तप्रकारसूचनार्थ इति ॥ निर्दोषस्य सदोषत्वं सदोषस्य निर्दोषत्वं अभेदवाक्यस्य भेदोऽर्थः इत्युक्तप्रकारेत्यर्थः ॥

(श्री. टि.) दृश्यत्वानुमानस्य वस्तुतो निर्दोषत्वाभावात् निर्दोषत्वेनाभ्युपगताया इत्युक्तम्। परेणेति शेषः ॥ प्रत्यक्षेणेत्यादि ॥ क्वचित् शुक्तिरजतादौ व्यभिचारदर्शनेन निमित्तेन अविश्वसनीयेन अविश्वसनीयप्रामाण्यकेन प्रत्यक्षेणेत्यर्थः।

मानसिकत्वानुमाया वस्तुतः सदोषत्वाभावादाह ॥ सदोषत्वेनाभ्युपगताया इति ॥ अत्रापि परेणेति शेषो द्रष्टव्यः।

॥ न कापि व्यवस्थेति ॥ 'इदं रजतं' इत्यादिप्रत्यक्षं अप्रमाणं 'नेदं रजतं' इत्यादिप्रत्यक्षं प्रमाणं इति प्रामाण्याप्रामाण्यादिरूपापि व्यवस्था न सिद्ध्यतीत्यर्थः। व्यवहारः प्रवृत्तिः। उक्तप्रकारेति ॥ निर्दोषानुमाया इत्यादिनोक्तप्रकारेत्यर्थः। तथा च प्रत्यक्षस्य अविश्वसनीयत्वे, इति निर्दोषानुमाया इत्यादिनोक्तप्रकारेण तन्न्यायेनेति यावत्। अव्यवस्था कापि व्यवस्था न सिध्येत् इति मूलार्थो द्रष्टव्यः।

आश्रयासिद्ध्यादीनामदूषणत्वम्

(टी.) यदुक्तं हेतुस्वरूपासिद्धिरव्याप्तिरिति हेतुविरोध इति तदयुक्तम्। आश्रयासिद्धिसाध्यासिद्धिव्यधिकरणासिद्धीनामपि [1]हेतुविरोधित्वात् इत्यत आह

## आश्रयसाध्यव्यधिकरणासिद्ध्यो न दूषणम्

आश्रयासिद्धिव्यधिकरणासिद्धी दर्शिते। ततः प्राक् साध्यधर्मस्याप्रसिद्धिः साध्यासिद्धिः। यथा 'इयं भूः शशविषाणोल्लिखिता भूत्वात्' इति।

---

1. हेतुविरोधकत्वात्.

अतिप्रसङ्गस्यैव दोषत्वादिव्यवस्थापकत्वम्

(टी.) कुतो न दूषणमित्याह

अतिप्रसङ्गाभावात्

आश्रयासिद्ध्यादीनामदूषणत्वाङ्गीकारे अनिष्टप्रसङ्गाभावात् न दूषणम् ।

अतिप्रसङ्गाभावेऽपि कथमदूषणम्? इत्याह

अतिप्रसङ्गेन हि दोषत्वादोषत्वे कल्प्ये

यस्य दोषत्वानङ्गीकारे अनिष्टप्रसङ्गः तस्य दोषत्वम् । यथा स्वरूपासिद्धेः अदोषत्वे ह्रदादेरग्निमत्वप्रसङ्गेन दोषत्वम् । यस्य च अदोषत्वानङ्गीकारे अनिष्टप्रसङ्गः तस्य अदोषत्वम् । यथा व्याप्तेः अदोषत्वानङ्गीकारे साध्यासिद्धिप्रसङ्गेन अदोषत्वम् । एवं दोषत्वादेरतिप्रसङ्गाधीनत्वात् अत्र च तदभावात् न दोषत्वम् । अत्र अदोषत्वोक्तिः दृष्टान्ततया उपयुज्यते । अतिप्रसङ्गशब्देन भावाभावावुपलक्ष्य अन्वयव्यतिरेकोक्तिर्वा ।

(रा. टि.) ॥ दर्शित इति ॥ हेत्वाभासोक्तिप्रस्तावे 'प्रधानं नित्यं अकार्यत्वात्' 'शब्दोऽनित्यः घटस्य कृतकत्वात्' इति दर्शिते इत्यर्थः। साध्यासिद्धिं दर्शयति ॥ तत इति ॥ अनुमितेः प्रागित्यर्थः । ॥ दृष्टान्ततयोपयुज्यत इति ॥ दोषत्वोपपादनस्यैव प्रकृतत्वादिति भावः ॥ भावाभावाविति ॥ अतिप्रसङ्गानतिप्रसङ्गाभ्यां दोषादोषत्वे कल्प्ये इति वाक्यविन्यासं कृत्वा अतिप्रसङ्गेन हि दोषत्वं कल्प्यम् यथा असिद्धेः इत्यन्वयोक्तिः । तदभावे दोषत्वाभावः यथा व्याप्तेः इति व्यतिरेकोक्तिरित्यर्थः ।

(श्री. टि.) ॥ दर्शित इति ॥ 'प्रधानं नित्यं अकार्यत्वात्' इत्याश्रयासिद्धिः 'शब्दोऽनित्यो घटस्य कृतकत्वात्' इति व्यधिकरणासिद्धिश्च दर्शिते इत्यर्थः ॥ ततः प्रागिति ॥ अनुमानात् प्रागित्यर्थः ।

॥ प्रसङ्गेनेति ॥ धूमवत्त्वेन हेतुनेति शेषः ॥ अत्र चेति ॥ आश्रयासिद्ध्यादीनामदोषत्वाङ्गीकारे च तदभावात् अनिष्टप्रसङ्गाभावादित्यर्थः । ननु यस्य दोषत्वानङ्गीकारे अनिष्टप्रसङ्गः तस्य दोषत्वं कल्प्यं । प्रकृते च आश्रयासिद्ध्यादीनां दोषत्वानङ्गीकारे अनिष्टप्रसङ्गाभावात न दोषत्वम् इत्येव प्रकृतसङ्गतं । अतः अतिप्रसङ्गेन हि दोषत्वं कल्प्यम् इत्येव वक्तव्यम् । अदोषत्वमप्यतिप्रसङ्गेन कल्प्यम् इतिवचनं तु प्रकृतासङ्गतम् इत्यत आह ॥ अत्रादोषत्वोक्तिरिति ॥ यस्य अदोषत्वानङ्गीकारे अतिप्रसङ्गः तस्य अदोषत्वमिति यथा अदोषत्वकल्पनं अतिप्रसङ्गाधीनं एवं दोषत्वमपि तदनङ्गीकारे अतिप्रसङ्गेनैव कल्प्यम् इत्येवमतिप्रसङ्गेन

(श्री. टि.) दोषत्वकल्पने दृष्टान्ततया अदोषत्वोक्तिरुपयुज्यत इत्यर्थः । एवं मूलपदस्वारस्यम् अङ्गीकृत्य दोषत्वादोषत्वयो रुभयोरपि अतिप्रसङ्गाधीनत्वं अङ्गीकृत्य अदोषत्वोक्तिः दृष्टान्ततया उपयुज्यत इति व्याख्याय प्रकारान्तरेणापि व्याचष्टे ॥ अतिप्रसङ्गशब्देनेति ॥ भावाभावावुपलक्ष्येति ॥ तथा च, अतिप्रसङ्गेन अतिप्रसङ्गसद्भावासद्भावाभ्यामिति यावत् । दोषत्वादोषत्वे कल्प्ये इति मूलार्थो द्रष्टव्यः । तथा च यस्य दोषत्वानङ्गीकारे अतिप्रसङ्गसद्भावः तस्य दोषत्वं, यस्य च अदोषत्वाङ्गीकारे अतिप्रसङ्गाभावः तस्य अदोषत्वं इत्येवमन्वयव्यतिरेकाभ्यां दोषत्वादोषत्वयोः अतिप्रसङ्गसद्भावासद्भावाधीनत्वात् प्रकृते च आश्रयासिद्ध्यादीनां अदूषणत्वाङ्गीकारे अतिप्रसङ्गाभावात् न तेषां दूषणत्वमिति भावः ।

### व्याप्तिसमुचितदेशासिद्ध्योरेव साध्यसिद्धिप्रयोजकत्वम्

(टी.) इतोऽपि नाश्रयासिद्ध्यादेर्दोषत्वमित्याह

## व्याप्तिरेव हि प्रयोजिका

साध्यसिद्धौ हि साधनस्य व्याप्तिरेव प्रयोजिका । न तु सदाश्रयत्वं साध्यप्रसिद्धिः साध्यसाधनयोरेकाधिकरणत्वं वा । व्यतिरेकाभावात् । न हि सत्यां व्याप्तौ दोषान्तरासङ्कीर्णाश्रयासिद्ध्यादिना साध्यासिद्धिर्दृष्टेति । उपलक्षणमेतत् । विवक्षितस्थले सिद्धिश्चेति ज्ञातव्यम् । हेतुस्वरूपासिद्धिरिति ह्युक्तम् । एवकारस्तु सदाश्रयत्वादिव्यावर्तकः । व्याप्तिमत्साधनं हि विवक्षितस्थले विद्यमानं विवक्षितस्थले साध्यं प्रयोजयति ।

(रा. टि.) व्याप्तिरेवेत्येवकारव्यावर्त्यं त्रयमिति दर्शयति ॥ न तु सदाश्रयत्वमित्यादिना ॥ 'येन आश्रयासिद्धिसाध्यासिद्धिव्यधिकरणासिद्धीनां दोषत्वं कल्प्येत इति वाक्यशेषः । कुतः? इत्यत आह ॥ व्यतिरेकाभावादिति ॥ व्याप्त्यभावे यथा साध्यासिद्धिः न तथा सदाश्रयत्वादिव्यतिरेकेण साध्यानुमितिव्यतिरेकोऽस्ति तस्मादित्यर्थः । 'ननु वन्ध्यासुतो वक्ता सुतत्वात्' इत्यादिप्रयोगे सदाश्रयत्वादिव्यतिरेकेण साध्यसिद्धिव्यतिरेकदर्शनमस्ति इत्यत आह ॥ न हि सत्यामिति ॥ तत्र व्याप्तिरेव नास्ति, बाधासिद्ध्यादिदोषान्तरसङ्कीर्णं च आश्रयासिद्ध्यादीति भावः ॥ एतदिति ॥ व्याप्तिरेव प्रयोजिका इत्येतदित्यर्थः ॥ सिद्धिश्चेति ॥ लिङ्गस्येति योज्यम् । सिद्धिश्च प्रयोजिका इति कस्मादुपलक्ष्यम्? तथात्वे व्याप्तिरेवेत्येवकारविरोधात् इत्यत आह ॥ हेतुस्वरूपेति ॥ प्राक् हेतुविरोधोक्तिप्रस्तावे हेतुस्वरूपासिद्धिरव्याप्तिश्चेति हेतुविरोधः इत्युक्तम् । अतः सिद्धेरभावे असिद्धिरूपदोषप्राप्तेः समुचितस्थले हेतोः सिद्धिश्च प्रयोजकत्वेन अवश्यं प्राप्तेत्यर्थः । एवकारविरोधं निराह ॥ एवकारस्त्विति ॥ हेतुसाध्ययोः सामानाधिकरण्यसाध्यप्रसिद्धिसदाश्रयत्वानां व्यावर्तक इत्यर्थः । प्राक् तथैव व्याख्यानादिति भावः । हेतुसिद्धेः कृत्यमाह ॥ व्याप्तिमत्साधनमिति ।

(श्री. टि.) एवकारस्य व्यावर्त्यं दर्शयति ॥ न त्विति ॥ कुतः सदाश्रयत्वादीनामप्रयोजकत्वम्? इत्यत आह ॥ व्यतिरेकाभावादिति ॥ व्यतिरेकः साध्यासिद्धिः । व्यतिरेकाभावमेवोपपादयति ॥ न हीति ॥ व्याप्त्याद्यङ्गसाकल्ये बाधादिदोषान्तरासङ्कीर्णोऽश्रयासिद्ध्यादिमात्रेणैव साध्यासाधकत्वस्य क्वाप्यनुपलम्भादित्यर्थः । यद्युदाह्रियते तर्हि तत्र दोषान्तरमेवोपपादयिष्याम इति भावः ॥ एतदिति ॥ व्याप्तिः प्रयोजिकेत्येतत् विवक्षितस्थले सिद्धेरप्युपलक्षणमित्यर्थः । विवक्षितस्थले सिद्धिः समुचितदेशे सिद्धिः । ननु विवक्षितस्थले सिद्धिः आचार्यानभिप्रेता किमित्युपलक्ष्यते? इत्यतः तत्र ज्ञापकमाह ॥ हेत्विति ॥ विवक्षितस्थले सिद्धेरेव प्रयोजकत्वादेव हि पूर्वं सामान्यतो हेतुस्वरूपस्यासिद्धिर्हेतुविरोधः इत्येवोक्तम् । यदि च पक्षधर्मत्वं प्रयोजकं स्यात् तर्हि हेतुस्वरूपस्य पक्षे असिद्धिरित्येव ब्रूयादित्यर्थः । अत्र यद्यपि व्याप्तिपदेन समुचितदेशसिद्धिवत् अबाधितत्वमपि उपलक्षणया वक्तव्यं तथापि व्याप्तावेव तस्योपयोगेन व्याप्तिग्रहणेन प्राप्तत्वात् नात्रोपलक्षणया गृहीतम् । अबाधितत्वाभावे पक्ष एव व्यभिचारेण व्याप्तेरसम्भवादिति ध्येयम् । यथोक्तम् ।

………………व्याप्तौ सत्यां कथञ्चन ।

इत्यत्र सुधायाम् व्याप्तिग्रहणमबाधितत्वाद्युपलक्षणम् । वस्तुतो व्याप्तावेव तस्योपयोगान्न पृथगुक्तम् इति । ननु विवक्षितस्थले सिद्धेरपि प्रयोजकत्वे व्याप्तिरेवेति एवकारविरोधः। तेन प्रयोजकान्तरस्य व्यावर्तितत्वात् इत्यत आह ॥ एवकारस्त्विति ॥ न तु विवक्षितस्थलसिद्धेः प्रयोजकत्वव्यावर्तक इति भावः । आदिपदेन साध्यप्रसिद्धेः साध्यसाधनयोरैकाधिकरण्यस्य च ग्रहणम् । हि इत्यनेन व्याप्त्यादेः प्रयोजकत्वं प्रसिद्धमित्युक्तम् । तदुपपादयति ॥ व्याप्तिमदिति ॥ विद्यमानं सत् । प्रयोजयतीत्यनन्तरम् इतीति शेषः । तथा च इति हि प्रसिद्धमित्यर्थः ।

### आश्रयासिद्ध्यादिस्थले व्याप्तिसमर्थनम्

(टी.) किमतो यदि व्याप्तिरेव प्रयोजिका? इत्यत आह

## असत्यपि व्याप्तिरस्त्येव

प्रयोजिका च व्याप्तिः असत्यप्याश्रये साध्यसाधनयोरस्त्येव । 'वन्ध्यासुतो न वक्ता अचेतनत्वात्' इत्यादौ दर्शनात् । अतो नाश्रयासिद्धिर्दूषणमिति ।

(श्री. टि.) ॥ प्रयोजिकेति ॥ साध्यसिद्धिप्रयोजिकेत्यर्थः ॥ अचेतनत्वादिति ॥ ज्ञानानधिकरणत्वादित्यर्थः । व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वेन तदभावे तदभावः साध्यत इति द्रष्टव्यम् । नन्ववक्तृत्वं वचनेतरक्रियाकर्तृत्वम् अतः अचेतनत्वं बाधितविषयम् इति चेन्न । वक्तृत्वाभावमात्रस्य साध्यत्वात् । नन्वभावोऽपि असति कथं? तत्र धर्माभावादिति चेन्न धर्माणामनेकविधत्वात् । तथा हि, केचित् धर्मिसमवेता भवन्ति यथा रूपादयः । केचित् अन्यसमवेता अपि अन्यमुपरञ्जयन्ति यथा ज्ञानादयो घटादीनां । केचित् आश्रयसमवायमपि नापेक्षन्ते । केवलं केनचित् निरूप्यन्ते यथा अभावाः । एवं च अभावरूपधर्मस्य धर्मिसत्तासापेक्षत्वाभावात् वक्तृत्वाभावसाधनमुपपन्नमेव । न च वाच्यं 'सद्भ्यामधिकरणप्रतियोगिभ्यां अभावो निरूप्यते' इतिवचनात् अत्र धर्मिण एवाभावात् कथं वन्ध्यासुने वक्तृत्वाभावनिरूपणम्? इति । तथात्वे प्रागभावाद्यनिरूपणप्रसङ्गात् । घटादेः कदाचित्सत्त्वान्नैवम् इति चेन्न तस्य निरूपणसमये अनुपयोगात् । प्रतीत्या निरूपकत्वमिति चेत् समं प्रकृतेऽपि । शब्दाभासादिना वन्ध्यासुतस्यापि प्रतीतिसम्भवात् । ननु काल्पनिकस्य कथं पक्षत्वम्? इति चेन्न । निषेधं प्रति पक्षत्वे बाधकाभावात् । अन्यथा परपक्षप्रतिक्षेपायोगात् । अथ अचेतनत्वमसिद्धम् । तस्य चेतनातिरिक्तस्वभावत्वात इति चेन्न । चैतन्यव्यावृत्तिमात्रस्य हेतुत्वात् । अभावस्य च असताऽपि धर्मिणा निरूपणमुपपद्यत इत्युक्तम् ।

अथ मतं 'वन्ध्यासुतो वक्ता सुतत्वात् संमतवत्' इति सत्प्रतिपक्षमेतत् किं न स्यात्? असदाश्रयताभयस्य भवद्भिरेव त्याजितत्वादिति । मैवं, तदीयवक्तृताकार्यस्य कदापि केनापि अनुपलब्धत्वेन बाधितविषयतया दुर्बलस्य अप्रतिपक्षत्वात् । न हि भवति तरक्षोः प्रतिपक्षो हरिणशावः । असिद्धं च सुतत्वं वन्ध्यासुतस्य । न चैवं स्ववचनव्याघातः । काल्पनिकानुवादेन वास्तवस्य निराकरणात् ।

न चैवं 'गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत्' इत्यस्यापि साधकत्वापत्तिः । म्लानारविन्दे व्यभिचारेण तत्र व्याप्तेरेवाभावात् । नन्वथापि 'नृशृङ्गमस्ति शृङ्गत्वात गोशृङ्गवत्' इत्यस्यापि साधकत्वप्रसङ्ग इति चेन्न । प्रमाणबाधितत्वात् । शृङ्गशब्दो हि महतः शिरस्संयुक्तस्य अवयवविशेषस्य वाचकः । तस्य च प्रत्यक्षेण नास्तिताया एवावधारणादिति । यथोक्तम्

दोषो व्याहतिरेवास्ति नृशृङ्गास्तित्वसाधने । इत्यादि ।

एतेन एतदपि परास्तम् 'अप्रामाणिकस्य प्रमाणाङ्गताऽसम्भवेन असदाश्रयस्य हेतोः व्याप्त्यनुपपत्त्या च असदाश्रयस्यानुमानस्य दुष्टत्वम्' इति । अप्रामाणिकस्यापि निषेधरूपं साध्यं हेतुं च प्रत्याश्रयत्वे निषेधरूपव्यवहारभाजनत्वे निषेधसाधकप्रमाणाङ्गत्वे च बाधकाभावस्योक्तत्वात् । असदाश्रयेऽपि हेतौ व्याप्तेरविकलत्वाच्च । अतोऽचेतनत्वानुमानं निर्दोषमेव इत्यास्तां प्रपञ्चः ।

(टी.) एवं असत्यपि साध्यस्य प्रसिद्धत्वे प्रयोजिका व्याप्तिरस्त्येव [1]'जीवच्छरीरजातं सात्मकं प्राणादिमत्वात्' इत्यादौ दर्शनात्। अतो न साध्यासिद्धिर्दूषणमिति।

(रा. टि.) ॥ जीवच्छरीरजातमिति ॥ सर्वस्य सात्मकस्य पक्षत्वात् न साध्यप्रसिद्धिरत्रेति भावः। विस्तरस्तु सुधातर्कताण्डवयोः।

(श्री. टि.) ॥ एवमसत्यपि साध्यस्य प्रसिद्धत्व इति ॥ नन्वेवं 'विश्वं सदसद्विलक्षणं बाध्यत्वात्' इत्यादेरपि साधकत्वापत्तिरिति चेन्न व्याहत्यैव दुष्टत्वात्। यथोक्तम्

अन्यत् सदसतोर्विश्वमिति च व्याहतेरमा। इति।

ननु च साध्यरूपविशेषणाप्रसिद्धौ तत्सन्देहानुपपत्त्या पक्षत्वानुपपत्तेः हेतोः पक्षधर्मत्वानुपपत्तिरिति चेन्न। हेतोः पक्षधर्मत्वासिद्धिस्तदा स्यात् यदि धर्मी वा हेतोस्तद्धर्मत्वं वा न स्यात्। सन्देहाभावेन पक्षत्वानुपपत्त्या पक्षधर्मत्वाभावे तु स्वार्थानुमानविशेषविलोपः स्यात्। यदा हि 'यो धूमवानसावग्निमान्' इति गृहीतव्याप्तिको गिरिशिखरे धूमं सहसैव पश्यन् व्याप्तिं स्मरति तदा उत्पद्यत एव तस्यानुमितिः। न च तस्याग्निसन्देहोऽस्ति। यदा च आप्तवचनात् विनिश्चिताग्निसम्बन्धः पर्वतं प्रत्यासीदन् धूममेव अवलोकयति तदा तस्य विना सन्देहेन अग्न्यनुमितिर्भवत्येव। [2]न हि सामग्री बुद्धिमती। येन यन्मया कर्तव्यं तदन्येन कृतमिति पर्यालोच्योदासीत।

नापि [3]पदार्थानुमाने सन्देहनियमः। विपर्यस्तस्यापि प्रतिवादित्वोपपत्तेः। किं च विदिततत्त्वोऽपि यदा परपरीक्षार्थं प्रमाणं पृच्छति तदा प्रयुक्तमनुमानममानं स्यात् सन्देहाभावात्। तस्मात् 'सन्दिग्धसाध्यः पक्षः' इत्याद्याः प्राचां वाचः सम्भावनाभिप्रायाः। परमार्थतस्तु अनुमितिविशेष्यः पक्षः। अतः सन्देहाभावे पक्षत्वानुपपत्त्यभावात् नाप्रसिद्धसाधने पक्षधर्मत्वानुपपत्तिरूपो दोष इति। किं च साध्याप्रसिद्ध्या यत्र हेतोः पक्षधर्मत्वासिद्धिरुच्यते तत्र व्याप्त्यादीतराङ्गसाकल्यं अस्ति न वा? न चेत् तत एवानुमानं दुष्टं किं साध्याप्रसिद्ध्या? यद्यस्ति तदा अप्रसिद्धस्यापि साधने को दोषः? यथोक्तम्

असिद्धसाधने दोषः को व्याप्तिर्यदि विद्यते। इति।

नन्वथापि प्रतिज्ञावाक्यस्य अविदितपदार्थकत्वेन अबोधकत्वापत्तिः इति चेन्न। वादिना तदर्थस्य व्युत्पाद्यत्वादिति संक्षेपः।

---

[1] श्री. जीवच्छरीरं. [2] न हीति येनेति च वाक्यद्वयं अधिकमिति भाति. [3] परार्थानुमाने.

(श्री. टि.) ॥ जीवच्छरीरं सात्मकमिति ॥ नन्वत्र कथं साध्यस्याप्रसिद्धत्वं सामान्यतः प्रसिद्धिविधानात्। हि 'इच्छादयः क्वचिदाश्रिताः गुणत्वात् रूपवत्' यश्चेच्छादीनामाश्रयः स एवात्मा इति सामान्येन आत्मतथा सिद्धौ तत्सम्बन्धो जीवच्छरीरस्य केवलव्यतिरेकिणा साध्यत इति चेन्न । भवेदेतत् यद्ययं केवलव्यतिरेकिण्युक्तिविशेषः कार्य इत्यत्र नियामकं स्यात् । न चैतदस्ति । तथा हि, किमनेन उक्तिविशेषेण केवलव्यतिरेकि साध्यं अन्वयितां नीयते ? उत न ? इति वक्तव्यम् । नाद्यः उक्तेरर्थतथात्वपरिवर्तकत्वाभावात् । न हि सहस्रेणाप्युक्तीनां नरो वानरीकर्तुं शक्यते । शक्यत्वे वा केवलव्यतिरेकिप्रामाण्यं त्यक्तं स्यात् । न द्वितीयः। यदि उक्तिविशेषेणापि लिङ्गं केवलव्यतिरेकिसाध्यसाधकमेव [1]नान्वयितामापाद्यत इतीष्यते तदाऽयमुक्तिविशेषः केन मानेन कर्तव्यतया ज्ञायते ? न केनापि । यथोक्तम्

अप्रतिद्धस्य साध्यस्य साधकत्वं यदेष्यते ।
लिङ्गस्योक्तौ विशेषोऽयं केन मानेन गम्यते ॥ इति ।

नन्वस्त्येवोक्तिविशेषस्य कर्तव्यतायां नियामकं । तथा हि, यद्यपि अयमुक्तिविशेषो न व्यतिरेकिणमन्वयिनं करोति तथापि व्यतिरेकव्याप्तिस्तावत् साध्यसिद्धयङ्गम् । तथा च तद्ग्रहोऽवश्यम्भावी । व्यतिरेकश्च प्रतियोगिप्रतीत्यधीनप्रतीतिक एव । प्रतियोगिनौ च लिङ्गसाध्यधर्मौ । तत्र लिङ्गं पक्षे प्रतीतमेव। साध्यधर्मश्च न पक्षे प्रतीतो नाप्यन्यत्र । तत्कथं व्यतिरेकयोर्व्याप्तिर्गृह्यतां ? एतैस्तु उक्तिविशेषैः कथंचित् प्रतियोगिनः साध्यधर्मस्य बुद्धिस्थतायां सत्यां सुकरो व्याप्तिग्रहः स्यात् इति चेत् न । प्रत्यक्षेण उपदेशेन वा असाधारणौ धर्मौ एकत्रोपलब्धवतः ततोऽन्यत्र सर्वत्रापि तदभावोपलम्भसम्भवे व्यतिरेकेण व्याप्तिग्रहस्तावत् वादिनः सुकर एव । प्रतिवादिनोऽपि वादिवाक्यावगतप्रतियोगिनः तदभावावगमसम्भवात् व्यतिरेकव्याप्तिग्रहः सम्भवत्येवेति किमेताभिः क्लिष्टकल्पनाभिः! किं च प्राणादिमत्वहेतावपि यत् यत्कार्यवत् तत् तत्कारणवत् यथा अङ्कुरवती भूमिर्बीजगर्भा इति सामान्यव्याप्तिसम्भवात् किमर्थं व्यतिरेकयोः व्याप्तिराश्रयणीया ! इति भावः । यथोक्तम्

यथानुभवमेवैतन्नाङ्गीकार्यं कुतस्तदा । इति ।

(टी.) तथा असत्यपि साध्यसाधनयोरेकाधिकरणत्वे प्रयोजिका व्याप्तिरस्त्येव । चन्द्रोदयादिना समुद्रवृद्धियाद्यनुमानदर्शनात्। अतो न व्यधिकरणासिद्धिरपि दूषणमिति ।

(श्री. टि.) ॥ असत्यपि साध्यसाधनयोरेकाधिकरणत्व इति ॥ ननु 'व्यधिकरणस्यापि हेतोः साधकत्वाङ्गीकारे आत्मा अनित्यः काकस्य कार्ष्ण्यात्, इत्ययमपि हेतुः साधकः स्यात्' इत्यतिप्रसङ्ग इति चेन्न । काकस्य कार्ष्ण्ये अनित्यत्वनिरूपितव्याप्त्यभावादेव असाधकत्वं । न तु व्यधिकरणत्वात् । अतो नातिप्रसङ्गः ।

[1] नान्वयिसाध्यसाधकतामापाद्यत.

(श्री. टि.) कुत एतत् ? इति चेत् । व्याप्त्याद्यङ्गसाकल्ये व्यधिकरणत्वमात्रेण असाधकत्वस्य काप्यदर्शनात् । प्रत्युत व्याप्त्यादिसम्पत्तिमता व्यधिकरणेन चन्द्रगतेन उदयेन समुद्रगतवृद्ध्यनुमानदर्शनात् । ननु व्याप्त्याद्यङ्ग-साकल्ये व्यधिकरणत्वमात्रेण असाधकत्वं 'शब्दोऽनित्यो घटस्य कृतकत्वात्' इत्यादौ दृष्टमिति चेन्न । अत्रापि व्याप्त्यभावादेव असाधकत्वं । न तु व्यधिकरणत्वात् । तथा हि, घटस्य इत्येतत् हेतुविशेषणत्वेन विवक्षितं न वा ? । आद्ये वैयर्थ्यं । द्वितीये कथं व्याप्त्यभावेनासाधकत्वं ? कृतकत्वे अनित्यत्वनिरूपितव्याप्तेः सद्भावात् । ननु व्यधिकरणस्य पक्षधर्मता नास्तीति चेत्, मा भूत् । तन्नियमस्य निर्निबन्धनत्वात् । तथा सति साध्यस्य नियतदेशता कथं सिध्येत् ? व्याप्तिस्वभावादिति वदामः । ननु 'समुद्रो वृद्धिमान् चन्द्रस्योदितत्वात्' इति व्यधिकरणस्थले सामानाधिकरण्यगर्भा व्याप्तिरेव नास्तीति कथं तत्स्वभावादपि नियतदेशतासिद्धिः? इति चेन्न । अविनाभावमात्रस्य व्याप्तित्वात् । अविनाभावरूपा व्याप्तिश्च 'यत् कृतकं तत् अनित्यम्' इति सामानाधिकरण्यगर्भैव कृतकत्वानित्यत्वयोर्दृष्टेति कृतकत्वं स्वाश्रय एव अनित्यत्वं गमयति । एवं चन्द्रोदयो व्यधिकरणैव समुद्रवृद्ध्या व्याप्त इति तां गमयति । यथा च सामानाधिकरण्येऽप्यस्ति प्रदेशादिनियमः तथा वैयधिकरण्येऽपीति को दोषः? तस्मात् 'यत्रेदं तत्रेदम्' इतिवत् 'यदेदं तदेदम्' इतिवत् यदेवं, तदेवम् इतिवच्च 'यदीदं तर्हीदम्' इत्यपि व्याप्तिसम्भवात् व्याप्त्यनुरोधेनैव हेतुना साध्यसिद्धेरावश्यकतया पक्षधर्मताया अनावश्यकत्वात् युक्तं व्यधिकरणस्यापि साधकत्वमिति सर्वमवदातम् ।

(टी.) असदाश्रयस्य हेतोर्व्याप्त्यनङ्गीकारे बाधकं चाह

'असदाश्रयस्य साधकत्वं न' इत्यपि व्याप्तिं विना कथं निवार्यते ?

'असदाश्रयस्य साधकत्वं न' इति ब्रुवंस्तत्र किञ्चित् प्रमाणमाचष्टे न वा । न द्वितीयः । प्रमाणं विना अर्थसिद्धेरभावात् । आद्ये न तावत् प्रत्यक्षमागमो वा तत्रास्ति । अतोऽनुमानमेव वाच्यम् । तत् [1]किमसत् तदाश्रयं हेतुं वा पक्षीकृत्य प्रवर्तते? उभयमप्यसदाश्रयं स्यात् । सतः असद्धर्मत्वानङ्गीकारात् । तत्र प्रष्टव्यं, तस्य व्याप्तिरस्ति न वा ? इति । नाद्यः सर्वत्रापि तत्प्रसङ्गात् । द्वितीये 'असदाश्रयस्य साधकत्वं न' इति निवारणं न स्यात् । अव्याप्तस्य साधनबाधनानङ्गत्वादिति ।

(रा. टि.) असदाश्रयस्य हेतोरिति बहुव्रीहिः । एवमग्रेऽपि ॥ असत्तदाश्रयं हेतुं वेति ॥ वन्ध्यासुतो नानुमानाङ्गम्, तदाश्रिताचेतनत्वहेतुर्वा न साधकः असत्वात्, असदाश्रयत्वात् इति वा प्रवर्तेत इत्यर्थः ॥ उभय-मपीति ॥ प्रमाणमित्यर्थः ॥ सर्वत्रापीति ॥ 'वन्ध्यासुतो न वक्ता अचेतनत्वात्' इत्यादावपीत्यर्थः । मूलवा-क्यार्थमाह ॥ द्वितीय इत्यादिना ॥

[1] श्री. किमसदाश्रयं हेतुं वा.

(श्री॰ टि॰) ॥ तत्रास्तीति ॥ असदाश्रयस्य साधकत्वं नास्तीत्यस्मिन्नर्थ इत्यर्थः ॥असदाश्रयं हेतुं वेति॥ असन् य आश्रयः तस्य साधकत्वं नास्ति असदाश्रयः साधनाङ्गं न भवतीति यावत् । इत्येवं असदाश्रयमेव पक्षीकृत्य साध्यते उत असदाश्रयो हेतुः साध्यासाधक इति असदाश्रयं हेतुं वा पक्षीकृत्येत्यर्थः । ननु हेत्वाश्रयस्य असत्त्वेऽपि पक्षीभूतस्य हेतोः सत्त्वमेव किं न स्यात् ? इत्यत आह ॥ सत इति ॥ तथा च आश्रयस्यासत्त्वे असदाश्रयत्वविशिष्टो हेतुरप्यसन्नेव । विशेषणस्य असत्त्वे तद्विशिष्टस्य हेतोरपि असत्त्वादिति भावः । पररीत्यैतदुक्तं । स्वमते तु प्रतियोगित्वज्ञेयत्वादेः सतोऽपि असद्धर्मत्वाङ्गीकारादिति ज्ञातव्यं ॥ तस्येति ॥ असदाश्रयस्य साधकत्वाभावसाधकं यत् असदाश्रयपक्षकं असदाश्रयहेतुपक्षकं वा अनुमानं तस्येत्यर्थः ॥ सर्वत्रापीति ॥ 'वन्ध्यासुतो न वक्ता' इत्याद्यसदाश्रयपक्षकानुमानजातेष्वपीत्यर्थः ॥ असदाश्रयस्येति ॥ असदाश्रयकस्य हेतोः साधकत्वनिराकरणं न स्यात् व्याप्त्यभावादिति भावः । ननु व्याप्त्यभावेऽपि साधकत्वनिवारणं कुतो न स्यात् ? इत्यत आह ॥ अव्याप्तस्येति ॥ व्याप्तिरहितस्येत्यर्थः ।

(टी.) नन्वसतो निर्धर्मकत्वेन साध्यसाधनाश्रयत्वानुपपत्तेः कथमसदाश्रयो हेतुः साधकः स्यात् ? इत्यत आह ॥ असदाश्रयस्येति ॥ अत्र व्याप्तिरिति तद्वतोः साध्यसाधनयोराश्रयत्वमुपलक्ष्यते । प्रागपिर्हेतुसमुच्चये । अत्रासद्विषयव्यवहारान्तरानुपपत्तिं समुच्चिनोति । अन्यत्समानम् ।

(रा. टि.) तदेव वाक्यं अन्यथापि अवतार्य व्याचष्टे ॥ असतो निर्धर्मकत्वेनेति ॥ आश्रयत्वमुपलक्ष्यत इति ॥ असदाश्रयस्य साधकत्वं नेत्यपि व्याप्तिमत्साध्यसाधनाश्रयत्वं असतो विना साधकत्वं कथं निवार्यते ? इति वाक्यव्यक्तिरित्यर्थः । 'असत् साध्यसाधनाश्रयो न भवति निर्धर्मकत्वात्' इति त्वदीयसाध्यसाधनाश्रयत्वं असतः अनङ्गीकृत्य कथं असतः साधकत्वं निवार्यते निर्धर्मकत्वहेतुना ? इति भावः । नेत्यपि इति [1]अपिपदसमुच्चयमाह ॥ प्रागिति ॥ पूर्वयोजनायां व्याप्तिं विना हेतुं च विनेति समुच्चये अपिशब्दः । अत्र द्वितीययोजनायां असतो निर्धर्मकत्वात् न साधनाद्याश्रयत्वमिति चेन्मन्यसे तर्हि न केवलं त्वदीयनिर्धर्मकत्वादिहेतुसाध्याश्रयत्वानुपपत्तिः अपि तु असन्नास्ति, असतो न साधनाश्रयत्वं इत्यसद्विषयव्यवहारान्तरानुपपत्तिरित्यर्थः । निषेधप्रतियोगित्वादेः असत्यभावादिति भावः ॥ अन्यदिति ॥ अवशिष्टं वाक्यं पूर्वयोजनया समयोजनमित्यर्थः ।

(श्री.टि.)॥ साध्यसाधनाश्रयत्वानुपपत्तेरिति ॥ साध्यधर्माश्रयत्वानुपपत्तौ बाधितविषयत्वं साधनधर्माश्रयत्वानुपपत्तौ स्वरूपासिद्धत्वमिति भावः ॥ कथमिति ॥ तथा च 'असदाश्रयो हेतुः साध्यसाधको न भवति बाधितविषयत्वात् स्वरूपासिद्धत्वाच्च' इत्यनुमानमुक्तं भवति ॥ आहेति ॥ स्वन्यायेन विरोधमाहेत्यर्थः । असतां

---

[1] अपिपदसमु यमाह.

(श्री. टि.) योजनायां व्याप्तिरित्यस्य स्वारस्याभावादाह ॥ व्याप्तिरितीति ॥ तद्वतोः व्याप्तिमतोः व्याप्तिनिरूपकयोरिति यावत् इति लक्षणाबीजशक्यसम्बन्धोपपादनायोक्तमिति ज्ञातव्यं। तथा च असदाश्रयो हेतुः साध्यसाधको न भवति बाधितविषयत्वात् स्वरूपासिद्धत्वाच्च इत्येवं असदाश्रयस्य हेतोः साधकत्वं नेत्येतत् व्याप्तिं विना तन्निरूपकसाध्यसाधनधर्मयोराश्रयत्वं विना कथं निवार्यते ? इति मूलार्थ इत्युक्तं भवति। एवं च अस्मिन्नप्यनुमाने पक्षीभूते असदाश्रयहेतौ असाधकत्वबाधितविषयत्वादिरूपसाध्यसाधनाश्रयत्वमवश्यं वक्तव्यमेव। अन्यथा अत्रापि बाधाद्यापत्तेरिति स्वन्यायविरोध इत्याशयः।

योजनाद्वयेऽपि अपिशब्दार्थमाह ॥ प्रागपिरिति ॥ प्राक् पूर्वयोजनायां 'असदाश्रयस्य साधकत्वमस्ति इत्यत्र व्याप्तिसद्भावरूपं साधकं असत्यपि इति वाक्येनोक्तं। तदनङ्गीकारे बाधकरूपहेतुसमुच्चयार्थः अपिशब्द इत्यर्थः। अत एव 'बाधकं चाह' इत्यवतारितमिति ध्येयं इत्याहुः। तथात्वे प्रागपिर्बाधकसमुच्चय इति वक्तव्यतया हेतुपदास्वारस्यं द्रष्टव्यम्।

सम्प्रदायस्तु असदाश्रयस्य साधकत्वं नेति व्याप्तिं विना अपिशब्दात् हेतुं विना कथं निवार्येत। इत्येवं अपिशब्दो हेतुसमुच्चायक इत्यर्थः। तथा च असदाश्रयस्य साधकत्वं न इत्यत्र कश्चिद्धेतुर्वक्तव्यः। स तु नास्तीति भावः। अत एव टीकाकारैः अनुमानमेव वाच्यम् इत्यादिना सामान्येनैवोक्तं। न तु हेतुर्व्यवहृत इति ध्येयं। अत एवैतद्दूषणपरिहाराय नन्वसतो निर्धर्मकत्वेन साध्यसाधनाश्रयत्वानुपपत्तेः इति हेतुराशङ्कित इत्यवधेयम्। अत एव द्वितीययोजनायां अपिशब्दस्य हेतुं विना इत्यर्थो न सम्भवति 'असदाश्रयस्य हेतोः साधकत्वं न' इत्यत्र साध्यसाधनरूपधर्मानाश्रयत्वरूपहेतोः परेण कथितत्वात्। अत आह ॥ अत्रेति ॥ द्वितीययोजनायामित्यर्थः। व्यवहारान्तरं व्यवहारविशेषः। तथा च अस्यां योजनायां अपीत्यस्य किञ्च इत्यर्थो द्रष्टव्यः। एवं च असतो निर्धर्मकत्वे व्यवहारविषयत्वादि[1]धर्माश्रयत्वाद्यभावस्याप्यापत्त्या 'शशविषाणं असत्' इत्यादिव्यवहारविशेषोच्छेदप्रसङ्ग इति भावः। एवं च निर्धर्मकत्वस्य [2]सिद्धत्वे बाधितविषयत्वादित्वरूपहेतुसाधकाभावेन तेन असदाश्रयस्य हेतोरसाधकत्वसाधनमनुपपन्नम् इति हृदयम्।

॥ अन्यत्समानमिति ॥ असदाश्रयो हेतुः साध्यसाधको न बाधितविषयत्वात् स्वरूपासिद्धत्वाच्च इत्यत्र प्रष्टव्यम्, पक्षीभूते असदाश्रये हेतौ असाधकत्वरूपसाध्यं बाधितविषयत्वादिरूपो हेतुश्च अस्ति न वा इति। यद्यस्ति तर्हि अनेनैव न्यायेन सर्वत्र 'वन्ध्यासुतो न वक्ता' इत्याद्यसदाश्रयपक्षकाचेतनत्वाद्यनुमानेष्वपि पक्षे साध्याद्याश्रयत्वोपपत्तेः साधकत्वं प्राप्तमेव। यदि नास्ति तर्हि बाधाद्यापत्त्या असदाश्रयस्य साधकत्वं नेति निवारणं न स्यात् इत्युपपादनं समानमित्यर्थः।

---

[1] धर्माश्रयत्वाभावस्याप्यापत्त्या. [2] असिद्धत्वे बाधितविषयत्वादिरूप.

(टी.) इतोऽपि न निर्धर्मकत्वेन असतः साध्यसाधनाश्रयत्वाभावो वाच्य इत्याह

असदाश्रयमित्यादिविशेषणत्वसम्भवे कथमव्याप्तिः

'असदाश्रयं साधनं न साधकं' इति वदता असतः साधनव्यावर्तकतया तद्विशेषणत्वं अङ्गीकृतमेव। अन्यथा तथा वक्तुमेवाशक्यत्वात्। एवञ्च असतो विशेषणत्वलक्षणधर्मसम्भवे कथं साध्यसाधनधर्माश्रयत्वासम्भवः? विशेषहेत्वभावादिति। एवं असदाश्रयत्वं आश्रयासिद्धिरिति मतं निराकृतम्।

(रा. टि.) पूर्ववाक्ये व्याप्तिं विनेत्यत्र व्याप्तिपदस्य व्याप्तिमत्साध्यसाधनधर्माश्रयत्वमर्थ इति व्याख्यानात् इह मूलस्थव्याप्तिपदस्य तथैवार्थमाह ॥ कथं साध्यसाधनधर्माश्रयत्वासम्भव इति ॥

(श्री. टि.) ॥ साधनव्यावर्तकतयेति ॥ सदाश्रयसाधनव्यावर्तकतयेत्यर्थः ॥ तद्विशेषणत्वमिति ॥ बहुव्रीहिणा आश्रयशब्दोक्तसाधनविशेषणत्वमित्यर्थः ॥ तथा वक्तुमिति ॥ असदाश्रयं साधनमिति वक्तुमित्यर्थः। अव्याप्तिरित्यत्र व्याप्तिरित्यनेन तद्वतोः साध्यसाधनयोः आश्रयत्वं उपलक्ष्यत इत्याशयेन अव्याप्तिरित्यस्यार्थमाह ॥ साध्यसाधनधर्माश्रयत्वासम्भव इति ॥ तथा च असन् आश्रयो यस्य तत् इति बहुव्रीहिणा असदाश्रयशब्देन असदाश्रयं साधनमुच्यते। एवं च 'असदाश्रयं न साधकम्' इति प्रयोगे असदाश्रयशब्देन असदाश्रयत्वं [1]सदाश्रयसाधनव्यावर्तकत्वरूपं यत् विशेषणत्वं तस्य सम्भवे तद्रूपधर्मस्य असति सम्भवे कथमव्याप्तिः? साध्यसाधनधर्माश्रयत्वासम्भव कथं? विशेषहेत्वभावादिति मूलार्थो द्रष्टव्यः।

अभावपक्षकानुमानस्य आश्रयासिद्धतानिरासः

(टी.) ये पुनरभावस्य निर्धर्मकत्वात् तदाश्रयत्वं आश्रयासिद्धिदूषणं ब्रुवते तन्निरासायाह

न चात्यन्ताभावोऽपि सर्वधर्मरहितः

किमुत प्रागभावादिः प्रामाणिकप्रतियोगिक इति शेषः।

कुतो न? इत्यत आह

प्रमेयत्वाद्यनुभवात्

अनुभूयन्ते हि प्रमेयत्वाभिधेयत्वादयः अत्यन्ताभावेऽपि धर्माः। कथमन्यथा तस्य सर्वधर्मराहित्यादि जानीयात्? कथं च शिष्यं प्रत्युपदिशेत्? अनुपदिष्टश्च कथमसौ जानीयात्? इति।

[1] साधनस्योक्तम्। तेन सदाश्रय.

(रा. टि.) अपिपदाभिप्रायमाह ॥ किञ्चेति ॥ यः प्रामाणिकप्रतियोगिकः स प्रागभावादिरिति योजना। य इत्यादि शेषः ॥ कथमन्यथेति ॥ बुद्ध्यनारोह इत्यर्थः ।

(श्री. टि.) ॥ तदाश्रयत्वमिति ॥ हेतोरिति शेषः। अभावोऽभिधेयः इत्य द्यभावपक्षकानुमाने यत्र अभाव आश्रयः पक्ष इति यावत्। तत्कत्वं हेतोरित्यर्थः ॥ दूषणमिति ॥ तथा च अभावस्य निर्धर्मकत्वेन साध्यसाधनधर्माश्रयत्वानुपपत्त्या तदाश्रयहेतोः साधकत्वाभावेन दूषणमिति भावः। अत्यन्ताभावोऽपीति मूलं। अप्रामाणिकप्रतियोगिकोऽपीत्यर्थः ।

॥ अन्यथेति ॥ प्रमेयत्वानङ्गीकार इत्यर्थः ॥ जानीयादिति ॥ 'सर्वे धर्मा अत्यन्ताभावे न सन्ति' इति सर्वधर्मराहित्यप्रकारकात्यन्ताभावाधिकरणकज्ञाने अत्यन्ताभावस्यापि अधिकरणत्वेन विषयत्वं प्राप्तमेवेति भावः। अत्रेष्टापत्तिपरिहारायाह ॥ कथं चेति ॥ अज्ञातस्योपदेष्टुमशक्यत्वादिति भावः। मास्तूपदेश इत्यत आह ॥ अनुपदिष्टश्चेति ॥

### साध्याप्रसिद्धेरदूषणत्वसमर्थनम्

(टी.) हेत्वन्तरेण अप्रसिद्धसाध्यस्य हेतोः साधकत्वं साधयति

## परिशेषार्थापत्तिप्रामाण्याभ्युपगमाच्च

परिशेषस्य अर्थापत्तेश्च प्रामाण्यं तावत् सर्वैरङ्गीकृतम्। तत्साध्यं अप्रसिद्धमपि दृश्यते। अतो न कुत्रापि साध्याप्रसिद्धेर्दूषणत्वम्।

इतोऽपि नाप्रसिद्धसाध्यस्य असाधकत्वमित्याह

**'विमतं सकर्तृकं' इत्यत्र सर्वज्ञत्वस्य पक्षधर्मताबलेन सिद्ध्यङ्गीकारात्**

'भूभूधरादिकं सकर्तृकं कार्यत्वात् घटवत्' इत्यनुमानेन परैः ईश्वरे सर्वज्ञत्वसिद्धिरङ्गीक्रियते। यद्यपि कार्यत्वं सकर्तृकत्वमात्रेण व्याप्तं तथापि भूभूधरादिपक्षधर्मताबलेन सर्वज्ञमेव कर्तारं गमयति। उपादानाऽदिविषयज्ञानवत एव कर्तृत्वात्। न च सर्वज्ञत्वं प्रसिद्धम्। अतस्तद्वत् न कुत्रापि अप्रसिद्धसाध्यस्य दूषणत्वमिति।

अनेनैव व्यधिकरणत्वेऽपि साधकत्वं चोपपादितं भवति। भूभूधराऽदिनिष्ठेन कार्यत्वेन हेतुना ईश्वरे सर्वज्ञत्वसिद्ध्यङ्गीकारात् न कुत्रापि साध्यसाधनयोर्व्यधिकरणत्वं दूषणमिति।

(टी.) एतेनैव अवयवनियमश्च परास्तः । न हि पक्षधर्मताबलेन सर्वज्ञत्वसिद्धाववयवनियमोऽस्ति ।

(रा. टि.) ॥ हेत्वन्तरेणेति ॥ प्रागुक्तातिप्रसङ्गभावरूपहेत्वपेक्षया अप्रसिद्धसाध्यकस्यापि साधकत्वदृष्टिरूपहेत्वन्तरेणेत्यर्थः । पक्षधर्मताबलेनेत्येतद्विवृणोति ॥ यद्यपीति ॥ अनेनैवेति ॥ विमतमित्यादिवाक्येनैवेत्यर्थः । कथम्? इत्यत आह ॥ भूभूधरेति ॥ हेतुर्भूम्यादिनिष्ठः साध्यमीश्वरनिष्ठमिति हेतुसाध्ययोर्वैयधिकरण्येऽपि प्रामाण्योपगमात् न कुत्रापि वैयधिकरण्यं दोष इत्यर्थः ।

(श्री. टि.) अप्रसिद्धसाध्यस्य अप्रसिद्धसाध्यसाधकस्य । विमतिविषयं विवेचयति ॥ भूभूधरादिकमिति ॥ कुत्रापीति ॥ जीवच्छरीरं सात्मकमित्यादावपीत्यर्थः । कथम्? इत्यत आह ॥ भूभूधरादीति । ॥ एतेनेति ॥ पक्षधर्मताबलेन ईश्वरे सर्वज्ञत्वसिद्ध्यङ्गीकारेणेत्यर्थः ॥ न हीति ॥ दृष्टान्ताभावेन हेतोः पक्षधर्मताबललभ्यसाध्येन व्याप्तिग्रहणायोगेन उदाहरणरूपावयवाभावादिति भावः ।

### परिशेषार्थापत्त्योरनुमानत्वसमर्थनम्

(टी.) नन्वप्रसिद्धसाध्ययोः परिशेषार्थापत्त्योः प्रामाण्याभ्युपगमेऽपि किमायातमप्रसिद्धसाध्यस्यानुमानस्य साधकत्वे? इत्यत आह

## परिशेषोऽर्थापत्तिरनुमानमित्यविशेषः

अप्रसिद्धसाध्यस्य परिशेषादेः साधकत्वे अनुमानस्यैव तदुक्तं स्यात् । परिशेषादिरनुमानमित्यनतिभिन्नार्थत्वात् ।

तत्कुतः? इत्यत आह

## उपपत्तिमात्रत्वात्

इहोपपत्तिरन्यथानुपपत्तिर्ज्ञातव्या ।

परिशेषार्थापत्त्योः अन्यथानुपपत्तित्वेऽपि कुतोऽनुमानत्वं? इत्यत आह

## उपपत्तेश्च व्याप्त्यपेक्षा सर्वथा अङ्गीकार्येत्याग्रहमात्रेण भेदः

अन्यथानुपपत्तिर्हि केनचित् विना कस्यचिदसम्भवः । असम्भवश्च न तावदनुत्पत्तिः । बहिर्भावादिनाऽपि गृहाभावादेरजन्यत्वात् । अतोऽनवस्थानमेवासम्भव इति वाच्यम् । तस्य च व्याप्त्यपेक्षा सर्वथा अङ्गीकार्या । केनचिद्विना कस्यचिदनवस्थानं हि तयोर्व्याप्तिं विना नोपपद्यते । व्याप्त्य-

**(टी.) पेक्षया अर्थान्तरगमकमनुमानमिति चोक्तम् । एवमपि परिशेषादेरनुमानत्वानङ्गीकारे धूमोऽप्यन्यथानुपपत्त्या अग्निं गमयन् नानुमानं स्यात् । अतो दुर्दर्शनाभ्यासविशेषविजृम्भिताऽग्रहमात्रेण अनुमानात् अर्थापत्त्यादेर्भेदो वादिभिरङ्गीक्रियत इति ।**

(रा. टि.) पृथक् प्रमाणत्वमुपेत्य शङ्कते ॥ **नन्वप्रसिद्धत्यादिना** ॥ परिशेषार्थापत्त्योरिति अनुपपद्यमानार्थादिरूपकरणग्रहणम् । तस्यान्यथानुपपत्तित्वं अन्यथानुपपत्तिमत्त्वं । धर्मधर्मिणोरभेदेन अन्यथानुपपत्तित्वेऽपीत्युक्तिरिति ज्ञेयम् ।

॥ **अन्यथानुपपत्तिर्हीति** ॥ परिशेषार्थापत्त्योरिति योज्यम् । उपपत्तिशब्दस्य अन्यथानुपपत्तिरर्थ इत्युक्तत्वात् अन्यथानुपपत्तिर्हीत्युक्तम् ॥ **तयोर्व्याप्तिं विना नोपपद्यत इति** ॥ यद्यपि केनचित् विना कस्यचित् अनवस्थानरूपान्यथानुपपत्तिरेव अविनाभावरूपा व्याप्तिः । न तु ततोऽन्या । अत एवाग्रे 'एवमपि व्याप्त्यपेक्षया अर्थगमकत्वेऽपि परिशेषादेरनुमानत्वानङ्गीकारे' इत्यापादकमुक्त्वा आपाद्ये 'धूमोऽपि व्याप्त्या गमयन्' इति वक्तव्ये तयोरैक्यबुद्ध्या व्याप्तिपदस्थाने अन्यथानुपपत्त्येत्युक्तम् । तथापि इह भेदोक्तिः **उपपत्तेश्च व्याप्त्यपेक्षा** इति मूले भेदप्रतीत्या तन्निर्वाहाय अनुपपत्तिनियामकोर्ध्वाधरीभावकार्यकारणभावाद्यभिप्राया वा नियतसामानाधिकरण्यानौपाधिकसम्बन्धादिरूपपराभिमतव्याप्त्यभिप्राया वेति **तर्कताण्डवे** व्याख्यातम् ॥ **इति चोक्तमिति** ॥ **त एव सोपपत्तयो लिङ्गानि** इत्येतद्व्याख्यानावसर इति भावः । मूलशेषस्यार्थमाह ॥ **दुर्दर्शनेति** ॥

(श्री. टि.) ॥ **अनुमानस्येति** ॥ न हि परिशेषादिकमनुमानमिति भावः ॥ **तदुक्तं स्यादिति** ॥ साधकत्वमुक्तं स्यादित्यर्थः । अविशेषशब्दार्थमाह ॥ **अनतिभिन्नार्थत्वादिति** ॥ घटपटशब्दवत् अत्यन्तभिन्नार्थत्वाभावादित्यर्थः ।

॥ **तदिति** ॥ अविशेषशब्दोक्तमनतिभिन्नार्थत्वमित्यर्थः । ननु प्रसक्तप्रतिषेधे परिशिष्यमाणे बुद्धिरूपपरिशेषस्य अनुपपद्यमानार्थदर्शनात् तदुपपादके बुद्धिरूपार्थापत्तेश्च साध्यत्वेन साधनत्वापरपर्यायोपपत्तित्वाभावात् कथं परिशेषार्थापत्त्योरुपपत्तिस्वरूपत्वमुच्यते ? इत्यत आह ॥ **इहेति** ॥ अत्र परिशिष्यमाणे बुद्धिं विना प्रसक्तप्रतिषेधस्य अनुपपत्तेः परिशेषस्यापि अन्यथानुपपत्तित्वं ज्ञातव्यम् ।

मूले उपपत्तेरित्यस्य अन्यथानुपपत्तेरित्यर्थः । अनवस्थानस्य व्याप्त्यपेक्षामुपपादयति ॥ **केनचिदिति** ॥ बहिर्भावेनेत्यर्थः । कस्यचित् गृहे असत्त्वस्य ॥ **एवमपीति** ॥ व्याप्त्यपेक्षया अर्थगमकत्वे विद्यमानेऽपीत्यर्थः ॥ **विजृम्भितेति** ॥ उपोद्बलितेत्यर्थः ।

(टी.) प्रसङ्गात् उपमानस्याप्यनुमानत्वं प्रागुक्तं साधयितुमाह

उपमानस्यापि

अपिपदेन 'आग्रहमात्रेण भेदः' इत्यनुकृष्यते ।

कुतः? इत्यत आह

व्याप्तिरूपत्वात्

व्याप्तिसापेक्षमर्थगमकं ह्यनुमानम् । उपमानस्यापि व्याप्तिसापेक्षत्वात् नानुमानात् भेदः ।

कथमुपमाने व्याप्तिः? इत्यतस्तामुपपादयति

न हि स्वसदृशेनासदृशं क्वचित् दृष्टम्

'यो यद्गतसादृश्यप्रतियोगी स तेन सदृशः' इति हि व्याप्तिरुपमाने विवक्षिता। 'न हि यत् येन सदृशं तत् तेन असदृशं क्वापि दृष्टम्' येनेयं व्याप्तिरनुपपन्ना स्यादिति मीमांसकोपमानस्य व्याप्तिरुपपादिता भवति। नैयायिकोपमानेऽपि न हि योऽगोत्वे सति गोसदृशः असौ गवयशब्द-वाच्यात् अन्यो दृष्ट' इत्यादिरूपेण व्याप्तिरूपपादनीया ।

(श्री. टि.) ॥ प्रसङ्गादिति ॥ स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । स्मृतिश्च परिशेषादेर्व्याप्त्यपेक्षया अर्थगम-कत्वेन अनुमानत्वोपपादनात् जातेति भावः ॥ प्रागुक्तमिति ॥ अर्थापत्त्युपमे अनुमाविशेषः इति प्रागुक्तमि-त्यर्थः । पुनरुक्तिपरिहाराय साधयितुमित्युक्तम् । पूर्वं तु वाङ्मात्रेणैवोक्तमिति भावः ॥ अनुपपन्ना स्यादिति ॥ व्यभिचारेणेत्यर्थः ॥ मीमांसकोपमानस्येति ॥ सादृश्यप्रमासाधनमुपमानमित्यस्येत्यर्थः ॥ नैयायिकेति ॥ अकृतसमयसञ्ज्ञास्मरणसहायं तत्समभिव्याहृतवाक्यार्थप्रत्यभिज्ञाप्रत्यक्षं उपमानमित्युक्तोपमानेऽपीत्यर्थः ।

अनुपलब्धेरनुमानत्वसमर्थनम्

(टी.) अभावप्रमाणस्यापि अनुमानेऽन्तर्भावमुपपादयति

योग्यानुपलब्धेश्च लिङ्गत्वम्

भावानुपलब्धिरभावप्रमाणमङ्गीक्रियते । सापि अर्थे लिङ्गमेव । न तु पृथक्प्रमाणम् । कुतः? न ह्यनुपलब्धिमात्रमभावगमकमङ्गीक्रियते । किं तु? उपलब्धियोग्यस्यानुपलब्धिः ।

(टी.) तथापि कुतोऽनुमानत्वं इत्यत आह

अविशेषात्

अनुपलब्धिमभावप्रमाणमङ्गीकुर्वता योग्यस्यानुपलब्धिरिति कस्मादुच्यते ? अनुपलब्धिमात्रस्य अभावव्यभिचारादिति चेत् । तत् किं योग्यानुपलब्धिरभावाव्यभिचारिणी ? बाढमिति चेत् हन्त तर्हि व्याप्तिसापेक्षा अर्थं गमयतीत्यङ्गीकृतं स्यात् । तथा च प्रसिद्धानुमानादविशेषादनुमानमेवेति ।

किं चानुपलब्धेरभावगमकत्वे अभावत्वाविशेषात् अनुपलब्ध्यन्तरापेक्षेत्यनवस्था स्यादित्याह

अविशेषात्

अस्मत्पक्षे स्वप्रकाशसाक्षिसिद्धत्वाददोषः ।

न च वाच्यमनुपलब्धिरज्ञातैवार्थं बोधयतीति । तथा सत्यनुपलब्धित्वाविशेषात् सुषुप्त्यादावपि बोधयेदित्याह

अविशेषात्

न च चक्षुरादिवदुपपत्तिः । तस्य सम्प्रयोगादिविशेषापेक्षत्वात् । अनुपलब्धेस्तदभावादित्याह

अविशेषात्

(रा. टि.) व्याप्तिसापेक्षा अर्थं गमयतीत्यत्र अनुपलब्धिरिति विशेष्यं योज्यम् । इत्याह अविशेषात् इत्यत्र-अभावत्वाविशेषात् अनुपलब्धेरित्यर्थः । साक्षिणोऽपि अन्येन ज्ञातव्यत्वे अनवस्था इत्यत उक्तम् स्वप्रकाशेति ॥ साक्षिसिद्धत्वादिति ॥ अनुपलब्धेरिति योज्यम् । प्रतियोगिनः साक्षिसिद्धत्वे तदभावस्यापि तथात्वादिति भावः । अन्त्ययोजनायां अविशेषात् इत्यस्य अनुपलब्धेः सम्प्रयोगरूपविशेषाभावादित्यर्थः ।

(श्री. टि.) ॥ अभावप्रमाणस्यापीति ॥ अभावप्रमितिकरणस्य अनुपलब्धिरूपप्रमाणस्यापीत्यर्थः । अभावप्रमाणं अभावप्रमापकं । अर्थे अभावे ॥ लिङ्गमेवेति ॥ 'अत्र घटो नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वात्' इति लिङ्गत्वेन ज्ञापिकेत्यर्थः ॥ न हीति ॥ तथात्वे परमाण्वादेरप्यभावप्रमा स्यादिति भावः ॥ व्यभिचारादिति ॥ 'यत् नोपलभ्यते तत् नास्ति' इत्यस्य परमाण्वादौ व्यभिचारादित्यर्थः । बाढं दृढं । गाढबाढदृढानि च इत्यमरः ॥ व्याप्तीति ॥ अव्यभिचरितसम्बन्धस्यैव व्याप्तित्वादित्यर्थः । गमयति अनुपलब्धिः ॥ अभावत्वाविशेषादिति ॥ अनुपलब्धेरपि उपलब्ध्यभावरूपत्वादिति भावः ।

(श्री. टि.) नन्वनुपलब्धेः लिङ्गत्वेन अभावप्रमापकत्वे अज्ञाताया अनुपलब्धेः लिङ्गत्वायोगात् ज्ञाताया एव लिङ्गत्वेवाच्ये उपलब्ध्यभावरूपानुपलब्धिज्ञानमपि उपलब्धिविषयकानुपलब्धिरूपलिङ्गेनैवेति वाच्यम् । तत्राप्येवमिति योग्यानुपलब्धेः लिङ्गत्वेन ज्ञापकत्वपक्षेऽपि अनवस्था स्यादेव इत्यत आह ॥ अस्मत्पक्ष इति ॥ उपलब्धेः साक्षिवेद्यत्वेन तदभावरूपानुपलब्धेरपि साक्षिणैव सिद्धत्वात् नानुपलब्धेः लिङ्गत्वेन ज्ञापकत्वपक्षे अनवस्थादोष इत्यर्थः । लिङ्गभूतानुपलब्धिग्राहकस्य साक्षिणोऽपि ग्राहकमन्यदङ्गीकार्यम् । तस्यापि पुनर्ग्राहकान्तरमङ्गीकार्यमित्यनवस्थैव इत्यत उक्तम् स्वप्रकाशेति । स्वविषयकज्ञानस्वरूपेत्यर्थः । तथा च विशेषबलेन स्वस्यैव स्वग्राहकत्वाङ्गीकारात् न ग्राहकानवस्थेति भावः ।

नन्वनुपलब्धिः न लिङ्गत्वेनाभावज्ञापिका । किं तु ? स्वातन्त्र्येणैव । कुतः ? इति चेत्, लिङ्गस्य ज्ञातकरणत्वात्, अनुपलब्धेश्च अज्ञाताया एव करणत्वात् इत्याशङ्क्य निषेधति ॥ न च वाच्यमिति ॥ अनुपलब्धित्वाविशेषादिति ॥ अज्ञाताया एव बोधकत्वाविशेषादित्यर्थः ॥ बोधयेदिति ॥ घटाभावबोधं जनयेदित्यर्थः । न चेष्टापत्तिरिति वाच्यम् । तदानीं बाह्यपदार्थज्ञानमात्राभावस्य सर्वसंमतत्वात् । घटाद्यभावस्यापि बाह्यपदार्थत्वादिति भावः ।

ननु यथा चक्षुरादीन्द्रियसद्भावेऽपि जागरावस्थायां न नियमेन ज्ञानम् । एवं सुषुप्तौ अनुपलब्धिसद्भावेऽपि नाभावबोधः इत्याशङ्कां प्रतिषेधति ॥ न चेति ॥ युज्यते चक्षुरादिसद्भावेऽपि कदाचिज्ज्ञानाभावः । अर्थसन्निकर्षरूपावान्तरव्यापारादिरूपविशेषाभावात् । तादृशविशेषवत एव चक्षुरादेर्नियमेन ज्ञानसाधनत्वाङ्गीकारादित्याह ॥ तस्येति ॥ सम्प्रयोगोऽर्थसन्निकर्षः । आदिपदेन मनोधिष्ठितत्वादिग्रहणम् । ननु तर्ह्येवमेव सुषुप्तावपि अनुपलब्धेः सत्त्वेऽपि अवान्तरव्यापाररूपविशेषाभावादेव नाभावबोध इत्यत आह ॥ अनुपलब्धेरिति ॥ तदभावादिति ॥ सम्प्रयोगादिरूपविशेषाभावादित्याहेत्यर्थः । अनेन अविशेषात् इति मूलार्थोऽप्युक्त इति द्रष्टव्यम् ।

### प्रतिज्ञाविरोधादिषु सर्वानुमानदोषान्तर्भावः

(टी.) त्रिविधो विरोध इत्यादिनोक्तस्योपयोगमाह

## उक्तदोषेष्वेवाशेषानुमानदोषाणामन्तर्भावः

ये प्रतिज्ञाविरोधादयो दोषा उक्ताः तेष्वेव अशेषानुमानदोषाणां हेत्वाभासादीनामन्तर्भावः । अतो नोक्तदोषातिरेक इति । तत्र प्रबलप्रमाणविरोधः कालातीतः । समबलेन हेत्वन्तरेण विरोधः सन्देहतो व्याप्यत्वासिद्धिः सत्प्रतिपक्षश्चेत्युक्तम् । तेनैव हेतुना चेत् प्रकरणसमः । असिद्धिः स्वरूपासिद्धिः । व्यर्थविशेषणासिद्ध्यादेराधिक्ये अन्तर्भावः ।

(रा. टि.) 'स श्यामो मित्रातनयत्वात्' इत्यत्र शाकपाकजत्वाभावरूपप्रतिपक्षसन्देहात् सन्देहतो व्याप्यत्वासिद्धिरित्युक्तम् ।। इत्युक्तमिति ।। प्रतिज्ञायाः समबलप्रमाणविरोध एव सप्रतिसाधन इत्यत्रोक्तमित्यर्थः ।। प्रकरणसम इति ।। सोऽपि सप्रतिसाधनवदेव प्रतिज्ञाविरोध एव अन्तर्भूत इति भावः । अन्येषामपि हेत्वाभासानां अन्तर्भावमाह ।। असिद्धिरित्यादिना ।।

(श्री. टि.) ।। उक्तस्येति ।। हेत्वाभासादेरन्तर्भावं वक्तुमुक्तस्येत्यर्थः । अनुमानदोषाणां परोक्तानां ।। उक्तदोषेति ।। अस्मदुक्तेभ्यो विरोधादिदोषेभ्यः परोक्तानामनुमानदोषाणामतिरेको नेत्यर्थः । अन्तर्भावप्रकारमेव विशदयति ।। तत्रेत्यादिना ।। कालात्ययीतः प्रतिज्ञायाः प्रबलप्रमाणविरोध इत्यन्वयः ।। सन्देहत इति ।। व्याप्यत्वासिद्धो द्विविधः, एको व्याप्तिग्राहकप्रमाणाभावात् अपरस्तु उपाधिसद्भावादिति । तत्र उपाधिसद्भावात् यो व्याप्यत्वासिद्धः स सन्देहतो व्याप्यत्वासिद्ध इत्युच्यते । उपाधिसन्देहेन हेतोर्व्याप्तिसन्देहादित्यर्थः ।। सत्प्रतिपक्षश्चेति ।। निश्चितोपाधिव्यतिरेकेण साध्याभावसाधनं सत्प्रतिपक्ष इत्युच्यत इत्यर्थः । तथा च सन्देहतो व्याप्यत्वासिद्धः सत्प्रतिपक्षश्च समबलेन हेत्वन्तरेण विरोध इत्यन्वयः । प्रतिज्ञायाः समबलप्रमाणविरोधो द्विविधः, हेत्वन्तरेण तेनैव हेतुना चेति । तत्र सन्देहतो व्याप्यत्वासिद्ध्यादिकं समबलेन हेत्वन्तरेण विरोधे अन्तर्भवतीत्याशयः ।। तेनैवेति ।। तेनैव हेतुना चेत् विरोधः स परमते प्रकरणसम इत्युच्यते । तस्य तत्रान्तर्भाव इत्यर्थः ।

।। असिद्धिरिति ।। परमते असिद्धिस्त्रिविधा । आश्रयासिद्धिः व्याप्यत्वासिद्धिः स्वरूपासिद्धिश्चेति । तत्र आश्रयासिद्धिरदूषणमित्युक्तम् । व्याप्यत्वासिद्धेरन्तर्भावस्तु उत्तरत्र वक्ष्यते । अवशिष्टा स्वरूपासिद्धिरूपा या असिद्धिः सा स्वरूपासिद्धिः अस्मदुक्ते हेतुस्वरूपासिद्धिरूपे हेतुविरोधे अन्तर्भूतेत्यर्थः । व्यर्थविशेषणासिद्ध्यादेः इत्यत्र आदिपदेन व्यर्थविशेष्यासिद्धिसंग्रहः ।।

(टी.) व्याप्यत्वासिद्धविरुद्धानैकान्तिकानध्यवसितानामव्याप्तौ । आद्यस्य साध्यसम्बन्धाभावात् । उत्तरयोस्तु विपक्षवृत्तित्वेन साध्यव्यभिचारात् । अनध्यवसितस्यापि पक्ष एव वर्तमानत्वेन व्याप्तेरग्रहणात् । व्यतिरेकव्याप्तिस्तत्र गृह्यतामिति चेन्न । सपक्षविपक्षाभावे सपक्षमात्रभावे वा तदयोगात् । सपक्षविपक्षभावे च अन्वयस्यैव प्रथमप्राप्तत्वेन सत्यपि सपक्षे तदनुपलब्धौ व्याप्त्यनिश्चयात् । सपक्षैकदेशवृत्त्यन्वयव्यतिरेकिवत् अस्य व्याप्तिः किं न गृह्यते ? इति चेन्न । सपक्षैकदेशेऽपि अवृत्त्या किमत्र व्याप्तिरेव नास्ति ? उत सपक्षैकदेशवृत्तिवत् अस्ति व्याप्तिः ? इति सन्देहावस्कन्दनात् ।

(रा. टि.) अव्याप्तौ इत्युक्तान्तर्भावं व्यनक्ति ।। आद्यस्येत्यादिना ।। सपक्षविपक्षाभाव इति ।। 'सर्वं अनित्यं सत्त्वात्' इत्यादौ 'सर्वं कार्यं नित्यं उत्पत्तिमत्त्वात्' इत्यादौ चेत्यर्थः ।। सपक्षविपक्षभावे चेति ।। 'शब्दोऽनित्यः आकाशविशेषगुणत्वात्' इत्यादाविति भावः ।। सपक्षैकदेशेति ।। 'पर्वतोऽग्निमान् धूमवत्त्वात्' [1] इत्यादाविति भावः ।

---

[1] इत्यादाविवेति भावः

(श्री. टि.) ॥ **व्याप्यत्वासिद्धेति** ॥ व्याप्तिग्राहकप्रमाणाभावेन व्याप्यत्वासिद्धेत्यर्थः। चतुर्णामपि क्रमेण अव्याप्तौ अन्तर्भावमुपपादयति ॥ **आद्यस्येत्यादिना** ॥ **साध्येति** ॥ जलधरपटले सत्त्वरूपहेतोः पूर्वापरकलाविकलकालवर्तित्वरूपक्षणिकत्वलक्षणसाध्यसम्बन्धस्य प्रमाणाभावेन गृहीतुमशक्यत्वादिति भावः। उत्तरयोः विरुद्धानैकान्तिकयोः। [1]साध्येन तदभावेनापि सम्बन्धादित्यर्थः ॥ **पक्ष एवेति** ॥ 'भूर्नित्या गन्धवत्त्वात्' इत्यत्र गन्धवत्त्वरूपहेतोः साध्यतदभावाभ्यामुभाभ्यामपि सम्बन्धो नास्तीति भावः।

ननु कथं तत्र व्याप्त्यग्रहणं? येन अव्याप्त्यन्तर्भावः स्यात्। किं तु? यत्र नित्यत्वाभावः तत्र गन्धवत्त्वाभावः यथा जलादौ इति व्यतिरेकव्याप्तिग्रहणसम्भवात् इत्याशङ्कते ॥ **व्यतिरेकव्याप्तिरिति** ॥ 'भूर्नित्या गन्धवत्त्वात्' 'शब्दो नित्यः आकाशविशेषगुणत्वात्' इत्येवंरूपो यो विद्यमानसपक्षविपक्षः पक्षमात्रवृत्तिरनध्यवसितः तत्र व्यतिरेकव्याप्तिग्रहसम्भवेऽपि यः अविद्यमानसपक्षविपक्षः पक्षमात्रवृत्तिः 'सर्वमनित्यं प्रमेयत्वात्' इत्येवंरूपोऽनध्यवसितः तत्र विपक्षस्यैवाभावेन व्यतिरेकव्याप्तिग्रहो न सम्भवति। तथा सपक्षवान् विपक्षरहितः पक्षमात्रवृत्तिः 'शब्दोऽभिधेयः शब्दत्वात्' इत्येवंरूपोऽनध्यवसितः तत्र सपक्षमात्रस्यैव सत्त्वेन विपक्षाभावात् न व्यतिरेकव्याप्तिग्रहस्तत्र सम्भवतीत्याह ॥ **सपक्षविपक्षाभाव इत्यादिना** ॥ **तदयोगादिति** ॥ व्यतिरेकव्याप्तिग्रहायोगादित्यर्थः। तथा च युक्तोऽव्याप्त्यन्तर्भाव इति भावः।

ननु तथापि विद्यमानसपक्षविपक्षः पक्षमात्रवृत्तिरनध्यवसितो गन्धवत्त्वाकाशविशेषगुणत्वादिः तत्र सुखेन व्यतिरेकव्याप्तिग्रहः सम्भवतीति चेत् तत्राह ॥ **सपक्षविपक्षभावे चेति** ॥ तदनुपलब्धौ तस्या अन्वयव्याप्तेः सपक्षे अनुपलब्धौ ॥ **व्याप्त्यनिश्चयादिति** ॥ सत्यपि सपक्षे तत्र अविद्यमानत्वात् किमस्य व्याप्तिरेव नास्ति? उत विपक्षात् व्यावृत्तत्वात् अस्ति व्याप्तिरिति सन्देहेन व्याप्त्यनिश्चयादिति भावः। ननु सत्यपि सपक्षे तदनुपलब्धौ व्याप्त्यनिश्चयात् इत्ययुक्तम्। तथात्वे अन्वयव्यतिरेकिणि धूमानुमानेऽपि व्याप्त्यनिश्चयापत्तेः। तत्रापि सपक्षे महानसादौ हेतोः सत्त्वेऽपि अयोगोलकादितदेकदेशे अभावात्। अतो यथा अन्वयव्यतिरेकिणि सपक्षैकदेश वृत्तित्वेऽपि सपक्षैकदेशावृत्तित्वेन सपक्षावृत्तित्वसद्भावेपि अस्ति व्याप्तिः एवं अनध्यवसितस्यापि सपक्षैकदेशेऽप्यवृत्त्या सपक्षावृत्तित्वमस्तीति तत्साम्यात् व्याप्तिर्गृह्यतामित्याशङ्कते ॥ **सपक्षैकदेशवृत्तीति** ॥ अन्वयव्यतिरेकिवत् सपक्षैकदेशेऽपि अवृत्त्या किमत्र गन्धवत्त्वादिहेतौ व्याप्तिरेव नास्ति? उत अन्वयव्यतिरेकिणि सपक्षैकदेशवृत्तित्वेऽपि सपक्षैकदेशान्तरे अवृत्त्या सपक्षावृत्तित्वसद्भावेऽपि अस्ति व्याप्तिः, एवं अत्रापि सपक्षैकदेशेऽपि अवृत्त्या सपक्षावृत्तित्वमस्तीति सपक्षावृत्तित्वेन तत्साम्यात् [2]व्याप्तिरस्ति वा न वेति सन्देहावस्कन्दनात् न व्याप्तिनिश्चय इति युक्तोऽव्याप्तौ अन्तर्भाव इति साम्प्रदायिकोऽर्थः।

अन्ये तु, अत्र धूमानुमाने। तथा च धूमस्यापि [3]सकलसपक्षवृत्तित्वात् किं नास्ति व्याप्तिः? उत सकलसपक्षावृत्तित्वेऽपि तदेकदेशवृत्तित्वादस्ति व्याप्तिः? इति सन्देहात् न व्याप्तिनिश्चय इत्यभिप्रायमुक्त्वा,

---

[1] साध्याभावेनैव, साध्येन तदभावेनापि इति पाठेन भाव्यमिति भाति. [2] व्याप्तिरस्ति? एवं व्याप्तिरस्ति वा न वेति.
[3] सकलसपक्षावृत्तित्वात्

(श्री. टि.) ननु तर्हि सकललोकव्यवहारोच्छेद इत्याशङ्क्य अकारणकार्योत्पत्तिरूपबाधकतर्कसद्भावेन तत्र शङ्का-परिहारः। अत्र तु अनुकूलतर्काभावात् न शङ्कानिरास इति बोध्यम् इत्याहुः ॥

(टी.) व्यतिरेकतोऽनैकान्तिक एवानध्यवसित इत्येके । तदसत् । सपक्षविपक्षरहिते तदयोगात् । असिद्धविरुद्धयोरपि तत्त्वप्रसङ्गाच्चेति ।

(रा. टि.) ॥ व्यतिरेकत इति ॥ 'शब्दो नित्यः आकाशविशेषगुणत्वात्' इत्यादौ हेतोरन्वयस्य भूमिः पक्षसपक्षौ । व्यतिरेकस्य भूमिः विपक्षः सपक्षैकदेशश्च । तदतिक्रमेण विपक्षे सपक्षे सर्वत्र व्यतिरेकतो वर्तमानः असाधारणोऽनैकान्तिको भवति । सपक्षं पक्षं च अतिक्रम्य विपक्षे वर्तमानो यथा अन्वयतः साधारणानैकान्तिकः तथेत्याहुरित्यर्थः ॥ तदयोगादिति ॥ साधनव्यतिरेकस्य सपक्षे सर्वत्र वृत्तिमत्त्वस्य अभावेन व्यतिरेकव्यभिचारायोगादित्यर्थः ॥ तत्त्वप्रसङ्गादिति ॥ 'शब्दो नित्यश्चाक्षुषत्वात्, नित्यः शब्दः कृतकत्वात्' इत्यसिद्धविरुद्धयोरपि विपक्षवृत्तित्वेन अनैकान्तिकत्वदोष एवान्तर्भावापाताच्चेत्यर्थः ।

(श्री. टि.) व्यतिरेकतोऽनैकान्तिक एवेति ॥ एवकारेण अन्वयानैकान्तिकव्यवच्छेदः । अयमर्थः, सव्यभिचारोऽनैकान्तिकः । स्वस्थानमतिलङ्घ्य अन्यत्र वृत्तिर्हि व्यभिचारः । स द्विविधः अन्वयतो व्यतिरेकतश्चेति । तत्र अन्वयस्य भूमिः पक्षः सपक्षश्च । तदतिक्रमेण विपक्षेऽपि वर्तमानो हेतुरन्वयतोऽनैकान्तिकः । साधारणोऽनैकान्तिक इति यावत् । हेतुव्यतिरेकस्य भूमिर्विपक्षः सपक्षैकदेशश्च । तदतिक्रमेण सर्वस्मिन्नपि सपक्षे अवर्तमानो हेतुर्व्यतिरेकतोऽनैकान्तिकः । असाधारणोऽनैकान्तिक इति यावत् । यथोक्तं परैः

> तत्र सव्यभिचारः स्यादनेकान्तः स च द्विधः ।
> साधारणस्तथा हेतुरसाधारण इत्यपि ॥
> आद्योऽन्वयादनेकान्तः पक्षत्रयकृतान्वयः ।
> व्यतिरेकादनेकान्तः पक्षमात्रान्वयः परः ॥ इति ।

॥ सपक्षविपक्षरहित इति ॥ सपक्षविपक्षरहिते 'सर्वमनित्यं प्रमेयत्वात्' इत्यनध्यवसिते हेतुव्यतिरेकस्य स्वस्थानमतिलङ्घ्य अन्यत्र वृत्तेरयोगेन अनध्यवसितत्वं न स्यादित्यर्थः ॥ असिद्धविरुद्धयोरपीति ॥ तत्त्वं अनध्यवसितत्वं। 'शब्दो नित्यश्चाक्षुषत्वात्' इत्याद्यसिद्धे चाक्षुषत्वादावपि हेतुव्यतिरेकस्य विपक्षसपक्षैकदेशरूपस्वस्थानमतिलङ्घ्य [1]अन्यत्र पक्षेऽपि सत्त्वेन असिद्धस्यापि अनध्यवसितत्वापत्तिः । तथा 'शब्दो नित्यः कृतकत्वात्' इत्यादौ विरुद्धे कृतकत्वादावपि हेतुव्यतिरेकस्य विपक्षसपक्षैकदेशरूपं स्वस्थानमुल्लङ्घ्य गगनादौ सर्वस्मिन्नपि सपक्षे विद्यमानत्वात् विरुद्धस्यापि अनध्यवसितत्वापत्तिरित्यर्थ इति सम्प्रदायः ।

[1] सर्वस्मिन्नपि सपक्षे सत्वेन इति पाठः साधुरिति भाति.

(टी.) दृष्टान्तविरोध एव उदाहरणाभासानामन्तर्भावः । आश्रयहीनत्वं पूर्ववत् अदूषणम् । अव्याप्त्यभिधानं न्यूने । विपरीतव्याप्त्यभिधानं असङ्गतौ । तर्कपराहतेरसिद्ध्यादाविति ।

(रा. टि.) ॥ पूर्ववदिति ॥ आश्रयासिद्धिवदित्यर्थः ॥ अव्याप्त्यभिधानमिति ॥ व्याप्त्यनभिधानमित्यर्थः ॥ असिद्ध्यादाविति ॥ 'यदि अत्र शब्दे चाक्षुषत्वं स्यात् बधिरस्यापि चक्षुषा शब्द उपलभ्येत ' नोपलभ्यते अतो न ' इत्येवमसिद्ध्यादौ हेतुदोषे अन्तर्भवति । आदिपदेन व्याप्यत्वासिद्धिग्रहः ।

(श्री. टि.)॥ उदाहरणाभासानामिति ॥ साध्यवैकल्यं साधनवैकल्यं उभयवैकल्यं आश्रयहीनत्वं अव्याप्त्यभिधानं विपरीतव्याप्त्यभिधानमिति साधर्म्योदाहरणदोषाः । एवं साध्याव्यावृत्त्यादयो वैधर्म्योदाहरणदोषाश्च परोदीरिताः सन्ति । तत्र साध्यवैकल्यादित्रयाणामेव दृष्टान्तविरोधेऽन्तर्भाव इत्यर्थः ॥ आश्रयेति ॥ दृष्टान्तरूपाश्रयेत्यर्थः ॥ पूर्ववदिति ॥ आश्रयासिद्धिन्यायेनेत्यर्थः ॥ अव्याप्त्यभिधानमिति ॥ व्याप्त्यनभिधानमित्यर्थः ॥ विपरीतव्याप्त्यभिधानमिति ॥ साध्यपुरस्सरं व्याप्त्यभिधानं हि विपरीतव्याप्त्यभिधानं । इदं च असङ्गतमेव । हेतुपुरस्सरं सम्यग्व्याप्त्यभिधानस्यैव पराकांक्षितत्वेन सङ्गतत्वादिति भावः ॥ असिद्ध्यादाविति ॥ 'यदि पीतमुदकं परं अन्तरधक्ष्यत् तर्हि तदविशिष्टं मामपि दहेत् अविशेषात् ' इति तर्कपराहतौ पीतोदकस्य अन्तर्दाहजनकत्वरूपापादकस्य असिद्धत्वेन हेतुस्वरूपासिद्धिरूपहेतुविरोधे अन्तर्भाव इत्यर्थः । आदिपदेन प्रमाणबाधग्रहणम् । मामपि दहेदित्यस्य बाधितत्वादिति भावः ।

साध्याविशिष्टस्य असिद्धान्तर्भावः

(टी.) तथापि साध्याविशिष्टत्वं हेतोर्दूषणान्तरमस्तीत्यत आह

## साध्याविशिष्टोऽसिद्धः

पर्वतोऽग्निमान् अग्निमत्वादिति साध्याविशिष्टो हेतुरसिद्ध एवान्तर्भवति । साध्यमेव ह्यत्र हेतुः । न हि साध्यं सिद्धम् । व्याहतेरेव । न च वाच्यं साध्याविशिष्टो हेतुरव्याप्तौ किं नान्तर्भवति ? व्याप्तेरुभयधर्मत्वेन स्वेनैव स्वस्य व्याप्त्ययोगादिति । विवक्षितस्थले लिङ्गदर्शनानन्तरं हि व्याप्तिस्मृतिः स्यात् । तत्र साध्यभूतलिङ्गस्य अदर्शनेनैव अनुमानदोषसिद्धौ व्याप्तिचिन्ताया एवानुदयात् ॥ आश्रयासिद्धिरदूषणमित्युक्तम् । तत् किं सर्वापि ? न । 'धर्म्यभावादिनिमित्तैव*' यदभावे असत्यपि व्याप्तिरस्तीत्यादि ।

* रा. धर्मभावादिनिमित्तैव.

(रा. टि.) [1]न चेत शङ्कितैव व्याप्तिमुपपादयति ॥ **व्याप्तेरुभयधर्मत्वेनेत्यादिना** ॥ अव्याप्तौ अनन्तर्भावे युक्तिमाह ॥ **विवक्षितेति** ॥ तत् किं सर्वापि ? इति पृष्टस्योत्तरं न इति । किं तर्हि ? इत्यत आह ॥ **धर्म्यभावादीति** ॥ अभावादौ कस्यापि धर्मस्याभावात् साधनाद्याश्रयत्वं व्याप्त्याश्रयत्वं वा न युक्तमिति निर्धर्मकत्वादिनिमित्ताश्रयासिद्धिरेव अदूषणमित्यर्थः । आदिपदेन धर्माभावग्रहः । क्वचित् **धर्माभावादिनिमित्तैव** इति पाठः । कुत एवम् ? इत्यत आह ॥ **यदभाषतेति** ॥ असत्यपि व्याप्तिरस्ति इति, नचात्यन्ताभावोऽपि सर्वधर्मरहितः इति यदभाषत मूलकारः पूर्वत्र तेनैवं ज्ञायत इत्यर्थः ।

(श्री. टि.) ॥ **दूषणान्तरमस्तीति** ॥ तथा च हेतुस्वरूपासिद्धिः अव्याप्तिरिति हेतुविरोधद्वैविध्यकथनमयुक्तमिति भावः ॥ **असिद्ध एवेति** ॥ तथा च हेतुस्वरूपासिद्धिरित्यनेनैव सङ्गृहीत इत्याशयः । असिद्ध एवान्तर्भावमुपपादयति ॥ **साध्यमेव हीति** ॥ नन्वस्तु साध्यस्यापि हेतुत्वं । को दोषः? इत्यत आह ॥ **न हीति** ॥ साध्यं साधयितुं योग्यं । सिद्धस्यैव हेतुत्वादिति भावः । अव्याप्तौ अव्याप्तिरूपे हेतुविरोधे ॥ **किमिति** ॥ किमर्थम् ? इत्यर्थः । अव्याप्तौ अन्तर्भावमुपपादयति ॥ **व्याप्तेरिति** ॥ कुतो न वाच्यम् ? इत्यत आह ॥ **विवक्षितस्थल इति** ॥ **अदर्शनेनैवेति** ॥ साध्यभूतं यत् लिङ्गं तस्य दर्शने तु प्रत्यक्षेणैव साध्यस्य सिद्धत्वात् अनुमानस्य सिद्धसाधनता स्यादिति भावः ॥ **अनुमानदोषेति** ॥ अनुमानस्य असिद्धिरूपदोषसिद्धावित्यर्थः । असिद्धेरेव प्रथमोपस्थितत्वात् प्रथमातिक्रमे च कारणाभावादिति भावः । अत्र यद्यपि अभेदेऽपि व्याप्यव्यापकभावः त्वयैवाङ्गीकृतः । अन्यथा 'शब्दोऽनित्यः कृतकत्वात्' इत्यत्र कृतकत्वमेव उपाधिः स्यात् । अतोऽभेदेपि स्वेनैव स्वस्य व्याप्तिसम्भवेन साध्याविशिष्टस्य अव्याप्तौ अन्तर्भावासम्भवात् युक्तो हेतुस्वरूपासिद्धावेवान्तर्भाव इत्युत्तरं वक्तुं शक्यते । तथापि तत् शिष्यैरेवोह्यतां इत्यभिप्रायेणेदं समाधानान्तरमुक्तमित्यवधेयम् । **शङ्कते** ॥ **आश्रयासिद्धिरिति** ॥ **इत्युक्तमिति** ॥ **आश्रयसाध्यव्यधिकरणासिद्ध्यो न दूषणम्** इत्यनेनेत्यर्थः । तत् तत्र ॥ **सर्वापीति** ॥ पक्षाभावप्रयुक्ता आश्रयासिद्धिः, तथा सिद्धसाधनतायां सन्दिग्धसाध्यधर्मवत्त्वरूपपक्षलक्षणाभावेन आश्रयासिद्धिर्भवति । यथोक्तं परैः

> आश्रयासिद्धता हेतोः सिद्धधर्मस्य साधने ।
> पक्षो हि संश्रयस्तस्य स च साध्यान्वितो यतः ॥ इति ।

एवं द्विविधाप्याश्रयासिद्धिरदूषणं किम् ? इति प्रश्नार्थः । उत्तरमाह ॥ **धर्म्यभावनिमित्तैवेति** ॥ आश्रयासिद्धिरदूषणमित्यन्वयः । एवकारेण सिद्धसाधनताप्रयुक्ताऽश्रयासिद्धेः अदूषणत्वव्यवच्छेदः । अत्र भगवत्पादोक्तं ज्ञापकमाह ॥ **यदभाषतेति** ॥ **असत्यपीति** ॥ प्रयोजिका च व्याप्तिरसत्यप्याश्रये साध्यसाधनयोरस्त्येव । 'वन्ध्यासुतो न वक्ता अचेतनत्वात्' इत्यादौ दर्शनात् इति तदर्थः पूर्वमुक्तो द्रष्टव्यः ।

---

[1] न चेति शङ्कितैव अव्याप्तिमुपपादयति.

(टी.) तर्हि सिद्धसाधकत्वं दोषान्तरमस्तीत्यत आह

सिद्धसाधकोऽसङ्गतः

बुभुत्सितसाधनस्यैव सङ्गतत्वात् सिद्धसाधकोऽसङ्गतो भवति।

(श्री. टि.) ॥ तर्हीति ॥ सिद्धसाधनताप्रयुक्ताऽश्रयासिद्धेर्दोषत्व इत्यर्थः ॥ दोषान्तरमिति ॥ हेतोरिति शेषः। तथा च हेतुविरोधद्वैविध्यकथनमसदिति भावः। सङ्गतत्वादित्यनन्तरं सिद्धे च बोद्धुमिच्छाया अयोगादिति वाक्यशेषः।

भाट्टप्रमाणसामान्यलक्षणनिराकरणम्

(टी.) एवं प्रमाणतदाभासस्वरूपं निरूप्य स्वोक्तलक्षणदृढीकरणाय वाद्यन्तरोक्तलक्षणानि निराकुर्वन् भाट्टानां लक्षणं तावन्निराचष्टे

न प्रमासाधनं प्रमाणम्

प्रमेयगतं ज्ञाततापरपर्यायं प्राकट्यं प्रमेत्युच्यते। तत्साधनं प्रमाणम्। अत्र प्रमाग्रहणं कुठारादिव्यावृत्त्यर्थम्। साधनग्रहणं प्रमायामतिव्याप्तिं प्रत्यक्षादावसम्भवं च व्यवच्छिनत्ति। न चेन्द्रियसन्निकर्षादावव्याप्तिः। ज्ञानस्यैव मुख्यतः प्रामाण्यात्। न च भ्रमादावतिव्याप्तिः। अर्थानुसारिणो ज्ञातताविशेषस्यैव प्रमात्वात्। भ्रमादिना च तदजननात्। इदमित्याद्याकारेण जननेऽपि तत्र प्रामाण्याभ्युपगमात्। ज्ञाते पुनर्ज्ञाततानुदयेन न स्मृतावतिव्याप्तिः। साधनग्रहणेनैव प्रमात्रादिव्युदास इति।

तदेतल्लक्षणं नोपपद्यते। कुतः? इत्यत आह

ज्ञानव्यतिरिक्तप्रमायां प्रमाणाभावात्

प्रमेयाश्रयायाः प्रमाया एवाभावेन असम्भवित्वादयुक्तमिदं लक्षणम्। न हि प्रमेयनिष्ठप्रमायां प्रमाणमस्ति। ज्ञातो घटः, प्रकटो घटः इति प्रमेयधर्मतया प्रमा प्रत्यक्षत एवानुभूयत इत्यत उक्तम्

(टी.) ॥ ज्ञानव्यतिरिक्तेति ॥ ज्ञातो घटः इत्यादौ हि ज्ञानमेव प्रमेयविशेषणतया दृश्यते। न तु ततोऽन्या प्रमेति। न च आत्मधर्मस्य ज्ञानस्य प्रमेयविशेषणताऽनुपपत्तिः। इष्टो घटः इत्यादावपि तदभावापातात्। विषयविषयिभावात् तत्रोपपत्तिरिति चेत् समं प्रकृतेऽपि। न च वाच्यं ज्ञातताऽभावे ज्ञानस्य विषयनियम एवायुक्तः। यदाकारं यत् विज्ञानं तत् तद्विषयमिति हि बौद्धानामेव शोभत इति। तथा सति इच्छादीनामपि विषयनियमाभावप्रसङ्गादिति। [1]करणविषयतया तत्रोपपत्तिरिति चेत् तुल्यम्। अन्यथा तेनैव ज्ञानेन अत्रैव ज्ञातता जायत इति नियमो न स्यादिति।

(रा. टि.) ॥ ज्ञानस्यैव मुख्यतः प्रामाण्यादिति ॥ ज्ञानस्यैव साक्षात् ज्ञातताशब्दितप्रमासाधनत्वात् सन्निकर्षस्य तु तद्द्वारेति इह साक्षात्साधनमेव अभिमतमिति भावः ॥ भ्रमादाविति ॥ भ्रमे तत्साधने चेत्यर्थः। तयोरपि मुख्यामुख्यतः प्रमासाधनत्वादिति भावः। यद्वा आदिपदेन संशयग्रहः ॥ अर्थानुसारिण इति ॥ सत्यभूतवस्त्वनुसारिणो भ्रमविषयव्यावृत्तस्य ज्ञातताविशेषस्यैव प्रमात्वादित्यर्थः ॥ न स्मृताविति ॥ तद्विषये ज्ञाततानुदयेन तत्र ज्ञाततासाधनत्वाभावादिति भावः ॥ प्रमात्रादीति ॥ तस्य प्रमां प्रति हेतुत्वेऽपि साधनत्वाभावादिति भावः।

॥ न चात्मधर्मस्येति ॥ पररीत्येयमुक्तिः। स्वामितासम्बन्धेन आत्मधर्मस्येति वा ॥ विषयविषयीति ॥ आन्तरस्यैव इच्छादेः विषयविषयिभावरूपसम्बन्धेन बाह्यार्थं विशेष्यतया इच्छादिकं विशेषणतया साक्षी वा मानसानुव्यवसायो वा गृह्णातीति चेत् समं ज्ञानेऽपीत्यर्थः ॥ करणेति ॥ करणानामपि ज्ञानादेरिव सविषयकत्वात् तद्विषया एव इच्छाद्वेषादिविषयाश्चेत् ज्ञानेऽपि तथेत्यर्थः ॥ अन्यथेति ॥ करणत्वैयत्याभाव इत्यर्थः।

(श्री. टि.) असङ्गतिपरिहारायोक्तम् ॥ स्वोक्तलक्षणदृढीकरणायेति ॥ यथार्थं प्रमाणम् इति स्वोक्तलक्षणदृढीकरणायेत्यर्थः। तदीयग्रन्थेषु 'प्राकट्यसाधनं ज्ञानं प्रमाणम्' इति व्यवहृतं। अतोऽसदनुवादोऽयमिति शङ्कावारणाय ज्ञाततापरपर्यायं प्राकट्यमित्युक्तम्। प्रमेयगतमित्यनेन 'ज्ञातो घटः, प्रकटो घटः' इति प्रत्यक्षमपि तत्र प्रमाणमिति सूचयति ॥ कुठारादीति ॥ साधनं प्रमाणमित्युक्ते कुठारादावतिव्याप्तिः स्यात्। तदर्थं प्रमाणग्रहणमित्यर्थः। प्रमायां ज्ञाततायां। प्रत्यक्षादौ 'अयं घटः' इत्यादिज्ञाने। तथा च प्रमा प्रमाणम् इत्युक्ते ज्ञाततायामेव अतिव्याप्तिः, लक्ष्यभूते ज्ञाने असम्भवश्च। अतः साधनग्रहणमित्यर्थः ॥ इन्द्रियसन्निकर्षादाविति ॥ ज्ञानस्यैव ज्ञाततासाधनत्वेन इन्द्रियसन्निकर्षादिकादेः तदभावादव्याप्तिरित्यर्थः ॥ ज्ञानस्यैवेति ॥ तथा च इन्द्रियसन्निकर्षादेः प्रामाण्यानङ्गीकारात् न तत्राव्याप्तिर्दोष इति भावः ॥ भ्रमादाविति ॥ ज्ञाततासाधनत्वस्य भ्रमरूपज्ञानेऽपि सत्त्वादित्यर्थः ॥ अर्थानुसारिण इति ॥ यथावस्थितार्थगतस्येत्यर्थः। प्रमात्वात् प्रमाशब्द-

[1] श्री. कारणविषयतया.

(श्री॰ टि॰) वाच्यत्वात् । तथा च ज्ञातताविशेषसाधनं प्रमाणमिति लक्षणार्थो द्रष्टव्यः ॥ तदजननादिति ॥ ज्ञातताविशेषस्य अजननादित्यर्थः । तथा च तत्रार्थस्यैवाभावेन भ्रमेण तत्र ज्ञातताविशेषस्य अजननात् ज्ञातताविशेषसाधनत्वलक्षणस्य न भ्रमेऽतिव्याप्तिरिति भावः । नन्विदमंशस्य यथार्थत्वात् तदंशे ज्ञातताविशेषजनकत्वं भ्रमेऽस्तीति पुनरतिव्याप्तिरेव इत्यतः तदंशे प्रामाण्यस्यापि सत्त्वेन लक्ष्यत्वात् नातिव्याप्तिरित्याह ॥ इदमित्याद्याकारेणेति ॥ 'तद्विषयत्वमेव तदाकारत्वम्' इति वचनात् इदमंशविषयकज्ञानेनेत्यर्थः । जननेऽपि ज्ञाततायां इति शेषः । तत्र तदंशे । ननु स्मृतेरपि ज्ञातता साधनत्वात् अतिव्याप्तिरित्याशङ्क्य निराकरोति ॥ ज्ञाते पुनरिति ॥ स्मृतिविषयभूतार्थस्य पूर्वानुभवेनैव ज्ञातत्वेन तेनैव तत्र ज्ञातताया उत्पन्नत्वादिति भावः ॥ साधनग्रहणेनैवेति ॥ प्रमाकारणं प्रमाणमित्युक्ते प्रमातुरात्मनो घटादेः प्रमेयस्यापि ज्ञानद्वारा तत्कारणत्वादतिव्याप्तिः स्यात् । अतः साधनग्रहणम् । तथा च आत्मादेः करणत्वाभावात् तेन तद्व्युदास इत्यर्थः । प्रमात्रादीत्यादिपदेन प्रमेयग्रहणम् ।

॥ प्रत्यक्षत एवेति ॥ अनुव्यवसायरूपादेवेत्यर्थः ॥ ज्ञानव्यतिरिक्तेतीति ॥ तथा च प्रत्यक्षस्य ज्ञानविषयकतया अन्यथासिद्धत्वात् न ज्ञातताविषयकत्वमिति भावः । तदेवोपपादयति ॥ ज्ञातो घट इत्यादाविति ॥ इत्यादौ अनुव्यवसाये ॥ प्रमेयविशेषणतयेति ॥ अयं भावः, क्रिया हि कर्तृस्थैव । सा यदि कर्तृप्राधान्येन व्यवह्रियते तदा कर्तृधर्मतया प्रतीयते । यथा देवदत्तो घटमिच्छति द्वेष्टि इति । यदा च कर्मप्राधान्येन तदा तद्धर्मतया । यथा इष्टो द्विष्ट इति । यदा पुनः स्वप्राधान्येन तदा स्वतन्त्रैव । यथा इच्छा द्वेष इति । एवं कर्तृभूतात्मगता ज्ञानरूपा क्रियाऽपि यदा कर्तृप्राधान्येन व्यवह्रियते तदा देवदत्तो जानाति' इति कर्तृधर्मतया प्रतीयते । यदा तु स्वप्राधान्येन व्यवह्रियते तदा स्वतन्त्रैव प्रतीयते । यथा ज्ञानम् इति । यदा पुनः कर्मप्राधान्येन व्यवह्रियते तदा ज्ञातो घटः इति कर्मभूतप्रमेयधर्मतया प्रतीयत इति किमनुपपन्नम् ? इति ॥ न तु ततोऽन्या प्रमेति॥ 'अयं घटः' इति प्रथमज्ञाने हि शुद्ध एवार्थोऽवभासते। न तु ज्ञातताविशिष्टः। तदानीं तस्या अजातत्वात् । तामुत्पाद्य पुनः तद्विशिष्टार्थं विषयीकरोतीत्यङ्गीकारे तु चिरम्व्यापार- प्रसङ्गात् । न च 'ज्ञातो घटः' इत्यनुव्यवसायरूपोत्तरज्ञाने प्रथमज्ञानविषयीकृतात् अधिकोऽर्थश्चकास्ति, सैव ज्ञाततेति वाच्यम् । तस्य ज्ञानविषयकत्वेन अन्यथासिद्धतया उक्तरूपज्ञातताविषयकत्वाभावादिति भावः । उक्तं च अनुव्याख्याने

मयैतज्ज्ञातमिति तु साक्षिगं ज्ञानगोचरं ।
ज्ञानमेव ततोऽन्या न प्रमितिर्नाम दृश्यते ॥ इति ॥

'इष्टो घटः' इत्यादावित्यत्र आदिपदेन 'द्विष्टो घटः' इत्यस्य संग्रहः ॥ तदभावापातादिति ॥ आत्मधर्मभूताया इच्छाया अपि प्रमेयविशेषणत्वाभावापातादित्यर्थः ॥ विषयेति ॥ 'इष्टो घटः' इत्यादौ इच्छाघट-

(श्री. टि.) योर्विषयविषयिभावसद्भावेन आत्मधर्मभूताया अपि इच्छायाः घटविशेषणत्वमुपपन्नमित्यर्थः ॥ सममिति ॥ 'ज्ञातो घटः' इत्यादावपि ज्ञानघटयोर्विषयविषयिभावसद्भावेन आत्मधर्मभूतस्यापि ज्ञानस्य घट विशेषणत्वमुपपन्नमित्यर्थः ।

॥ विषयनियम एवायुक्त इति ॥ ज्ञाततासद्भावे तु घटज्ञानजन्यज्ञातताधारत्वात् घटज्ञानस्य घट एव विषयो नान्य इति विषयनियमः सम्भवतीति भावः। ननु ज्ञाततानङ्गीकारेऽपि ज्ञानस्य विषयनियमः सम्भवति। 'यदाकारं यत् विज्ञानं तत् तद्विषयकम्' इत्यङ्गीकारेण घटज्ञानस्य घटाकारत्वेन पटाकारत्वाभावात् घटविषयकत्वस्यैवोपपत्तेः इत्याशङ्क्य निषेधति ॥ यदाकारमिति ॥ शोभत इति ॥ तथा च मम तथा अङ्गीकारे अपसिद्धान्तः स्यात् । अतो ज्ञाततयैव विषयनियमो वाच्य इति भावः । इति न च वाच्यमिति सम्बन्धः ॥ तथा सतीति ॥ ज्ञाततयैव ज्ञानस्य विषयनियमाङ्गीकार इत्यर्थः ॥ इच्छादीनामपीति ॥ तथा च इच्छादीनामपि विषयनियमार्थं इष्टतापि काचन अङ्गीकार्या स्यादिति भावः। नन्विष्टताऽनङ्गीकारेऽपि इच्छाविषयनियमः सम्भवति। इच्छाकारणीभूतस्य ज्ञानस्य घटमात्रविषयकत्वेन तज्जन्येच्छाया अपि तन्मात्रविषयकत्वोपपत्तेः इत्याशङ्कते ॥ कारणविषयतयेति ॥ तुल्यमिति ॥ ज्ञाततानङ्गीकारेऽपि ज्ञानस्य विषयनियमः सम्भवति। तत्कारणीभूतस्य इन्द्रियसन्निकर्षस्य घटमात्रविषयकत्वेन तज्जन्यज्ञानस्यापि तन्मात्रविषयत्वोपपत्तेरिति तुल्यमित्यर्थः ॥ अन्यथेति ॥ घटसन्निकृष्टेन्द्रियजन्यत्वात् घटज्ञानस्य तद्विषयकत्वमित्यनङ्गीकृत्य ज्ञानजन्यज्ञातताधारत्वादेव ज्ञानस्य विषयनियम इत्यङ्गीकारे घटज्ञानजन्यज्ञातताधारत्वं घट एव कुतः? पटेऽपि किं न स्यात्? तथा च घटज्ञानेन घट एव ज्ञातता जायत इत्यपि नियमो न स्यादित्यर्थः। तथा चैतदतिप्रसङ्गपरिहाराय 'घटज्ञानस्य घटसन्निकृष्टेन्द्रियजन्यत्वात् घट एव ज्ञातताजनकत्वं, न पटे' इत्येवं ज्ञातताङ्गीकारवादिनापि अवश्यं वक्तव्यमेव तथा च अस्माकमपि तेनैव ज्ञानस्य विषयनियमोपपत्तौ किं ज्ञातताङ्गीकारेण? इति भावः।

मीमांसकैकदेश्यभिमतप्रमाणसामान्यलक्षणनिराकरणम्

(टी.) अन्यस्त्वाह, प्रमासाधनत्वमेव लक्षणम्। प्रमा च नार्थप्राकट्यम्। किं तु? अज्ञातार्थस्य यथार्थज्ञानम्। अतो नोक्तदूषणमित्यत आह

## न चाज्ञातपरिच्छित्तिरेव प्रमेत्यत्र किञ्चिन्मानम्

परिच्छित्तिरिति यथार्थज्ञानमुच्यते । अज्ञातेति स्मृतिसाधनव्युदासार्थम् । यथार्थग्रहणं भ्रमादिसाधनव्युदासार्थम् ।

(टी.) अस्तु नाम अज्ञातपरिच्छित्तिः प्रमा तत्साधनं च प्रमाणम् । तथापि न लक्षणमेतत् युक्तम् ज्ञातपरिच्छित्तेरपि प्रमात्वेन तत्साधनस्य च प्रमाणत्वेन तत्राव्याप्तेः । न हि ज्ञातपरिच्छित्त्यादेः अमात्वादौ प्रमाणमस्ति ।

ज्ञातपरिच्छित्त्यादेः प्रमात्वादौ स्मृत्यादेरपि तत् स्यादित्यत आह

याथार्थ्यमेव प्रामाण्यमित्यङ्गीकारात्

स्मृत्यादेः प्रमात्वादिप्रसङ्गो नानिष्टः । याथार्थ्यमेव प्रामाण्यमित्यङ्गीकुर्वद्भिः स्मृत्यादिकस्य प्रमात्वादेरङ्गीकृतत्वादिति ।

(रा. टि.) तावता लक्षणस्य किं दूषणमुक्तम् ? इत्यत एवकाराभिप्रायं व्यनक्ति ॥ अस्तु नामेत्यादिना ॥ ज्ञातपरिच्छित्त्यादेरित्यादिपदेन तत्साधनग्रहः ॥ स्मृत्यादेरिति ॥ आदिपदेन अनुवादादिग्रहः ।

(श्री. टि.) अन्यो मीमांसकैकदेशी ॥ अज्ञातार्थस्येति ॥ अनधिगतार्थस्येत्यर्थः ॥ नोक्तदूषणमिति ॥ 'ज्ञाततासाधनं प्रमाणम्' इतिमतोक्तदूषणं नेत्यर्थः ॥ स्मृतिसाधनेति ॥ स्मृतिकारणीभूतसंस्कारेत्यर्थः । यथार्थ-ज्ञानसाधनत्वस्य संस्कारेऽपि सत्त्वेन तत्रातिव्याप्तिपरिहाराय अज्ञातेत्यर्थविशेषणमुपात्तम् । स्मृतेश्च पूर्वानुभूतार्थ-विषयकत्वेन तत्कारणे संस्कारे अज्ञातार्थज्ञानसाधनत्वाभावात् नातिव्याप्तिरिति भावः । प्रमादीत्यादिपदेन संशयग्रहणम् । तत्साधनं दुष्टेन्द्रियम् । अनधिगतार्थज्ञानसाधनत्वस्य दुष्टेन्द्रियेऽपि सत्त्वात् तत्रातिव्याप्तिपरि-हाराय यथार्थग्रहणमित्यर्थः । प्रमाणं अस्त्विति सम्बन्धः ॥ ज्ञातपरिच्छित्तेरपीति ॥ ज्ञातार्थविषयिकायाः परिच्छित्तेरपीत्यर्थः । प्रमात्वादावित्यादिपदेन तत्साधनस्य प्रमाणत्व इति ग्राह्यम् । स्मृत्यादेरित्यादिपदेन तत्साधनानुवादधारावाहिकज्ञानादिग्रहणम् । प्रमात्वादिप्रसङ्ग इत्यत्र आदिपदेन तत्साधनस्य प्रमाणत्वप्रसङ्गो-ग्राह्यः । अङ्गीकुर्वद्भिरस्माभिः । प्रमात्वादेरित्यत्र आदिपदेन तत्साधनस्य मनसः प्रमाणत्वस्यापि अङ्गी-कृतत्वादित्यर्थः ।

प्राभाकराभिमतप्रमाणसामान्यलक्षणनिरासः

(टी.) प्राभाकराणां लक्षणं दूषयति ।

न चानुभूतिरेव प्रमाणम्

स्मृतिव्यतिरिक्तं ज्ञानमनुभूतिः । स्मृतिश्च संस्कारमात्रजं ज्ञानम् । न च अयथार्थानुभवे अतिव्याप्तिः । "प्रमाणं स्मृतिश्च नः प्रत्ययः" इत्यङ्गीकृतत्वेन तत्स्वरूपस्यैवानभ्युपगमात् । व्यव-हारस्तु ग्रहणस्मरणयोरेव ग्रहणयोरेव वा स्वरूपतो विषयतश्च विवेकाग्रहमात्रेण भवतीति ।

(टी.) एतदपि लक्षणमयुक्तम् । कुतः? इत्यत आह

स्मृत्यादावव्याप्तेः

आदिपदेन वेदाद्यनुप्रमाणसंग्रहः ।

(रा. टि.) ॥ प्रमाणमिति ॥ प्रमितिरूप एव सर्वोऽप्यनुभव इति प्रमाणपदेन अनुभवग्रहः । नः अस्माकं । प्रत्ययो ज्ञानं ॥ तत्स्वरूपस्यैवेति ॥ भ्रमस्वरूपस्यैवेत्यर्थ. ॥ व्यवहारस्त्विति ॥ अयं भ्रान्तः, भ्रमोऽयम् इत्यादिव्यवहार इत्यर्थः ॥ ग्रहणस्मरणयोरिति ॥ स्मर्यमाणारोपस्थले इदम् इति ग्रहणं, रजतम् इति स्मरणमिति दनद्वज्ञयम् । न त्वेकं ज्ञानम् । तत्र द्वयोर्ग्रहणस्मरणयोः स्वरूपतः तद्विषययोः शुक्तिरजतयोश्च विवेकशब्दितभेदाग्रहमात्रेण । न गृह्यमाणारोपस्थले च इदम् इत्यपि ग्रहणं रजतम् इत्यपि ग्रहणमेव । तयोः स्वरूपतो विषयतश्च विवेकाग्रहणमात्रेण । न तु विशिष्टैकज्ञानरूपभ्रमेणेत्यर्थः ।

(श्री. टि.) ॥ संस्कारमात्रजमिति ॥ संस्कारसहकृतचक्षुर्जन्ये प्रत्यभिज्ञाप्रत्यक्षे अतिव्याप्तिवारणाय मात्रपदमिति ज्ञातव्यम् ॥ तत्स्वरूपस्यैवेति ॥ अयथार्थज्ञानस्वरूपस्यैवेत्यर्थः । तत्र ज्ञापककथनायोक्तं प्रमाणं स्मृतिश्चेति । प्रमाणशब्देन यथार्थानुभव उच्यते । तथा च प्रमाणं यथार्थानुभवः स्मृतिश्चेति नः अस्मन्मते ज्ञानापरपर्यायः प्रत्ययो द्विविध इति तदीयवचनार्थः । ननु तर्हि अयथार्थानुभवाभावे 'इदं रजतम्' इत्याद्यभेदव्यवहारस्य इदन्त्वरजतत्वयोः सामानाधिकरण्यव्यवहारस्य च का गतिः? इत्यत आह ॥ व्यवहारस्त्विति ॥ ग्रहणस्मरणयोरेवेति ॥ इदमत्राकूतम् ; रजतम् इदम् इति द्वे विज्ञाने स्मृत्यनुभवरूपे । तत्र इदम् इति पुरोवर्तिद्रव्यमात्रग्रहणम् । दोषवशात् तद्गतस्य शुक्तित्वसामान्यविशेषस्य अग्रहणात् । तन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजतस्मृतिं जनयति । सा च गृहीतग्रहणस्वभावापि दोषवशात् गृहीततांशप्रमोषेण गृहीतिसरूपा अवतिष्ठते । तथा च रजतस्मृतेः पुरोवर्तिग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहणात् सन्निहितरजतज्ञानसारूप्येण इदम् रजतम् इति भिन्ने अपि ग्रहणस्मरणे अभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयत इति ॥ ग्रहणयोरेवेति ॥ अयं भावः, नायमस्ति नियमो ग्रहणस्मरणे एव अगृहीतविवेके व्यवहारप्रवर्तके इति । किं तु? क्वचित् ग्रहणे एव मिथः अगृहीतभेदे । यथा 'पीतः शङ्खः' इति । अत्र हि विनिर्यन्नयनरश्मिवर्तिनः पित्तद्रव्यस्य पीतत्वं दोषवशात् द्रव्यरहितं गृह्यते । शङ्खोऽपि गुणहीनः स्वरूपमात्रेण गृह्यते । तत् अनयोः गुणगुणिनोः इतरेतरसापेक्षयोः असंसर्गाग्रहात् सारूप्यात् पीअचिरबिल्वफलप्रत्ययाविशेषेण अभेदव्यवहारः सामानाधिकरण्यव्यवदेशश्च भवत इति ॥ विवेकाग्रहमात्रेणेति ॥ भेदाग्रहरूपसारूप्यमात्रेणेत्यर्थः । असंसर्गाग्रहस्यापि उपलक्षणमेतत् । सत्यरजतस्थले इदं रजतम् इति ज्ञाने भेदस्य अभावादेव अविद्यमानस्य भेदस्य अग्रहोऽस्ति । प्रकृतेऽपि इदं रजतम् इति [1]ज्ञाने विद्यमानस्यैव भेदस्य अग्रहोऽस्ति । अन्यथा [illegible]

---

[1] ज्ञानयोः;

(श्री. टि ) प्रवृत्तेरेवाभावापत्तेः । अतो भेदाग्रह उभयत्र समान । किञ्च विपर्ययमङ्गीकुर्वाणेनापि विवेकाग्रहः स्वीकर्तव्य एव । न हि विवेकग्रहे विपर्ययावकाशो विरोधात् । अन्यथा विपर्ययनिवृत्त्यनुपपत्तेः । तथा च तत एव सर्वस्यापि व्यवहारस्योपपत्तौ किं विपर्ययकल्पनया ? इति भाव; ।

वेदादीत्यादिपदेन युक्तिप्रत्यक्षयोः संग्रहः । तथा च स्मृतौ [1]स्मृतिव्यतिरिक्तज्ञानत्वाभावात् ज्ञानसाधनेषु वेदाद्यनुप्रमाणेषु [2]स्मृतिव्यतिरिक्तज्ञानत्वाभावादव्याप्तिरित्याशयः ।

### स्मृतिप्रामाण्यसमर्थनम्

(टी.) स्मृत्यादेः सति प्रामाण्ये भवेदव्याप्तिदोषः । तदेव कुतः ? इत्यत आह

## वेदादिप्रामाण्यप्रसिद्धेश्च

अत्र आदिपदेन स्मृत्यादिग्रहणम् । प्रसिद्धिर्लौकिकी । न हि सा निर्मूला याथार्थ्यहेतुसिद्धा । श्रौती चास्तीत्याह

स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् ।
प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिः ॥ इति श्रुतेश्च ।

(श्री. टि.) स्मृत्यादीत्यत्रादिपदेन [3]प्रत्यक्षरूपानुप्रमाणानुवादादेश्च संग्रहः । श्रौतप्रसिद्धेरुत्तरत्र वक्ष्यमाणत्वादाह ॥ प्रसिद्धिर्लौकिकीति ॥ लौकिकानां प्रसिद्धिरित्यर्थः । ननु लौकिकी प्रसिद्धिरप्रमाणमिति चेत् , किं निर्मूलत्वात् अप्रमाणम् ? तत्साधकाभावाद्वा ? नाद्य इत्याह ॥ न हीत्यादिना ॥ निर्मूला अप्रामाणिकी न हि । किं तु ? समूलैवेत्यर्थः । नापि द्वितीय इत्याह ॥ याथार्थ्यहेत्विति ॥ 'लौकिकी प्रसिद्धिः प्रमाणमिति व्यवहर्तव्या यथार्थत्वात्' इति याथार्थ्यहेतुसिद्धप्रामाण्यका चेत्यर्थः । यथावस्थितार्थज्ञेयविषयीकारित्वरूपं याथार्थ्यं च बाधकाभावादिना द्रष्टव्यम् । श्रौती श्रुतिसिद्धा प्रसिद्धिः ।

### ऐतिह्यप्रामाण्यसमर्थनम्

(टी.) ननिदं शान्तिके कर्मणि वेतालोत्थानमिव । यावता स्मृत्यादिप्रामाण्यसिद्ध्यर्थं उदाहृतश्रुती ऐतिह्यं चतुर्थं प्रमाणमापतितमित्यत आह

---

[1] स्मृतिव्यतिरिक्तत्वाभावात्. [2] ज्ञानत्वाभावात्. [3] प्रत्यक्षानुमानरूपानुप्रमाणानुवादादेः.

## ऐतिह्यमागमभेदः

पुरावृत्तोक्तिरैतिह्यम् । तत् यथार्थमागम एवान्तर्भवति । ऐतिह्यमित्यशेषागमोपलक्षणम् । स्मृतिपदश्च अशेषकेवलप्रमाणस्य । तथा च केवलमेकं अनुप्रमाणं प्रत्यक्षादिभेदेन त्रिविधमिति चतुष्टयमित्युक्तं भवति ।

(रा. टि.) यावतेति यत इत्यर्थे अव्ययम् ।

(श्री. टि.)॥ **पुरावृत्तोक्तिरिति** ॥ 'इहाहुर्वृद्धाः' इति प्रवादपारम्पर्योक्तिरित्यर्थः ॥ **यथार्थमिति** ॥ प्राय ऐतिह्यं यथार्थं न भवति । यथार्थं चेत् आगम एवान्तर्भूतमित्यर्थः । उक्तं च परैः

जगति बहु न तथ्यं नित्यमैतिह्यमुक्तं भवति च यदि सत्यं नागमाद्भिद्यते तत् ॥ इति ।

**ऐतिह्यमितीति** ॥ 'स्मृतिः प्रत्यक्षम्' इति श्रुतावित्यर्थः ॥ **अशेषागमेति** ॥ पौरुषेयापौरुषेयरूपाशेषनिर्दोषशब्दरूपागमोपलक्षणमित्यर्थः । एवं सति केवलमेकं प्रमाणम्, अनुप्रमाणं चापरम् । तत्र प्रत्यक्षम् ऐतिह्यशब्दोक्तागमः अनुमानश्चेति त्रिविधम् । एवं च केवलमनुप्रमाणं च मिलित्वा प्रमाणचतुष्टयमिति विज्ञेयमिति श्रुत्यर्थ इत्यभिप्रेत्याह ॥ **तथा चेति** ॥

### नैयायिकाभिमतप्रमाणलक्षणनिरासः

(टी.) नैयायिकलक्षणं निराकरोति

## न च सम्यगनुभवसाधनं प्रमाणम्

सम्यग्ग्रहणं संशयविपर्ययापोहनम् । अनुभव इति कुठारादेर्निरासः । ज्ञानग्रहणे स्मृतौ प्रसङ्गादनुभवग्रहणम् । साधनग्रहणं फलात् भेदज्ञापनार्थं प्रमातृप्रमेयव्यवच्छेदार्थं चेति ।

एतदपि लक्षणं नोपपद्यते । कस्मात्? इत्यत आह

## ईश्वरज्ञानादावव्याप्तेः

नैयायिकैः खल्वीश्वरस्यापि प्रामाण्यमङ्गीकृतम् । अतः तस्मिन्नीश्वरे तज्ज्ञाने अस्मदादिज्ञाने चाव्याप्तत्वादिदमलक्षणम् । न हीश्वरादेः सम्यगनुभवसाधनत्वमस्ति । ईश्वरातिरिक्तप्रमाणलक्षणं तत् इत्यङ्गीकारेऽपि तज्ज्ञानादावव्याप्तिरपरिहार्यैवेति ज्ञापनाय स्वरूपेण तज्ज्ञानग्रहणम् ।

(टी.) ज्ञानं प्रमाणमेव न भवति। किं तु? तत्फलमेव। अतः कथं तत्राव्याप्तिर्दूषणम् इत्यत आह

अप्रामाण्ये प्रमाणाभावाच्च

ज्ञानस्येति शेषः। चशब्देन "स्मृतिः प्रत्यक्षमैतिह्यं" इत्यादि प्रमाणविरोधं समुच्चिनोति।

(रा. टि.) ॥ फलाद्भेदज्ञापनार्थमिति ॥ प्रमितिरूपफलादित्यर्थः ॥ प्रमातृप्रमेयेति ॥ तयोरनुभवहेतुत्वेऽपि साधनत्वाभावादिति भावः ॥ स्वरूपेण तज्ज्ञानग्रहणमिति॥ ईश्वरादावित्यनुक्त्वा ईश्वरज्ञानादाविति ग्रहणमित्यर्थः।

(श्री. टि.) ॥ सम्यगनुभवेति ॥ यथार्थानुभवेत्यर्थः प्रमेति यावत्। तथा च 'प्रमाकरणं प्रमाणम्' इति फलितोऽर्थ इति द्रष्टव्यम्॥ संशयविपर्ययेति ॥ तयोरप्यनुभवत्वेन प्रमात्वापत्त्या तत्साधनस्यापि दुष्टेन्द्रियादेः प्रमाणत्वं स्यात् तदपोहार्थं सम्यक्पदग्रहणमित्यर्थः ॥ कुठारादेरिति ॥ साधनत्वमात्रस्य तत्रापि सत्त्वादिति भावः ॥ ज्ञानग्रहण इति ॥ सम्यग्ज्ञानसाधनं प्रमाणमित्युक्ते स्मृतेरपि यथार्थज्ञानत्वेन प्रमात्वापत्त्या तत्साधनस्य संस्कारस्यापि पमाणत्वं स्यात्। अतोऽनुभवग्रहणमित्यर्थः। स्मृतिव्यतिरिक्तज्ञानस्यैव अनुभवत्वात् तेन तद्व्यावृत्तिरिति भावः॥ फलाद्भेदेति ॥ सम्यगनुभव एव प्रमाणमित्युक्ते फलभूततया अलक्ष्ये अनुभव एवातिव्याप्तिः स्यात्। अतः साधनग्रहणमिति भावः। ननु तर्हि फलात् भेदज्ञापनार्थं सम्यगनुभवकारणम् प्रमाणम् इत्येवास्तु। किं साधनग्रहणेन? इत्यत आह ॥ प्रमात्रिति ॥ 'यस्मिन् सति नियमेन प्रमा भवत्येव, नासति' तदिह साधनं विवक्षितमिति तद्व्यवच्छेद इति भावः॥ अङ्गीकृतमिति ॥ 'साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ' इतिकारिकायां 'तन्मे प्रमाणं शिवः' इत्युक्तत्वादिति भावः। आदिपदार्थमाह ॥ अस्मदादिज्ञाने चेति ॥ ईश्वरादेरित्यत्र आदिपदेन तज्ज्ञानादिसंग्रहः। ईश्वरीयसम्यगनुभवस्य नित्यत्वेन ईश्वरे तदाश्रयत्वसद्भावेऽपि तत्साधनत्वाभावात्, तदीयज्ञाने तु साधनत्वस्यैवाभावादिति भावः। ईश्वरादावव्याप्तेः इत्युक्तावपि आदिपदेन तज्ज्ञानलाभात् तथा अनुक्त्वा कण्ठरवेण तज्ज्ञानग्रहणस्य प्रयोजनमाह ॥ ईश्वरातिरिक्तप्रमाणेति॥ लौकिकप्रमाणेत्यर्थः।

॥ तत्फलमेवेति ॥ तस्य प्रमाणस्य फलमेवेत्यर्थः ॥ अत इति ॥ अलक्ष्यत्वादित्यर्थः। अप्रामाण्य इति मुक्तस्य ज्ञानस्य प्रमाणफलत्वमेव अङ्गीकृत्य प्रमाणत्वानङ्गीकार इत्यर्थः ॥ इत्यादिप्रमाणेति ॥ तत्र स्मृतिपदस्य केवलप्रमाणपरतया व्याख्यातत्वादिति भावः।

### साक्षिप्रामाण्यसमर्थनम्

(टी.) साक्षिज्ञानेऽपि अव्याप्तिं वक्तुं तस्य प्रामाण्यानङ्गीकारे बाधकं तावदाह

## प्रामाण्यज्ञाने च

प्रमाणाभावादिति चशब्देन अनुकृष्यते । तादर्थ्ये सप्तमी । साक्षिणोऽप्रामाण्ये सर्वप्रमाणानां प्रामाण्यमप्रामाणिकं स्यात् । प्रामाण्यज्ञानार्थं प्रमाणान्तराभावात् ।

प्रामाण्यज्ञानार्थमपि सम्यगनुभवसाधनमेव किञ्चित् अङ्गीक्रियते । अतो न तस्याप्रामाणिकत्वापात इत्यत आह

## तत्राप्यङ्गीकारेऽनवस्थितेः

यदि प्रामाण्यज्ञानार्थं सम्यगनुभवसाधनं प्रमाणमङ्गीक्रियते तर्हि तत्प्रामाण्यं प्रामाणिकं न वा ? नेति पक्षे न स्यात् । आद्ये किं स्वेनैव सिद्धं ? प्रमाणान्तरेण वा ? नाद्यः अन्यत्रापि तत्प्रसङ्गात् । द्वितीये तस्यापि प्रामाण्यं प्रमाणान्तरवेद्यमित्यनवस्थितिः स्यात् । तस्मात् साक्षिज्ञानेनैव सर्वप्रमाणप्रामाण्यं ज्ञायत इत्यङ्गीकार्यम् । तस्य च स्वप्रकाशत्वेन स्वप्रामाण्यविषयत्वात् नानवस्था । 'मामहं जानामि' इति आत्मनः स्वप्रकाशत्वदर्शनात् । साक्षिणश्चात्मत्वादिति ।

### तार्किकोक्तप्रमाणलक्षणस्य साक्षिण्यव्याप्तिः

एवं स्वप्रकाशात्मरूपसाक्षिज्ञानस्य प्रमाणप्रामाण्यज्ञानार्थमङ्गीकारे किं स्यात् ? इत्यत आह

## [1]स्वप्रकाशात्माङ्गीकारे तत्राव्याप्तेः

[2]स्वप्रकाशात्मभूतसाक्षिज्ञाने प्रमाणे अङ्गीकृते तस्य सम्यगनुभवत्वेन तत्साधनत्वाभावात् तत्राव्याप्तेरयुक्तमेतल्लक्षणमिति ।

(रा. टि.) ॥वक्तुमिति ॥ स्वयंप्रकाशाङ्गीकारे तत्राव्याप्तेः इति वाक्येन वक्तुमित्यर्थ. ॥ तस्येति ॥ साक्षिण इत्यर्थः ।आधारविषयार्थकत्वासम्भवादाह ॥ तादर्थ्य इति ॥ 'मामहं जानामि इति' इत्यादौ कर्मार्थमितिवत् प्रामाण्यज्ञानार्थमित्यर्थ इति भावेनाह ॥ प्रामाण्यज्ञानार्थमिति ॥ सम्यगनुभवसाधनमेवेति ॥ कार्य-

---

[1] रा. स्वयंप्रकाशाङ्गीकारे तत्राव्याप्तेः

[2] श्री. स्वप्रकाशात्मलक्षणसाक्षिज्ञाने.

(रा. टि.) प्रवृत्तिजनकत्वादिरूपानुमानमेवेत्यर्थः ॥ **न स्यादिति** ॥ प्रामाण्यमित्यनुषङ्गः । तस्य स्वप्रकाशत्वे किं मानम्? इत्यत आह ॥ **मामहमित्यादि** ॥ आत्मनः स्वप्रकाशत्वे साक्षिणः किमायातम्? इत्यत आह ॥ **साक्षिणश्चेति** ॥ **प्रमाणप्रामाण्येति** ॥ प्रमाणानां प्रामाण्यज्ञानार्थमित्यर्थः ।

(श्री. टि.) साक्षिज्ञाने साक्षिरूपज्ञाने ॥ **वक्तुमिति** ॥ स्वप्रकाशात्माङ्गीकारे तत्राव्याप्तेः इत्यत्रेत्यर्थः । मूलं योजयति ॥ **प्रामाण्यज्ञानार्थमिति** ॥ प्रत्यक्षादिसर्वप्रमाणानां प्रामाण्यज्ञानार्थमित्यर्थः ।

शङ्कते ॥ **प्रामाण्यज्ञानार्थमपीति** ॥ प्रत्यक्षादिज्ञानप्रामाण्यज्ञानार्थमित्यर्थः ॥ **किञ्चिदिति** ॥ समर्थप्रवृत्तिजनकत्वादिरूपं लिङ्गान्तरमेवेत्यर्थः । ज्ञानं मानसावसेयं प्रामाण्यं पुनरनुमानेनेति प्रामाण्यस्य परतस्त्वाङ्गीकारादिति भावः । तत्रापीत्यस्य तदर्थमपि इत्यर्थमभिप्रेत्य व्याचष्टे ॥ **यदीति** ॥ **सम्यगनुभवसाधनमिति** ॥ अनुमानमित्यर्थः । प्रामाणिकं प्रमाणसिद्धम् ॥ **न स्यादिति** ॥ प्रामाण्यग्राहकं न स्यादित्यर्थः । स्वयमसिद्धप्रामाण्यकस्य अन्यप्रमाणप्रामाण्यप्रमापकत्वासम्भवादिति भावः । सिद्धं ग्राह्यं ॥ **अन्यत्रापीति** ॥ प्रत्यक्षादिप्रमाणप्रामाण्यग्राहकानुमानप्रामाण्यस्य स्वेनैव सिद्धत्वाङ्गीकारे तद्वदेव प्रत्यक्षादिप्रामाण्यस्यापि स्वेनैव ग्राह्यत्वाङ्गीकारप्रसङ्गेन ग्राहकान्तराङ्गीकारायोगादित्यर्थः ॥ **तस्मादिति** ॥ तथा च स्वतस्त्वमेव अङ्गीकार्यमिति भावः ॥ **साक्षिज्ञानेनैवेति** ॥ ज्ञानग्राहकेणैवेत्यर्थः । ननु यदि प्रत्यक्षादिप्रमाणप्रामाण्यग्राहकं साक्षिरूपं ज्ञानमित्यङ्गीक्रियते तर्हि तत्प्रामाण्यमपि प्रमाणसिद्धं न वा? नेति पक्षे स्वयमसिद्धप्रामाण्यकस्य अन्यप्रामाण्यप्रमापकत्वासम्भवात् । आद्ये किं स्वेनैव सिद्धं? प्रमाणान्तरेण वा? नाद्यः प्रत्यक्षादिप्रामाण्यस्यापि साक्षिवत् स्वेनैव ग्राह्यत्वप्रसङ्गेन साक्षिवेद्यत्वाङ्गीकारायोगात् । द्वितीये [1]साक्षिप्रामाण्यमपि पुनः प्रमाणान्तरेण वेद्यं तस्याप्येवमिति भवन्मतेऽपि अनवस्था स्यादेव इत्यत आह ॥ **तस्य चेति** ॥ साक्षिरूपज्ञानस्येत्यर्थः ॥ **स्वप्रकाशत्वेनेति** ॥ स्वविषयकज्ञानरूपत्वेनेत्यर्थः । स्यादेतदेवं, यदि साक्षिणः स्वप्रकाशत्वमेव स्यात् । तदेव नास्ति प्रमाणाभावात् इत्यतोऽनुभव एव तत्र प्रमाणमित्याह ॥ **मामहमिति** ॥ **दर्शनादिति** ॥ [2]अनुभूयमानत्वादित्यर्थः । नन्वेतत् 'कर्णे स्पृष्टे कटिं चालयति' इति न्यायमनुसरति । साक्षिणः स्वप्रकाशत्वे प्रमाणाभावेन आक्षिप्ते आत्मनः स्वप्रकाशत्वमनुभवसिद्धमित्युच्यते । अतोऽसङ्गतमेतत् इत्यत आह ॥ **साक्षिणश्चेति** ॥ आत्मन एव साक्षित्वादिति भावः । तथा च आत्मन एव साक्षिचैतन्यरूपत्वेन तस्य स्वप्रकाशत्वे अनुभवबलेन सिद्धे सति साक्षिण एव तत् सिद्धं भवतीति भावः ।

नन्वेवमेव 'अयं घटः' इत्यादिवृत्तिज्ञानानामेव स्वप्रकाशत्वमङ्गीकृत्य स्वप्रामाण्यग्राहकत्वमङ्गीक्रियतां लाघवात् । किं साक्षिवेद्यत्वमङ्गीकृत्य तस्य स्वप्रकाशत्वेन स्वप्रामाण्यग्राहकत्वाङ्गीकारेण? गौरवात् इति

[1] तत्प्रामाण्यमपि.

[2] अनुभवादित्यर्थः

(श्री. टि.)चेन्न । वृत्तिज्ञानानां जडत्वेन स्वप्रकाशत्वसाधकाभावात् । साक्षिणश्च चेतनत्वेन तत्साधकस्यो-क्तानुभवस्यैव सत्त्वात् । प्रमाणवतो गौरवस्य अदोषत्वादित्यवधेयम् ॥ स्वरूपेति ॥ स्वरूपभूतेरर्थः । सम्यगनुभवत्वेन सम्यगनुभवस्वरूपत्वेन ।

### स्मृतिप्रामाण्यसमर्थनम्

(टी.) यथार्थस्मृतावव्याप्तिश्च प्राक् आदिशब्देन संगृहीता । तत्र स्मृतिर्न ॥ प्रमाणमिति न वाच्यम् । साधितत्वात् । तदनङ्गीकारे बाधकं चाह

## स्मृतेश्च प्रामाण्यानङ्गीकारे अनुभूतं मया इत्यत्र प्रमाणाभावात्

यदि स्मृतिर्न प्रमाणं तर्ह्यनुभूतमप्रामाणिकं स्यात् । 'अनुभूतं मयेदं' इत्यत्र स्मृतिं विना प्रमाणाभावात् ।

### स्मृतेरनुमानत्वेन प्रामाण्यमिति पक्षनिरासः

सत्यम् , स्मृतिरेवानुभूते प्रमाणम् । किं नाम ? लिङ्गत्वेनैव । पटुतरो ह्यनुभवः संस्कारं जनयति । स च सदृशदर्शनादिना समुद्बुद्धः स्मृतिमिति । संस्कारजन्या स्मृतिः संस्कारे लिङ्गम् । स च पूर्वानुभवे भविष्यति । अतो नानुभूतस्याप्रामाणिकत्वं नापि लक्षणस्याव्याप्तिः स्मृतेरपि सम्यगनुभवसाधनत्वादित्यत आह

## लिङ्गत्वेन प्रामाण्ये कल्पनागौरवम्

यदि स्मृतेर्लिङ्गत्वेन प्रामाण्यं कल्प्यते तर्हि कल्पनागौरवं स्यात् । साक्षात् अर्थ एव प्रामाण्यसम्भवेऽपि स्मृतेः संस्कारे लिङ्गत्वं, तस्यानुभव इत्यप्रामाणिकस्यानेकस्य कल्प्यमानत्वादिति ।

दोषान्तरं चाह

## दृष्टहानिश्च

यदि स्मृतेर्लिङ्गत्वेन प्रामाण्यं तर्हि पृथक्प्रमाणतया दृष्टस्यापि प्रत्यक्षादेः लिङ्गत्वमेव स्यात् तत्रापि प्रत्यक्षादिना कर्मकारकस्यार्थस्यानुमानसम्भवात् ।

---

[1] रा. स्वयं प्रकाशाज्ञाकारे तत्राव्याप्तेः   [2] श्री. स्वप्रकाशात्मस्वरूपसाधिकाने.

(टी.)अतः प्रत्यक्षादिवत् स्मृतेरपि साक्षात्प्रामाण्यात् तत्राव्याप्तं परोक्तप्रमाणलक्षणमयुक्तमेवेति यथावस्थितार्थविषयत्वमेव लक्षणमुपपन्नमिति ।

(रा. टि.) ॥ **प्रागादिशब्देनेति** ॥ ईश्वरज्ञानादावित्यादिशब्देनेत्यर्थः । ज्ञाने अव्याप्तिसमर्थनार्थमेव एतावतो ग्रन्थस्य प्रवृत्तत्वात् इदानीं आदिपदसङ्गृहीतोक्तेरवसर इति भावः ॥ **तत्रेति** ॥ अव्याप्त्यभिधाने कृते सतीत्यर्थः ॥ **साधितत्वादिति** ॥ **स्मृत्यनुवादयोर्नाप्रामाण्यं यथार्थत्वानुभवात्** इत्यत्रेति भावः । अर्धाङ्गीकारेण शङ्कते ॥ **सत्यमित्यादिना** ॥ [1]धूमेनाग्निरिव स्मृतिरूपकार्येण संस्कारमनुमाय तेन तत्कारणानुमानमिति परम्परया स्मृतिरनुभवे लिङ्गमिति भावेन कार्यकारणाभावं व्यनक्ति ॥ **पटुतरो हीत्यादिना** ॥ **सदृशदर्शनादिनेति** ॥ अदृष्टादिरादिपदार्थः ॥ **स्मृतिमिति** ॥ जनयतीत्यनुकर्षः ॥ **सम्यगनुभवसाधनत्वादिति** ॥ संस्कारानुमिति-रूपसम्यगनुभवसाधनत्वादित्यर्थः ।

॥ **प्रत्यक्षादेरिति** ॥ साक्षात्कारज्ञानस्य शाब्दज्ञानस्य च 'क्रियां कुर्वद्धि कारकम्' इति कर्मकारक-जन्यत्वेन अपरोक्षादिरूपकार्यलिङ्गेन घटादेः कारकस्य अनुमानेन सिद्धिरिति स्यात् । तथा च घटादि-रप्यनुमेय एवेत्यापद्येतेति अनुमानमेकमेव प्रमाणमिति स्यादित्यर्थः । अत एव कर्मकारकस्येत्युक्तम् ।

(श्री. टि.) शङ्कते ॥ **यथार्थस्मृताविति** ॥ [2]प्राक् आदिशब्देन सङ्गृहीतेति शेषः । तथा च पूर्वं **ईश्वरज्ञा-नादावव्याप्तेः** इत्यत्रत्यादिशब्देन अस्मदादिज्ञानस्यापि गृहीतत्वेन यथार्थस्मृतिरूपे अस्मदादिज्ञानेऽप्यव्याप्तिरि-त्युक्तम् । तत्र स्मृतिर्न प्रमाणमित्यर्थः । यद्वा उत्तरवाक्यमुत्थापयितुं मूलमुपलक्षणपरं इत्यभिप्रेत्याह ॥ **यथार्थस्मृ-ताविति** ॥ तस्योपरि शङ्कते ॥ **तत्रेति** ॥ कुतो न वाच्यम्? इत्यत आह ॥ **साधितत्वादिति** ॥ **स्मृत्यनु-वादयोर्नाप्रामाण्यं यथार्थत्वानुभवात् वेदानुमानादिप्रामाण्यप्रसिद्धेश्च** इत्यादिना स्मृतिप्रामाण्यस्य साधि-तत्वादित्यर्थः ॥ **स्मृतिं विनेति** ॥ कार्यस्यैव कारणप्रमापकत्वादिति भावः । शङ्कते ॥ **सत्यमित्यादिना** ॥ **लिङ्गत्वेनैवेति** ॥ अनुभूतेऽर्थे केवलत्वेन साक्षात्स्मृतित्वेन प्रामाण्यं नास्तीत्याशयः । निर्विकल्पकानुभवस्य संस्कारजनकत्वाभावात् पटुतर इत्युक्तं । सविकल्पकानुभव इत्यर्थः । संस्कारमात्रस्य स्मृतिजनकत्वाभावात् समुद्बुद्ध इत्युक्तं । समुद्बोधलक्षणसहकार्युपेत इत्यर्थः । समुद्बोधकारणप्रदर्शनाय सदृशदर्शनादिनेत्युक्तं । आदिपदेन अदृष्टचिन्तादिग्रहणम् । यथोक्तं परैः

सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः ॥ इति ।

स्मृतिबीजं संस्कारः तस्य बोधका उद्बोधका इति तदर्थो द्रष्टव्यः । स्मृतिं जनयति इति वर्तते । ततः किं प्रकृते? इत्यत आह ॥ **संस्कारजन्येति** ॥ तथा च इति शेषः । 'अयं संस्कारवान् स्मृतिमत्त्वात्

---

[1] धूमेनाग्निरिव.

[2] इदं वाक्यमधिकमिति भाति.

(श्री. टि.) यो यत्कार्यवान् स तत्कारणवान्' इति सामान्यव्याप्तेरिति भावः । स च संस्कारः । भविष्यति लिङ्ग-मिति वर्तते । 'अयं पूर्वानुभववान् संस्कारवत्त्वात्' इत्यनुमानं द्रष्टव्यम् । अत्र स्वरूपासिद्धिपरिहाराय पूर्वानु-मानमिति बोध्यम् ॥ स्मृतेरपीति ॥ संस्कारद्वारेति शेषः ॥ सम्यगनुभवेति ॥ 'अयमनुभववान्' इतिपूर्वा-नुभवविषयको यः सम्यगनुभवोऽनुमितिरूपः तत्साधनत्वेन अनुमाने अन्तर्भावादित्यर्थः ॥ साक्षादर्थ एवेति ॥ पूर्वानुभवविषयीकृते घटादिरूपार्थविषय एव साक्षात्प्रामाण्यं केवलप्रमाणत्वं, तस्य सम्भवेऽपीत्यर्थः । साक्षाद्य-थावस्थितज्ञेयविषयीकारित्वरूपकेवलप्रमाणत्वसम्भवेऽपि उक्तरीत्या सम्यगनुभवसाधनत्वरूपानुप्रमाणत्वाङ्गीकारे गौरवमिति भावः ।

॥ पृथगित्यादि ॥ साक्षाद्घटादिविषयप्रमितिरूपतया 'घटज्ञानवानहम्' इत्याद्यनुव्यवसायविषयीकृतस्य 'अयं घटः' इत्यादिज्ञानस्यापि अर्थे लिङ्गत्वेनैव प्रामाण्यं स्यात् । न पृथक् प्रत्यक्षत्वेन प्रामाण्यमित्यर्थः । तदेव विवृणोति ॥ तत्रापीति ॥ 'अयं घटः' इत्यादिप्रत्यक्षस्थलेऽपि । प्रत्यक्षादिना 'अयं घटः' इत्यादिज्ञानरूप कार्येण ॥ कर्मकारकस्येति ॥ कर्मतया जनकस्येत्यर्थः ॥ अनुमानसम्भवादिति ॥ सौत्रान्तिकमतानुसारेणेति शेषः । सौत्रान्तिकमते ज्ञानातिरिक्तः सर्वोऽप्यर्थप्रपञ्चोऽनुमेय एव । न तु प्रत्यक्षः । ज्ञानमेव नीलाद्याकारं प्रत्यक्षवेद्यं । इदं च कादाचित्कत्वात् किमपि कारणमपेक्षमाणं बाह्यमर्थमनुमापयिष्यतीति भावः । यथोक्तमनु-व्याख्याने

विश्वं प्रत्यक्षगं त्यक्त्वा तयोर्योऽनुमितिं वदेत् ॥ इति ।

यद्वा 'विमतं स्थलं घटवद्भवितुमर्हति तद्वत्त्वेनोपलभ्यमानत्वात्' इति प्रयोगसम्भवेन प्रत्यक्षस्याप्यथ लिङ्गत्वसम्भवेन पृथक्प्रामाण्यं न स्यादित्यर्थः । अतोऽत्र लिङ्गत्वेन प्रामाण्यकल्पने दृष्टहानिरित्येव त्वया वाच्यं । तत् अस्माकमपि समानमिति भावः । उपसंहरति ॥ अत इति ॥ साक्षात्प्रामाण्यात् । अर्थ एवेति शेषः ॥ साक्षादिति ॥ न लिङ्गत्वेनेत्यर्थः । इति सिद्धमिति शेषः ।

### स्मोकप्रमाणलक्षणपरीक्षा

(टी.) इदमपि लक्षणं न युक्तम् । द्विविध एव हि प्रत्ययः स्मृतिरनुभवश्चेति । तत्रानुभवः सर्वोऽपि प्रमाणमेव । स्मृतिरपि यदि प्रमाणं तदा यथावस्थितविशेषणस्य कृत्याभावादित्यत आह

**स्मृतिप्रमाणद्वैविध्यमात्रकल्पने मिथ्याज्ञानादेर्नियमाननुभवविरोधः**

स्मृतिश्च प्रमाणं चेति प्रत्ययद्वैविध्यमात्रकल्पनं न युज्यते । तथा सति विपर्ययसंशययोः अपाकरणप्रसङ्गात् । न च तयोरस्तित्वमिति वाच्यम् । विपर्ययादेरनुभवसिद्धत्वेन तदसिद्धेरिति ।

(टी.) विपर्ययादिविषयोऽनुभव एव नास्ति। किं तु? व्यवहारमात्रमित्यत आह

**तदनुभवाभाव इत्युक्ते अनुभवः स्मृतिश्च नास्तीत्युक्ते किमुत्तरम्?**

**यदि विपर्ययादिविषयोऽनुभवः स्वयं प्रकाशमानोऽपि नास्तीत्युच्यते तर्हि पराभ्युपगतं अनुभवमात्रं स्मृतिमात्रं च न स्यात्। अविशेषात्। तथा च जगदान्ध्यं स्यात्।**

(रा. टि.)॥ **कृत्याभावादिति** ॥ ज्ञानं प्रमाणमित्येवास्त्विति भावः ॥ **यदि विपर्ययादिविषयोऽनुभव इति** ॥ भ्रान्तोऽस्मि विपरीतं प्रतिपन्नोऽस्मीत्यादिरूपसाक्ष्यनुभव इत्यर्थः ॥

(श्री. टि.) स्वकीयप्रमाणलक्षणपरीक्षां कर्तुमाह ॥ **इदमपीति** ॥ **प्रमाणमेवेति** ॥ यदि अप्रमाणभूतोऽपि कश्चिदनुभवः स्यात् तदा तद्व्यावृत्त्यर्थं यथावस्थितविशेषणं सार्थकं स्यादिति भावः। स्मृतिव्यावृत्त्यर्थं तद्विशेषणमिति चेत् तत्राह ॥ **स्मृतिरपीति** ॥ प्रमाणं यथावस्थितार्थविषयीकारिणी ॥ **कृत्याभावादिति** ॥ तथा च तद्वैयर्थ्यमिति भावः ॥ **प्रमाणं चेतीति** ॥ यथार्थानुभवश्चेत्यर्थः। मिथ्याज्ञानपदार्थो विपर्ययेति। आदिपदार्थः संशयेति ॥ **अनुभवसिद्धत्वेनेति** ॥ 'इदं रजतमिति ज्ञानवानहम्' इत्याद्यनुव्यवसायसिद्धत्वेनेत्यर्थः।

ननु विपर्ययादिविषयानुभवाभावे 'रजतज्ञानवानहम्' इत्याद्यनुभवस्य तर्हि का गतिः? इति पृच्छति ॥ **किं त्विति** ॥ उत्तरमाह ॥ **व्यवहारमात्रमिति** ॥ **स्वयं प्रकाशमानोऽपीति** ॥ विपर्ययादिस्वरूपस्य सत्यत्वेन स्वयं प्रकाशमानसाक्षिसिद्धोऽपीत्यर्थः ॥ **नास्तीति** ॥ किं तु? व्यवहारमात्रमित्यर्थः ॥ **पराभ्युपगतमिति** ॥ 'प्रमाणं स्मृतिश्च नः प्रत्ययः' इति परेणोक्तत्वादिति भावः ॥ **अविशेषादिति** ॥ स्वयंप्रकाशमानसाक्षिसिद्धत्वाविशेषादित्यर्थः। तथा च [1]तद्विषयकानुभवस्यापि व्यवहारमात्रत्वसम्भवादिति भावः। इष्टापत्तिपरिहारायाह ॥ **तथा चेति** ॥ अनुभवस्मृत्योरभाव इत्यर्थः। जगदान्ध्यं जगत्प्रवृत्तिविलयः।

### विपर्ययानङ्गीकर्तृमीमांसकमतनिरासः

**(टी.) अथ वा विपर्ययाद्यनङ्गीकारे दूषणान्तरमेतत्। यदि शुक्तिकायां 'इदं रजतं' इत्यादिरूपो विपर्ययाद्यनुभवो नास्ति किं तु? पुरोवृत्त्यनुभवे सति रजतस्मृतौ तयोः स्वरूपतो विषयतश्च विवेकाग्रहादेव 'इदं रजतं' इत्यादिव्यवहार इत्युच्यते तर्हि पुरोवृत्त्यनुभवो रजतस्मृतिश्च नास्तीति वदामः। ज्ञानपूर्वकत्वात् व्यवहारस्य कथं तदभावेऽसौ स्यात्? इति चेत् हन्त तर्हि विशिष्टज्ञानपूर्वकत्वात् विशिष्टव्यवहारस्य कथमसावपि तद्विना स्यात्।**

---

[1] स्मृत्यनुभवयोरपि.

(टी.)स्मृत्यनुभवयोरगृहीतविवेकत्वेन विशिष्टज्ञानसादृश्यात् व्यवहार इति चेत् तर्हि अविवेकाग्रहेण अविशिष्टज्ञानसादृश्यात् तदभावस्याप्यापातः स्यात्। तस्मात् विपर्ययादेर्व्यावर्तनीयस्य सद्भावात् याथार्थ्यमेवोपपन्नं लक्षणमिति ।

(रा. टि.) ॥ दूषणान्तरमिति ॥ विपरीतज्ञानाभावे तदङ्गीकृतविपरीतव्यवहाराभावरूपं दूषणान्तरमित्यर्थः ॥ असौ स्यादिति ॥ इदं रजतमिति भ्रमरूपो व्यवहार इत्यर्थः ॥ विशिष्टज्ञानेति ॥ शुक्तिरजततादात्म्यविषयकज्ञानेत्यर्थः ।

॥ विशिष्टज्ञानसादृश्यादिति ॥ 'अयं घटः' इत्यादौ पुरोवृत्तिघटतादात्म्यज्ञानमेकमेवेति तत्र विवेको भेदो न गृह्यत इति अगृहीतविवेकत्वं । घटादिविशिष्टज्ञान इव इदं, रजतम् इति ग्रहणस्मृतिरूपज्ञानद्वयस्थलेऽपि दोषवशात् विद्यमानोऽपि विवेको न गृह्यत इति विशिष्टज्ञानसादृश्यात् 'अयं घटः' इति विशिष्टव्यवहार इव 'इदं रजतम्' इति विशिष्टविपरीतव्यवहार इत्यर्थः ॥ तर्ह्यविवेकाग्रहेणेत्यादि ॥ 'अयं घटः, अयं पटः' इति ज्ञानयोः अविवेकः अभेदः असत्त्वादेव न गृह्यत इति अभेदाग्रहात् घटपटयोर्विशिष्टशब्दिताभेदव्यवहारो नास्ति यथा, तथैव इदं, रजतम् इति ग्रहणस्मरणरूपज्ञानयोर्विवेक इव अविवेकः अभेदोऽपि न गृह्यत इत्यविशिष्टघटपटज्ञानसादृश्येन अविवेकाग्रहेण 'इदं रजतम्' इति विशिष्टव्यवहारोऽपि न स्यात् । किं तु [1]घटोऽयं पटोऽयमितिवत् इदंरजते इति व्यवहारः स्यादित्यर्थः ।

(श्री. टि.) ॥ दूषणान्तरमेतदिति ॥ अनुभवविरोधरूपमेकं दूषणं पूर्ववाक्येनोक्त्वा तदनुभवाभाव इति वाक्येन दूषणान्तरमुच्यत इत्यर्थः । रजतस्मृतिश्चेत्यनन्तरं इति ज्ञानद्वयमपीति शेषः ॥ ज्ञानपूर्वकत्वादिति ॥ व्यवहारस्य लोके व्यवहर्तव्यज्ञानपूर्वकत्वदर्शनात् । तदभावे स्मृत्यनुभवरूपज्ञानद्वयाभावे इदमिति व्यवहारो रजतमिति व्यवहारश्च कथं स्यात्? इत्यर्थः । तथा च तदन्यथानुपपत्त्या ज्ञानद्वयसिद्धिरिति भावः ॥ हन्त तर्हीति ॥ 'अयं घटः' इत्यादिविशिष्टव्यवहारस्य विशिष्टज्ञानपूर्वकत्वदर्शनात् । असावपि 'इदं रजतम्' इति विशिष्टव्यवहारोऽपि । तद्विना 'इदं रजतम्' इति भ्रमरूपविशिष्टज्ञानं विना । कथं स्यात्? अतस्तदन्यथानुपपत्त्या विपर्ययसिद्धिरिति भावः । अत्र व्यवहारशब्देन प्रवृत्तिरप्यभिमता । तथा च लोके प्रवृत्तेर्विशिष्टज्ञानसाध्यत्वदर्शनात् भ्रमरूपविशिष्टज्ञानाभावे प्रवृत्तिरेव न स्यात् । अतस्तदन्यथानुपपत्त्यापि भ्रमसिद्धिरित्यपि योज्यम् । अन्यथा उत्तरग्रन्थासङ्गतेरिति द्रष्टव्यम् ।

शङ्कते ॥ स्मृत्यनुभवयोरिति ॥ विवेको भेदः । सादृश्यात् भेदाग्रहरूपात् । 'अयं घटः' इत्यादिविशिष्टज्ञाने भेदस्याभावादेव भेदाग्रहोऽस्ति । अत्रापि ज्ञानद्वये विद्यमानस्यापि भेदस्य अग्रहोऽस्ति । भेदग्रहे

---

[1] घटोऽयं पटोऽयमितिवत् घटपटौ इतिवद्वा इदमिदम् रजतमिदमिति वा इदंरजते इति वा व्यवहारः स्यादित्यर्थः इति पाठेन भाव्यमिति भाति ।

(श्री. टि.)हि प्रवृत्तिरेव न स्यात्। अतो विशिष्टज्ञानसादृश्यात् भेदाग्रहात् व्यवहारः प्रवृत्तिर्युक्तेत्यर्थः। अविवेकोऽभेदः॥ **अविशिष्टज्ञानेति**॥ भेदाग्रहमात्रेण प्रवर्तकविशिष्टज्ञानसदृशं यत् 'इदं रजतम्' इति ज्ञानं तद्भिन्नं यत् 'नेदं रजतम्' इति ज्ञानं भेदग्रहेण निवृत्तिजनकं तत् अविशिष्टज्ञानमित्युच्यते। तत्सदृशोऽभेदाग्रहः तस्मात्। तदभावस्य प्रवृत्तिरूपव्यवहाराभावस्यापि आपातादित्यर्थः। 'नेदं रजतम्' इति ज्ञानविषययोर्भेदग्रहस्यैव सत्त्वेन अभेदस्य अभावादेव अभेदाग्रहोऽस्ति। 'इदं रजतम्' इत्यत्रापि अभेदाग्रहोऽस्ति। अभेदग्रहे त्वन्मते अन्यथाख्यात्यापत्तेः। तथा च इदं ज्ञानद्वयं प्रवर्तकविशिष्टज्ञानसादृश्यात् भेदाग्रहात् यदि प्रवृत्तिमुपजनयेत् तर्हि निवर्तकाविशिष्टज्ञाननिष्ठभेदग्रहसादृश्यात् अभेदाग्रहात् निवृत्तिमपि कुतो न जनयेत्? इति भावः। व्यावर्त्यस्य यथावस्थितपदव्यावर्त्यस्य। याथार्थ्यमेव लक्षणमुपपन्नमित्यन्वयः।

(टी.)ननु विपर्ययाद्यनुभवाभावे अनुभवस्मृत्योरभावः स्यादित्ययुक्तम्। अपसिद्धान्तप्रमाणबाधासिद्धिदोषादिति चेन्न। तर्कस्य दूषणानुमानत्वात्। तथापि कुतो नापसिद्धान्तादि? इत्यत आह

**स्वसिद्धैः साधनं परसिद्धैर्दूषणम्**

**साधनमेव स्वसिद्धान्तसिद्धन्यायैः कर्तव्यम्। न तु दूषणमपि। तत् परसिद्धन्यायैरपि भवति। किमतो यद्येवम्? इत्यत आह**

**अतो न दूषणे अपसिद्धान्तादि**

**अतः परसिद्धन्यायेन परोक्तस्य दूषणीयत्वात् दूषणानुमाने नापसिद्धान्ताद्युद्भावनीयमिति।**

(रा. टि.)॥ **अपसिद्धान्तेति**॥ अनुभवस्मृत्योर्ग्रन्थकृन्मते अङ्गीकृतत्वेन तदभावोक्तौ अपसिद्धान्तः। तयोः प्रमितत्वेन तदभावः प्रमाणबाधितः। विपर्ययाद्यनुभवाभावोऽसिद्ध इत्येवंरूपदोषादित्यर्थः॥ **स्वसिद्धान्तसिद्धन्यायैरिति**॥ न्यायशब्देन अत्र धर्मिलिङ्गव्याप्तिदृष्टान्ता उच्यन्ते॥ **परसिद्धन्यायैरपीति**॥ विपर्ययाद्यनुभवाभावस्य परेणाभ्युपगमात् नासिद्धिः। 'अनुभवाभावो भवितुमर्हति' इत्यसाधनात् अनिष्टप्रसञ्जनरूपे बाधादेरदोषत्वात् न तदुद्भावनं तत्र कार्यमित्यर्थः।

(श्री. टि.)॥ **अपसिद्धान्तेत्यादि**॥ 'यदि विपर्ययाद्यनुभवाभावः स्यात् तर्हि अनुभवस्मृत्योरप्यभावः स्यात्' इति तर्कस्तावदनुमानम्। अत्र च आपादकं लिङ्गम्। आपाद्यं साध्यमिति वक्तव्यम्। न च तद्युक्तम्। आपादकस्य आहार्यत्वेन अन्यतरासिद्धत्वात्। आपाद्यस्य अनिष्टत्वेन बाधितत्वात्। नह्यसिद्धं लिङ्गं भवति। नापि बाधितं साध्यम्। आपाद्यस्य साध्यत्वे अपसिद्धान्तश्च स्यात्। स्मृत्यनुभवसद्भावस्य स्वयमङ्गीकृतत्वा-

(श्री. टि.)दित्यर्थः ॥ तर्कस्येति ॥ अनुमानं द्विविधं साधनानुमानं दूषणानुमानञ्चेति । तत्र तर्को दूषणानुमान मित्यर्थः॥ तथापीति ॥ दूषणानुमानत्वेऽपीत्यर्थः ॥ स्वसिद्धन्यायैरिति ॥ न्यायशब्देन धर्मिलिङ्गव्याप्तिदृष्टान्ता उच्यन्ते । न केवलं परस्य । किं तु ? स्वस्यापि ये सिद्धा न्यायाः ते स्वन्यायाः तैः साधनं कर्तव्यम् । तथा स्वस्यैव सिद्धा ये न्यायाः तैः साधनमादौ कर्तव्यमित्यपि योज्यम् । पश्चात् परेण अन्यतरासिद्ध्यादौ उद्भाविते सति परं प्रति तत्साधनं कर्तव्यमिति भावः ॥ तत्परसिद्धन्यायैरपि भवतीति ॥ तत् दूषणं । न केवलं स्वस्य । किं तु ? परस्यापि सिद्धाः ये न्यायाः ते परन्यायाः । तथा परस्यैव सिद्धा ये न्यायाः ते परन्यायाः। तैः कर्तव्यं भवतीत्यर्थः । अपिशब्दात् स्वमात्रसिद्धन्यायैः साधनमिव क्वचिद्दूषणमपि कृत्वा परं प्रति तत्साधनं कर्तव्यमिति द्रष्टव्यम् ।

अयमत्र विवेकः । द्विविधं हि कार्यं कथकस्य । स्वपक्षसाधनं परपक्षदूषणं च । तत्र साधनं स्वपरसंमतैरेव न्यायैः कार्यं नान्यतरमात्रसिद्धैः । यथा 'पर्वतोऽग्निमान् धूमवत्त्वात् यो धूमवान-सावग्निमान् यथा महानसः' इति । क्वचित् पुनः साधनमादौ स्वमात्रसिद्धैरेव न्यायैः क्रियते । तत्र परेण अन्यतरासिद्ध्यादौ उद्भाविते सति तं प्रति तत्साधनं क्रियते । यथा 'शब्दोऽनित्यः कार्यत्वात् । कार्यश्चासौ व्यञ्जकप्रयत्नानन्तरोपलब्धेः' इत्यादि । सर्वथा साधनमुभयसिद्धन्यायसाध्यम् । दूषणं तु द्विविधम्, इदमित्थं न भवतीति वा अनिष्टोपदर्शनेन वा । तत्रापि आद्यं उभयसिद्धन्यायैरेव कार्यम् । यथा 'शब्दो न द्रव्यं श्रोत्रग्राह्यत्वात् शब्दत्वसामान्यवत्' इति । क्वचित्पुनः स्वमात्रसिद्धन्यायैः साधनमिव दूषणमपि कृत्वा परं प्रति तत्साधनं क्रियते । यथा तत्रैव प्रयोगे काले अनैकान्त्योद्भावने तस्य अतीन्द्रियत्वसाधनमित्यादि । सर्वथा आद्यं दूषणं उभयसिद्धन्यायसम्पाद्यमेव । द्वितीयं तु परसिद्धैरेव न्यायैः कार्यम् । यथा 'यदि पर्वतो निरग्निकः तर्हि निर्धूमोऽपि स्यात्' इति। अत्र हि आपादकस्य परसिद्धत्वमेव भाव्यम् । न स्वसिद्धत्वम् । तदतिरिक्ताङ्गानां तु स्वसिद्धिः सती वा असती वा न विवक्षिता । परसिद्धिरेवोपयुज्यते । स एव च तर्क इति व्यवह्रियत इति । उक्तं चैतत्सर्वमनुव्याख्याने

स्वन्यायैः साधनं कार्यं परन्यायैस्तु दूषणं ।
स्वन्यायैर्दूषणं च स्यात्साधितैः प्रतिवादिनः ॥ इति ।

व्याख्यातं चैतत सुधायां ॥ न केवलं परस्य । किं तु? स्वस्यापि ये सिद्धा न्यायाः ते स्वन्यायाः । साधनमिति दूषणस्याप्युपलक्षणम् । परस्यैव सिद्धाः न्यायाः परन्यायाः । स्वस्यैव सिद्धा न्यायाः स्वन्यायाः । चशब्देन साधनं च प्रतिवादिनः प्रति इत्यादि ।

॥ दूषणानुमान इति ॥ अनिष्टोपदर्शनरूपे दूषणानुमान इत्यर्थः ॥ नापसिद्धान्तादीति ॥ तथा च अपसिद्धान्तप्रमाणबाधादिकं भूषणमेव, न तु दूषणमित्यर्थः । अयं भावः, किमत्र आपाद्यतोपेतस्य स्मृत्यनुमा-

(श्री. टि.) भावस्य बाध्यत्वं ? तथोक्तौ च अपसिद्धान्त उच्यते ? उत केवलस्य ? नाद्यः । यत आपादनं नाम अङ्गीकर्तव्यताज्ञापनं । न पुनः सद्भावप्रतिपादनं । न च तत् प्रमाणविरुद्धं । नापि सिद्धान्तविरुद्धं । 'यदि विषं भक्षयिष्यसि तर्हि मरिष्यसि' इति यथा । द्वितीये तु स्यादेव बाधादि । न च तत् अत्रोच्यते । तथा सति हि स्यादिति न स्यात् । असिद्धिरपि एवमेव परिहर्तव्या । तथा हि, किं यद्यलंकृतस्य विपर्ययाद्यनुभवाभावस्य असिद्धत्वमुच्यते ? किं वा केवलस्य ? न प्रथमः असिद्धेः । यदि विपर्ययाद्यनुभवाभावः स्यादित्यस्य यदि विपर्ययाद्यनुभवाभावोऽङ्गीक्रियेतेत्यर्थः । न चायमसिद्धः । विपर्ययाद्यनुभवाभावस्य परेणैव अङ्गीकृतत्वात् । न द्वितीयः । तस्य अत्रानुपादानात् । तथात्वे हि यदीति न स्यादिति । यथोक्तमनुव्याख्याने

प्रसङ्गार्थतया प्रोक्ता न सिद्धान्तस्य दूषकाः । इति ।

दूषणानुमाने नापसिद्धान्ताद्युद्भावनीयम् इत्यनन्तरं किं नाम ? मतानुज्ञैव दूषणतयोद्भावनीया इति वाक्यशेषः । सा च त्वया नोद्भावयितुं शक्यत इत्याशयः ।

### मतानुज्ञाया असङ्गतान्तर्भावः

(टी.) स्वपक्षदोषमनुद्धृत्य प्रतिबन्दीग्रहणं मतानुज्ञेत्येके । तदनुपपन्नम् । प्रतिबन्दीग्रहणस्य परोक्तव्यभिचारोद्भावनरूपत्वेन बाधकतर्कोद्भावनरूपेण वा परोक्तदूषणत्वात् । स्वपक्षास्थापनेन प्रवृत्तेर्दोषत्वमिति चेत् तर्हि अप्राप्तकालसाङ्कर्यापातात् ।

स्वपक्षे दोषमनुद्धृत्य परस्येष्टापादनमित्यन्ये । तदप्यसत् । विशेषणासामर्थ्यात् ।

तस्मात् इष्टापादनमेव मतानुज्ञेति भावेन तत्स्वरूपानुवादेन सिंहावलोकनन्यायेन प्रकृतदूषणानुमानदोषस्य मतानुज्ञाया उक्तान्तर्भावमाह

इष्टापत्तिः सिद्धसाधनत्वात् असङ्गतमेव

इष्टापादनरूपा मतानुज्ञा [1]असङ्गतावन्तभूता । परसिद्धार्थसाधनस्वरूपत्वात् । सिद्धसाधनस्य च असङ्गतत्वमुक्तम् । अनिष्टापादनस्यैव सङ्गतत्वादिति न विरोधादिभ्यो दूषणान्तरमस्तीति । व्याप्त्यभावादीनामन्तर्भावस्तु स्फुटत्वान्नोक्तः ।

(रा. टि.)॥ व्यभिचारोद्भावनेति ॥ जीवभेदो ब्रह्मणि भिन्नोऽभिन्नो वा ? आद्ये अनवस्था अन्ते अन्यतरपरिशेषः इति परेणोक्ते जीवैक्यं ब्रह्मणि भिन्नमभिन्नं वा ? इति प्रतिबन्दी गृह्यते । तत्रैक्यस्य ब्रह्माभेदेनाङ्गीकारे

[1] असङ्गतान्तर्भूता इति पाठेन भाव्यमिति भाति.

(रा. टि.)अन्यतरपरिशेषापत्तेः तत्र० यभिचारः इति व्यभिचारोद्भावनरूपेण, यद्येवं विकल्पदोषाभ्यां भेदोऽपाक्रियते तर्हि ऐक्यमप्येवमपाकर्तुं शक्यत इत्यैक्यसिद्धिरपि तव न स्यात् इत्यादिबाधकतर्कोद्भावनरूपेण चेत्यर्थः ।

॥ **विशेषणासामर्थ्यादिति** ॥ व्यावर्त्याभावात् अप्राप्तकालसाङ्कर्यापाताच्चेति भावः ॥ **प्रकृतेति** ॥ **परसिद्धैर्दूषणम्** इतिप्रकृतेत्यर्थः । दूषणानुमानदोषस्य मतानुज्ञाया इति विशेषणविशेष्यभावेन सामानाधिकरण्यं ।

॥ **उक्तमिति** ॥ **सिद्धसाधकोऽसङ्गत** इत्यत्रेति भावः । इष्टापादनरूपदोषस्येव व्याप्त्यभाव[1]तर्कप्रतिरूपाणां दूषणानुमानदोषाणामन्तर्भावः कुतो नोक्तः? इत्यत आह ॥ **व्याप्त्यभावादीनामिति** ॥ प्रकृतदूषणानुमानदोषाणामिति योज्यम् । व्याप्त्यभावः अव्याप्तौ । तर्कप्रतिहतिरपि तथैव । विपर्ययापर्यवसानं न्यूने । परानुकूलत्वं असङ्गतौ इति स्फुटत्वादिति भावः ।

(श्री. टि.) तत्र का मतानुज्ञा ? इति शङ्कायां स्वयं तां लक्षयितुं परोक्तं तल्लक्षणमनूद्य दूषयति ॥ **स्वपक्षेत्यादिना** ॥ यथा जिनस्य आप्तत्वं मन्यमानं क्षपणकं प्रति 'जिनोऽनाप्तः स्खलितवाक्त्वात्, इति तार्किकेणोक्ते- जिनस्य आप्तत्वरूपे स्वपक्षे स्खलितवाक्त्वरूपं दोषमनुद्धृत्य ' तर्हि भवदाचार्योऽपि तत एवानाप्तः स्यात् ' इति प्रतिबन्दीग्रहणं मतानुज्ञेत्यर्थः ॥ **परोक्तेति** ॥ जिनानाप्तत्वसाधकस्खलितवाक्त्वोक्तेः तदीयाचार्ये व्यभिचारोद्भावनरूपत्वेनेत्यर्थः ॥ **बाधकतर्केति** ॥ ' तर्हि तत एव त्वदीयाचार्यस्यापि अनाप्तत्वं स्यात् ' इति बाधकतर्कोद्भावनरूपेण चेत्यर्थः । तथा च मतानुज्ञायाः न स्वातन्त्र्येण निग्रहस्थानतया दूष्यत्वमिति भावः ॥ **स्वपक्षेति** ॥ स्खलितवाक्त्वपरिहारेण जिनस्य आप्तत्वरूपस्वपक्षस्थापनं कृत्वा अनन्तरं प्रतिबन्दीग्रहणादिना परपक्षे दोषोऽभिधानीयः । [2]एवमत्रापि प्रवृत्तेर्मतानुज्ञाया निग्रहस्थानत्वेन दोषत्वमित्यर्थः ॥ **तर्हीति** ॥ आदौ स्वपक्षं प्रमाणेन प्रसाध्य पश्चात् परपक्षो दूष्य इति क्रमपरित्यागेन अप्राप्तकालसाङ्कर्यापातात् । विवक्षितक्रमविपर्यासः अप्राप्तकालमिति तल्लक्षणात् । अतोऽप्राप्तकाले अन्तर्भावप्राप्त्या न पृथङ्निग्रहस्थानत्वमिति भावः ।

इष्टापादनं मतानुज्ञा इति वर्तते । यथा केनचित् स्वस्य चोरत्वमभ्युपगम्य ' त्वं चोरः पुरुषत्वात् ' इत्युक्ते ' तर्हि तत एव तवापि चोरत्वप्रसङ्गः ' इत्येवं स्वपक्षे दोषमनुद्धृत्य आत्मनश्चोरत्वमपरिहृत्येति यावत् । परस्येष्टापाद मतानुज्ञेत्यर्थः ॥ **विशेषेणेति** ॥ ' स्वपक्षे दोषमनुद्धृत्य ' इत्यस्य व्यावर्त्याभावेन वैयर्थ्यादित्यर्थः **तत्स्वरूपानुवादेनेति** मूले इष्टापत्तिरित्यनेन मतानुज्ञास्वरूपानुवादादित्यर्थः । ननु निग्रहस्थानानामन्तर्भाव-

---

[1] तर्कप्रतिहत्यादिरूपाणां. [2] एवमत्राप्रवृत्ते.

(श्री. टि.) कथनपरे अन्यच्च इत्यत्रैव अस्या अप्यन्तर्भावे वक्तव्ये तत्रानुक्त्वा अत्रोक्तौ किं निमित्तम्? इत्यत उक्तम् सिंहावलोकनन्यायेनेति ॥ प्रकृतेति ॥ 'तदनुभवाभाव इत्युक्ते' इति मूलवाक्येन प्रकृतं यत् दूषणानुमानं तद्दोषस्य तद्दोषभूताया इत्यर्थः । वस्तुगत्या एतज्जातीये दूषणानुमाने दोषत्वं, नात्र इत्याशयः ॥ उक्तान्तर्भावमिति ॥ उक्तेषु विरोधादिनिग्रहस्थानषट्केषु अन्तर्भावमित्यर्थः । इष्टापत्तिरित्यनन्तरमध्याहार्यमाह ॥ इष्टापादनरूपा मतानुज्ञेति ॥ [1]असङ्गत्यन्तर्भावमुपपादयितुं प्रवृत्तस्य सिद्धसाधनत्वादित्यस्यार्थमाह ॥ परेति ॥ परेणापि स्वस्य चोरत्वमभ्युपगम्यैव 'त्वं चोरः पुरुषत्वात्' इत्युक्तत्वेन 'तर्हि तत एव तवापि चोरत्वप्रसङ्गः' इत्येवं परं प्रतीष्टापादनरूपाया मतानुज्ञायाः परसिद्धार्थसाधनरूपत्वेन सिद्धसाधनत्वादिति भावः। ततः किम्? इत्यत आह ॥ सिद्धसाधनस्य चेति ॥ उक्तमिति ॥ सिद्धसाधकोऽसङ्गतः इत्यत्रेत्यर्थः । तथा च असङ्गतम् इत्यतः पूर्वं सिद्धसाधनं चेति शेषः एव इत्यत पूर्वं इत्युक्तमिति शेष इत्युक्तं भवति । असङ्गतत्वमुपपादयति ॥ अनिष्टापादनस्यैवेति ॥ तथा च इष्टापादनरूपमतानुज्ञाया असङ्गतत्वमेवेति भावः । तथा च इष्टापत्तिरसङ्गतान्तर्भूता सिद्धसाधनत्वात् । सिद्धसाधनं च असङ्गतमित्युक्तमेव इति वाक्यवृत्तिर्द्रष्टव्या । अनेन यदुक्तं पूर्वं मतानुज्ञायाः प्रयोजनविशेषात् पृथगन्तर्भावं वक्ष्यति इति तत् प्रदर्शितं भवतीति ज्ञातव्यम् । उपसंहरति, विरोधादिनिग्रहस्थानषट्केभ्योऽन्यदूषणं नास्तीति ।

## प्रमाणादिनिरूपणप्रयोजनादि

(टी.) एवं प्रमाणादिस्वरूपं निरूप्य तन्निरूपणस्य प्रयोजनादिकं दर्शयति

आनन्दतीर्थमुनिना ब्रह्मतर्कोक्तिमार्गतः ।
मानलक्षणमित्युक्तं संक्षेपाद्ब्रह्मसिद्धये ॥

लक्षणादिनिरूपणेन संशोधितैरेव खलु वेदादिभिर्ब्रह्मज्ञानं भवति । तदिदं न व्याद्यन्तरोक्तवदेवेति मन्तव्यम् । परमाप्तमेन सुखरावतारेणोक्तत्वादिति भावेनोक्तम् ॥ आनन्दतीर्थमुनिनेति ॥ यस्तु स्वप्रभावानभिज्ञः तं प्रत्याह ॥ ब्रह्मतर्कोक्तिमार्गत इति ॥ यस्तु अनधिगतब्रह्मतर्कोक्तिमार्गोऽपि तदनुजिघृक्षया आह ॥ इत्युक्तमिति ॥ युक्त्यादियुक्तता प्राक् प्रदर्शितेति इतिशब्देन स्मर्यते । यद्येवं कथं तर्हि स्वल्पेनैव ग्रन्थेन समाप्तिः? इत्यत उक्तम् ॥ संक्षेपादिति ॥ श्रोतृबुद्धिमनुसृत्य शब्दसंक्षेपेणोक्तमिति ।

---

[1] असङ्गतान्तर्भावमुपपादयितुं.

(रा. टि.) ॥ प्रयोजनादिकमिति ॥ समूलत्वमादिपदार्थः । लक्षणादीत्यादिपदेन परीक्षाग्रहः । संशोधितैः निर्दोषतया प्रमितिजनकत्वेन अवधारितैरित्यर्थः । प्रदर्शिता युक्त्यादियुक्ततेत्यन्वयः । स्वोक्तलक्षणविभागादेः अव्याप्त्यादिशून्यत्वं परकीयस्य तद्वत्त्वमिति प्रदर्शिता युक्तियुक्ततेत्यर्थः ।

(श्री. टि.) ॥ प्रयोजनादिकमिति ॥ सप्रमाणकत्वेन वाद्यन्तरोक्तलक्षणसाम्याभावआदिशब्दार्थ इति द्रष्टव्यम् ।ब्रह्मसिद्धये परब्रह्मज्ञानाय मानलक्षणमुक्तमिति मानलक्षणनिरूपणस्य ब्रह्मज्ञानार्थत्वमुक्तम् । तत्कथम् ? इत्यतः तत् उपपादयति ॥ लक्षणादिनिरूपणेनेति ॥ संशोधितैः आभासविविक्तैः । वेदादिभिरित्यादिपदेन अनुमानप्रत्यक्षयोर्ग्रहणम् । श्रवणमनननिदिध्यासनरूपैरित्यर्थः । तत्र श्रवणं आगमान्तर्भूतम् मननं अनुमानान्तर्भूतं निदिध्यासनं प्रत्यक्षान्तर्भूतमिति विवेको द्रष्टव्यः ॥ परमाप्ततमेनेति ॥ अतिशयितविवक्षितार्थतत्त्वज्ञानादिमतेत्यर्थः । अत्र आप्तेरतिशयस्य तमपैवोक्तत्वात् परमत्वं न आप्तेर्विशेषणम् । तथा च परमश्चासौ आप्ततमश्चेति विग्रहः । 'विशेषणं विशेष्येण बहुलम्' इति बहुलग्रहणात् अनाकयनादर इत्यादौ दर्शनाच्च विशेषणयोरपि समासो युक्त इत्यवधेयम् । परमत्वाप्ततमत्वोपपादनायोक्तं सुरवरावतारेणेति । सुरवरो वायुः तदवतारेणेत्यर्थः ।

तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः

इति श्रुतेरिति भावः ॥ स्वप्रभावेति ॥ सुरवरावतारत्वादिरूपस्वसामर्थ्येनेत्यर्थः ॥ अनधिगतेति ॥ ब्रह्मतर्कोक्तिमार्गाज्ञानिनो 'ब्रह्मतर्कोक्तिमार्गत उक्तम्'इत्युक्ते विश्वासो न भविष्यतीत्यर्थः । अनुजिघृक्षा अनुग्रहं कर्तुमिच्छा ॥ प्रागिति ॥ अतीतग्रन्थसमुदायेनेत्यर्थः । अनेन त्रिविधा अधिकारिणः । उत्तमा मध्यमा अधमाश्चेति । तत्र सुरवरावतारेण उक्तत्वात् इदं लक्षणं न वाद्यन्तरोक्तलक्षणवत् इति मन्यमाना उत्तमाः । ब्रह्मतर्कानुसारेण उक्तत्वात् इदं न तथा इति मन्यमाना मध्यमाः । युक्तियुक्तत्वात् इदं न तथा इति मन्यमाना अधमा इति सूचितं भवतीति सम्प्रदायविदः ॥ यद्येवमिति ॥ ब्रह्मतर्कोक्तिमार्गानुसारेणोक्तं चेदित्यर्थः ॥ शब्दसंक्षेपेणेति ॥ न त्वर्थसंक्षेपेणेति भावः ।

(टी.) अथ समापितप्रकरणोऽपि भगवानाचार्यः स्वेष्टदेवतां प्रणमति

अशेषमानमेयैकसाक्षिणेऽक्षयमूर्तये ।
अजेशपुरुहूतेडय नमो नारायणाय ते ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितेषु दशप्रकरणेषु

प्रथमम् प्रमाणलक्षणम् सम्पूर्णम्

(टी.) नारायणस्यैव प्रणामे को हेतुः? इत्यतो यत् उक्तं प्रमाणादि तत् प्रेरकत्वेन नारायणस्यैव ? मुख्यतः तदभिज्ञत्वात् इति भावेनोक्तम् ॥ अशेषेति ॥ ननु नारायणस्य शरीरमस्ति न वा, आद्ये मरणादिप्रसङ्गः । द्वितीये कथं तस्येन्द्रियशून्यस्याशेषमानादिसाक्षित्वम्? इत्यत उक्तम् ॥ अक्षयमूर्तय इति ॥ अस्त्येवेश्वरस्य शरीरम् । तच्च सच्चिदानन्दादिरूपत्वेनाक्षयमेवेति न कश्चिद्दोष इति । अजादिवन्द्यत्वाच्च नारायण एव नमस्कार्य इति भावेनोक्तम् ॥ अजेशेति ॥

(रा. टि.) ॥ अथेति ॥ ग्रन्थसमाप्त्यनन्तरं स्वेष्टदेवतां प्रणमतीत्यन्वय । शिष्यशिक्षार्थं प्रचयार्थं चेति भाव ।प्रमाणादीत्यादिपदेन तद्विषयाः प्राक् प्रत्यक्षादिनिर्देशक्रमे बीजतया प्रदर्शिताः साक्षिषडिन्द्रियभेदेन इत्यत्रोक्तसाक्षिविषयाश्च ग्राह्याः । प्रेरकत्वेनेत्युक्त्या निरूपणं तत्प्रेरणयेति सूचितं । यत् प्रमाणादि निरूपितं तत् स्यैव । कुतः? इति चेत् मन्निरूपितस्य मुख्यस्यान्यस्याभावेन तस्यैव मुख्यतस्तदभिज्ञत्वादित्यर्थः ।

(श्री. टि.) ॥ अशेषेतीति ॥ मानानि च मेयानि च मानमेयानि । अशेषाणि मानमेयानि एकतया मुख्यतया साक्षादीक्षत इति तथोक्तः । तस्मा इत्यर्थो द्रष्टव्यः ॥ आद्य इति ॥ यथोक्तम्

देही चेदन्तवानेव यज्ञदत्तनिदर्शनात् । इति ।

॥ द्वितीय इति ॥ यथोक्तम्

अदेहश्चेदसर्वज्ञः शिलाकाष्ठादिवत्सदा ॥ इति ।

॥ इन्द्रियशून्यस्येति ॥ इन्द्रियाणां शरीरसंयुक्तत्वादिति भावः । मूर्तिः शरीरम् । कथमनेन शङ्कापरिहारः? इत्यत आह ॥ अस्त्येवेति ॥ वन्द्यत्वाच्चेति ॥ वदि अभिवादनस्तुत्योरिति धातोर्वन्द्यत्वात् स्तुत्यत्वात् इत्यर्थः । सर्वदा अपरोक्षीकृतभगवत्स्वरूपोऽपि भगवानाचार्यः प्रकरणसमापनसमये विशेषतः तत् अपरोक्षीचकार इत्याशयेन अजेशपुरुहूतेड्य ते नमः इति सम्बोध्य प्रणामः कृत इति मन्तव्यम् ।

(टी.) अमरा भ्रमरायन्ते कमला [1]वरटायते ।
यत्पादाम्भोरुहद्वन्द्वे वन्दे तं पुरुषोत्तमम् ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य प्रमाणलक्षणस्य टीका न्यायकल्पलता जयतीर्थभिक्षुविरचिता सम्पूर्णा

[1] श्री. वरलायते, [2] रा. यत्पदाम्बुरुहद्वन्द्वे.

(रा. टि.) ग्रन्थान्तेऽपि मङ्गलमाचरति ॥ **अमरा इति** ॥ यत्पदाम्बुरुहद्वन्द्वे अमराः देवाः भ्रमरवदाचरन्ति । कमला लक्ष्मीः वरटायते हंसयोषिद्वदाचरति । तदुभयत्र हेतुः ॥ **पुरुषोत्तममिति** ॥ क्षराक्षरपुरुषश्रेष्ठमित्यर्थः

सर्वेन्द्रियप्रेरकेण श्रीप्राणपतिनेरितः ।
यदवोचमहं तेन प्रीणातु पुरुषोत्तमः ॥

॥ इति श्रीप्रमाणलक्षणटीकाभावदीपः राघवेन्द्रतीर्थयतिकृतः सम्पूर्णः ॥

**(श्री. टि.)** एवं समापितप्रकरणव्याख्यानो भगवांष्टीकाकारः स्वग्रन्थप्रचयाय अन्तेऽपि मङ्गलमाचरति ॥ **अमरा इति** ॥ पुरुषोत्तमं क्षराक्षरपुरुषाभ्यामुत्तमत्वेन **द्वाविमौ पुरुषौ लोके** इत्याद्यागमसिद्धं । तं नारायणं वन्देऽभिवादये स्तौमि चेत्यर्थः । तत्र क्षरः **सर्वाणि भूतानि, ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात्क्षराः** इत्युक्तक्षरपुरुषोत्तमत्वोपपादनायोक्तं यत्पादाम्बुरुहद्वन्द्वे अमरा भ्रमरायन्त इति । भ्रमरवदाचरन्ति भ्रमरवत् मकरन्दास्वादननिरताः सदा तद्भजननिरता इति यावदित्यर्थः । **कूटस्थोऽक्षर उच्यते, लक्ष्मीरक्षरदेहत्वादक्षरा** इत्युक्ताक्षरपुरुषोत्तमत्वप्रतिपादनाय यत्पादाम्बुरुहद्वन्द्वे कमला वरटायत इत्युक्तम् ।

हंसस्य योषिद्वरटा वरला वारलेत्यपि ।

इत्यभिधानात् हंसस्त्रीवदाचरति तद्वत् सर्वदा यत्समीपे वर्तत इत्यर्थः । वरलायत इत्यपि क्वचित्पाठः ॥ **कमला श्रीर्हरिप्रिया** इत्यभिधानात् कमला महालक्ष्मीरित्यशेषमतिमङ्गलम् ।

वेदव्यासं सर्वगुणैकसत्तनुं तत्पादभक्तांश्छ्रीमदानन्दतीर्थान् ।
वन्दे जयार्यान्व्यासमध्वैकदासान्विद्याधिराजादिमुनींश्च सादरं ॥ १ ॥

वेदव्यासाब्धिसञ्जातान् वेदेशाख्यसुधाकरान् ।
पदार्थकौमुदीयुक्तान्वन्देऽहं ज्ञानसिद्धये ॥ २ ॥

वेदेशमुनिसत्पादसेवासम्प्राप्तवैभवान् ।
यादवार्यान्वरसुधाटीकाकारान्वयं नुमः ॥ ३ ॥

मानलक्षणटीकाया भूयाद्विवृत्तिरुत्तमा ।
वाक्यार्थकौमुदीसञ्ज्ञा विद्वदाह्लादकारिणी ॥ ४ ॥

इति श्रीमद्यादवाचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिता मानलक्षणटीकाविवृतिः वाक्यार्थकौमुदी सम्पूर्णा ॥

अथ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितेषु
दशप्रकरणेषु

# द्वितीयं कथालक्षणम्

श्रीजयतीर्थभिक्षुविरचितया टीकया

श्रीराघवेन्द्रतीर्थयतिकृतभावदीपश्रीवेदेशतीर्थकृतविवरणटिप्पणीभ्यां समलंकृतया

विभूषितम्

श्रीः

# अथ श्रीमदानन्दतीर्थ भगवत्पादाचार्यविरचितेषु दशप्रकरणेषु

# द्वितीयं कथा लक्षणम्

श्रीजयतीर्थभिक्षुकृतया टीकया समलङ्कृतम्

टीका

मङ्गलाचरणम्

श्रियः कमितुरानम्य चरणाम्बुरुहद्वयम् ।
यथाबोधं विधास्यामः कथालक्षणपञ्चिकाम् ॥

अथ कथां लिलक्षयिषुराचार्यवर्यः प्रारिप्सितप्रकरणपरिसमाप्त्यादिप्रयोजनेष्टदेवताप्रणतिनुति-पुरस्सरं विवक्षितमर्थं दर्शयति ॥

नृसिंहमखिलाज्ञानतिमिराशिशिरद्युतिम् ।
सम्प्रणम्य प्रवक्ष्यामि कथालक्षणमञ्जसा ॥ १ ॥

मङ्गलाचरणस्य भक्त्यादियुतस्यैव ग्रन्थसमाप्तिसाधनत्वम्

इह हि कृतदेवतानतीनामपि या ग्रन्थापरिसमाप्तिस्सा भक्तिश्रद्धाद्यतिशयपूर्वकत्वाभावनिमित्ता न तत्पूर्वकप्रणामस्य प्रारिप्सितपरिसमाप्त्यहेतुतां गमयितुं शक्नोति । न ह्येकदेशव्यभिचारेण सामग्री व्यभिचारिणी स्यात् । अत एव भक्त्याद्यतिशयपूर्वकत्वलक्षणं प्रणामस्य सम्यक्प्रकर्षं शिष्यान् ग्राहयितुं सम्प्रणम्येत्युक्तम् ।

मङ्गलाचरणं विनापि समाप्तिः कारणान्तराधीना

या त्वकृतदेवतानतीनामपि समीहितसिद्धिस्सा कारणान्तरादपि भविष्यति । न ह्येकस्यैकमेव कारणम् ।

## अथ श्रीराघवेन्द्रतीर्थयतिकृतः श्रीकथालक्षणटीकाभावदीपः प्रारभ्यते

हरिः ॐ

**इन्दिरारमणं नत्वा पूर्णबोधाऽदिकान् गुरून् ।**
**विवृणोमि यथाबोधं कथालक्षणपञ्चिकाम् ॥ १ ॥**

सकलवाङ्मनसदेवताया देव्या अपि नतेरावश्यकत्वात् तदुपसर्जनतया भगवन्नतिरूपमङ्गलमाचरन्नेव चिकीर्षितं प्रतिजानीते ॥ **श्रियः कमितुरिति** ॥ श्रियो लक्ष्म्या । कमितुः पत्युः । 'कामुके कमिताभीक' इत्युक्तेः । पादकमलद्वयं भक्तिश्रद्धापूर्वकं नत्वा कथालक्षणाख्यग्रन्थस्य पञ्चिकां टीकां यथोबोधम् अस्मद्बुद्धिमनतिक्रम्य अस्मद्बुद्ध्यनुसारेण करिष्याम इत्यर्थः । यद्वा यथाबोधं श्रोतृबुद्धिमनतिक्रम्येत्यर्थः । श्रोतॄणां यथा बोधो भवति तथा विधास्याम इति यावत् । अथ वा ग्रन्थकर्तृबोधमनतिक्रम्येत्यर्थः । तदभिप्रायानुसारेणैव व्याख्यां करिष्याम इति यावत् ।

विधास्याम इति भविष्यदर्थकलृट्प्रयोगेण कियद्दूरे व्याख्यारम्भः? कदा च करिष्यन्ति? इति शिष्यमनसो व्याकुलत्वनिरासायाऽऽह ॥ **अथेति** ॥ आरम्भार्थोऽयमथशब्दः । अथ आरभ्यते व्याख्या इत्यर्थः । अथ वा प्राचीनटीकयैवालं । किं सङ्कुचितेन भवदीयव्याख्यानेन ? इत्यत आह ॥ **अथेति** ॥ प्रतिवाक्यव्याख्या आरभ्यत इति प्रतिग्रन्थव्याख्यारम्भार्थोऽत्र अथशब्दः । मूलाऽथवाक्यव्याख्यारम्भार्थो वा । श्रुतितो मङ्गलप्रयोजनकोऽप्युक्तार्थाभिधायीति ज्ञेयम् । लिलक्षयिषुः लक्षणवत्तया विवक्षुरित्यर्थः । आदिपदेन प्रचयग्रहणम् । देवताप्रणतिपुरस्सरत्वे प्रारिप्सितपरिसमाप्त्यादिप्रयोजनकत्वमिष्टत्वं चेति हेतुद्वयम् ॥ **विवक्षितमर्थं दर्शयतीति** ॥ दर्शनकृत्यं श्लोकव्याख्यान्ते वक्ष्यति । यदुक्तं देवताप्रणत्यादेः प्रारिप्सितपरिसमाप्त्यादिप्रयोजनकत्वं, तदयुक्तम् अन्वयतो व्यतिरेकतश्च व्यभिचारादित्याशङ्क्य तत्र व्यभिचारोऽन्यनिबन्धनः न देवताप्रणतेः तदहेतुत्वनिमित्त इति सम् प्र इत्युपसर्गद्वयोक्त्यभिप्रायविवरणेनाह ॥ **इह हीत्यादिना न ह्येकस्यैकमेव कारणमित्यन्तेन** ॥ इह लोके इत्यर्थः । कृतेत्यादि बहुव्रीहिः । पुंसामिति योज्यम् । एवमग्रेऽपि ॥ **अत एवेति** ॥ भक्त्याद्यतिशयपूर्वकप्रणतिरूपसामग्र्याः प्रागुक्तप्रयोजनाव्यभिचारादेवेत्यर्थः ॥ **शिष्यान् ग्राहयितुमिति** ॥ 'अस्माभिरप्येवं कार्यम्' इति शिष्याणां बुद्धिमुत्पादयितुमित्यर्थः । व्यतिरेकव्यभिचारमुद्धरति ॥ **या त्वकृतदेवतानतीनामिति** ॥ पञ्चपादीकृतामित्यर्थः । यद्वा लौकिकानामित्यर्थः ॥ **समीहितेति** ॥ शिष्यादिफलसिद्धिः आरब्धकार्यसिद्धिर्वेत्यर्थः ॥ **न ह्येकस्येति** ॥ त्रैवर्णिकानां दर्शपूर्णमासादिरिव त्रैवर्णिकेतरस्य

परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ।
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।

इति त्रैवर्णिकपरिचर्या तीर्थस्नानादिरपि स्वर्गस्य कारणान्तरं दृष्टमिति इहापि पुण्यतीर्थपुण्यक्षेत्रस्नानदर्शनादि कारणान्तरं समीहितसिद्धिहेतुः कल्प्यतामिति भावः ।

# अथ श्रीवेदेशभिक्षुविरचितं कथालक्षणटीकाविवरणं प्रारभ्यते

हरिः ॐ

कमलाकान्तमानम्य पूर्णबोधान् गुरूनपि ।
व्याकरिष्ये यथाबोधं कथालक्षणपञ्चिकां ॥ १ ॥

ग्रन्थादाविष्टविशिष्टदेवताप्रणतिपुरस्सरं चिकीर्षितं प्रतिजानीते ॥ **श्रिय इति** ॥ कमु कान्तौ. कान्तिरिच्छा अस्मात्तृचि इडागमः । 'आयादय आर्धधातुके वा' इति विकल्पादयभावः । ततश्च कमितुः कामुकस्य । अत एव 'कामुके कमितानुक' इत्यभिधानम् । ग्रन्थारम्भे सकलवाङ्मनसदेवतायाः श्रियोऽपि वन्दनीयत्वात् पृथग्वन्दनानौचित्याच्च सा नरहरिविशेषणत्वेनैव वन्दनीयेत्याशयेन **श्रियः कमितुरित्युक्तम्** । अनेन वन्द्यत्वप्रयोजकमिष्टत्वं विशिष्टत्वञ्चोक्तमिति ज्ञातव्यम् । श्रियो हि सकलपुरुषार्थप्रदत्वेनेष्टत्वं ब्रह्मादिविशिष्टत्वञ्च प्रसिद्धम् । तत्कमितुश्च सुतरामिति । भक्तिश्रद्धातिशयपूर्वकत्वं द्योतयितुं आङ्प्रयोगः कृतः । तादृशनतेरेव फलाव्यभिचारस्य वक्ष्यमाणत्वात् ।

ननु 'आनन्दतीर्थभगवद्वचसां विशिष्टव्याख्यानकर्मणि सुरा ह्यधिकारिणः' इति स्वेनैव अन्यत्रोक्तत्वात् कथमेतद्व्याख्याने प्रवृत्तिः? इत्यत उक्तम् ॥ **यथाबोधमिति** ॥ सुरा एव अशेषतोऽभिप्रेतार्थव्याख्याने अधिकारिण इति भावः । तथा च व्याख्येयस्य प्रकरणस्य दुर्बोधबह्वर्थता व्याख्येयत्वप्रयोजनिका अनेन सूचितेति ।

पञ्च्यते व्यक्तीक्रियते अनयेति **पञ्चिका** व्याख्या । पचि व्यक्तीकरण इति धातोः इदित्वान्नुमि 'ण्वुल्तृचौ' इति कर्तरि ण्वुल्विधानेऽपि 'कृत्यल्युटो बहुलम्' इति वचनात् अन्येऽपि कृतो यथाप्राप्तमर्थं व्यभिचरन्ति इत्युक्तत्वात् अकर्तरि च कारके ण्वुल्विधायकात् 'सञ्ज्ञायाम्' इति सूत्राद्वा करणे ण्वुल्प्रत्यये, 'युवोरनाकौ' इति अकादेशे कृते, स्त्रीत्वविवक्षायां टापि, 'प्रत्ययस्थात्कात्' इत्यकारस्य इकारे पञ्चिकेति रूपम् । कथा लक्ष्यते अनेनेति **कथालक्षणं** प्रकरणम् । तस्य पञ्चिकेत्यर्थः ।

नन्वाद्यकारिकायां प्रणम्येति क्त्वा[1]निर्देशेनोक्तेष्टदेवताप्रणतेर्ग्रन्थारम्भपूर्वकालत्वं प्रयोजनाभावादयुक्तमित्याशङ्कां परिहरन्नाद्यकारिकामवतारयति ॥ **अथेति** ॥ ननु अथशब्दो न तावन्मङ्गलार्थः तस्य पर्वमेव कृतत्वात् । वाक्यार्थानन्वयाच्च । नाप्यानन्तर्यार्थः । आचार्यकृतेष्टदेवताप्रणत्यादेः स्वकृतमङ्गलानन्तर्याभावात् । अन्यस्य च आनन्तर्यावधेरनुपलम्भात् । आरम्भार्थत्वञ्च विधास्याम इत्यनेन गतार्थत्वादयुक्तम् । उत्तरत्र उत्तरानुपलम्भेन

[1] निर्देशेनोक्तमिष्टदेवता इति पाठेन भाव्यमिति भाति.

(वे. टि.) प्रश्नार्थत्वमपि । इति चेत् उच्यते । आचार्यः इष्टदेवताप्रणतिनुतिपुरस्सरंविवक्षितमर्थं दर्शयतीत्युक्ते, ननु कथाप्रतिपादकेऽस्मिन् ग्रन्थे कथैव वक्तव्या । किमेतदिष्टदेवताप्रणत्यादिकमसङ्गतमुच्यते ? अत उक्तं ॥ **अथ कथां लिलक्षयिषुरिति** ॥ अनन्तरं कथां लिलक्षयिषुरित्यर्थः । ग्रन्थोपयुक्तमिष्टदेवताप्रणत्यादिकमादावुक्त्वा पश्चात् कथां लिलक्षयिषुरिति यावत् । तथा च देवताप्रणत्यादेः ग्रन्थोपयुक्तस्यैवात्र वचनात् नासङ्गतिरिति भाव इति । प्रतिग्रन्थव्याख्यारम्भार्थोऽयमथशब्द इत्यन्ये ।

यद्यपि नुतेः प्राथम्यात् अल्पाच्तरत्वाच्च नुतिप्रणतीत्येव वक्तव्यम्, तथाप्यत्रोक्तायाः प्रणतेः प्राधान्येन नुतेश्च तदर्थतया प्राप्तायाः गुणत्वेन 'समुद्राभ्राद्ध' इत्यादिसौत्रप्रयोगेण अल्पाच्तरनियमस्य प्रायिकत्वाच्च प्रणतिनुतीति युक्तमित्यवधेयम् ।

ननु क्त्वाप्रत्ययाभिप्रेतमिष्टदेवताप्रणतेः प्रारिप्सितपरिसमाप्तिप्रयोजनत्वमयुक्तम् । कादम्बर्यादावन्वयव्यभिचारादित्याशङ्कापरिहारार्थं सम् प्र शब्दप्रयोग इति वक्तुमाह ॥ **इह हीति** ॥ **न ह्येकदेशेति** ॥ अत्र एकदेशशब्दो विशिष्टशरीरान्तर्गतैकदेशपरः । मेलनार्थकसामग्रीशब्दो विशिष्टपरः । तथा च विशेष्यादिरूपस्य विशिष्टैकदेशस्य व्यभिचारेण विशिष्टमपि न व्यभिचरतीत्यर्थः । दण्डमात्रस्य कोमलत्वाद्यवस्थायां घटव्यभिचारित्वेऽपि दृढत्वविशिष्टस्य तदभावादिति हिशब्देन सूचयति ॥ **अत एवेति** ॥ अन्वयव्यभिचारपरिहारस्य सूचनीयत्वादेवेत्यर्थः ॥ **प्रणामस्येति** ॥ नतेरित्यर्थः ॥ तथा च नतेर्भक्तिश्रद्धापूर्वकत्वं प्रकर्षः । तदतिशयपूर्वकत्वं सम्यक्प्रकर्षः तमित्यर्थः ॥ **शिष्यान् ग्राहयितुमिति** ॥ श्रद्धाद्यतिशयपूर्वकेष्टदेवतानतिरेव प्रारिप्सितपरिसमाप्त्यादिसाधनं । न नतिमात्रमिति शिष्यान् ग्राहयितुमित्यर्थः । अनेन प्रणामस्याभिमतफलसाधनत्वे स कर्तव्यः । तत्कथनं तु किम् ? इत्याशङ्काऽपि निरस्तेति ज्ञातव्यम् ।

प्रमत्तनास्तिकादिकृतग्रन्थे देवतावन्दनादेरभावेऽपि समाप्तेर्दृष्टत्वात् व्यतिरेकतो व्यभिचारस्तु न दोषः । अतस्तत्परिहारो मूले न केनापि सूचित इत्याशयेनाह ॥ **या त्विति** ॥ **कारणान्तरादिति** ॥ जन्मान्तरानुष्ठितमङ्गलजन्यात् गङ्गास्नानादिजन्याद्वा अदृष्टविशेषरूपादित्यर्थः । अविगीतशिष्टाचारानुमितश्रुत्यादिना प्रणामादेरभिमतसमाप्तिहेतुतानिश्चये तदभावे अभावः तृणारणिमणिन्यायेन समाप्तेरनेककारणकत्वकल्पको भविष्यतीत्यभिप्रायः । अतो नान्योन्याश्रय इति ध्येयम् ।

### नृसिंहनतिस्तुत्योस्तत्त्वज्ञानसाधनत्वम्

(टी.) **कथां विवक्षतस्तत्फलस्य अज्ञाननिवृत्त्युपलक्षिततत्त्वज्ञानस्य निष्पादकत्वेन नृसिंहस्तुतिरवसरोचितेति तथैव विशिनष्टि ॥ अखिलेति ॥ अखिलानि च तान्यज्ञानानि च अखिलाज्ञानानि । अखिलाज्ञानानि तिमिराणीव अखिलाज्ञानतिमिराणि । अशिशिरा अशीता घृतिरस्येति**

(टी.) अशिशिरद्युतिरादित्यः । अखिलाज्ञानतिमिरनिरसने अशिशिरद्युतिरिव अखिलाज्ञानतिमिराशिशिरद्युतिः तम् । गम्यमानत्वात् निरसनपदाप्रयोगः । यथा अश्वयुक्तो रथोऽश्वरथ इति ।

कथात्रयमपि तत्वज्ञानसाधनम्

यद्यपि जल्पवितण्डे ख्यात्याद्यर्थे तथापि तत्वज्ञानपरिपन्थिपाषण्डादिनिरसनाङ्गे च भवतः । तत्र प्रधानत्वादुत्तरमेव प्रयोजनं विवक्षित्वा कथामार्गत्रयस्याप्यज्ञाननिरसनमेव प्रयोजनमभिप्रेत्येदमुदितम् ।

अथ वा वादफलं अज्ञाननिरसनं प्राधान्यज्ञापनाय स्वशब्देनोपादाय ख्यात्यादिकमितरफलमुपलक्ष्य तस्य निष्पादकत्वेन परदेवता स्तूयते ।

अज्ञातज्ञानं संशयविपर्ययादिव्युदासः ज्ञातस्थिरीकरणं च वादफलानि । जल्पवितण्डयोश्च पाषण्डप्रसञ्जितसज्जनसंशयविपर्यासनिरासः । संशयादयोऽपि तत्वज्ञानविरोधित्वेन अज्ञानान्युच्यन्ते । अतः कथात्रयनिरसनीयाज्ञानबाहुल्यमभिप्रेत्य अखिलेत्युक्तम् ।

(रा. टि.) तत्फलस्य तत्वज्ञानस्येत्युच्यते । मूले त्वज्ञाननिरासफलत्वमेव भाति । तत् कथमेवं स्तुतिरवसरप्राप्ता ? इत्यत आह ॥ अज्ञाननिवृत्त्युपलक्षितेति ॥ तत्वज्ञानप्रदत्वमेव तेन विवक्षितमिति भावः ॥ तथैव विशिनष्टीति ॥ तत्वज्ञाननिष्पादकत्वेन विशेषणयुक्तं करोतीत्यर्थः ॥ गम्यमानत्वादिति ॥ निरसनपदाप्रयोगेऽपि तदर्थस्य समासेन प्रतीयमानत्वात् तत्पदाप्रयोग इत्यर्थः ।

कथाफलस्य तत्वज्ञानस्येत्ययुक्तं । तस्य वक्ष्यमाणदिशा वादकथामात्रफलत्वादित्याशङ्क्य समाधत्ते ॥ यद्यपीत्यादिना ॥ उत्तरमेवेति ॥ पूर्वतनादुत्तरं तत्वज्ञानमेवेत्यर्थः ॥ अज्ञाननिरसनमेवेति ॥ तदुपलक्षिततत्वज्ञानमेव प्रयोजनमभिप्रेत्य अखिलेत्यादि विशेषणमुक्तमित्यर्थः ॥ स्वशब्देनेति ॥ वाचकशब्देनेत्यर्थः । इतरफलं जल्पवितण्डाफलं ॥ तस्य निष्पादकत्वेनेति ॥ अखिलाज्ञानतिमिराशिशिरद्युतिं ख्यात्यादिपदं इत्यपि ज्ञेयमिति भावः । अखिलेत्यस्यार्थमाह ॥ अज्ञातेत्यादिना ॥

(वे. टि.) आनन्दादिमहागुणत्वादिना स्तुतिमपहाय अखिलेत्यादिस्तुतिकरणे निमित्तमाह ॥ कथामिति ॥ नित्यसंसारितमोयोग्यगताज्ञाननिरासकत्वाभावात् षष्ठीसमासोऽनुपपन्न इत्याशयेनाह ॥ अखिलानि चेति ॥ तिमिराणीवेति ॥ सम्यग्ज्ञानप्रतीपत्वादित्यर्थः ॥ अशीतेति ॥ उष्णेत्यर्थः ॥ गम्यमानत्वादिति ॥ गम्यमानार्थत्वादित्यर्थः । 'गम्यमानार्थानामप्रयोगः' इति काशिकोक्तेरिति भावः ।

(वे. टि.) ॥ यद्यपीति ॥ तथा च अज्ञाननिवृत्त्युपलक्षिततत्त्वज्ञानस्य न कथासामान्यफलत्वमिति भावः । पाषण्डादीत्यत्र आदिपदेन हैतुकपरिग्रहः । यद्यपि जल्पो न पाषण्डिनिरसनहेतुः । सन्मात्राधिकारिकत्वात् तथापि पाषण्डादिपदेन तन्मतमुपलक्ष्यते । तथा च एकसता पाषण्डिमतावलम्बिना द्वितीयस्य सत्सिद्धान्तावलम्बिनस्सतो या कथा भवति स जल्पः । स च पाषण्डादिनिरसनहेतुर्भवत्येव उभयोस्सत्सिद्धान्तावलम्बने कथाप्रवृत्तेरसम्भवादित्याशयः ।

तर्हि ख्यात्यादिनिष्पादकत्वेनापि नृसिंहस्तुतिः कर्तव्येत्यत आह ॥ तत्रेति ॥ प्रधानत्वादिति ॥ मोक्षोपयोगित्वेनेति शेषः । उत्तरं उद्देशख्यात्यनन्तरभावि ॥ कथामार्गत्रयस्यापीति । यथाह अक्षपादः

तत्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहार्थं कण्टकशाखावरणवत् । इति ।

ननु जल्पवितण्डयोः अज्ञाननिरसनस्य आनुषङ्गिकत्वेऽपि न वादवत् तत्फलकत्वं । तदुद्देशेन सर्वत्र तदप्रवृत्तेः । तथा च कथं तस्य [1]कथात्रयफलकत्वेनाभिप्रेतता ? इत्यस्वरसादाह ॥ अथ वेति ॥ संशयादयोपीति ॥ संशयविपर्ययज्ञानभ्रंशा इत्यर्थः ।

### प्रतिज्ञान्यूनतादोषपरिहारः

(टी.) प्रवक्ष्यामीति प्रशब्देन उद्देशविभागपरीक्षाद्युपयोगिसाहित्यलक्षणं [2]लक्ष्यवचनस्य प्रकर्षमपि विवक्षितं द्योतयति । तेन न प्रतिज्ञान्यूनता शङ्कनीया ।

### उद्देशादीनां लक्षणाङ्गत्वेन लक्षणस्यैव स्वशब्देनोपादानम्

न चैवमुद्देशादीनां सर्वेषामपि वक्तव्यत्वे प्राप्ते व्यर्थं लक्षणस्यैव स्वशब्दनोपादनमिति वाच्यम् । कथां खलु सजातीयविजातीयसमस्तवस्तुव्यावृत्ततया व्यवहारयितुमिदमारभ्यते । [3]व्यावृत्तव्यवहारश्च साक्षाल्लक्षणाधीन । सास्नादिमत्त्वं प्रतीत्य हि गवि गोव्यवहारं कुर्वते । अनुद्दिश्य लक्षणकथनायोगात् लक्षणोक्त्युपयोगित्वमुद्देशस्य । अविभक्तस्य विशेषोद्देशासम्भवात् विभागस्यापि लक्षणाङ्गत्वमेव । लक्षणं च अनुमानतया व्यवहृतिहेतुः । न हि तस्य व्याप्तिपक्षधर्मतालक्षणपरीक्षामन्तरेण तद्भावो निश्चीयत इति परीक्षापि लक्षणाङ्गमेव । तदेवं लक्षणस्य प्राधान्यज्ञापनाय स्वशब्देनोपादानं, इतरस्य तदङ्गताद्योतनाय प्रशब्देन सङ्ग्रह इति ।

(रा. टि.) ॥ उद्देशेति ॥ उद्देशविभागपरीक्षादिरूपं यदुपयोगि तत्साहित्यलक्षणं प्रकर्षं लक्षणोक्तेर्विवक्षितं द्योतयतीत्यर्थः । तदुपयोगोऽग्रे व्यक्तः ॥ तेनेति ॥ प्रशब्देन उद्देशाद्युक्तेर्द्योतनेन अग्रे वक्ष्यमाणोद्देशविभागादेस्त्राप्रतिज्ञातत्वरूपन्यूनतादोषो नेत्यर्थः ॥ स्वशब्देनेति ॥ वाचकशब्देनेत्यर्थः । लक्षणस्य प्रधानत्वात्

---

[1] कथात्रयफलत्वेनाभिप्रेतता इति पाठः साधुरिति भाति. [2] रा. लक्षणवचनस्य.

[3] व्यावृत्तिर्व्यवहारश्च इति पाठेन भाव्यमिति भाति । तथापि 'समस्तवस्तुव्यावृत्ततया व्यवहारयितुं' इति पूर्ववाक्यानुरोधेन व्यावृत्तमिति व्यवहारः व्यावृत्ततया व्यवहार इति यावत् इति व्याख्यातुं शक्यत्वात् यथाश्रुतमेव साधु इत्यपि भाति.

(रा. टि.) उद्देशादेस्तदङ्गत्वात् स्वशब्दप्रशब्दाभ्यां तयोरुपादानमिति प्रधानगुणभावोपपादनपूर्वमाह ॥ **कथां खल्वित्यादिना प्रशब्देन सङ्गृह इत्यन्तेन** ॥ व्यवहारयितुमिति ॥ शिष्यैरिति योज्यं ॥ **इदमिति** ॥ प्रकरणमित्यर्थः । लक्षणाधीनो लक्षणज्ञानाधीन इत्यर्थः । उद्देशादिव्यावृत्त्यर्थं साक्षादिति । तद्व्यनक्ति ॥ **सास्नादिमत्वमिति** ॥ **विशेषोद्देशासम्भवादिति** ॥ तत एव विशेषलक्षणोक्तेरसम्भवात् परम्परया विभागस्य विशेषरूपलक्षणाङ्गत्वमित्यर्थः ॥ **परीक्षामन्तरेणेति** ॥ अव्याप्त्यादिशून्यत्वरूपयुक्त्यनुसन्धानात्मकपरीक्षामन्तरेण तद्भावोऽनुमानभाव इत्यर्थः । 'अयं गोपदवाच्यः सास्नादिमत्वात् यन्नैवं तन्नैवम् यथा अश्वादिः' इति व्यतिरेक्यनुमानभावो वा, यः सास्नादिमान् स गोपदवाच्यः यथा प्रागाप्तोपदिष्टगोपिण्ड इति, व्यतिरेकेण महिष्यादिवच्च इत्यन्वयव्यतिरेकिभावो वा न हि निश्चीयत इति भावः ।

(वे. टि.) ननु प्र अञ्जसा शब्दयोरन्यतरस्य वैयर्थ्यमित्याशङ्कापरिहाराय प्र पदेन विशेषोद्देशादिपरिग्रह- ॥ **द्योतयतीति** ॥ आहेत्यर्थः । उपसर्गाणां वाचकत्वस्य सिद्धान्तितत्वात् । अत एव वक्ष्यति **प्रशब्देनोक्त्वा-** इति । पररीत्या वेदं ॥ **वक्तव्यत्व इति** ॥ [1]प्रतिवाक्य इति शेषः । [2]लक्षणवाचकासाधारणशब्देनेत्यर्थः । व्यवहारयितुमित्यत्र व्यवहारपदेन ज्ञानमपि विवक्षितमिति ज्ञातव्यं । एवमुत्तरत्रापि ॥ **लक्षणाधीन इति** ॥ लक्षणज्ञानाधीन इत्यर्थः ॥ **लक्षणाङ्गत्वमेवेति** ॥ विशेषलक्षणाङ्गत्वमित्यर्थः । तद्भावोऽनुमानभावः ॥ **परीक्षापीति** ॥ लक्षणसौष्ठवपरीक्षापीत्यर्थः ।

ग्रन्थस्य गतार्थताशङ्कानिरासः

(टी.) स्यादेतत्, नैयायिकादिभिरेव कथालक्षणस्योक्तत्वात् किमनेन? अन्यथा शब्दानुशासनादिकमपि कर्तव्यं स्यात् इत्यत उक्तम् ॥ अञ्जसेति ॥ [3]स्वकीयवचनाञ्जस्यस्य प्रशब्देनोक्तत्वात् अन्योक्तीनामनेन अनाञ्जस्यमुपलक्षयति । तच्चोत्तरत्र प्रदर्शयिष्यते । विरुद्धोक्त्योरन्यतराञ्जस्यमितरानाञ्जस्येन व्याप्तमिति लक्षणाबीजम् । न चास्मदायत्ते वाग्व्यवहारे किमित्यवाचकं प्रयोक्ष्यामह इति वाच्यम् । स्वतन्त्रप्रयोग एव प्रयोजनान्वेषणात् । अयं तु लौकिकः प्रयोगः । दृश्यते हि सुकुमारोक्तिष्वेकप्रशंसनमितरापकर्षद्योतनार्थमिति । ननु किमनया प्रतिज्ञया? यावता उत्तरग्रन्थ एव स्वकीयकथालक्षणविवक्षां ज्ञापयिष्यति । किं तया ज्ञापितया? इति । सत्यं, प्रकरणस्य गतार्थताशङ्कानिरासार्थं तावत् अञ्जसा इति वक्तव्यम् । न चैतत् कथालक्षणं प्रवक्ष्यामीत्युक्तिमन्तरेण समर्थं स्यात् । न च मुख्यार्थद्वारमन्तरेण लक्षणा लभ्यते इति अन्यार्थमेवैतत्प्रतिज्ञानम् ।

---

[1] प्राप्ते वाक्य इति शेषः.

[2] ॥ स्वशब्देनेति ॥ इदं पदं लुप्तमिति भाति.

[3] वे स्वकीयलक्षणवचनाञ्जस्यस्य.

(रा॰ टि.) ॥ शब्दानुशासनादिकमिति ॥ शब्दानां प्रकृतिप्रत्ययविधानादिरूपं व्याकरणव्युत्पाद्यं तर्कशास्त्रव्युत्पाद्यपदार्थनिरूपणं चेत्यर्थः ॥ उत्तरत्रेति ॥ विदुषामिति पदकृत्योक्तिप्रस्ताव इति भावः ॥ विरुद्धोक्त्योरिति ॥ ग्रन्थकृदुक्तिपरोक्त्योरित्यर्थ । लोके चैत्रमैत्रोक्त्योरिवेति भावार्थः । अञ्जसा वक्ष्मामीत्युक्ते सति एतदुक्तिविरुद्धोक्तेरनाञ्जस्यं लोकसिद्धव्याप्तिरूपसम्बन्धेन लक्षणया लभ्यते । मुख्यार्थस्य प्रशब्देनोक्ततया पौनरुक्त्यबाधितत्वादिति भावः । नन्वथापि

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।

इत्युक्तेरिह लक्षणायां किं प्रयोजनम्? इति भावेन शङ्कते ॥ न चेति ॥ किमितीति ॥ कस्मादित्यर्थः । कस्य प्रयोजनस्यार्थ इति यावत् ॥ स्वतन्त्रेति ॥ स्वमात्रपरिकल्पितलाक्षणिकप्रयोग इत्यर्थः । लौकिको लोकसिद्धः ॥ यावतोत्तरग्रन्थ इत्यादि ॥ यस्मात उत्तरग्रन्थो वादो जल्प इत्यादिरित्यर्थः ॥ ज्ञापयिष्यतीति ॥ तत्वोद्योतादिप्रकरणान्तर इवेति भावः ॥ तयेति ॥ विवक्षयेत्यर्थः ॥ गतार्थतेति ॥ परोक्तकथालक्षणादिनेति भावः ॥ अञ्जसेति वक्तव्यमिति ॥ परोक्तानाञ्जस्यलक्षकपदं तावद्वक्तव्यमित्यर्थः ॥ प्रवक्ष्यामीत्युक्तिमन्तरेणेति ॥ आञ्जस्यरूपप्रकर्षयुक्ततया वक्ष्यामीत्युक्तिं विनेत्यर्थः । समर्थं निराकांक्षमित्यर्थः । कुतो न समर्थमित्यत आह ॥ न चेति ॥ प्रवक्ष्यामीति स्वोक्तेराञ्जस्यरूपमुख्यार्थे कथिने पुनरञ्जसेतिपदं मुख्यार्थे स्वस्य पौनरुक्त्यबाधिते सति स्वोक्त्याञ्जस्यरूपमुख्यार्थद्वारा [1]तद्विरुद्धोक्तेरनाञ्जस्यव्याप्तिरूपसम्बन्धेन लक्षकं सत् तत्र समर्थं स्यादित्यञ्जसेति पदेन परोक्तानाञ्जस्यलक्षणालाभाय प्रवक्ष्यामीत्युक्तमित्यर्थः । शिष्यमनस्समाधानायेति परिहारान्तरं व्यक्तमिति नोक्तम् ।

(वे॰ टि.) इदानीं अञ्जसा इत्यस्य कृत्यं वक्तुमाह ॥ स्यादेतदित्यादि ॥ लक्षणस्येति ॥ लक्षणादेरित्यर्थः ॥ स्वकीयलक्षणवचनाञ्जस्येति ॥ अनेन मुख्यार्थे पुनरुक्तिप्रसङ्गरूपं बाधकं लक्षणाबीजमुक्तमिति ज्ञातव्यम् ॥ उत्तरत्रेति ॥

वादजल्पवितण्डानामिति शुद्धं स्वलक्षणम् ।

इत्यादावित्यर्थः । तत्र उपपत्त्या प्रमाणतर्कसम्मत्या च स्वलक्षणादेः साधुत्वोक्त्या परोक्तलक्षणाद्यसाधुतायाः सूचनादिति भावः । लक्षणाबीजमित्यनन्तरं शक्यसम्बन्धरूपमिति शेषः ॥ स्वतन्त्रप्रयोग एवेति ॥ सजातीयोच्चारणमनपेक्ष्यैव क्रियमाणप्रयोग इत्यर्थः । अभिनवप्रयोग इति यावत् । अतद्रूढलक्षणायामिति भावः ॥ लौकिक इति ॥ निरूढ इत्यर्थः । रूढलक्षणायां न प्रयोजनापेक्षेति भावः ॥ तयेति ॥ विवक्षयेत्यर्थः । समर्थं अबाधितार्थे योग्यतावदिति यावत् ॥ ननु अञ्जसा इत्यस्य अन्योक्त्यनाञ्जस्योपलक्षकत्वात् तथोक्तिमन्तरेणापि तत् समर्थं स्यादित्यत आह ॥ न च मुख्यार्थेति ॥

---

[1] तद्विरुद्धोक्तेरनाञ्जस्यस्य व्याप्तिरूपसम्बन्धेन इति पाठेन भाव्यमिति भाति.

(बे. टि.) मुख्यार्थान्वये तात्पर्याभावेऽपि सुकुमारोक्तिष्विव लक्षणालाभार्थं मुख्यार्थान्वय [1]आवश्यकः। अन्यथा मुख्यार्थान्वयप्रतीत्यभावे मुख्यार्थबाधानुपस्थित्या लक्षणैव न स्यादिति भावः।

ग्रन्थस्य विषयादिसमर्थनम्

**(टी.) साधनचतुष्टयसम्पन्नस्याधिकारिणोऽपवर्गाय परमात्मतत्त्वज्ञानमुत्पादयितुं प्रवृत्तस्य आम्नायस्य इतिकर्तव्यताभूतो हि न्यायो वेदान्ते व्युत्पादितः। स च परार्थः। प्रश्नोपक्रमप्रतियोगिनि एककर्तृके विचारे विविच्य प्रवर्तनीयः। दूषणोपक्रमप्रतियोगिनि अनेककर्तृके कथानाम्नि प्रवर्त्य विवेचनीयः। कथां च व्युत्पादयतोऽस्य प्रकरणस्य वेदान्ताङ्गतया तत्प्रयोजनादिनैव प्रयोजनादिमत्ता सिद्धैवेत्यनवद्यम्॥ १॥**

(रा. टि.) विषयादिशून्यत्वात् नेदमारभ्यम् इत्याशङ्कां परिहर्तुमुपोद्घातमाह॥ **साधनचतुष्टयेत्यादिना विवेचनीय इत्यन्तेन**॥ नित्यानित्यवस्तुविवेको वैराग्यं शमदमादिसम्पत्तिः मुमुक्षा चेति परमात्मतत्त्वज्ञानसाधनचतुष्टयसम्पन्नस्य अत एव अधिकारिणः। साधनचतुष्टयसम्पत्तिरूपाधिकारवत इत्यर्थः। इतिकर्तव्यताभूतः अङ्गभूतः तदर्थनिर्णायकत्वात्। न्याय उपक्रमादिरूपयुक्तिः। वेदान्ते ब्रह्ममीमांसायां। तन्न्यायव्युत्पादनं कथायां तत्त्वज्ञानार्थमिव स्वार्थं करिष्यतीत्यत आह॥ **स च परार्थ इति**॥ तत्प्रवृत्तिप्रकारं कथावैलक्षण्यद्योतनायाह॥ **प्रश्नेति**॥ प्रश्नरूपोपक्रम एव प्रतियोगी विरोधी निवर्त्यो यस्य तस्मिन् विचारे। प्रश्नोनोपक्रम्य तदुत्तररूपतया एकेनैव प्रवर्तिते वेदान्तरूपे शास्त्रे विविच्य प्रागेव आभासविविक्ततया निर्णीय प्रवर्तनीयो न्यायः।

ननु तत्त्वे न्यायमुक्त्वा लक्षणाऽदिना तद्विवेचनं कार्यं

मानन्यायैस्तु तत्सिद्धेर्मीमांसा मेयशोधनम्॥

इत्युक्तेरित्यत आह॥ **दूषणेति**॥ दूषणेत्यादि पूर्ववत् बहुव्रीहिः। विचार इति विशेष्यपदमाकृष्यते। वाद्युक्तसाधनस्य प्राथम्येऽपि प्रतिवादिनोक्तदूषणस्य प्राथम्यात् दूषणोपक्रमेत्युक्तम्॥ **विवेचनीय इति**॥ आम्नायेतिकर्तव्यतारूपो न्याय इत्यनुषज्यते। आभासविविक्तत्वेन शोधनीय इत्यर्थः।

अस्त्वेवं पुमर्थहेत्वाम्नायेतिकर्तव्यतारूपत्वं वेदान्तस्येव वादादिकथारूपविचारस्य। एतावता अस्य प्रकरणस्य किमायातम्? इत्यत आह॥ **कथां चेति**॥ **वेदान्ताङ्गतयेति**॥ तत्र निर्दिष्टन्यायविचारपरकथालक्षणनिरूपणपरत्वादस्येति भावः॥ **तत्प्रयोजनादिनेति**॥ न्यायविवेचनमुखेन परमात्मतत्त्वज्ञानरूपावान्तरप्रयोजनद्वारा अपवर्गः प्रयोजनं परमात्मैव विषयः साधनचतुष्टयवानधिकारी प्रकरणस्य परमात्मतत्त्वस्य च विषयविषयिभावः तत्त्वज्ञानस्य अपवर्गस्य जन्यजनकभावस्सम्बन्ध इति भावः॥ **अनवद्यमिति**॥ साङ्गदेवतानतिरूपमङ्गलाऽचरणहीनतादोषेण प्रतिज्ञान्यूनतादोषेण स्वशब्देनोद्देशादेरनुपादानदोषेण गतार्थतादोषेण लक्षणाप्रयोजनहीनत्वदोषेण विषयादिहीनतादोषेण च रहितमिदं प्रकरणमित्यर्थः॥ १॥

---

[1] अवश्यं ज्ञेयः

(वे. टि.) ननु इदमनारम्भणीयं प्रयोजनशून्यत्वात् इत्यतोऽस्य प्रकरणत्वात् प्रकरणस्य शास्त्रैकदेशसम्बन्धित्वात् तत्प्रयोजनादिनैवास्यापि प्रयोजनादिमत्त्वं सिद्धमिति शास्त्रस्य तावत्प्रयोजनादिकं दर्शयति ॥ **साधनचतुष्टयेति** ॥ नित्यानित्यवस्तुविवेकः इहामुत्र फलभोगविरागः शमदमाऽदिसम्पत्तिः मुमुक्षा चेति साधनचतुष्टयम् । अत्र अपवर्गायेति परमप्रयोजनोक्तिः । तत्वज्ञानमुत्पादयितुमित्यवान्तरप्रयोजननिर्देशः । परमात्मतत्वज्ञानेत्यनेन परमात्मतत्त्वं विषयो दर्शितः । स्वयं च तदविषयकस्य शब्दस्य तद्विषयकज्ञानजनकत्वायोगात् । वेदान्ते ब्रह्ममीमांसायां । इदानीं शास्त्रसम्बन्धमस्य वक्तुमाह ॥ **स चेत्यादिना** ॥

ननु वेदान्त एव सर्वस्य वक्तव्यस्य न्यायप्रकारस्योक्तत्वात् न तत्रावशिष्टं किञ्चिदस्ति यद्युत्पादकत्वेन कथाया वेदान्ताङ्गत्वं स्यात् इत्यत आह ॥ **स चेति** ॥ न्यायो द्विविधः स्वार्थः परार्थश्च । तत्र परोपदेशानपेक्षस्स्वार्थः, तदपेक्षः परार्थः । सोऽपि द्विविधः स्वपक्षसिद्ध्यर्थः परपक्षनिरासार्थश्चेति भावः ॥ **विविच्येति** ॥ **स्वयमेव** दूषणान्याशङ्क्य तेभ्यो विविच्य प्रवर्तनीय इत्यर्थः । तत्र दूषणं वक्तुरन्यस्याभावात् ।

नन्वेवं परार्थत्वव्याघात इत्यत उक्तम् ॥ **प्रश्नोपक्रमेति** ॥ उपक्रमत इत्युपक्रमः पचाद्यच् । प्रश्नस्योपक्रमः प्रश्नोपक्रमः शिष्यः । स एव प्रतियोगी बोध्यो यस्मिन् स तथोक्तः । तथा चैककर्तृकविचारस्य शिष्यानुजिघृक्षया प्रवृत्तत्वात् तस्य च प्रश्नमात्रकरणे समर्थस्य दूषणोद्भावने असमर्थत्वात् स्वयमेव दूषणान्याशङ्क्य तानि परिहृत्य प्रवर्तनीय इत्यर्थः ।

इदं च प्रायिकं न नियतं, एककर्तृकेऽपि विचारे न्यायं प्रवर्त्य तत्र स्वयमेव दूषणान्याशङ्क्य तेभ्यो विवेचनस्यापि क्वचिद्दर्शनात् ।

पूर्वं न्यायमुक्त्वा पश्चाद्दूषणविवेचने तेन व्यवधानात् अल्पज्ञशिष्यमुद्दिश्य पुनर्न्यायो वक्तव्यः । तथा च गौरवं । पूर्वमेव दूषणानि परिहृत्य न्यायवचने तु लाघवम् इत्यभिप्रायेणेदमुक्तमित्यप्याहुः ।

न च पूर्वं न्यायानुक्तौ निराश्रयदूषणं शङ्कार्हमेव नेति युक्तम् । कृतकत्वादिलिङ्गस्वरूपाश्रयस्यैव दूषणस्य प्रसक्तस्योद्धारसम्भवात् । न च पूर्वं सर्वदूषणोद्धारे अनुमानस्य शिष्येण ज्ञातुं शक्यत्वात् पुनस्तं प्रति न्यायवचनं व्यर्थमिति शङ्क्यम् । पञ्चावयवाद्युपेतस्य परोपदेशात्मकन्यायस्यैव परं प्रति सम्यग्बोधकतया तदनुजिघृक्षया अनन्तरं तस्यावश्यं वाच्यत्वात् ।

अनेककर्तृके प्रवर्त्य विवेचनीयत्वे हेतुर्दूषणोपक्रमेति । पूर्ववदुपक्रमशब्दार्थः । तथा च दूषणस्योपक्रमः प्रतिवादी स प्रतियोगी यस्मिन् स तथोक्तः । आदौ वादिना न्याये उक्ते प्रतिवादिना तत्र दूषणोद्भावने कृते पश्चात्तत्परिहारः कर्तव्यः पूर्ववत् । आदावेव दूषणोद्धारे अप्राप्तकालत्वं अर्थान्तरत्वं वा स्यादिति भावः ।

(वे टि.) ततश्चायमर्थः, यद्यपि वेदान्ते भगवता शिष्यानुजिघृक्षया स्वयमेव दूषणान्याशङ्क्य तेभ्यो विविच्य न्यायो व्युत्पादितः, तथाऽपि प्रतिपक्षस्थितेन विजिगीषुणा अन्येन प्रतिवादिना स्वमनीषयोद्भावितदूषणेभ्यो विवेकोऽन्येन कृतः क्रियते च कथायां । अतः कथाया वेदान्तव्युत्पादित एव न्याये उक्तप्रतिवाद्युद्भावितदूषण-परिहारात्मकत्वात् नियमेन प्रथमप्रवर्तनीयत्वरूपेत्थम्भाववत्त्वाच्च तदङ्गत्वमिति । कथारूपवाक्यस्य विचारविषय-कत्वात् तद्विचारत्वोक्तिरिति ज्ञातव्यम् ॥ १ ॥

कथासामान्यलक्षणविभागौ

(टी.) अथ कथां विभागेनोद्दिशति

वादो जल्पो वितण्डेति त्रिविधा विदुषां कथा ।

तत्वनिर्णयैकप्रयोजनत्वेन अभ्यर्हितत्वात् वादस्य प्रथममुद्देशः । उभयसाधनवत्तया सदधि-कारितया च वादसाम्यात् तदनन्तरं जल्पस्य । परिशेषतो जल्पानन्तरं वितण्डायाः । कथकभेदेन कथानन्त्यात् तत्तल्लक्षणोपाधिक्रोडीकृतराशिविवक्षया त्रित्वमिति दर्शयितुं त्रिविधेत्युक्तं ।

ननु सामान्यलक्षणाभिधानेन विना कथं विभागोद्देशावसरः? अवच्छेदकैक्येनैक्यमापन्नं हि वस्तु विभज्योद्देष्टव्यम् । अथ कथाशब्दं वाक्यप्रबन्धे व्युत्पादितं सिद्धवत्कृत्य न पृथक् सामान्य-लक्षणमुच्यते तर्हि भारतादीनामपि वाक्यप्रबन्धत्वेन कथात्वात् कथं कथात्रैविध्यं? नहि तानि-वादादिष्वन्तर्भवन्तीत्यतो योगरूढिसमाश्रयणेन सामान्यलक्षण सूचयति ॥ विदुषामिति ॥ जाताविदं बहुवचनं । तेन अनेकविद्वत्कर्तृको विचारगोचरो वाक्यप्रबन्धः कथा । सा वादादिभेदेन त्रिविधेत्युक्तं भवति । वैदुष्यं च कथामहावाक्यस्य निर्वाहकत्वम् । ततः स्वस्थः सर्वजनप्रत्ययाव-लम्बी सावधानोऽकलहकारश्चेत्यादयः कथका दर्शिताः । पूर्वोत्तरपक्षबलाबलचिन्ता विचारः । अत्रानेककर्तृकत्वोक्त्या एककर्तृकेभ्यो मीमांसावाक्येभ्यो व्युदासः । वैदुष्योक्त्या कलहादिभ्यः । विचारगोचरत्वेन विदुषामन्योन्यसुखव्यवहारेभ्यः ।

कथा याथात्म्यविदुषां मतेन त्रिविधेति वा । तेन एक एव कथामार्ग इति बाह्याः । वादवितण्डे द्वे एवेति श्रीहर्षः । वादो जल्पो वादवितण्डा जल्पवितण्डा चेति चतस्रः कथा इति गौडनैयायिकाः । ते समस्ता निरस्ता भवन्ति । उपपत्तिं तूत्तरत्र प्रदर्शयिष्यामः ।

(रा. टि.) अथेति प्रतिज्ञानन्तरमित्यवसरसङ्गतिं सूचयति। त्रिविधेति विभागः। वादः इत्यादिरुद्देशः। अतो विभागेन निमित्तेन त्रिविधेति विभागकरणाद्धेतोः उद्दिशति विशेषनाम्ना निर्दिशतीत्यर्थः। ननु कथास्तिस्र इति वा अनेकधेति वा वक्तव्ये, त्रिविधेत्युक्त्या कथानामनेकावान्तरभेदेन तदानन्त्यप्रतीतेः। 'सङ्ख्याया विधार्थे धा' इत्यवान्तरभेद एव धाप्रत्ययोक्तेः। इत्यत आह ॥ कथकेति ॥ तत्तल्लक्षणेति ॥ [1]तत्वनिर्णयैकोद्देश्यकत्वस्य अर्थिमात्राधिकारिकत्वादिरूपेण वक्ष्यमाणदिशेति भावः।

अथेत्युक्तावसरसङ्गतिमाक्षिपति ॥ नन्विति ॥ विभागेति ॥ विभागोद्देशयोरित्यर्थः। तटस्थश्शङ्कते ॥ अथेति ॥ 'कथ वाक्यप्रबन्धे' इत्यतः 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इत्यङ्प्रत्यये टापि कथेति पाणिनिसूत्रे व्युत्पादितमित्यर्थः ॥ योगरूढिसमाश्रयणेनेति ॥ योगं रूढिं च समाश्रित्येत्यर्थः ॥ जाताविति ॥ विद्वत्त्वरूपजातिविषयं बहुवचनमित्यर्थः। 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यां' इति एकत्वसङ्ख्यावत्यपि बहुवचनविधानादिति भावः। प्रत्ययप्रकृत्योरर्थानुवादोऽनेकविद्वत्कर्तृक इति। विचारगोचर इति शेषोक्तिः ॥ वाक्यप्रबन्धः कथेति ॥ कथेति मूलपदमावर्तनीयं कथा कथेति। तत्रैकं यौगिकं अपरं रूढं। यौगिकं कथेति पदं कर्त्रर्थकषष्ठ्यन्तविद्वत्पदान्वितं सत् लक्षणार्थकं, अन्यत् रूढं कथापदं लक्ष्यार्थकं इति भावेन प्रबन्धार्थकयौगिककथापदलब्धं लक्षणमुक्त्वा कथेति लक्ष्यपदमनूदितमिति ज्ञेयम्। विशेषणकृत्यानि अनुपदमेव व्यक्तानि। वैदुष्यमर्यादाया अनिर्णयात् असम्भवि लक्षणं इत्यत आह ॥ वैदुष्यं चेति ॥ स्वस्थः अव्याकुलः। प्रत्ययो विश्वासः। सर्वहृदयङ्गमवचन इत्यर्थः। सावधानः अप्रमादः। व्युदासो व्यावृत्तिः लक्षणस्येत्यर्थः ॥ वैदुष्योक्त्येति ॥ [2]अनेकवक्तृकेत्येतावदेव अनुक्त्वा तेषां वैदुष्यविशेषणोक्त्येत्यर्थः। व्युदासपद सर्वत्रान्वेति।

'विदुषां इति सम्बन्धसामान्यार्थकषष्ठ्यन्तं सत् अध्याहृतमतपदेन अन्वेतीत्युपेत्य पक्षान्तरमाह ॥ कथा याथात्म्यविदुषां मतेन त्रिविधेति वेति ॥ तेनेति ॥ विद्वन्मतविरोधेनेत्यर्थः ॥ उपपत्तिं त्विति ॥ विद्वन्मत इति योज्यम्। मतान्तरनिरासपक्षे उपपत्त्यन्तराणीति व्याख्येयम्। तेनेत्येकोपपत्तेरुक्तत्वात् ॥ उत्तरत्रेति ॥ इतीर्यत इत्यागमसिद्धत्वरूपोपपत्तिं इत्यर्थः। तथा वितण्डा तु सतामन्यैः इत्येतद्व्याख्याऽवसरे जल्पवितण्डयोर्भेदे, पृष्टेन इत्येतद्व्याख्याऽवसरे जल्पे यावत्परो जितः इत्येतद्व्याख्याऽवसरे च वादजल्पयोर्भेदे उपपत्तिं इत्यर्थः।

(वे. टि.) ॥ अथेति ॥ ग्रन्थोपयुक्तदेवताप्रणत्यादिप्रदर्शनानन्तरमित्यर्थः ॥ विभागेनेति ॥ हेतौ तृतीया। विभागाभावे विशेषोद्देशस्य कर्तुमशक्यत्वात्। तथा च विभज्योद्दिशतीत्यर्थः सम्पद्यत इति द्रष्टव्यम्।

---

[1] तत्वनिर्णयैकोद्देश्यकत्वस्यात्यार्थिसन्मात्राधिकारिकत्वादिरूपेण इति पाठः साधुरिति भाति,

[2] अनेककर्तृकेत्येतावदेव इति पाठः साधुरिति भाति। कारणमग्रे व्यक्तम्.

(वे. टि.) ॥ सदधिकारितयेति ॥ सन्मात्राधिकारिकतयेत्यर्थः । त्रिस इत्यनुक्त्वा त्रिविधेति प्रकारत्वेविषय किमर्थमुक्तं ? इत्यत आह ॥ कथकेति ॥ तथा च विभाजकोपाधिभेदादेव भेदो न व्यक्तिभेदादिति भावः ।

कथा इत्युक्त्यैव सामान्योद्देशस्य लब्धत्वात् तल्लक्षणानुक्त्यैव कथाविभागविशेषोद्देशौ आक्षिपति ॥ नन्विति ॥ अवच्छेदकेति ॥ सामान्यलक्षणरूपावच्छेदकैक्येन एकीकृतमित्यर्थः । अन्यथा ऐक्याप्रसक्त्या विभेदरूपविभागस्योत्थानमेव नेति भावः ॥ व्युत्पादितमिति ॥ 'कथ वाक्यप्रबन्धे' इति धातोः स्त्रियां भावे अङ्प्रत्ययविधायकेन चिन्तिपूजीत्यादिसूत्रेण व्युत्पादितमित्यर्थः ।

॥ योगरूढीति ॥ योगार्थस्य अतिप्रसक्तत्वेऽपि अनेकविद्वत्कर्तृकविचारगोचरवाक्यप्रबन्धविशेष एव तान्त्रिकाणां कथाशब्दस्य बहुलप्रयोगेण अनतिप्रसक्तताद्दशयोगरूढ्यर्थमेव कथासामान्यलक्षणं सिद्धवत् कृत्वा न पृथक् तल्लक्षणं कथ्यत इति विदुषां कथा इत्यनुवादेन सूचयतीत्यर्थ इत्याहुः ।

वस्तुतस्तु न सामान्यलक्षणानुक्तिर्मूलेऽभिप्रेता । तथा हि, कथाशब्दस्य आवृत्तिरभिप्रेता । तत्र यौगिकस्य लक्षणपरत्वं, रूढस्य लक्ष्यपरत्वं । विचारगोचरेत्यादिकं तु योग्यताबलादुपस्कर्तव्यम् । अतो न भारतादावतिव्याप्तिरिति भावः । अत एव सूचयतीत्युक्तं । सामान्यलक्षणाभावे विभागादेरेव कर्तुमशक्यत्वेन उक्तां योजनां आचार्यस्सूचयतीत्यर्थः ।

ननु कथकयोर्द्वित्वात् कथं बहुवचनं ? इत्यत आह ॥ जाताविति ॥ नात्र 'बहुषु बहुवचनं' इत्यनेन बहुवचनं । किन्तु ? 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यां' इत्यनेनैवेत्यर्थः। नन्वेव विद्वत्त्वजातेः कथकत्वासम्भवात् कथं कर्त्रर्थकषष्ठ्युपपत्तिः ? इत्यत आह ॥ तेनानेकविद्वत्कर्तृक इति ॥ तथा च मुख्यार्था-सम्भवात् जात्यवच्छिन्नव्यक्त्योरेवात्र लक्षणया ग्रहणमिति भावः ।

॥ महावाक्यस्येति ॥ अनेकवक्तृकत्वेऽपि एकप्रयोजनकतया मिथस्साकाङ्क्षतया च ऐक्यं विवक्षितमिति कथाया महावाक्यत्वमुपपन्नमित्यवधेयम् ॥ सर्वजनेति ॥ सर्वजनप्रत्ययसिद्धमेवावलम्बत इत्यर्थः आदिपदेन श्रवणधारणपटुरित्यस्य ग्रहणम् ॥ मीमांसावाक्येभ्यो व्युदास इति ॥ नन्वेवमपि देवमीमांसायामतिव्याप्तिः तस्यानेकवक्तृकत्वात् । यथाऽहुः ।

देवमीमांसकाद्यन्तं स्वयं भगवता कृतं ।
मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा ॥ इति ।

इति चेन्न । वादिप्रतिवादिभावापन्नानेकविद्वत्कर्तृकत्वस्य विवक्षितत्वात् । कलहादिभ्य इत्यत्र आदिपदेन गौतमोक्तषट्कक्ष्यादिरूपकथाऽभाससङ्ग्रहः ॥ एक एवेति ॥ सर्वस्यापि कथामार्गस्य वादिप्रतिवादिसाधनदूषणाभिधानसन्दर्भरूपत्वेन ऐक्यमेव वक्तुं युक्तमिति तेषामाशयः ॥ वादवितण्डे इति ॥ अल्पस्यान्यतरान्तर्भाव-

[1] अनेकविद्वत्कर्तृक इति टीकानुरोधेन अनेककर्तृकत्वेपि इति पाठः साधुरिति भाति.

(वे. टि.) सम्भवात् वादवितण्डे द्वे एव कथे इति श्रीहर्षाशयः। तत्वनिर्णयमात्रमुद्दिश्य प्रवृत्तायामपि वादकथायां उभयैकपक्षस्थापनावत्त्वेन भेदसम्भवात् वादवितण्डा त्वन्या। एवं विजयमात्रमुद्दिश्य प्रवृत्तायां जल्पकथायामपि उभयैकपक्षस्थापनावत्त्वेन भेदसम्भवात् जल्पवितण्डाऽप्यन्येत्याशयः॥ **उत्तरत्रेति॥ एवमसङ्करेण कथामार्गत्रयं प्रतिवादितवता'** इत्यादावित्यर्थः।

### वादकथालक्षणम्

(टी.) तत्र यथोद्देशं वादलक्षणमाह

**तत्वनिर्णयमुद्दिश्य केवलं गुरुशिष्ययोः॥ २॥**
**कथाऽन्येषामपि सतां वादः............... ।**

**अत्र केवलं तत्वनिर्णयमुद्दिश्य कथा वाद इत्येकं लक्षणम्। तत्र तत्वं प्रमाणसिद्धं वस्तु। तस्य निर्णयः अज्ञातस्य ज्ञानं संशयविपर्ययव्युदासः अभ्यनुज्ञानेन दृढीकरणं चेति त्रिविधः।**

### वादकथालक्षणे उद्दिश्यपदकृत्यम्

**यदा हि ख्यात्यादि अर्थयमानौ विजिगीषू सद्भ्यामेव साधनदूषणाभ्यां स्वपरपक्षसाधनोपालम्भौ कुर्वाते स जल्पोऽपि भवति तत्वनिर्णयहेतुः। न ह्यसदेव जल्पे वक्तव्यमिति नियमः। प्रतीयमानसदतिक्रमे कारणाभावात्। किन्नाम? सदपरिस्फूर्तौ 'ऐकान्तिकपराभवात् वरः पाक्षिकः' इति मन्वानोऽसदप्युपादत्ते। न च तत्साधनं तत्वनिर्णयं न करोतीति सम्भवति। व्याघातात्। अतः 'तत्वनिर्णयहेतुः कथा वादः' इत्यभिहिते जल्पविशेषेऽपि गतत्वादुद्दिश्येत्युक्तम्। न हि तत्वनिर्णयहेतुरपि जल्पस्तदुद्देशेन क्रियते।**

(रा. टि.) ॥ **यथोद्देशमिति**॥ उद्देशमनतिक्रम्येत्यर्थः। उद्दिश्येति पदकृत्यं वक्तुं उपोद्घातं आह ॥ **यदा हीत्यादिना व्याघातात् इत्यन्तेन**॥ **ऐकान्तिकः** नियमेन प्राप्तः पराभवः। असदुत्तरोक्तौ यदि तेन भ्रान्तो वादी पराभूतः तदा मम जयः, अन्यथा तु 'प्राक् प्राप्तः पश्चादस्तु' इति **पाक्षिकः** 'वादिनोऽभ्रान्तत्वपक्षे प्राप्तोस्तु' इति मन्वान इत्यर्थः॥ अस्तु सत्साधनादिना जल्पकथा। तावता तत्वनिर्णयहेतुत्वं कुतः? इत्यत आह ॥ **न च तत्साधनमिति**॥ **व्याघातादिति**॥ साधनत्वव्याघातादित्यर्थः॥ **न हीति**॥ विजिगीषुत्वव्याहतेरित्यर्थः।

(वे. टि.) ननु यदि 'तस्य भावस्तत्त्वं इति तत्वशब्दार्थः तदा धर्मिभूते तत्वे अव्याप्तिः, यदि च अनारोपितं तत्वमिति धर्मिविवक्षा तदा कूर्मरोमादिके अतिव्याप्तिः। अत आह ॥ **तत्वं प्रमाणसिद्धमिति**॥ **त्रिविध इति**॥ तथा च सामान्यस्यैव विवक्षितत्वात् न प्रत्येकसमुदायोद्देश्यविकल्पेन परस्पराव्याप्त्यसम्भवयोः प्रसङ्ग इति भावः।

(वे. टि.) उद्दिश्येत्यस्य कृत्यं वक्तुमाह ॥ यदा हीत्यादि ॥ ननु 'स च छलादिसम्भिन्नो जल्पः' इति परीक्षकैरुक्तत्वात् कथं सद्भ्यामेवेत्युक्तं ? इत्यत आह ॥ न ह्यसदेवेति ॥ पाक्षिक इति । विभक्तिपरिणामेन पराभव इत्यनुवर्तते ॥ व्याघातादिति ॥ सच्छब्दस्य तत्वनिर्णयजनकत्वार्थकत्वादिति भावः ।

### वादकथालक्षणे केवलपदकृत्यम्

(टी.) यदा च स्वयमध्यवसितार्थः कारुणिकतया पाषण्डप्रसञ्जितौ लोकस्य संशयविपर्ययौ पराकर्तुं तज्जिगीषुर्यो वितण्डामारभते साऽपि तत्वनिर्णयमुद्दिश्य कथा भवत्येव। तत्र प्रसङ्गपरिहाराय केवलमित्युक्तम्। भवेत् या वितण्डा लोकसंशयविपर्यासनिरासं ख्यात्यादिकं चोद्दिश्य प्रवर्तते तस्या अनेन व्युदासः। या तु केवलं [1]संशयाद्यपकरणायैव, कथं ततो व्यावृत्तिः? इति चेन्न। केवलशब्दस्य साक्षादर्थत्वात्। न हि काऽपि वितण्डा साक्षात्तत्वनिर्णयं करोति। किन्तु? परपराभवद्वारैव।

एतेनैतदपि निरस्तं, केवलं तत्वनिर्णयहेतुरित्येतावतैव सदुपायजल्पव्यवच्छेदसिद्धौ उद्देशग्रहणमतिरिच्यत इति। विवक्षितकेवलार्थस्य तत्रापि गतत्वात्।

ननु कथकगततत्वनिर्णयविवक्षया लक्षणे व्याख्याते वितण्डायां प्रसङ्ग एव नास्ति। न हि विनिश्चितार्थः स्वात्मीयतत्वनिर्णयाय तत्र प्रवर्तते, प्राप्तत्वादेव। अभ्यासार्थमिति चेन्न। तथा सति सत्प्रयोगनियमप्रसङ्गात्। नापि पाषण्डिनस्तत्वनिर्णयाय, अनुपयोगात् असत्साधनैस्तदयोगाच्च। सोऽपि संसदि पराभूतः तत्वजिज्ञासुर्भविष्यतीति चेन्न। प्रायो विद्वेषस्यैव सम्भवात्। अतः केवलग्रहणमनर्थकमिति। सत्यम्। यथा नैवं व्याख्यातुं शक्यं तथा वक्ष्याम इति।

### वादकथालक्षणान्तरम्

सतां कथा वाद इत्यपरं लक्षणम्। तर्हि जल्पेऽतिव्यापकमित्यतः सन्तो व्याख्याताः गुरुशिष्ययोरन्येषां सब्रह्मचार्यादीनामपीति। अदुष्टमनसस्सन्तः। ते च प्रकृतोक्तिका अविप्रलम्भका यथाकालस्फूर्तिका अनपेक्षकाः प्रमाणसिद्धसम्प्रत्यायिनश्चेत्यादयः। एवम्भूताश्च गुरुशिष्यादय एव प्रायेणेति त एव दर्शिताः।

(रा. टि.) केवलपदकृत्यं वक्तुं आह ॥ यदा च स्वयमिति ॥ प्रसङ्गेति ॥ वादत्वप्रसङ्गेत्यर्थः। 'केवलं' इत्युक्त्या तद्व्युदासप्रकारमनुवदन्नेव शङ्कते ॥ भवेदित्यादिना ॥ अनेनेति ॥ 'केवलं तत्वनिर्णयमुद्दिश्य' त्यनेनेत्यर्थः। व्युदासो व्यावृत्तिः ॥ परपराभवद्वारैवेति ॥ पाषण्डनिरासः पूर्वं, ततः संशयादिव्युदासः, ततः तत्वनिर्णय इति परपराभवद्वारैवेत्यर्थः।

---

[1] संशयाद्यपाकरणायैव.

(रा. टि.) ॥ **सदुपायेति** ॥ सत्साधनेत्यर्थः ॥ **नापि पाषण्डिनस्तत्वनिर्णयायेति** ॥ प्रवर्तेत इत्यनुषज्यते ॥ **वक्ष्याम इति** ॥ वा समितेः शुभा इति चतुर्थपादव्याख्यानावसरेऽनुपदमेव वक्ष्याम इत्यर्थः। 'कथकगततत्वनिर्णयोद्देशेन प्रवृत्ता कथा वादः' इत्युक्ते समितेः तत्वनिर्णयोद्देशेन प्रवृत्तवादकथायामव्याप्त्यापत्तेः इति भावः। ॥ **त एवेति** ॥ गुरुशिष्यान्यसखिसब्रह्मचार्यादय इत्यर्थः।

(वे. टि.) भवेत् इत्यस्य वक्ष्यमाणेन व्युदास इत्यनेन सम्बन्धः। तत्वनिर्णयं संशयविपर्ययनिरासरूपं ॥ **परपराभवद्वारैवेति** ॥ पाषण्डयुदीरितस्वपक्षसाधकप्रमाणनिरासद्वारैवेत्यर्थः। पूर्वं वेदादिप्रमाणेनैव निश्चिततत्वानां सज्जनानां खलु पाषण्डयुदीरितस्वपक्षसाधकप्रमाणोपलम्भेन संशयविपर्ययौ प्रसक्तौ। तौ च न तन्निरासं विना साक्षादेव वैतण्डिकेन निराकर्तुं शक्येते तस्य स्वपक्षस्थापनाऽभावात्। वादे तु परपक्षसाधकप्रमाणे दूषिते निष्परिपन्थिना स्वपक्षसाधकप्रमाणेनैव साक्षात् संशयादिव्युदासः। पाषण्डिप्रमाणनिरासे तु सज्जनानां निष्परिपन्थिना स्वावगतप्रमाणेनैवेति विशेष इति भावः ॥ **सदुपायजल्पेति** ॥ तस्य ख्यात्यादेरपि हेतुत्वेन केवलतत्वनिर्णयहेतुत्वाभावादित्यर्थः ॥ **विवक्षितेति** ॥ साक्षादित्येवंरूपस्येत्यर्थः। तथा च साक्षात्तत्वनिर्णयहेतुत्वस्य वाद इव जल्पविशेषेऽपि सत्वात्तत्रातिव्याप्तिपरिहारार्थं उद्देश्यग्रहणं सार्थकमेवेति भावः।

यद्यपि केवलशब्दस्य अवधारणार्थत्वेऽपि आनुषङ्गिकजयादिफलकवादविशेषाव्याप्तिपरिहारार्थत्वेन उद्देश्यग्रहणं न व्यर्थं, तथाऽपि वितण्डाविशेषे अतिव्याप्तिपरिहाराय केवलशब्दस्य साक्षादर्थत्वे अवश्यं विवक्षणीये अवधारणार्थत्वाभावेनोक्ताऽव्याप्तिशङ्काया एवाऽभावादित्याशयात्।

॥ **ननु कथकेति** ॥ उक्तवितण्डाया लोकगततत्वनिर्णयमुद्दिश्यैव प्रवृत्तत्वादिति भावः ॥ **अनुपयोगादिति** ॥ सता वैतण्डिकेन परपक्षनिराकरणमेव वितण्डायां क्रियते न स्वपक्षसाधनमपि। ततश्च प्रतिवादिनः स्वपक्षसाधनाभावात् परपक्षनिराकरणमात्रस्य पाषण्डितत्वनिर्णयेऽनुपयोगात् न वैतण्डिकः पाषण्डितत्वनिर्णयाय प्रवर्तेत इत्यर्थः। ननु तत्र प्रतिवादिसाधनाभावेऽपि स्वप्रयुक्तमेव साधनं स्वकीयतत्वनिर्णयोपयुक्तं भविष्यति इत्यत आह ॥ **असत्साधनैरिति** ॥ जाताविदं बहुवचनं। तत्साधनस्यासत्त्वं च प्रतिवाद्युद्भावितदूषणैर्ज्ञातव्यम् ॥ **तत्वजिज्ञासुरिति** ॥ तथा च वितण्डायाः पाषण्डितत्वनिर्णये साक्षादुपयोगाभावेऽपि तदुपयुक्तजिज्ञासाजनकत्वेन तत्रोपयोगः प्राप्त इत्याशयः। असत्पक्षावलम्बिनस्तस्यासुरस्वभावत्वेन तत्वज्ञाने द्वेष एव भविष्यति नेच्छेति भावः। स्वरूपसतः सज्जनस्यापि कथाचिदसत्समागमादिना असत्पक्षावलम्बिनः संसदि पराभूतस्य क्वचित् तत्वजिज्ञासुत्वसम्भवात् प्रायः इत्युक्तं।

अभ्युपेत्य चेदमुदितं। वस्तुतस्तु वादिनः तत्र तत्वजिज्ञासामात्रोत्पत्तावपि न तत्वनिर्णयोत्पत्तिः सम्भवति प्रतिवादिना प्रमाणस्यानुपन्यस्तत्वादिति द्रष्टव्यम् ॥ **यथा नैवमिति** ॥ विदिततत्वौ अदुष्टमनसौ परप्रार्थितौ परार्थमेव यां कथां कुरुतः तस्मिन् वादविशेषे अव्याप्तिप्रसङ्गेन नैवं व्याख्यातुं शक्यमित्यर्थः ॥ **वक्ष्याम इति** ॥

(वे. टि.) वा समितेश्शुभा इत्येतद्व्याख्यावसर इति शेषः । तत्र विदिततत्वयोः कथायाः समितितत्वनिर्णयार्थतावचनेन कथकगततत्वनिर्णयविवक्षया न वादलक्षणं व्याख्येयमित्यर्थात् सूचितमिति भावः ।

सब्रह्मचार्यादीनां इत्यत्र आदिपदेन तत्वज्ञानार्थी कश्चिदन्योऽपि ग्राह्यः ॥ अदुष्टमनस इति ॥ जल्पाधिकारिणस्तु यद्यपि तत्वज्ञानयोग्यतया सन्तः तथाऽपि स्पर्धादिना दुष्टमनस इति तद्व्यवच्छेद इति भावः । अदुष्टमनस्त्वेन लब्धमर्थं दर्शयति ॥ ते चेति ॥ प्रकृतोक्तिका इति ॥ प्रकृतोपयुक्तवक्तार इत्यर्थः ॥ अनपेक्षका इति ॥ तत्वनिर्णयातिरिक्तख्यात्याद्यपेक्षारहिता इत्यर्थः ॥ अत्र आदिपदेन तत्वबुभुत्सव इत्यस्य ग्रहणम् ॥

वादकथालक्षणस्यातिव्याप्त्यव्याप्तिनिरासः

(टी.) ननु यदा विदिततत्वौ अदुष्टमनसौ परप्रार्थितौ कथां कुरुतः स वादो न वा? आद्ये अव्यापकमाद्यं लक्षणं, द्वयोरपि तत्वज्ञानितया तदुद्देशिताऽभावात् । द्वितीयमतिव्यापकम् । सेयमुभयतःपाशा रज्जुः इत्यत आह

............................वा समितेश्शुभा ।

न केवलमियं वादकथा कथकगततत्वनिर्णयार्था विवक्षिता । किंनाम? यदा गुरुशिष्यौ तदा शिष्यस्य, यदा सखिप्रभृतयः तदा सर्वेषां, यदा तु विदिततत्वौ तदा कृतप्रार्थनायाः समितेः शुभा शुभस्य तत्वनिर्णयस्य हेतुः । सामान्यं चात्र विवक्षितं । न च सामान्येनोक्तस्य विशेषावलम्बेन दोषावकाश इति ।

(रा. टि.) वक्ष्याम इत्युक्तं । तत् शङ्कोत्तराभ्यां व्यनक्ति ॥ नन्वित्यादिना ॥ द्वयोरपीति ॥ तथा च कथकतत्वज्ञानविवक्षायां तत्राऽव्याप्त्यापत्तेः न तथा व्याख्यातुं शक्यत इत्यर्थ इत्युक्तं भवति ॥ उभयत इति ॥ पाशपदस्य अत्र ग्रन्थिविशेषोऽर्थः । उभयतः पार्श्वद्वये पाशो यस्याः सा उभयतःपाशेत्यर्थः । वाद इति वा त [1]न वा इति वा द्वेधाऽपि वक्तुं अशक्यमिति भावः । शुभा इति स्त्रीलिङ्गनिर्देशानुरोधात् आह ॥ इयं वादकथेति ॥ गुरुशिष्याविति ॥ कुर्वाते इत्यादिक्रियापदं ध्येयम् ॥ समितेरिति ॥ जनसमूहस्येत्यर्थः ॥ शुभा इत्यनुवादः । शुभस्य इत्यादिका व्याख्या ।

ननु शिष्यगतशुभोद्देशेन प्रवृत्ता वादकथा चेत् सख्यादिकृतवादकथायां अव्याप्तिः । सख्यादिगतशुभोद्देशेन प्रवृत्ता सा इति चेत् समित्यर्थंकृतायां गुरुशिष्यवादकथायां अव्याप्तिः इत्यत आह ॥ सामान्यं चेति अत्र वादलक्षण इत्यर्थः । शिष्यगतेति वा सख्यादिगतेति वा विशेषं अविवक्षित्वा साक्षात्तत्वनिर्णयोद्देश्य-

[1] नेति वा इति पाठेन भाव्यमिति भाति.

(रा. टि.) ककथा वाद इति वा, प्रकृतोक्तिकत्वादिप्रागुक्तधर्मोपेतपुरुषकर्तृककथा वादकथेति वा विवक्षितम् । समान्येनोक्तस्य विशेषावलम्बेन दोषोक्तौ प्रमाकरणं प्रमाणमित्यादावपि चैत्रमैत्रादिप्रमाविशेषमादाय परस्पराऽव्याप्तिः वक्तुं शक्यत्वात् न तद्दोषावकाश इत्यर्थः ।

(वे. टि.) ननु शिष्यादिगताः तत्वनिर्णयाः सर्वेऽप्युद्देश्यतया विवक्षिताः? उत प्रत्येकं? नाद्यः एकैकगततत्वनिर्णयोद्देशेन प्रवृत्तकथायामव्याप्तिप्रसङ्गात् । न द्वितीयः परस्पराऽव्याप्तेः । अत आह ॥ सामान्यं चेति ॥ शिष्यादिरूपाश्रयविशेषाविशेषितं तत्वनिर्णयमात्रमत्रोद्देश्यतया विवक्षितमित्यर्थः ।

### जल्पकथालक्षणम्

(टी.) क्रमप्राप्तं जल्पं लक्षयति

ख्यात्याद्यर्थं स्पर्धया वा सतां जल्प इतीर्यते ॥

कथेत्यनुवर्तते। केवलं स्पर्धया स्पर्धानिमित्तपरपराभवोद्देशेन ॥ सतामिति ॥ तत्वज्ञानयोग्यानां । जातौ चेदं बहुवचनं । ननु ख्यातिलाभपूजापरखिलीकरणानि समस्तानि व्यस्तानि वा उद्देश्यानि जल्पे विवक्ष्यन्ते? नाद्यः, एकैकोद्देशेन प्रवृत्तौ अव्यापनात् । न द्वितीयः, परस्पराव्याप्तेः । मैवम् । तत्वनिर्णयातिरिक्तफलोद्देशेन सत्कथा जल्प इति लक्षणार्थत्वात् । फलान्तरं च ख्यात्यादिकमिति तद्ग्रहणम् । सत्कथा वादोऽपि भवतीति तद्व्युदासाय ख्यात्याद्युक्तिः। वादविशेषोऽप्यानुषङ्गिकख्यात्यादिहेतुर्भवतीति तद्व्यवच्छेदार्थं उद्देशग्रहणं । वितण्डाव्यवच्छेदाय सतामिति। इतीर्यत इत्यनेनाऽगमसम्मतिकथनेन जल्पनिराकरणोपपत्तेराभासतां दर्शयति । आगमश्च 'वादो जल्पो वितण्डा' इत्यादिः अन्यत्रोदाहृतः ॥

(रा. टि.) ॥ लक्षयति ॥ लक्षणयुक्ततया दर्शयतीत्यर्थः । प्रागुक्ताविप्रलम्भकत्वादिगुणयुताः चेत् सन्तोऽत्र विवक्षिताः तदा असम्भवि लक्षणं स्पर्धिनां तादृशविशेषणाभावात् अत आह ॥ सतामिति तत्वज्ञानयोग्यानामिति ॥ व्यस्तानीति ॥ एकैकानीत्यर्थः ॥ सत्कथेति ॥ सत्कर्तृककथेत्यर्थः ॥ वादविशेष इति ॥ अन्यतरजयहेतुर्वाद इत्यर्थः ॥ जल्पनिराकरणोपपत्तेरिति ॥ वाद एक एवेति वदतां बाह्यानां वादवितण्डे द्वे एवेति वदतः श्रीहर्षस्य च जल्पनिरासे या उपपत्तिः तस्या इत्यर्थः ॥ अन्यत्रेति ॥ बृहदारण्यकभाष्ये पञ्चमेऽध्याये गार्गिब्राह्मणे वादो जल्पो वितण्डा इत्यारभ्य इत्यादि ब्रह्मतर्के इत्यन्त आगम उदाहृत इत्यर्थः ।

(वे. टि.) ॥ कथेत्यनुवर्तत इति ॥ अन्यथा अनन्वय इति भावः । ननु स्पर्धानिमित्तजल्पेऽपि ख्यात्यादेरुद्देश्यत्वात् कथं वाशब्दः? इत्यत आह ॥ स्पर्धानिमित्तेति ॥ उद्देशेनेत्युक्त्या आनुषङ्गिकख्यात्यादिहेतुवादविशेषे अतिव्याप्तिः परिहृतेति ज्ञातव्यम् । ननु यत्र परपराभवोद्देश्यत्वं तत्र परपराभवकरणे निमित्ततया ख्यात्यादेरुद्देश्यतासम्भवेन कथं वाशब्दः? इत्यत उक्तं ॥ केवलमिति ॥ परपराभवोद्देशे स्पर्धैव निमित्ततया अत्र विवक्षिता न ख्यात्यादिकमपीत्यर्थः । ननु स्पर्धावतामदुष्टमनस्कत्वरूपं सत्त्वमसम्भवीत्यत आह ॥ तत्वज्ञानेति ॥ ख्यात्याद्यर्थम् इति मूलगत आदि शब्दार्थप्रदर्शनाय लाभादिग्रहणम् ॥ तत्वनिर्णयातिरिक्तेति ॥

नन्वेवं तत्वबुभुत्साविजिगीषाभ्यां प्रवृत्ते जल्पविशेषे अव्याप्तिः । न च तत्वबुभुत्साविजिगीषे एकत्र एकदा विरुद्धे इति वाच्यम् । विरोधेऽपि सतो विजिगीषोर्विद्यापरीक्षार्थं प्राश्निकैस्तत्वबुभुत्सामुत्पाद्य कथायाः कारितत्वात् । न च सा कथा वाद एव न जल्प इति वाच्यं ।

जल्प इत्यपि नाम स्याद्वादस्यतादृशस्य तु ।

इत्यनुव्याख्याने जल्पत्वस्यापि तत्र कथितत्वादिति चेत् उच्यते, न ह्यत्र तत्वनिर्णयातिरिक्तपदं तत्वनिर्णयस्यानुद्देश्यत्वार्थं । किन्तु? ख्यात्यादीनामुद्देश्यानामनुगमार्थमेव । अन्यथा तत्वनिर्णयानुद्देशेत्यवक्ष्यत् । तच्च तत्वनिर्णयोद्देश्यत्वेऽप्यस्तीति न कश्चिद्दोष इति ॥ वादविशेष इति ॥ समितिप्रार्थितादुष्टमानसाभ्यां विदिततत्वाभ्यां क्रियमाणो वाद इत्यर्थः ॥ सतामितीति ॥ न चात्र बहुवचनस्य जात्यर्थकत्वेन वितण्डायां चैकस्य सत्त्वेन कथं तद्व्यवच्छेदसिद्धिरिति वाच्यम् । जातिवाचकेन सतामित्यनेन लक्षणया सतोरिति विवक्षितत्वात् ॥ जल्पनिराकरणोपपत्तेरिति ॥ जल्पस्त्वेका कथा न भवत्येव वितण्डाद्वयशरीरत्वात् । अन्यथा जल्पद्वयमपि कथान्तरं स्यादिति जल्पनिराकरणोपपत्तेरित्यर्थः । एकैकस्यैव स्वपक्षसाधनपरपक्षप्रतिक्षेपकशक्तिककथान्तरस्य अवश्यं स्वीकार्यत्वात् , वितण्डालक्षणाऽयोगाच्च उभयपक्षस्थापनावत्त्वात् । जल्पद्वये तु नोक्तजल्पलक्षणं पक्षचतुष्टयस्थापनावत्त्वेनोभयपक्षमात्रस्थापनावत्त्वाभावात् । अतो न कथान्तरापत्तिरित्यागमाभिप्रायः ॥ अन्यत्रेति ॥ बृहदारण्यकभाष्य इत्यर्थः ।

वितण्डाकथालक्षणम्

(टी.) वितण्डालक्षणं दर्शयति

वितण्डा तु सतामन्यैः................ ।

कथेत्यनुवर्तते । प्रागिव बहुवचनव्याख्यानम् । अन्यैः असद्भिस्सह । 'फलभेदाभावेन न जल्पात् वितण्डा भिद्यते' इत्येके । तन्निरासाय तुशब्देन व्यवच्छिनत्ति ।

वितण्डालक्षणस्य असम्भवशङ्कापरिहारौ

(टी.) ननु तत्वज्ञानयोग्यतालक्षणं सत्त्वं यदि कथकाभिमानसिद्धं विवक्षितं तदा वितण्डाऽनवकाशः। द्वयोरपि स्वाभिमानतस्सत्त्वात्। अथ वास्तवं,तथापि न जल्पवितण्डे तदनिश्चयात्। निश्चये वा न वितण्डा स्यात्। न हि विनिश्चितस्वासाधुभावः परसाधुतां विनिश्चित्य वितण्डायै घटितुमर्हति। नैव दोषः। कथाविशेषव्यवस्थाया वादिप्रतिवादिव्यवस्थायाश्च प्राश्निकविधेयत्वात्। ते च शास्त्रोदितलक्षणैः सत्त्वासत्त्वे विनिश्चेष्यन्ति। अत एव प्राश्निकानां वैष्णवत्वनियमो वक्ष्यते।

(रा. टि.) ॥ प्रागिवेति ॥ जातावित्यर्थः। सहयोगे तृतीयेति भावेनाह॥ असद्भिस्सहेति॥ व्यवच्छिनत्तीति॥ जल्पलक्षणमिति योज्यम्। लक्षणस्य असम्भवमाशङ्क्य समाधत्ते॥ नन्वित्यादिना वैष्णवत्वनियमो वक्ष्यत इत्यन्तेन॥ वादे विवक्षितसत्त्वव्यावृत्त्यर्थं तत्वज्ञानयोग्यतालक्षणं सत्त्वमित्युक्तम्॥ सत्त्वादिति॥ तत्वज्ञानयोग्यत्वादित्यर्थः॥ वास्तवमिति॥ सत्त्वमित्यनुकर्षः॥ शास्त्रोदितेति॥

नियमेन बहिश्चित्ताः ते सन्तो ब्रह्मणि स्थिताः।

इत्यादिशास्त्रोदितेत्यर्थः॥ अत एवेति॥ साधुत्वादिनिर्णयार्थत्वादेवेत्यर्थः।

(वे. टि.) ॥ प्रागिवेति॥ सतां अन्यैरिति बहुवचनद्वयं जात्यर्थकं लक्षणयैकैकव्यक्तिमात्रपरमिति व्याख्येयमित्यर्थः॥ व्यवच्छिनत्तीति॥ जल्पवितण्डामिति शेषः। कथकयोः सदसद्भावो वास्तव एव विवक्षितः। तन्निश्चयस्तु प्राश्निकानामेव न कथकयोरित्याह॥ नैष दोष इति॥ अत एवेति॥ उक्तरीत्या कथाविशेषव्यवस्थादीनां भक्तिव्यतिरेकेण असम्भवादेवेत्यर्थः।

नन्ववैष्णवसभायामुभाभ्यामसद्भ्यां विजिगीषया क्रियमाणा पक्षद्वयस्थापनोपालम्भवती प्रतिपक्षस्थापनाहीना च कथा जल्पो वितण्डा च भवति न वा? आद्ये उक्ताधिकारिभेदगर्भलक्षणे तयोरव्यापके सत्कर्तृकत्वाभावात्। अन्त्ये वक्ष्यमाणे प्रवृत्तिप्रकारभेदगर्भलक्षणे अतिव्यापके इति चेत् अत्राहुः, प्राश्निकालक्षणशून्यतया जल्पाद्याभासत्वेन तयोर्जल्पादित्वाभावात्। प्राश्निकादिलक्षणाभावेन तदीयसभासदां प्राश्निकादित्वाभावात्। व्यवहारस्तु तदीयगुरुशिष्यादिकर्तृके विचारगोचरे वाक्यप्रबन्धे तत्वनिर्णयफलकत्वाभिमत्या वादव्यवहारवत् सादृश्यमात्रेणैव उपपन्नः। तदिदमभिप्रेत्योक्तं॥ प्राश्निकानां वैष्णवत्वनियमो वक्ष्यते इति॥ न च वक्ष्यमाणलक्षणयोरतिव्याप्तिः तयोः कथात्वगर्भत्वात्। कथात्वस्य चोभयोरन्यतरस्य वा तत्वज्ञानयोग्यतालक्षणवैदुष्यगर्भतया विवक्षितत्वात्। अत एव न कथासामान्यलक्षणस्यापि तत्रातिव्याप्तिरिति।

(टी.) ननु कथं जल्पवितण्डयोर्भेदः? न तावत् फलभेदेन, जल्पवत् वितण्डाया अपि ख्यात्याद्यर्थत्वात्। पाषण्डिपराकरणेन तत्वनिर्णयोऽपि क्वचित् भवतीति चेत् सत्यम्, क्वचिद्भेदाभावापत्तेः। निमित्तैक्याभावेन कथैक्यानुपपत्तेः। नाप्यधिकारिभेदेन निर्निमित्तस्य तस्यैवासम्भवात्। 'स्वरूपभेदाभावेऽपि वितण्डायां सदसतोरधिकारः' इति वचनानुपपत्तेश्च। सदसन्तौ यां कथां कुरुतः सा वितण्डेति चेन्न। तथा सति पुरुषानन्त्येन कथानन्त्यापत्तेरिति। नैष दोषः। प्रवृत्तिप्रकारभेदेन तद्भेदोपपत्तेः। द्वयोरपि स्वपरपक्षसाधनदूषणवान् जल्पः। वितण्डा तु प्रतिवादिनः स्वपक्षसाधनेन विना परपक्षप्रतिक्षेपमात्रेण पर्यवस्यतीति। अधिकारिभेदस्तूपलक्षणत्वेनोक्तः।

नन्वेतदप्यसम्बद्धम्। जल्पे हि वादिसाधनप्रतिक्षेपाय प्रतिवादिनोद्भावितं दूषणं यदि लग्नं तर्हि भग्नं वादिसाधनं। जितं प्रतिवादिना। निवृत्ता कथा। यदि न लग्नं तर्हि निरनुयोज्यानुयोगेन भग्नः प्रतिवादी। जितं वादिना। निवृत्ता कथा। तत्र द्वयोरपि क्वास्ति साधनदूषणावकाशः? एवमेव तत्करणे द्विर्द्विः एकैकेनैव साधनं दूषणं च किं न कर्तव्यं? मैवम्। कथकशक्तिपरीक्षणार्थत्वाज्जल्पस्य। न च तत् उभयकरणमन्तरेण सम्भवति। न हि वञ्चितपरप्रहारोऽपि तमप्रहरमाणो युयुत्सुर्विजयते। नापि स्वात्मानमरक्षन् परप्रघाती विजयी। परन्तु श्लाघ्यस्स्यात्। न च द्विरनुष्ठानस्य प्रयोजनमस्ति। प्रत्युत आधिक्येन निग्रहापत्तेः। कथं तर्हि वितण्डायां परप्रतिक्षेपमात्रेण विजय इति चेत्? सत्यं, मुख्यविजयाभावेऽपि [1]काकोलूकवत् प्राश्निकादिकृतसमयवशेनोपपत्तेः।

अथ प्राश्निकादयस्तादृशं समयमेव कस्मात्कुर्युः? इति चेत् तत्राह

................तत्वमेषु निगूहितम्।

कर्तव्यमिति शेषः। यतोऽसत्सु सता तत्वं निगूहितं कर्तव्यं, अन्यथा प्रत्यवेयात्। साधने च प्रकाशनं प्रसज्येत। अतोऽसदुपालम्भेनैव प्राश्निकादयः सतो विजयमनुजानन्ति। जल्पे तु द्वयोरपि सत्त्वेन मुख्यस्यैव विजयोपायस्यानुष्ठानसम्भवेन स्वपरपक्षसाधनोपालम्भाभ्यामेव विजयं नियच्छन्तीति।

(रा. टि.) तुशब्देन व्यवच्छिनत्ति इत्युक्तं। तत्र आक्षिपति ॥ नन्विति ॥ क्वचिदिति। वितण्डाविशेष इत्यर्थः ॥ निमित्तैक्येति ॥ जल्पादिव्यावृत्तस्य वितण्डाकथामात्रानुवृत्तस्य वितण्डापदप्रवृत्तिनिमित्तस्य

[1] वे. काकोलूकयुद्धवत्.

(रा. टि.) एकस्य अभावेन इयं सर्वाऽपि वितण्डेति वितण्डाया एकत्वादित्यर्थः ॥ **निर्निमित्तस्येति** ॥ कथाभेदो हि अधिकारिभेदे निमित्तं, तस्यैवाऽभावे तन्निमित्तो जल्पवितण्डयोरधिकारिभेदः कथं स्यात्? निर्निमित्तत्वादित्यर्थः ॥ **स्वरूपेति** ॥ वितण्डायाः जल्पात् विविक्तस्वरूपाभावादित्यर्थः ॥ **अधिकारिभेदस्त्विति** ॥ **सतां जल्प इति सतामन्यैः** इति च मूलकृता अधिकारिभेदस्तु प्रवृत्तिप्रकारभेदोपलक्षणत्वेनोक्त इत्यर्थः । प्रवृत्तिप्रकारभेदो न सम्भवतीति शङ्कते ॥ **नन्वेतदपीति** ॥ **मुख्यविजयेति** ॥ द्वयोः स्वपरपक्षसाधनदूषणरूपेत्यर्थः ॥ **काकोलूकवदिति** ॥ तयोरन्योन्यं स्वाऽऽत्मरक्षणपरघातुकत्वयोरभावेऽपि उलूकस्य काकहत्येव परसाधनदूषणस्थैर्यसद्भावमात्रेण जयादेः प्राश्निकसभ्यसभापतिपरिकल्पितसङ्केतवशेनोपपत्तेरित्यर्थः ।

**अथ** इति शङ्काद्योतको निपातः ॥ **तादृशमिति** ॥ वादवत् जल्पे द्वयोरपि स्वपरपक्षसाधनदूषणाभ्यां जयः वितण्डायां अन्यतरस्य परपक्षदूषणेनैव जयः इत्येवंरूपं समयमित्यर्थः ॥ **नियच्छन्ति** ॥ नियमं कुर्वन्तीत्यर्थः ।

(वे. टि.) **तत्वमेषु निगूहितं** इति मूलमवतारयितुं शङ्कते ॥ **ननु कथमित्यादि** ॥ **क्वचिदिति** ॥ यया वितण्डया न तत्वनिर्णयः किन्तु ख्यात्यादिकमेव भवति तस्यामित्यर्थः । फलाभेदेन क्वचिद्वितण्डायां जल्पाभेदमापाद्य तत्वनिर्णयख्यात्यादिरूपोभयफलिकायामपि वितण्डायां न कथैक्यं स्यात् फलैक्याभावादित्याह ॥ **निमित्तैक्याभावेनेति** ॥ तथा च व्यतिरेकतोऽन्वयतश्च व्यभिचारात् न फलभेदः कथाभेदप्रयोजक इति भावः ।

केचित्तु तत्वनिर्णयफलिकाया वितण्डाया जल्पात् भेदे सिद्धे तज्जात्याक्रान्तत्वेन ख्यात्याद्यर्थवितण्डाया अपि जल्पात् भेदः सिद्ध्यति इत्यत आह ॥ **निमित्तैक्याभावेनेति** ॥ निमित्तसाजात्याभावेन कथासाजात्यानुपपत्तेरित्यर्थः । तथा च ख्यात्याद्युद्देश्यककथायां वितण्डात्वजात्याक्रान्तत्वमेव नेति भाव इत्याहुः ॥ **निर्निमित्तस्येति** ॥ तथा च अधिकारिभेदे स्वरूपभेदः प्रयोजकः । तस्मिंश्चाधिकारिभेद इत्यन्योन्याश्रय इति भावः । ननु स्वरूपभेदे नाधिकारिभेदः प्रयोजकः । किन्तु? फलभेदादिकमन्यदेव । अतो नान्योन्याश्रय इत्यत आह ॥ **स्वरूपभेदाभाव इति** ॥ उपलक्षणमेतत् । स्वरूपभेदाभावे जल्पस्येदं फलं वितण्डायास्त्वन्यदिति वचनानुपपत्तेश्चेत्यपि द्रष्टव्यम् । ननु वितण्डायां सदसतोरधिकारो जल्पे च सतोरेवेति न वचनविन्यासः, येन स्वरूपभेदोऽधिकारिभेदश्च प्रयोजकस्स्यात्। किन्तु? सदसन्तौ यां कथां कुरुतः सा वितण्डेत्यादिरूप एव। तथा च अधिकारिभेद एव स्वरूपभेदप्रयोजकतया प्राप्त इत्याशङ्कते ॥ **सदसन्ताविति** ॥ इदमुपलक्षणम् । सन्तौ यां कथां कुरुतः स जल्प इत्यादि द्रष्टव्यम् ॥ **तथा सतीति** ॥ स्वरूपभेदाभावेऽप्यधिकारिभेदमात्रेण कथाभेदे इत्यर्थः ॥ **प्रवृत्तिप्रकारभेदेनेति** ॥ **तत्वमेषु निगूहितं** इत्युत्तरवाक्ये वितण्डायां प्रतिवादिनः स्वपक्षस्थापनाहीनतया समयकरणे निमित्तं वदता अयं प्रवृत्तिप्रकारभेदः सूचित इति ज्ञेयम् ।

(वे. टि.) ननु तर्हि अप्रकाश्य स्वसिद्धान्तं इत्यनुव्याख्यान इवात्रापि वितण्डाप्रवृत्तिप्रकार एव वक्तव्यः सतामन्यैः इत्यधिकारिभेदः किमर्थमुक्तः? इत्यत आह ॥ अधिकारिभेदस्त्विति ॥ अधिकारिभेदवचनं उक्तस्य सर्वस्य प्रवृत्तिप्रकारभेदस्य उपलक्षकमित्यर्थः ॥ क्वास्ति साधनदूषणेति ॥ प्रतिवादिनः साधनावकाशः, वादिनो दूषणावकाश इत्यर्थः । ननु प्रतिवादिनो जितत्वे पराजितत्वे वा तेन स्वपक्षसाधनं क्रियतां । को दोषः? इत्यत आह ॥ एवमेवेति ॥ फलसिद्धावपीत्यर्थः ॥ काकोलूकयुद्धवदिति ॥ सप्तम्यर्थे वतिः । तथा च यथा रात्रौ काकोलूकयुद्धे प्रसक्ते तत्र स्वाऽत्मानमरक्षतोऽपि काकस्य उलूकघातितामात्रेण विजयः तथा वितण्डायां प्रतिवादिनः स्वपक्षसाधनाभावेऽपि परप्रतिक्षेपमात्रेण विजय इत्यर्थः ।

वादे प्राश्निकसापेक्षतानियमविरहः

(टी.) लक्षिता वादजल्पवितण्डाः । तत्र जल्पवितण्डयोरिव वादस्यापि प्राश्निकसापेक्षतां केचिदङ्गीकुर्वते । यथाऽऽहुः, 'स्वपरपक्षसिद्ध्यसिद्ध्यर्थं वचनं वादः । अधिकरणप्रत्यायनं सिद्ध्यसिद्धी । अधिकरणमिति प्राश्निकानां सामयिकी सञ्ज्ञा' इति ।

तान्निराचिकीर्षुराह

स्वयं वा प्राश्निकैर्वादे चिन्तयेत्........ ॥

प्रमेयमिति शेषः । स्वयं, वादी प्रतिवादिना प्रतिवादी च वादिना इति प्रत्येकं सम्बन्धे-नैकवचनोपपत्तिः । कुतो वादे प्राश्निकानपेक्षा? तत्राह

..................................तत्वनिर्णयम् ॥

उद्दिश्येति शेषः । अयमाशयः, प्राश्निकानां हि[1] वादस्थानं कथाविशेषव्यवस्थापनं पूर्वोत्तर-वादव्यवस्थापनं विवदमानयोर्गुणदोषावधारणं भग्नप्रतिबोधनं लौकिकनिष्पन्नकथाफलप्रतिपादनं चेत्यादीनि कर्माणि । एतानि च यत्र वादिनौ आग्रहगृहीतौ कर्तुमशक्तौ तत्र प्राश्निकानामुपयोगः । वादे तु वादिनावेव तत्वनिर्णयकामौ वीतरागतया कर्तुं शक्ताविति किं प्राश्निकैः? इति । तत् किं परिवर्जनमेव वादे प्राश्निकानां? मैवं । दैवादागतानामुपादानमित्युक्तम् ॥ वा प्राश्निकैरिति ॥ एतच्च संवादेन प्रामादिककथाभासशङ्काऽपनोदाय । न तूक्तकर्मकरणायेति ज्ञातव्यम् ।

वादकथायां सभापत्यनपेक्षा

सभापतिस्तु नेष्यत एव । यथाशक्ति यथानियमं मानापमानव्यञ्जनादिकं खलु तस्य कर्म । तत्किञ्चित् वादे नापेक्षितमेव । किञ्चित् स्वयं शक्यते सम्पादयितुमिति ।

---

[1] रा. वादस्थानकथाविशेषव्यवस्थापनम्.

जल्पवितण्डयोः सभापत्यादिनियमापेक्षा

(टी.) एतेन जल्पवितण्डयोः सभ्यसभापतिप्राश्निकादिनियतिः सूचिता भवति । तत्रोक्तकर्मणां वादिप्रतिवादिभ्यामेव विजिगीषुतया कर्तुमशक्यत्वादिति ।

(रा. टि.) ॥ **यथाहुरिति** ॥ तार्किकाः ॥ **सिद्ध्यसिद्ध्यर्थमिति** ॥ प्राश्निकविश्वासजननार्थं प्राश्निकहृदयङ्गमं वचनं वाद इत्यर्थः । **प्रत्यायनं** विश्वासकरणमित्यर्थः ॥ **सामयिकीति** ॥ साङ्केतिकीत्यर्थः । तत्तत्समयसिद्धेति वा अर्थः ॥ **तानिति** ॥ प्राश्निकनियमवादिन इत्यर्थः ॥ **एकवचनेति** ॥ **स्वयं** इत्येकवचनोपपत्तिरिति भाव ॥ **वादस्थानेति** ॥ **व्यवस्थापनपदं** अत्राप्यन्वेति । सत्यत्वमिथ्यात्वसकर्तृकत्वाऽकर्तृकत्वादिवादस्थलव्यवस्थापनम्, जल्पादिकथाविशेषव्यवस्थापनम् ॥ **भङ्गेति** ॥ 'अयं पराजितः' इति ज्ञापनमित्यर्थः । लौकिकं यत् निष्पन्नकथाफलं द्रविणादि तत्प्रतिपादनमित्यर्थः । आदिपदेन पराजितयोः सदसतोः उपेक्षाशिक्षाप्रकारोपदेशनमित्यादि ग्राह्यम् ॥ **वादिनाविति** ॥ वादिप्रतिवादिनावित्यर्थः ॥ **कर्तुमिति** ॥ प्रागुक्तकर्माणीति योज्यम् ॥ **यथाशक्तीति** ॥ **निन्द्यो दण्ड्योऽथ वा भवेत्** इति वक्ष्यमाणदिशा वा

गुरुदण्डस्तु वाचा स्यात् राजदण्डोऽर्थदेहतः ।
गुरुदण्डोऽप्यर्थतः स्यात् संवादे देहतोऽपि वा ॥
राजदण्डो बलाच्च स्यात् दोषस्य गुरुलाघवात् ।

इति बृहद्भाष्योक्तदिशा वेति भावः ॥ **नापेक्षितमिति** ॥ जिह्वाच्छेदकाकाङ्क्षनादिरूपमित्यर्थः ॥ **उक्तकर्मणामिति** ॥ वादस्थानव्यवस्थापनादिकर्मणामित्यर्थः ।

(वे. टि.) अनेन प्राश्निकनियमः कथं प्राप्तः? इत्यत आह ॥ **अधिकरणेति** ॥ सिद्ध्यसिद्धिशब्देन तद्विषयकाधिकरणप्रत्यायनं लक्षणया ग्राह्यमित्यर्थः ; तथा च प्राश्निकानां स्वपरपक्षसिद्ध्यसिद्धिज्ञापनार्थं यत् वादिप्रतिवादिवचनं स वाद इति तद्वाक्यार्थः । तत्वनिर्णयस्य चिन्ताकर्मत्वासम्भवात् आह ॥ **प्रमेयमिति** ॥ ननु स्वयं वादी प्रतिवादी चेत्युभौ चिन्तयेतामिति द्विवचनेन भाव्यं इत्यत आह ॥ **स्वयं वादीति** ॥ **यत्रेति** ॥ जल्पवितण्डयोरित्यर्थः ॥ **नेष्यत एवेति** ॥ जल्पवितण्डयोरिव अङ्गतयेति शेषः । तेन

गुरुणैव त्ववश्यानां राजा दण्डं प्रयोजयेत् ।

इति ब्रह्मतर्कविरोधो नेति ज्ञेयम् । तत्र अनङ्गभूतस्यैव गुरुणा विज्ञापितस्य राज्ञो दण्डकर्तृताया उक्तत्वात् । व्यञ्जनादिकमित्यत्र आदिपदेन निन्दादण्डादिसङ्ग्रहः ॥ **तत्किञ्चिदिति** ॥ मानापमानव्यञ्जनमनपेक्षितं, संवादकरणे निन्दादिकं तु वादे जयिनैव सम्पादयितुं शक्यत इत्यर्थः ॥ **सभ्येति** ॥ सभ्याः सभायां साधवः । स

(वे. टि.) भायां साधुरित्यर्थे 'सभाया यः' इति यप्रत्ययः । प्रश्नकरणशीलाः प्राश्निकाः । तदस्य शीलमित्यर्थे [1]शिल्पमिति ठक् । प्राश्निकानां क्वचित् सूक्ष्मे प्रमेये अज्ञाने सति कथकगुणदोषावधारणायोगात् तदा तद्गुण-दोषावधारणार्थं सभ्या अपि वरणीया इति भावेन सभ्यग्रहणम्.। यथोक्तं एतदज्ञाने सभ्याश्च इति ।

### प्राश्निकलक्षणम्

(टी.) प्राश्निकानां लक्षणं वक्ति

रागद्वेषविहीनास्तु सर्वविद्याविशारदाः ।
प्राश्निका इति विज्ञेयाः........ ॥

रागित्वे असन्तमपि पक्षं सन्तम् वदेयुः द्वेषित्वे सन्तमप्यसन्तम् । तुशब्दोऽप्यर्थः । तेन वादिप्रतिवादिनोरन्यतरपरवशत्वादीनां बुद्धिपूर्वं वैपरीत्याचरणहेतूनामसद्भावं समुच्चिनोति । सर्व-विद्यापदेन वादिप्रतिवादिदर्शनयोः कथोपयुक्तव्याकरणादीनां च सङ्ग्रहः । तदज्ञत्वे अपसिद्धान्ता-द्युद्भावने निर्णयो न स्यात् । वैशारद्यग्रहणेन च पुरोक्तग्रहणावधारणानुवादादिपटुताऽपि सङ्गृह्यते । अन्यथा सर्वविद्याज्ञानवैयर्थ्यापत्तेः । तदेवं ज्ञानतोऽज्ञानतो वा वादिप्रतिवादिनोर्वैषम्यमनाच-रन्तो [2]यथावस्तुवक्तारः प्राश्निका इति विज्ञेयाः ।

### प्राश्निकसङ्ख्या

ते च कियन्तः? इत्यपेक्षायामाह

...............विषमा एक एव वा ॥ ५ ॥

विषमाः विषमसङ्ख्याकाः । यथोक्तं—

रागद्वेषविनिर्मुक्तास्सप्त पञ्च त्रयोऽपि वा ।
यत्रोपविष्टास्सभ्यास्स्युस्सा यज्ञसदृशी सभा ॥ इति ।

विषमसङ्ख्याकत्वे हि तेषामेव परस्परविरोधे सति बहूनां संवादेन निर्णयः स्यात् । तथा चोक्तं

'द्वैधे बहूनां वचनम्'................ । इति ।

---

[1] शिल्पमिति इत्येतदधिकमिति भाति. [2] वे. यथावद्वस्तुवक्तारः

### प्राश्निकस्यैकत्वे तल्लक्षणम्

(टी.) नन्वेवं चेत् एक एव इत्यनुज्ञानं कथ? संवादाभावेन तत्कृतकथानिर्णये अनाश्वासादित्यत आह

अशेषसंशयच्छेत्ता निस्संशय उदारधीः ।
एकश्चेत् प्राश्निको ज्ञेयस्सर्वदोषविवर्जितः ॥ ६ ॥

अत्र आद्येन विशेषणेन भ्रमप्रतिबोधनादौ सामर्थ्याऽतिशयो दर्शितः । द्वितीयेन विशेषणेन सिद्धान्तद्वयरहस्यवेदित्वाद्यतिशयः, तृतीयेन परोक्तग्रहणादिपाटवातिशयः, चतुर्थेन रागादीनामशेषतोऽभावः । ततश्च प्राश्निकलक्षणातिशयसम्पत्त्या निश्शङ्कमुभाभ्यां निश्चितश्चेदेको वा प्राश्निकोऽङ्गीकार्य एवेत्युक्तं भवति ।

### विष्णुभक्तिपराणामेव प्राश्निकत्वयोग्यता

विशेषणान्तरमाह

एको वा बहवो वा स्युर्विष्णुभक्तिपरास्सदा ।

### विष्णुभक्तेः प्राश्निकगतगुणकारणत्वम्

रागादिराहित्यवत् विष्णुभक्तेः प्राश्निकत्वोपयोगं न पश्याम इत्यत आह

विष्णुभक्तिर्हि सर्वेषां सद्गुणानां स्वलक्षणम् ॥ ७ ॥

हिशब्दो हेतौ। सन्तो गुणा येषां पुंसां ते सद्गुणाः । स्वलक्षणं अव्यभिचारिलक्षणम् ।

इदमुक्तं भवति, यतः प्राश्निकैर्हि कथकयोः सदसद्भावं विविच्य सतोर्जल्पः सदसतोर्वितण्डा दातव्या । तत्रापि असतः स्वपरपक्षसाधनदूषणलक्षणं वादित्वं, सतस्तु परपक्षप्रतिक्षेपलक्षणं प्रतिवादित्वं व्यवस्थापनीयम् । असतो जये सति उदासितव्यम् । सतो जये सति सम्पूर्णसम्माननाय घटनीयम् । अन्यथा पाषण्डिनिरासाभावेन वितण्डावैयर्थ्यप्रसङ्गात् । न चैते कथाविशेषव्यवस्थापनादयो गुणाः तेषां विष्णुभक्तिं विना सम्भवन्ति । अतः प्राश्निकत्वोपयोगिगुणकारणत्वात् तेषां विष्णुभक्तिर्विधीयत इति ।

(रा. टि.) अप्यर्थः तुशब्दोऽनुक्तसमुच्चयार्थ इत्याह ॥ तेनेति ॥ तुशब्देनेत्यर्थः । अन्यतरः परः तद्वशत्वेत्यर्थः । आदिपदसङ्ग्राह्यं कियत् ? इत्यतोऽवच्छेदकमाह ॥ बुद्धिपूर्वमिति ॥ बुद्धिपूर्ववैपरीत्याचरणहेतूनां धर्माणामित्यर्थः ॥ द्वैधे बहूनां वचनमिति ॥ प्राश्निकानां द्वैविध्ये बहूनां वचनं ग्राह्यमित्यर्थः ॥ प्राश्निकलक्षणातिशयेति ॥ लक्षणरूपातिशयेति वा लक्षणादप्यतिशयेति वाऽर्थः । उभाभ्यां वादिप्रतिवादिभ्याम् ॥ विशेषणान्तरमिति ॥ प्राश्निकानामिति योज्यम् । तावता भक्तेः उपयोगाप्रतीतेः आह ॥ इदमुक्तमिति ॥ हिशब्दार्थमाह ॥ यत इति ॥ तस्य न चैते गुणा विष्णुभक्तिं विना सम्भवन्ति यतोऽत इत्यनेनाऽऽन्वयः ॥ प्राश्निकत्वोपयोगीति ॥ प्राश्निकत्वोपयोगिनो ये प्रागुक्तगुणाः कथाविशेषव्यवस्थापनादयः तेषां कारणत्वेनेत्यर्थः । इतिपदस्य 'इदमुक्तं भवति' इति पूर्वेणान्वयः ।

(वे. टि.) तुशब्दलब्धार्थः ज्ञानत इति । रागद्वेषविहीना इत्येतल्लब्धार्थः अज्ञानत इति । बुद्धिपूर्वकत्वाभावादित्यर्थः, स्वभावादिति यावत् ॥ सर्वविद्याविशारदा इत्येतल्लब्धार्थो यथावद्वस्तुवक्तार इति ।

रागद्वेषादिना वैषम्यवन्त इति प्रतीतिनिरासाय आह । विषमसङ्ख्याका इति ॥ विष्णुभक्तेः गुणलक्षणत्वासम्भवात् आह ॥ सन्तो गुणा येषामिति ॥ अव्यभिचारीति ॥ प्राश्निकत्वोपयोगिसमस्तगुणाव्यभिचारीत्यर्थः ॥ स्वपरपक्षसाधनदूषणलक्षणमिति ॥ न च वितण्डायां प्रतिवादिना स्वपक्षस्य असाधनात् कथं वादिनः परपक्षदूषणं ? इति शङ्कनीयम् । प्रतिवादिना परिगृहीतस्य वादिस्थापनाप्रमाणदूषणस्यैवात्र परपक्षपदेन विवक्षितत्वात् । 'पक्ष परिग्रहे' इति हि धातुव्याख्यानम् ॥ वितण्डावैयर्थ्यप्रसङ्गादिति ॥ वितण्डा हि परघातमात्रार्था । तण्ड्यते हन्यते अनयेति योगात् । 'तडि ताडने' इति धातोः 'गुरोश्च हलः' इत्यकारप्रत्ययः । 'असाधारण्येन व्यपदेशा' इति परघातुकत्वं प्रतिवादिन एव, तस्मिन्नेव तान्त्रिकाणां वैतण्डिकत्वव्यवहारात् । घातश्च पाषण्डिनामेव न सतां,

न निगृह्य कथां कुर्यात् विप्रं............ ।

इति निषेधात् । एवं च असतो जये सज्जनावमानाय पाषण्डिसम्मानाय च घटनायां पाषण्डिगर्ववर्धनात् सज्जनमानभङ्गाच्च वितण्डा व्यर्था विपरीतफला स्यात् । सज्जनस्य जये सति पाषण्डिदण्डविशिष्टसज्जनसन्मानाय अघटनायां पाषण्डिगर्वनिर्वापणस्य सज्जनाभिमानव्यञ्जनस्य च फलस्य अनिष्पत्त्या वितण्डा व्यर्था विगतप्रयोजना स्यादित्यर्थः ।

### वादजल्पकथयोर्भेदः

(टी.) ननु वादजल्पयोः को भेदः? द्वयोरपि सदधिकारित्वात् स्वरूपभेदाभावे अधिकारिभेदस्यातिप्रसञ्जकत्वाच्च । अत एव तत्वबुभुत्सुत्वख्यात्यादिकामत्वरूपोऽधिकारिविशेषोऽपि अनुप-

(टी.) योगितया परास्तः। वादस्तत्वज्ञानं प्रसूते जल्पस्तु ख्यात्यादिकमिति भेद इति चेन्न। स्वरूपभेदाभावेऽस्य फलभेदस्यैव अनिर्वाहात्। न हि कथा कल्पलता येन स्वयमविचित्राऽपि सती पुरुषमनोरथवशेन विचित्रं फलं प्रसुवीत। न च जल्पवितण्डयोरिव प्रवृत्तिप्रकारभेदेन फलभेदः। उभयत्रापि स्वपरपक्षसाधनोपालम्भसद्भावेन तदभावादिति। मैवम्। प्रमाणतर्काभ्यामेव वादे स्वपरपक्षसाधनोपालम्भौ क्रियेते, जल्पे तु प्रमाणतर्काभ्यां छलादिना च। न चोभयोः प्रमाणतर्कासम्भवः। अभिप्रायनियमस्य विवक्षितत्वात्। तदेवं प्रवृत्तिप्रकारभेदात् युक्तः फलभेदः, कथाभेदश्च सम्भवतीत्याशयवान् वादप्रकारं तावत् दर्शयति

वादिना स्वपक्षसिद्धये आगम एव वक्तव्यः

पृष्टेनाऽऽगम एवादौ वक्तव्यः.................... ।

वादे, प्रतिवादिना वादिनं प्रति विचार्ये प्रमेये प्रमाणं प्रष्टव्यम्। पृष्टेन च वादिना तावदागम एव वक्तव्यः न तु छलादिना प्रश्नखण्डनं कर्तव्यम्। नाप्यनुमानं दुरागमो वा वक्तव्यः।

छलादिना प्रश्नखण्डनमकृत्वा कुतो वादिना प्रमाणमभिधेयम्? इति तत्राह

.................................साध्यसिद्धये ॥

वादी हि तत्वनिर्णयं कामयते। न तु परपराभवम्। प्रमाणमेव च तत्वनिर्णयाय प्रभवति। न तु छलादिना प्रश्नखण्डनम्। आगमः कुतो वक्तव्यः? इत्यत्राप्येतदेवोत्तरम्। आगमो हि साध्यसिद्धये कल्पत इति।

अनुमानस्य साध्यसिद्ध्यनुपयोगित्वम्

अस्त्वागमस्य वक्तव्यता तन्नियमस्तु कुतः? अनुमानेनापि साध्यसिद्धिसम्भवात् इत्यत आह

नैषा तर्केणापनेया मतिरित्याह हि श्रुतिः ॥ ८ ॥

यस्मात् तत्वमतेरनुमानासाध्यतामाह श्रुतिः तस्मादागमनियमः ॥

## प्रतिवादिना वाद्युक्तं प्रमाणं दूषयित्वा स्वपक्षे प्रमाणं वक्तव्यम्

(टी.) वादिना आगमेन स्वपक्षे साधिते प्रतिवादिना किं कर्तव्यम्? वाद्युपन्यस्तं प्रमाणं दूषणीयम्। प्रतिपक्षे तस्मिञ्जागरूके तत्वनिर्णयायोगात्। उभयत्र प्रमाणोपपत्तौ संशयानतिक्रमात्। उपस्थितसाधनादूषणे स्वपक्षसाधनस्यानवसरात्।

(रा. टि.) **पृष्टेन** इति वाक्यमवतारयितुं आक्षिपति॥ **नन्विति**॥ **अतिप्रसञ्जकत्वाच्चेति**॥ एकस्मिन्नपि वादादौ तत्प्रसङ्गादित्यर्थः ॥ **अत एवेति**॥ स्वरूपभेदाभावेऽपि अधिकारिभेदस्यातिप्रसञ्जकत्वादेवेत्यर्थः॥ **प्रमाणतर्कासम्भव इति**॥ तथात्वे विप्रतिपन्नप्रमेयस्य द्वैरूप्यापत्तेरिति भावः॥ **अभिप्रायेति**॥ मयोच्यमानौ प्रमाणतर्कावेवेति द्वयोः अभिप्रायनियमस्येत्यर्थः। जल्पे तु नैवं नियमः छलाद्यपि पाक्षिकजयार्थं मयोच्यत इति क्वचित् अभिप्रायसत्त्वात् इति भावः। **आदौ** इत्युक्त्यभिप्रायोक्तिः छलादिना प्रश्नखण्डनमकृत्वेति। **एतदेव** 'साध्यसिद्धये' इत्येतदेवेत्यर्थः। शेषोक्त्या शङ्का निरस्येति भावेनाह ॥ **कल्पत इति**॥ समर्थो भवतीत्यर्थः॥ एवकारोक्तिं आक्षिपति॥ **अस्त्विति**॥ हिशब्दार्थमाह॥ **यस्मादिति**॥ **तत्वमतेः** तत्वज्ञानस्येति श्रौतमतिशब्दार्थः। एषा तत्वमतिः तर्केण **आनेया** साध्या न भवति **अपनेया** बाध्या च न भवति इत्यनुमानासाध्यतामाहेत्यर्थः। तर्कशब्दोऽत्र अनुमानमात्रपरो न प्रसञ्जनात्मकदूषणानुमानविशेषपर इति भावः। प्रतिवादिनापि वादिनेव स्वपक्षे प्रमाणं वक्तव्यम् इत्याह ॥ **उभयत्रेति**॥ वादिसाध्ये प्रतिवादिसाध्ये च इत्यर्थः।

(वे. टि.) ॥ **अनुपयोगितयेति**॥ स्वरूपभेदाभावे अधिकारिभेदस्यातिप्रसङ्गेन कथाभेदोपयोगाभावादित्यर्थः॥ **अभिप्रायनियमस्येति**॥ आभिमानिकनियमस्येत्यर्थः।

एवकारस्य वक्तव्य एवेत्यन्वयमभिप्रेत्याह ॥ **न तु छलादिनेति**॥ अस्मिन् प्रमेये किं मानं? इति प्रतिवादिना पृष्टे मानशब्दस्य मर्यादार्थत्वमारोप्य 'इदानीं प्रमेयमर्यादाप्रश्नोऽसङ्गतः' इति छलेन प्रश्नखण्डनं ज्ञेयम्। आदिपदेन "प्रश्नार्थात् किंशब्दात् जिज्ञासाविषयता अर्थस्य प्रतीयते। जिज्ञासा च ज्ञातुमिच्छा। इच्छा च [1]न ज्ञाते भवति अतिप्रसङ्गात्। तस्मात् ज्ञातुमिच्छता तत्र स्वज्ञानं इच्छाकारणीभूतं वक्तव्यम्। तत् यथार्थं अयथार्थं वा स्यात्। यथार्थं चेत् तर्हि तेनैव ज्ञानेन स्वकीयो विषयः प्रमाणमुपस्थाप्यते। विषये प्रमाणप्रवृत्तिमन्तरेण तदीययथार्थत्वस्य वक्तुं अशक्यत्वात्। तथा च तेनैव प्रमाणेन स्वविषयः सिद्ध एवेति सिद्धोऽस्माकं प्रमेयसिद्धिमनोरथः। अथ अयथार्थं तर्हि तस्मिन् अयथार्थज्ञानविषये यदि अस्माभिरपि अयथार्थमेव ज्ञानं उत्पादनीयं इति भवतो वाञ्छितं तदा वयं यथार्थज्ञानस्यैव उत्पादयितारो न तत्र कृतिनः। अथ मदीयस्य अयथार्थज्ञानस्य यो विषयः स मदीययथार्थज्ञानविषयो भवता क्रियतां इति त्वदीयं वाञ्छितं तदा व्याघातात् ईदृशाऽर्थे प्रवृत्तिरेव अनुपपन्ना" इत्यादिरूपं खण्डनकारोक्तप्रश्नखण्डनं सङ्गृह्यते।

---

[1] नाज्ञाते इति पाठेन भाव्यमिति भाति.

(वे. टि.) एवशब्दस्य यथाऽवस्थितताऽन्वयं अपि अभिप्रेत्य आह ॥ नाप्यनुमानमिति ॥ अनुमाना-साध्यतामिति ॥ अनेन आ अप इति छेदं अभिप्रेत्य एषा तत्वविषया मतिः तर्केण आनेया उत्पाद्या न इत्यपि श्रुत्यर्थ इति सूचयति । ननु वादिवत् प्रतिवादिनाऽपि आदौ स्वपक्षे प्रमाणमेव वक्तव्यं किं परपक्षदूषणेन ? इत्यत आह ॥ प्रतिपक्ष इति ॥ ननु अस्तु वाद्युपन्यस्तप्रमाणदूषणं आवश्यकम्, तथाऽपि स्वपक्षसाधनमुपन्यस्य प्रतिवादिना वाद्युपन्यस्तं साधनं दूष्यतां इत्यत आह ॥ उपस्थितेति ॥ प्रतिपक्षतयोपस्थितेत्यर्थः ।

प्रतिवादिना वाद्युक्तस्यागमस्यान्यार्थकथनमेव तद्दूषणम्

(टी.) आगमस्य च दूषणं कीदृशम् ? इत्यपेक्षायामाह

अन्यार्थ एवागमस्य वक्तव्यः प्रतिवादिना ।

द्वेधा हि प्रमाणदूषणं, सर्वथा निर्विषयत्वापादनं पराभिमतार्थप्रच्यावनं च । तत्रागमस्या-यार्थताकथनेन वाद्यभिमतार्थप्रच्यावनमेव प्रतिवादिना कर्तव्यं, न तु सर्वथा अप्रामाण्यं ।

सदागमाः

कुतो नाप्रामाण्यं वक्तव्यमिति चेत् ? आगमशब्देन हि सदागमा विवक्षिताः । सदागमाश्च श्रुतिस्मृतीतिहासपुराणलक्षणा एव । तत्र श्रुतीनामपौरुषेयत्वेन अप्रामाण्यकारणशून्यानामप्रामाण्यं वक्तुं तावन्न शक्यं । स्मृत्यादीनामप्याप्तप्रणीततया श्रुत्यानुकूल्येन च दोषाभावनिश्चयान्नाप्रामाण्यं वक्तुं शक्यते । अतो विषयान्तरोपदर्शनेन वाद्यभिमतार्थप्रच्यावनमेव न्याय्यमित्याशयवानाह

ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् ॥ ९ ॥
मूलरामायणं चैव सम्प्रोच्यन्ते सदागमाः ।
अनुकूला य एतेषां ते च प्रोक्तास्सदागमाः ॥ १० ॥

चकारा अन्योन्यसमुच्चये । एवकारस्त्वेत एव सदागमा इत्यनेन सम्बद्ध्यते । सम्प्रो-च्यन्ते प्रोक्ता इत्यनेन ऋगाद्या भारतं चैव इत्यागमं सूचयति ।

(टी.) ननु यदा वादी परिगणितं वेदादिकं वदेत् तदा प्रतिवादिनाऽन्योऽर्थोऽभिधीयताम्। यदा तु अपरिगणितं पाशुपतादिकमभिदधीत, तदा तु अप्रामाण्यं वक्तुं शक्यत एव। अतः कथं अन्यार्थ एवागमस्य वक्तव्यः इति नियमः? इत्यत आह

अन्ये दुरागमा नाम तैर्न साध्यं हि साध्यते।

यतः परिगणितेभ्योऽन्ये दुरागमाः प्रसिद्धाः दुरागमास्तदन्य इत्यादौ। अतो वादिना तत्वबुभुत्सुना तैर्न साध्यं साध्यते। साध्यसाधनाय ते न प्रयोक्तव्या एव। तथा च सर्वथा अप्रामाण्यकथनस्य अप्रसङ्गात् उक्तनियमो युक्त एव।

प्रतिवादिनापि स्वपक्षसिद्धये आगम एव प्रयोक्तव्यः

वादिप्रयुक्तागमस्यार्थान्तरकथनेन किं प्रतिवादी चरितार्थः? नेत्याह

स्वपक्ष आगमश्चैव वक्तव्यः प्रतिवादिना॥ ११॥

साध्यसिद्धेः प्रमाणैकाधीनत्वादिति एवकारार्थः।

वादिनापि प्रतिवाद्युक्तस्यागमस्य अन्यार्थता समर्थनीया

एवं प्रतिवादिना परपक्षप्रतिक्षेपे स्वपक्षसाधने च कृते वादी किं कुर्यात्? इत्यपेक्षयामाह

तस्याप्यन्यार्थता साध्या वादिना ............।

अपिर्वादिनेत्यनेन सम्बध्यते[1]। अर्थान्तरकथनमात्रस्याप्रयोजकत्वात् साध्येत्युक्तं। एवं अन्यार्थ एवागमस्य वक्तव्यः इत्येतदपि [2]साध्यः इति व्याख्येयम्।

कुतो वादिना प्रतिवाद्युक्तागमस्यार्थान्तरं साध्यं? तत्राह

..........................स्वार्थ सिद्धये।

---

[1] वे. अपिर्वादिनापीति सम्बध्यते.  [2] साध्यम्.

न हि प्रतिपक्षप्रमाणे सति स्वप्रमाणमात्रेण वादिनस्तद्दूषणेन विना स्वसाध्यं सिद्ध्यति सप्रतिपक्षस्य प्रमाणत्व एव सन्देहात्। प्रतिवादिप्रमाणदूषणं च प्रागुक्तन्यायेनार्थान्तरकथनमेव।

वादिना स्वोक्तागमस्य प्रतिवाद्युक्ता अन्यार्थता निरसनीया

किमेतावता जितं वादिना? नेत्याह

अन्यार्थता निराकार्या स्वागमस्य.................. ।

वादिना स्वप्रयुक्तागमस्य या प्रतिवाद्युक्ता अन्यार्थता सा निराकार्या च।

कुतः? इत्यत आह

.......................विनिश्चयात् ॥ १२ ॥

ल्यब्लोपनिमित्ता पञ्चमी तत्वनिश्चयमुद्दिश्येति। प्रतिवादिना अर्थान्तरकथनेन वाद्यभिमतार्थात् प्रच्यावित आगमः कथं नाम तत्वनिश्चयाय प्रभवेत्? कथं च प्रतिपक्षदूषणमात्रेण वादिनो निस्साधनस्तत्वनिश्चयस्स्यात्? इति।

(रा. टि.) अध्याहृतैतच्छब्देन अन्वयमाह ॥ एत एवेति ॥ इत्यागममिति ॥ तत्वनिर्णयोक्ताऽगममित्यर्थः ॥ हिशब्दार्थमाह ॥ यत इति ॥ नाम इत्यस्यार्थः प्रसिद्धा इति ॥ कुत्र? इत्यत आह ॥ दुरागमा इति ॥

दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दनः।

इति तत्वनिर्णयोक्ताऽगम इत्यर्थः ॥ उक्तनियम इति ॥ अन्यार्थ एवाऽगमस्य वक्तव्यः इत्युक्तनियमः। वक्तव्य एवेति एवकारान्वयमुपेत्य लब्धार्थं आह ॥ साध्यसिद्धेरिति ॥ इत्येतदपीति ॥ प्रागुक्तवाक्यमपीत्यर्थः। प्रमाणोक्त्यैव सिद्ध्यति इत्यत आह ॥ सप्रतिपक्षस्येति ॥ प्रतिवादिप्रमाणरूपप्रतिपक्षसहि-

(रा. टि.) तस्येत्यर्थः ॥ **किमेतावता जितं वादिना?** इति प्रश्नस्योत्तरं **नेत्याहेति** ॥ **ल्यब्लोपेति** ॥ 'कश्चन -ल्यबन्तशब्दं समभिव्याहृत्य लुप्तं कृत्वा तन्निमित्ता [1]पञ्चमीति शाब्दिकैः वाच्या' इत्युक्तत्वात् इहापि तथा ज्ञेयं इत्युपेत्याऽर्थमाह ॥ **तत्वनिश्चयमुद्दिश्येति** ॥

(वे. टि.) ॥ **प्रमाणैकाधीनत्वादिति** ॥ आगमरूपप्रमाणैकाधीनत्वादित्यर्थः ॥ **एवकारेति** ॥ न च 'वर्णात्कारः' इति वर्णनिर्देशे कारप्रत्ययो विहितः। तत् कथं एवकार इति प्रयोगः? इति वाच्यम्। [2]बग्रहणसन्निधानेन क्वचित् अवर्णादपि सम्भवात्, करणं कारः [3]एवकार इति षष्ठीसमासो वेति ॥ ननु वादिना प्रतिवादिप्रयुक्ताऽऽगमव्यतिरिक्तस्य अन्यार्थताया असाधितत्वात् तस्यापीति अपिशब्दः कथं? इत्यत आह ॥ **अपिर्वादिनाऽपीति** ॥ ननु प्रतिवाद्युक्ताऽऽगमस्य अन्यार्थताकथनेनैव तत्वनिर्णयसम्भवे किमर्थं वादिना स्वाऽऽगमस्य अन्यार्थता निराकार्या? इत्यत आह ॥ **कथं चेति** ॥ **निस्साधन इति** ॥ वाद्यागमस्य प्रतिवादिना तदभिमतार्थात् प्रच्यावितत्वात् विद्यमानमपि साधनं अविद्यमानप्रायं इति भावः।

उपपत्त्यादियुतस्यैवागमस्यार्थनिर्णायकत्वम्

**(टी.) ननु वादिप्रयुक्तागमस्य प्रतिवाद्युक्ता अन्यार्थता वादिना कथं निराकर्तुं शक्या? 'मदभिमत एवार्थः' इत्येवंवादिनि वादिनि 'न त्वदभिमतः किन्तु? मदभिमत एव' इति प्रतिवाद्यपि हि वक्तुं शक्नोत्येव। ततश्च कथं वाद्यागमार्थनिर्णयस्स्यात्? इत्यत आह**

उपपत्त्यवकाशोऽत्र ह्यागमार्थविनिर्णये।

**हि यस्मादागमार्थविनिर्णयार्थमुपपत्तीनामवकाशः तस्मात् वाद्यागमार्थनिर्णयो युक्तः।**

**एतदुक्तं भवति, आगमो हि न वेदादिमात्रं। तस्यार्थप्रमाजननासामर्थ्यात्। किं नाम? श्रुतो गृहीतसङ्गतिकोऽनुसंहितोपक्रमाद्युपपत्तिको वेदादिः। तस्य प्रमित्यव्यभिचारात्। तथा च वादिना स्वप्रयुक्तागमस्य स्वाभिमतार्थे उपक्रमाद्युपपत्त्यानुगुण्यं प्रतिवाद्युक्तार्थे तद्वैगुण्यं व्युत्पादनीयमेव। ततश्च कथं नाम तत्वनिर्णयो न स्यात्? इति।**

वाद्यागमार्थे निर्णीते प्रतिवाद्यागमार्थस्ताभ्यां मिलिताभ्यां निर्णेयः

**एवं वादिना स्वागमस्योपपत्तिवशेन स्वाभिमतार्थे प्रामाण्यं साधितवता स्वपक्षे साधिते, परोपन्यस्तागमस्य च अर्थान्तरमुक्तवता परपक्षे दूषिते निवृत्तो वाद इति न मन्तव्यं; किं नाम? इत्यत आह**

---

[1] पञ्चमी वाच्या इति शाब्दिकैरुक्तत्वात् इति पाठेन भाव्यमिति भाति. [2] बहुलग्रहण. [3] एवस्य कारः एवकारः इति.

वाद्यागमार्थे निर्णीत आगमार्थः परस्य तु ॥ १३ ॥
निर्णयः सहितैः पश्चात्…………………… ।

(टी.)परस्य इत्येतत् सामर्थ्यात् आगमशब्देन सम्बद्ध्यते । उपपत्त्यानुगुण्येन वाद्यागमस्य तदभिमतार्थपरत्वे निर्णीते, तेन च तस्य च स्वपक्षसाधनसम्पत्तौ सत्यां, पश्चात् परप्रयुक्तागमस्य उपपत्तिवशेनैव प्रतिवाद्यभिमतार्थनिरासपुरस्सरं वाद्यभिमतार्थविषयता समर्थनीया ।

इयांस्तु विशेषः, यथा वाद्यागमार्थनिर्णये वादिभावेन उपपत्तिचिन्ता क्रियते, न तथा प्रतिवाद्यागमार्थनिर्णये । किन्तु ? सहितैः सुहृद्भावेन सङ्गतैः । कुत एतत् ? वादिना स्वपक्षस्य सुदृढतरं साधितत्वात् तत एव प्रतिवादिनः परपक्षप्रतिक्षेपाक्षमत्वात् प्रतिपक्षसाधनस्य [1]चार्थान्तरकल्पनेन प्रामाण्यसन्देहात् , प्रबलदुर्बलयोश्च वादिप्रतिवादिभावायोगादिति ।

प्रतिवाद्यागमस्य अर्थनिर्णये सत्येव निःशेषनिर्णयः

ननु पुनः प्रतिवाद्यागमार्थमीमांसानुष्ठानं किंनिबन्धनं ? उक्तरीत्या वादिपक्षप्राबल्यस्य प्रतिवादिपक्षदौर्बल्यस्य च निश्चितत्वात् इत्यत आह

…………………ततो निश्शेषनिर्णयः ।

वादिना उपपत्त्यानुगुण्यवैगुण्याभ्यां स्वागमस्य स्वाभिमतार्थसमर्थनपराभिमतार्थनिरसनानुष्ठानेन स्वपक्षसाधने विहिते, प्रतिवादिप्रयुक्तागमस्यार्थान्तरकल्पनेन तत्पक्षे दूषितेऽपि तत एव प्रतिवादिनः परपक्षोपालम्भस्वपक्षसाधनाक्षमत्वेऽपि प्रतिवाद्यागमस्य वादिप्रतिवाद्युक्तार्थयोरुपपत्त्यानुगुण्यवैगुण्य[2]-समर्थन एव तत्वनिर्णयो भवति नान्यथेति तदनुष्ठेयमेव ।

ननु परस्परविरुद्धयोर्वादिप्रतिवादिपक्षयोः वादिपक्षे प्रबले सति कथं तत्वनिर्णयो न स्यात् ? इति चेन्न । वादिना प्रतिवाद्यागमस्यार्थान्तरे अभिहिते, परमार्थतः को न्वर्थः स्यात् ? इति संशयसद्भावेन वादिपक्षे प्राबल्य एव शङ्काशूकसद्भावात् । न च सति तस्मिन् वादसाध्यस्तत्वनिर्णयः । तदिदमुक्तं ॥ निश्शेषेति ॥

वाद्यागमस्योपपत्तिवशेन वाद्यभिमतार्थपरत्वे अवधारिते तदानुगुण्येन प्रतिवाद्यागमस्यापि वाद्यभिमतार्थपरत्वनिश्चयेन सन्देह एव कुतः? सावकाशस्य निरवकाशविरोधेन बाधितत्वादिति चेन्न ।

[1] रा. चार्थान्तरेण.

[2] वे, समर्थनत एव च.

(टी.) वाद्यागमस्य प्रतिवाद्यागमार्थविचारे अव्यापारितत्वात् । व्यापारितत्वे वा को नाम पुनर्युक्त्यनुसरणं विदध्यात्? इति ।

### क्वचित् प्रतिवादिपक्षस्यापि प्राबल्यम्

अनेनैव न्यायेन प्रतिवादिपक्षप्राबल्यमपि व्युत्पादनीयम् । न हि वादिन एव जयोऽपरस्य पराभव इति नियतिरस्ति ।

(रा. टि.) ॥ एववादिनि वादिनीति ॥ वादित्वेन अभिमते पुंसि एवंवादिनि सतीत्यर्थः । निमित्तसप्तमी इत्युपेत्याह ॥ आगमार्थविनिर्णयार्थमिति ॥ एवं हि आगम एव वक्तव्यः इत्ययुक्तं इत्यतोऽभिप्रायमाह ॥ एतदुक्तमिति ॥ आगमपदस्य अर्थपदेन समस्तस्य परस्य इति भिन्नपदेन आकाङ्क्षाविरहात् तेन अन्वयो न युक्त इत्यत आह ॥ परस्येत्येतदिति ॥ योग्यताबलात् 'देवदत्तस्य गुरुकुलं' इत्यादाविवेति भावः । कथं निर्णयः? इत्यतो व्याचष्टे ॥ उपपत्तीति ॥ तेन चेति ॥ स्वाभिमतार्थपरत्वनिर्णयेनेत्यर्थः ॥ कुत एतदिति ॥ सहृद्भावेन सङ्गतेः, न तु वादिप्रतिवादिभावेन इत्येतत् कुत इत्यर्थः । तद्व्यनक्ति ॥ वादिनेति ॥ प्रतिपक्षसाधनस्येति ॥ प्रतिवाद्युक्ताऽगमस्य वादिकृतार्थान्तरेणेत्यर्थः । शङ्कते ॥ वाद्यागमस्येति ॥ युक्त्यनुसरणमिति ॥ प्रतिवाद्यागमार्थविनिर्णय इति योज्यम् ॥ अनेनेति ॥ वादिप्राबल्यन्यायेनेत्यर्थः ।

(वे. टि.) ॥ आगमो हीति ॥ आगमरूपं अनुप्रमाणं इत्यर्थः । श्रुतत्वाऽदिवत् उपपत्त्यनुसन्धानस्यापि अङ्गत्वं आवश्यकं इति सूचयितुं श्रुत इत्यादिकं उक्तं इति ज्ञातव्यम् ॥ प्रमित्यव्यभिचारादिति ॥ अनुप्रमाणशरीरान्तर्गतसाधनत्वस्य अविलम्बेन प्रमोत्पादकत्वरूपस्य अन्यत्र उक्तत्वात् इति भावः । ननु आगमार्थेन सम्बन्धाभावात् कथं परस्य इति षष्ठी इत्यत आह ॥ परस्येत्येतदिति ॥ नन्वेवं सापेक्षस्य आगमशब्दस्य कथं अर्थशब्देन समासः? इत्यत उक्तं ॥ सामर्थ्यादिति ॥ 'देवदत्तस्य गुरुकुलम्' इतिवत् नित्यसापेक्षत्वेन सामर्थ्यानपगमात् समासोपपत्तिः इति भावः । सामर्थ्यात् योग्यताबलात् इति वा अर्थः ॥ सङ्गतैः इति बहुवचनं सखिप्रभृत्यनेककर्तृकवादविषयं जातिविषयं वा ज्ञेयम् ॥ निर्णीत इति निमित्तसप्तम्युक्तं साहित्ये हेतुं प्रपञ्चयितुं पृच्छति ॥ कुत एतदिति ॥ ननु वादिना स्वपक्षस्य साधितत्वेऽपि प्रतिवादिना परपक्षप्रतिक्षेपस्य करणात् कथं सङ्गतत्वं ? इत्यत आह ॥ तत एवेति ॥ ननु तथाऽपि प्रतिवादिप्रमाणे प्रतिपक्षसाधके सति कथं वादिना स्वपक्षः सुदृढतरं साधितः? इत्यत आह ॥ प्रतिपक्षसाधनस्येति ॥ समर्थनत एव चेति ॥ तत इत्येतत् सावधारणं इति भावः ।

ननु भवतु यत्र ब्रह्मसगुणत्वाऽदिरूपं तत्वं वादिनः पक्षः तत्र अयं वादप्रवृत्तिप्रकारः । यत्र तु उक्तरूपं तत्वं प्रतिवादिन एव पक्षः । तत्र कथं? उक्तरीत्या वाद्यागमार्थनिर्णयासम्भवात् इत्यत आह ॥ अनेनैव न्यायेनेति ॥ प्रतिवादिना पृष्टेन वादिना स्वाभिमते ब्रह्मनिर्गुणत्वाऽद्यर्थे आगमे अभिहिते, प्रतिवादिना च

(वे. टि.) तस्य अन्यार्थतावर्णनपूर्वकं स्वपक्षे आगमे अभिहिते, पुनः वादिना स्वाऽगमस्य परोक्तान्यार्थतानिरासपूर्वकं प्रतिवाद्यागमस्य अन्याऽर्थता वर्णनीया। तत्र यदि प्रतिवादी वाद्यागमस्य स्वोक्ताऽर्थे उपक्रमाद्यानुगुण्यं वाद्यभिमतार्थे च तद्वैगुण्यं प्रदर्श्य स्वप्रयुक्ताऽगमस्य स्वोक्तार्थे उपक्रमाद्यानुगुण्यं परोक्तार्थे च तद्वैगुण्यं प्रदर्शयति, तदा प्रतिवादिपक्षः प्रबलः, प्रतिवादिना स्वपक्षस्य सुदृढतरं साधितत्वात् तत एव वादिनः परपक्षप्रतिक्षेपासामर्थ्यात् वाद्युक्तप्रमाणस्य च अन्यार्थताकथनेन प्रामाण्यसन्देहात् इति प्रतिवादिपक्षप्राबल्यं व्युत्पादनीयं इत्यर्थः।

### केवलस्य साक्षिणः प्रत्यक्षस्य वा विषये तयोरेव प्रमाणतया वक्तव्यत्वम्

(टी.) ननु यदि परश्चक्षुराद्येकप्रमाणके साक्ष्येकविषये वा अर्थे प्रमाणं पृच्छेत् तदा परेण किं तूष्णीमासितव्यं? प्रत्यक्षादिकं वा वक्तव्यं? आद्ये साध्यासिद्धिः। द्वितीये तु आगम एव वक्तव्यः इति नियमभङ्गः। न च प्रत्यक्षसिद्धेऽर्थे विप्रतिपत्तिरेव न सम्भवति तत्प्रामाण्यासम्प्रतिपत्त्यभिप्रायेण तदुपपत्तेरिति। तत्राह

> प्रत्यक्षसिद्धेष्वर्थेषु प्रश्ने मामक्षजं वदेत् ॥ १४ ॥
> ज्ञानं वा ज्ञानसिद्धेषु................ ।

प्रत्यक्षसिद्धेषु चक्षुराद्येकविषयेषु। प्रश्ने प्रमाणस्येति शेषः। मां प्रमाणं। ज्ञानं साक्षिणं।

तर्ह्यागमनियमभङ्ग इति चेन्न। 'आगम एव' इति नियमस्य अनुमाननिरासपरत्वेन प्रत्यक्षानिरासादिति भावेनाह

> ....................नानुमां प्रथमं वदेत् ।

### प्रत्यक्षागमविषये अनुमानस्य प्रथममप्रयोक्तव्यत्वम्

नन्वेतदपि नास्ति 'उपपत्त्यवकाशोऽत्र' इत्युक्तत्वात् इत्यत उक्तं ॥ प्रथममिति ॥ अङ्गतया आनन्तरिकप्रयोगनिषेधोऽनुमानस्य न नियमफलत्वेनाभिप्रेयत इति। ननु केवलानुमानविषये कथं? अनुमानं वक्तव्यम्। न चोक्तविरोधः। यत्रागमः प्रत्यक्षं वा सम्भवति तत्र तद्धानेन प्रथममनुमानं न वक्तव्यमित्यस्यार्थस्य नियमफलतया विवक्षितत्वेन अनुमानैकगम्ये तदुपन्यासस्य अनिराकरणात्। तदिदमुक्तं नानुमां प्रथमं वदेत् इति।

(टी.) ननु यदि ' नदीतीरे पञ्च फलानि सन्ति' इत्यादिना लौकिकवाक्येन अवगतेऽर्थे परः प्रमाणं पृच्छेत् , तदा किं वक्तव्यं ? न तावत्तद्वाक्यं वक्तुं युक्तं, ऋगादिषु अपरिगणितत्वेन अनागमत्वात् । प्रमाणान्तरं तु नास्तीति चेत् , तत् किं वाक्यमुभयोः प्रमाणतया सम्मतं ? उत असम्मत ? असम्मतावपि शक्यप्रामाण्योपपादनं ? अन्यथा वा ? अन्यथेति पक्षे तूष्णीमासितव्यम् । उपायाभावात् । प्रथमद्वितीययोस्तदेव वक्तव्यं प्रामाण्यं चोपपादनीयम् ।

ननु तत् उक्तेषु अपरिगणितत्वात् न आगम इत्युक्तं इत्यत आह

परतुष्टिकरं वाक्यं वदेतां यदि वादिनौ ॥ १५ ॥
स एवात्रागमो ज्ञेयः................ ।

वदत इति वादिनौ वादिप्रतिवादिनाविति यावत् । यदि प्रामाण्यसम्मत्या उपपादनेन वा परस्य वादिनः प्रतिवादिनो वा तुष्टिकरं मनस्समाधानकरं लौकिकं वाक्यं वदेतां, तर्हि अत्र तदेकप्रमाणकेऽर्थे स एवागमो ज्ञेयः । तत्र तद्वाक्यमागमत्वेनाङ्गीक्रियत इति यावत् ।

कथं ? इत्यत आह

........................परतुष्टिर्हि तत्फलं ।

ऋगाद्यागमो वक्तव्य इत्यभ्युपगमस्यापि परतुष्टिरेव हि प्रयोजनं । तत्प्रामाण्यस्य सम्मतत्वात् । सा चेत् परतुष्टिः प्रामाण्यसम्प्रतिपत्त्या तदुपपादनेन वा यदि लौकिकवाक्येऽपि स्यात् , कथं तस्य नागमत्वं ? कथं च न वक्तव्यत्वं ? इति ।

वादे तत्वनिर्णयपर्यन्तं बहूनामपि प्रतिवादित्वम्

नन्वेवंविधस्य वादस्य किं अवसानं ? तत्राह

एवं निर्णयपर्यन्तं वादे सुबहवोऽपि हि ॥ १६ ॥
घटेयुः........................................... ।

हिशब्दो वादस्य तत्वनिर्णयार्थत्वं हेतुं द्योतयति । एवं प्रमाणतर्काभिमतैरेव स्वपक्षसाधनोपालम्भाभ्यां वादे निर्णयपर्यन्तं तत्वनिर्णयाय प्रयतेरन् । न तु वादिप्रतिवादिनोरन्यतरपरा-

(टी.) जयमात्रेण वादावसानं। तत्वनिर्णयार्थत्वाद्वादस्य। एकपराजयमात्रेण कथानिवृत्तौ पुनस्तस्यैव साधनान्तरादिस्फुरणे सन्देहावस्कन्दनात्।

यदि साधनान्तरादिस्फुरणेन पुनर्जायमानः पराजितस्यापि संशयो जयिना वारणीयः तर्हि पुरुषान्तरस्य तत्रैव तत्स्फुरणे पुनः सन्देहप्राप्तौ तन्निवारणमपि करणीयं स्यात् समानत्वात्। तथा च एक एवं वादी प्रतिवादी चेति न स्यादिति चेत्? सत्यं, इत्याह सुबहवोऽपि इति।

एवं चेत् कथैक्यं किन्निबन्धनं? इति चेत् फलैक्यात् इत्यवेहि

वादपर्यवसानाभावशङ्कानिरासः

तर्हि वादस्य अपर्यवसानं स्यात्?इत्यत आह

.....................चिरकाल च.................।

चशब्दोऽवधारणे। साधनदूषणयोः परिमितत्वेन पुरुषान्तरप्राप्त्यनियमाच्च सर्वशङ्कोद्धारेऽपि विलम्ब एव स्यात्, न तु अपर्यवसानमिति।

(रा. टि.) ॥ 'न च प्रत्यक्षसिद्धेऽर्थे' इत्यादिशङ्कोत्तरमाह ॥ तत्प्रामाण्येत्यादि ॥ इत्युक्तत्वादिति ॥ आगमार्थनिर्णये उपपत्तीनामस्त्यवकाशः' इत्युक्तत्वादित्यर्थः ॥ नियमफलत्वेनेति ॥ पृष्टेनाऽऽगम एवाऽऽदौ वक्तव्यः इति नियमफलत्वेनेत्यर्थः ॥ तदिदमुक्तमिति ॥ प्रत्यक्षमागमो वा यत्र सम्भवति तत्र तद्धानेन प्रथममनुमानं न वदेत् इति तदर्थं इति भावः। शक्यप्रामाण्योपपादनमिति बहुव्रीहिः। तत् वाक्यमित्यर्थः। उक्तेषु ऋगादिष्वित्यर्थः। वादिशब्दोऽत्र न रूढः। अपि तु यौगिक इत्याह [1]॥ वदत इति ॥ द्विवचनान्तेन वक्तृत्वयोगेन द्वयोः अत्र ग्रहणमित्यर्थः। यदि इति श्रवणात् आह तर्हीति ॥ अत्र इत्यनुवादः तदेकेत्यादि व्याख्या ॥ तदुपपादनेन वेति ॥ प्रामाण्यासम्मतौ तदुपपादनेन वेत्यर्थः। एवं इत्यनुवादः प्रमाणतर्केत्यादि व्याख्या। द्वयोः वास्तवप्रमाणतर्कासम्भवात् अभिमतैः इत्युक्तम्। सापेक्षितशेषमाह ॥ तत्वनिर्णयायेति ॥ घटेयुः इत्यस्यार्थः प्रयतेरन् इति ॥ तस्यैवेति ॥ पराजितस्य अभिमतार्थ एव साधनान्तरस्फुरण इत्यर्थः ॥ समानत्वादिति ॥ प्रतिवादिसाधननिमित्तसंशयस्येव पुरुषान्तरसाधननिमित्तसन्देहस्यापि तत्वनिर्णयप्रतिबन्धकत्वाविशेषेण तन्निरासस्य साम्यादित्यर्थः ॥ तथा चेति ॥ पुरुषान्तरनिमित्तसन्देहस्यापि वारणीयत्व इत्यर्थः। एक एव इत्येतत् उभयत्राप्यन्वेति ॥ एवं चेदिति ॥ बहुकर्तृकत्व इत्यर्थः ॥ इत्यवेहि इति ॥

[1] ॥ वदत इतीति ॥ इति पाठेन भाव्यमिति भाति.

(रा. टि.) एकारपाठः न तु ऐकारपाठः। अव इहि इति स्थिते 'आद् गुणः' इति भाव्यत्वात्, आङ्पूर्वकत्वे ज्ञानार्थलाभाच्च 'एङि पररूपम्' इति पररूपेण भाव्यत्वाच्च इति। अवधारणे इत्युक्तं। तदर्थं वदन् व्यावर्त्यं आह॥ विलम्ब एवेत्यादि॥ तत्र हेतुद्वयं॥ साधनेत्यादि॥

(वे. टि.) विप्रतिपत्तिरेव न सम्भवतीति॥ तथा च संशमूलकः प्रश्नो न युक्त इति भावः॥ तत्प्रामाण्यासम्प्रतिपत्त्यभिप्रायेणेति॥ नन्विति स्वारसिकसंशयायोगेऽपि प्रामाण्यसंशयाऽहितसंशयसम्भवात् तन्मूलः प्रश्नो युज्यत इति भावः। [1]प्रत्यक्षासिद्धोऽप्यर्थो यत्राऽऽगमसिद्धः तत्र आगम एव कल्प्यः, अतः कथं एतत्? इत्यत आह॥ चक्षुराद्येकेति॥ नियमफलत्वेनेति॥ 'आगम एव वक्तव्यः' इति एवशब्दव्यावर्त्यत्वेन इत्यर्थः। तथा च प्रधानतया अनुमानस्य प्रथमप्रयोगनिषेध एव अवधारणफलं इति भावः॥ तदिदमुक्तमिति॥ प्रथमं इति वदता अनुमानविषये आगमाऽदिप्रमाणान्तरसद्भावः सूचित इत्यर्थः। अन्यथा प्रथममित्यस्य प्रयोजनाभावात् इति ज्ञातव्यम्॥ प्रथमद्वितीययोरिति॥ प्रथमपक्षे तदेव वक्तव्यं, द्वितीयपक्षे तदेव उक्त्वा तत्प्रामाण्यं उपपादनीयं इत्यर्थः॥ ननु वादिन एकत्वात् द्विवचनं अनुपपन्नं इत्यत आह॥ वदत इतीति॥ तत्फलं इत्यत्र तच्छब्देन अङ्गीकारपरामर्शाय आह॥ अङ्गीक्रियत इति यावदिति॥ उभयत्र वास्तवप्रमाणतर्कयोः असम्भवात आह॥ प्रमाणतर्काभिमतैरिति॥ अन्यतरपराजयेति॥ एकस्य साधनस्य दूषणस्य वा स्थितिमात्रेण भङ्गमात्रेण वा इत्यर्थः।

### अथ जल्पकथाप्रवृत्तिप्रकारः

(टी.) एवं वादप्रवृत्तिप्रकारं अभिधाय जल्पप्रवृत्तिप्रकारं सूचयति

**...............जल्पे यावत् परो जितः॥ १९॥**

तावत् घटेतां इति सम्बन्धः। अयं इह जल्पप्रवृत्तिप्रकारः, सभ्यसभापतिप्राश्निकाऽदिसंवरणपुरस्सरं कथानियमबन्धे कृते, प्राक् प्रसक्त प्राश्निकोपक्षिप्ते [2]प्रतिवादिना च पृष्टे प्रमेये प्रतिवादिपर्यनुयुक्तेन वादिना प्रमाणं अभिधातव्यम्। प्रतिवादिना च [3]अनुक्तोच्यमानग्राह्यनिग्रहाप्राप्तौ आभासबहिर्भूतग्राह्यनिग्रहालाभे च तद्वचनार्थं अवगम्य दूषयित्वा स्वपक्षे प्रमाणं अभिधानीयम्। वादिनापि [4]उक्तोच्यमानाऽभासबहिर्भूतग्राह्यनिग्रहालाभे तद्वचनार्थं अवगम्य दूषयित्वा स्वपक्षसाधनदूषणं उद्धरणीयम्। साधनदूषणे च प्रमाणाभिमतैः, तदलाभे 'नियतपराभवात् वरः पाक्षिकः'

---

[1] प्रत्यक्षासिद्धोऽप्यर्थो इति पाठेन भाव्यमिति भाति. [2] वे. प्रतिवादिना वा पृष्टे. [3] वे. उच्यमानदशाप्राह्यनिग्रहाप्राप्तौ.
[4] अनुक्तोच्यमानाऽभासबहिर्भूतग्राह्यनिग्रहालाभे इति पाठेन भाव्यमिति भाति.

(टी.)इति छलादिना च [1]क्रियते जयैकार्थत्वात् जल्पस्य। अत एव वादिप्रतिवादिनोः अन्यतरो यावत् स्वपरपक्षसाधनोपालम्भयोः अन्यतरावसरेऽपि जीयेत तावदेव उभाभ्यां प्रयतितव्यम्। न तु वाद इव परसाधनपर्यन्तमिति।

तदेवं वादजल्पयोः प्रवृत्तिप्रकारभेदात् युक्तो भेद इति।

(रा. टि.) ॥ घटेयुः इत्यस्य विपरिणामेन अन्वयं आह ॥ तावद्घटेतामिति सम्बन्ध इति ॥ प्रागिति ॥ समयबन्धात् पूर्वमित्यर्थः। उपक्षिप्ते तैः उपोद्घाटिते, प्रतिवादिना [2]वादिना वा कथं विश्वसत्यत्वाऽदि? इति पृष्टे सत्यत्वाऽदिप्रमेये, प्रतिवादिना पृष्टेन वादिना प्रमाणमभिधातव्यमित्यर्थः। ग्राह्यपदं अनुक्तेत्यत्राप्यन्वेति। आभासो हेत्वाभासो वाक्याभासो वा। अज्ञानं अननुभाषणाऽदि अनुक्तग्राह्यम्। अर्थान्तराप्राप्तकालादि उच्यमानग्राह्यम्। प्रतिज्ञाहानिन्यूनाधिक्यादि उक्तग्राह्यम्। तयोः अप्राप्तौ, हेत्वाभासेभ्यो बहिर्भूतप्रतिज्ञाहान्यादिनिग्रहालाभे चेत्यर्थः। साधनदूषणे चेति द्विवचनान्तं ॥ नियतेति ॥ नियमेन प्राप्तपराजयात् पाक्षिकः वादिनो भ्रान्तत्वपक्षे अपराभवात् पाक्षिकः वर इत्यर्थः ॥ अत एवेति ॥ जयैकार्थत्वादेवेत्यर्थः ॥ अन्यतरावसर इति ॥ साधनसमये दूषणसमये वाऽपि जीयेत इत्यर्थः। एतेन 'यावत् परो जितः तावदेव घटेताम्' इत्येतत् विवृतं भवति।

(वे. टि.) प्राश्निकादीत्यत्र आदिपदेन लिपिकरणाय लेखकपरिग्रहः ॥ प्राक् प्रसक्त इति ॥ प्राश्निकादिवरणात् प्राक् 'मया प्रपञ्चमिथ्यात्वं साध्यत' इति वादिवाक्यात् प्रसक्त इत्यर्थः। प्रतिवादिना वेति ॥ भवदभिमतं प्रपञ्चमिथ्यात्वं कथं उपपदनीयं? इति प्रतिवादिना पृष्टे इत्यर्थः ॥ प्रतिवादिपर्यनुयुक्तेनेति ॥ 'इतः परं त्वया वक्तव्यं' इति प्रतिवादिना पर्यनुयुक्तेनेत्यर्थः। प्रतिवादिनः अनवधानशङ्कापरिहाराय इयं प्रतिवादिपर्यनुयोगापेक्षा इति ज्ञेयम्।

॥ प्रमाणमभिधातव्यमिति ॥ ननु अत्र प्रमाणाभिधानानन्तरं 'नायं आभासः तल्लक्षणरहितत्वात्' इति सामान्यतो वा 'नायं आभासः असिद्ध्यादितत्साधकानुपलम्भात्' इति विशेषतो वा कण्टकोद्धारः कर्तव्यः। तं अनुक्त्वा कथं प्रतिवादिकर्तव्यं उच्यत? इति चेत् उच्यते, आभासशङ्कापरिहारार्थो हि कण्टकोद्धारः प्रयोजनान्तराभावात्। आभासशङ्का च पक्षधर्मत्वाऽदिरूपप्रदर्शकैः अवयवैरेव अपास्ता। न हि पञ्चरूपोपपन्नो हेतुः आभास इति शङ्का भवितुं अर्हति व्याहतत्वात्। किञ्च दूषणोपक्रमप्रतियोगिनि अनेककर्तृके कथानाम्नि विचारे, परेण दूषणे अभिहित एव तदुद्धारः कर्तव्यः। न स्वयमेव आशङ्क्य परिहर्तव्यः अप्राप्तकालत्वाऽदिप्रसङ्गात्। अतः 'प्रमाणाऽभिधानाऽनन्तरं कण्टकोद्धारः कर्तव्यः' इत्येवं वदतां असुज्ञत्वं प्रदर्शयितुं अत्र तदप्रदर्शनं इति। नन्वेवं

[1] क्रियेते इति पाठेन भाव्यमिति भाति [2] अत्र वादिना इति अधिकं असम्बद्धं लेखकदोषप्राप्तं चेति प्रतिभाति.

(वे. टि.) कण्टकोद्धारस्य अकर्तव्यत्वे **प्रमाणलक्षणटीकायां 'वादिना प्रमाणमभिधाय आभासोद्धारः कर्तव्यः** इति कथं उक्तं ? इति चेत् तस्य परमतानुवादत्वात् ॥ **उच्यमानेति** ॥ इह उद्भावनकालभेदेन त्रिविधानि निग्रहस्थानानि । अनुक्तग्राह्याणि उच्यमानग्राह्याणि उक्तग्राह्याणि च इति । तत्र अननुभाषणं अज्ञानं अप्रतिभा इति त्रीणि अनुक्तग्राह्याणि अवचनरूपत्वात् । अर्थान्तरं निरर्थकं अपार्थकं अप्राप्तकालं इति चत्वारि उच्यमान ग्राह्याणि अभिधानदशायामेव निर्णेतुं शक्यत्वात् । शेषाणि उक्तग्राह्याणि इति विवेकः । यद्यपि न्यूनाधिकपुनरुक्तापसिद्धान्तानां उच्यमानदशायामेव निर्णयः सम्भवति, तथाऽपि न्यूने पूरणस्य अधिके विकल्पस्य पुनरुक्ते प्रयोजनवत्त्वस्य, अपसिद्धान्ते फलाऽदिनिरूपणस्य च निवर्तकप्रकारस्य शङ्कया प्रयोगोपसंहारप्रतीक्षणस्य आवश्यकत्वेन उक्तग्राह्यपक्षनिक्षेपः । एवं च उच्यमानदशायां सम्भावितं निग्रहस्थानचतुष्कं विचार्य तदलाभे सति इत्यर्थः । तल्लाभे तु तदुद्भावनेनैव कथापरिसमाप्तिः इति भावः । एवं उत्तरत्रापि द्रष्टव्यम् ।

॥ **आभासबहिरिति** ॥ हेत्वाभासव्यतिरिक्तेत्यर्थः । तथा च यदि उक्तग्राह्यं न्यूनाऽदिकं वा प्रतिज्ञाविरोधाऽदिकं वा प्राप्तं तदा हेत्वाभासान् विहाय तदेव उद्भाव्यं । तस्य हेत्वाभासापेक्षया साक्षात् पुरुषवचनदोषतया अत्यन्तापकर्षोन्नायकत्वात्, तदलाभे तु हेत्वाभासावसर इति भावः । अत एव दूषयित्वा इत्यत्र 'हेत्वाभासेन' इति शेषः । तद्वचनार्थं अवगम्य इत्यस्य अज्ञानाऽपत्तिभयेन वादिवचनार्थं सावधानतया अवगम्य इत्यर्थः । अत्र अवगम्य इत्यनन्तरं 'तत्साधनमनूद्य' इत्यपि ग्राह्यम् । अन्यथा अननुभाषणप्रसङ्गात् । अत एव प्रमाणलक्षणटीकायां **वादिसाधनमनूद्य** इत्युक्तम् ॥ **वादिनापीति** ॥ अनुक्तग्राह्यत्रिकस्य द्वितीयाऽदिकक्ष्यायामेव सम्भावितस्य प्रथमकक्ष्यायां असम्भवात् पूर्वं तदलाभ इति नोक्तम् । शेषं पूर्ववत् ।

॥ **दूषयित्वेत्यादि** ॥ न च प्रथमोपस्थितत्वात् स्वपक्षानुरागेण तद्दोषासहिष्णुतया तदुद्धारस्य अभ्यर्हितत्वाच्च प्रथमं स्वपक्षदोषोद्धार एव तृतीयकक्ष्यास्थितेन वादिना कर्तव्यो न परपक्षदूषणं इति शङ्कनीयम् । प्रथमोपन्यस्तस्वपक्षदोषोपस्थितेः परपक्षसाधनोपन्यासेन व्यवहितत्वात्, अव्यवधानेन उपस्थितस्य स्वपक्षपरिपन्थितया विद्वेषविषयस्य प्रतिसाधनस्यैव प्रथमं दूष्यत्वात् इति । स्वपक्षरक्षणस्यापि अभ्यर्हितस्य अनेन प्राप्त्या स्वपक्षरक्षणाऽनुकूल्यस्यापि सत्त्वात् । अन्यथा द्वितीयकक्ष्यास्थेन प्रतिवादिनाऽपि परपक्षं अदूषयित्वा आदौ स्वपक्षानुरागेण स्वपक्षसाधनं कर्तव्यं स्यात् । अत एव 'कर्तव्यतया न पौर्वापर्यनियमः । किन्तु ? स्फुरणमेव नियामकम्' इति निरस्तम् । तथा सति कथाव्यवहारस्य अव्यवस्थाप्रसङ्गात् । अत एव भगवान् आचार्यः ।

तस्याऽप्यन्यार्थता साध्या वादिना स्वार्थसिद्धये ।
अन्यार्थता निराकार्या स्वाऽगमस्य विनिर्णयात् ।

इति तदीयकक्ष्यास्थितवादिकर्तव्यौ परपक्षसाधनदूषणस्वपक्षसाधनदूषणोद्धारौ क्रमेण आह ।

### कथैक्यवादिमतनिरासः

(टी.) एवं असङ्करेण कथामार्गत्रयं प्रतिपादितवता कथैक्याऽदिमतानि अपहस्तितानि विज्ञातव्यानि। अधिकार्यङ्गप्रवृत्तिप्रकारफलभेदे सति किन्निबन्धनं कथैक्यं स्यात्।

### जल्पकथायाः पार्थक्यम्

जल्पस्य न तावत् स्वरूपमेव हातुं शक्यम्, वादादिसमानयोगक्षेमत्वात्। अन्यतरान्तर्भावस्तु भेदोपपादनेन परास्तः।

### वादवितण्डायाः पार्थक्यनिरासः

वादवितण्डा च यदि तत्वनिर्णयार्था स्वपरपक्षसाधनोपालम्भवती तदा वाद एव। विजिगीषावतोः इति चेत् तर्हि तत्वनिर्णयार्थताव्याघातः। अन्यतरमात्रपर्यवसानेऽपि एवमेव।

### जल्पवितण्डायाः पार्थक्यनिरासः

विजयार्थत्वे, जल्पवितण्डायाः अन्यतरत्वाऽपातः। तत्वबुभुत्सावतोः इति व्याहतम्। न च तत्वनिर्णयविजयाभ्यां फलान्तरम्। नाऽपि तदर्थिव्यतिरिक्तोऽधिकारी। न च साधनोपालम्भोभयान्यतरमात्रव्यतिरिक्तप्रवृत्तिप्रकारो, यद्वशात् वादवितण्डा परा कल्पेत इति।

(रा. टि.) ॥ अधिकारीति ॥ गुरुशिष्यौ अधिकारिणौ वादे, सन्तौ अधिकारिणौ जल्पे, सदसन्तौ अधिकारिणौ वितण्डायाम् इति अधिकारिभेदः। तत्वबुभुत्सुत्वं वादे, जल्पे ख्यात्याद्यर्थित्वं, वितण्डायां परपक्षप्रतिक्षेपमात्रं अङ्गं। [1]जल्पादौ स्वपरसाधनदूषणे त्विति प्रवृत्तिप्रकारभेदः। तत्वज्ञानाऽदि विजयाऽदि फलभेदः इति ज्ञातव्यम्। ननु 'कथामार्ग एक एव' इति प्रागुक्तबौद्धमते 'वादवितण्डे द्वे एव' इति श्रीहर्षमते च जल्पादिस्वरूपमेव नास्ति, कुत्र अधिकार्यादिभेदः? इत्यत आह ॥ जल्पस्येति ॥ 'चतस्रः कथाः' इति प्रागुक्तगौडनैयायिकमतं निराह ॥ वादवितण्डा चेति ॥ अन्यतरेति । वादिप्रतिवादिनोः अन्यतरमात्रे तत्वनिर्णयार्थादेः पर्यवसानेऽपि एवमेव व्याघात एवेत्यर्थः ॥ विजयार्थत्व इति ॥ वादवितण्डाया इति योज्यम् ॥ तत्वबुभुत्सावतोः विजयार्थकथा वादवितण्डा इति भावेन आशङ्क्य निराह ॥ तत्वेति ॥ तत्वनिर्णयविजययोः अन्यफलार्था वा अधिकारभेदवती वा वादजल्पप्रवृत्तिप्रकारान्यप्रकारा वा वादवितण्डा अस्तु इत्यत आह ॥ न च तत्वेति ॥ उभयाऽन्यतरमात्रेति ॥ उभयव्यतिरिक्ता अन्यतरमात्रव्यतिरिक्तेत्यर्थः।

---

[1] अत्र ग्रन्थस्त्रुटित इति भाति.

(वे. टि.) कथैक्यवादिवाक्यनिराकरणं तावत् दर्शयति ॥ अधिकार्यङ्गेति ॥ अङ्गं सभ्याऽदिसंवरणरूपं। इदानीं 'वादवितण्डे द्वे एव' इति श्रीहर्षमतनिराकरणं दर्शयितुं किं जल्पस्य स्वरूपमेव न अङ्गीक्रियते? उत तदङ्गीकृत्य, उभयपक्षस्थापनावत्वात् वादे वा, विजिगीषुकथात्वात् वितण्डायां वा, अन्तर्भावः इत्युच्यते? इति विकल्पं मनसि निधाय आद्यं दूषयति ॥ जल्पस्येति ॥ द्वितीयं दूषयति ॥ अन्यतरेति ॥

वादवितण्डायाः पार्थक्यं वदन् प्रष्टव्यः, सा किं तत्वनिर्णयार्था? उत विजयार्था? यद्वा फलान्तरार्था? इति। आद्येऽपि सा किं वादवत् वादिप्रतिवादिनोरुभयोः स्वपरपक्षसाधनोपालम्भवती? उत वितण्डावत् प्रतिवादिनः परपक्षोपालम्भवती? इति विकल्पं मनसि विधाय आद्यं दूषयति ॥ वादवितण्डा चेति ॥ तत्वनिर्णयाऽर्थतेति ॥ तत्वनिर्णयोद्देशिताऽव्याघात इत्यर्थः। तेन सदुपायजल्पस्य तत्वनिर्णयहेतुत्वेऽपि न व्याघात इति ध्येयम्। विजिगीषावत्त्वे छलाऽदेः अपि प्रसक्त्या तत्वनिर्णयोद्देश्यता व्याहन्येत इति भावः। द्वितीयं दूषयति ॥ अन्यतरमात्रेति ॥ एवमेवेति ॥ तत्वनिर्णयार्थताऽव्याघात एव इत्यर्थः। प्रतिवादिना स्वपक्षे प्रमाणानभिधाने वादिपक्षप्रतिक्षेपमात्रेण तत्वनिर्णयासम्भवात् इति भावः। द्वितीयेऽपि किं उभयोः स्वपरपक्षसाधनोपालम्भवती? उत अन्यतरमात्रवती? आद्ये जल्प एव स्यात्। द्वितीये वितण्डैव स्यात् इत्याह विजयार्थत्व इति ॥ अनेन जल्पवितण्डाया अपि पार्थक्यं निरस्तं इति ज्ञातव्यम्। ननु विजयार्थत्वेऽपि तत्वबुभुत्सावदधिकारिकत्वात् न जल्पवितण्डयोरन्यतरत्वाऽपत्तिः इत्यत आह ॥ तत्वबुभुत्सेति ॥ तृतीयं दूषयति ॥ न च तत्वनिर्णयविजयाभ्यामिति ॥ एवं विकल्पेन दूषणस्य अत्र अभिप्रेतत्वात्, कथाचातुर्विध्यवादिना वादवितण्डायाः तत्वनिर्णयमात्रफलकत्वस्य जल्पवितण्डायाः जयमात्रफलकत्वस्य च उक्तत्वेन फलान्तराऽदेरनुक्तत्वात् अनुक्तोपालम्भोऽयं, इति शङ्का न इति ध्येयम् ॥ फलान्तरं इत्यादौ कथायाः इति शेषः ॥ यद्वशात् वादवितण्डा इत्यत्र जल्पवितण्डाऽपि ग्राह्या।

## वादे पराजयहेतुः

(टी.) [1]आत्यन्तिकपराजयपर्यन्तो वाद इत्युक्तम्। तत्र को वादे पराजयहेतुः? इत्यपेक्षायां आह

### तत्वनिर्णयवैलोम्यं वादे साक्षात् पराजयः ।

पराजयः पराजयहेतुः। स द्विविधो मुख्यामुख्यभेदात्। तत्र वादिप्रतिवादिभ्यां अभिलषितस्य तत्वनिर्णयस्य यावत् वैलोम्यं विरुद्धं वचनं आचरणं वा तत्सर्वं वादे मुख्यः पराजयहेतुः, कथाऽवसानकारणत्वात्। इतरोऽमुख्यः, कथाऽवसानाहेतुत्वात्। न च तत्वनिर्णयवैलोम्यस्य कथाऽवसितिहेतुत्वेन साक्षात् पराजयहेतुत्वव्याख्यायां

[1] रा. आत्यन्तिकजयपर्यन्तो.

उद्भावनीयमेव स्यात् न कथाऽवसितिर्भवेत् ।

(टी.) इत्यादिविरोधः । 'सकृत् एकस्य तत्वनिर्णयवैलोम्याऽपत्तिमात्रेण न कथाऽवसानं, यथा जल्पे सकृत् निग्रहप्राप्तौ' इत्येतदर्थपरत्वात् तस्य । अत्रापि तत्वनिर्णयवैलोम्याऽपत्तौ पुनः तस्य अन्यस्य वा साधनान्तराद्यप्रतीतावेव कथापर्यवसानस्य विवक्षितत्वात् । अन्यथा वादापर्यवसानं स्यात् । न हि तत्वनिर्णयस्य तत्वनिर्णयवैलोम्यापत्तितोऽन्यत् भृङ्गमस्ति । 'साक्षात्' इति च अत्र व्यर्थं स्यात् । विरोधाऽदिषु च तत्वनिर्णयवैलोम्येतरविवेकं तु करिष्यामः ।

(रा. टि.) एवं निर्णयपर्यन्तं वादे, इत्यादित्रिपाद्याः फलितार्थं अनुवदति ॥ आत्यन्तिकजयपर्यन्त इति ॥ विरुद्धं वचनमिति ॥ हेत्वाभासछलजातिरूपं वचनमित्यर्थः । विरुद्धाऽचरणं नाम कथाचालनप्रतिबन्धकोपद्रवकरणम् ॥ इतर इति ॥ वक्ष्यमाणप्रतिज्ञाविरोधादिः इत्यर्थः ॥ इत्यादिविरोध इति ॥ भक्तिपादीयानुव्याख्यानविरोध इत्यर्थः । यथा जल्पे इति व्यतिरेकदृष्टान्तः । कथाऽवसानं इत्यनुषङ्गः ॥ अत्रापीति ॥ 'तत्वनिर्णयवैलोम्यम्' इति ग्रन्थेऽपीत्यर्थः ॥ अन्यथेति ॥ तत्वनिर्णयवैलोम्याऽपत्तेः उद्भावनीयमात्रत्वे, कथाऽवसित्यकारणत्वे इति वाऽर्थः । अत्र 'तत्वनिर्णयपर्यन्तं वादे' इति प्रागुक्तेः कथं तद्वैलोम्याऽपत्तिमात्रेण पर्यवसानम्? इत्यत आह ॥ न हि तत्वेति ॥ वादिप्रतिवादिनोः अन्यतरस्य प्रमाणतर्काभ्यां स्वाभिमतार्थनिर्णये सति, अन्यतरस्य अन्यस्य वा कस्यापि साधनदूषणयोः अभावे सत्येव वैलोम्याऽचरणं इति तेनैव तत्वनिर्णयो ज्ञायते, न हि इतोऽन्यत् तस्य भृङ्गं ज्ञापकं अस्ति इत्यर्थः ॥ साक्षादिति चेति ॥ अन्यथेत्यनुवर्तते । वैलोम्याऽपत्तिमात्रेण [1]पर्यवसाने साक्षात् मुख्यः पराजयहेतुः इत्युक्तिः न स्यात् । कथापर्यवसायकत्वात् अन्यस्य मुख्यत्वस्य अत्र अभावात् इति भावः । ननु विरोधादीनां अमुख्यं पराजयहेतुत्वं, मुख्यमेवाऽस्य पराजयहेतुत्वं कथं? इत्यत आह ॥ विरोधाऽदिषु चेति ॥ 'किञ्चित् कथाऽवसानिकम्' इत्यादिना इति भावः ।

(वे टि.) तत्वनिर्णयवैलोम्यस्य पराजयरूपत्वाभावात् आह ॥ पराजयहेतुरिति ॥ पराजीयतेऽनेन इति व्युत्पत्तेः इति भावः ॥ विरुद्धं वचनमिति ॥ परोदीरितहेत्वाभासाऽत्मकप्रतिज्ञाविरोधाऽदिवचनं इत्यर्थः ॥ आचरणं वेति ॥ क्रिया न्यायो वा इत्यर्थः । ततश्च निरनुयोज्यानुयोगप्रभेदरूपछलजात्यात्मकस्वक्रियास्वन्यायविरोधौ तत्वनिर्णयवैलोम्याऽचरणरूपत्वेन विवक्षितौ इति द्रष्टव्यम् ॥ कथाऽवसानेति ॥ हेत्वाभासानां निरनुयोज्यानुयोगस्य च वादकथाऽवसानकारणत्वं अग्रे स्वयमेव विभावयिष्यति । अत्र अनुव्याख्यानविरोधं आशङ्क्य परिहरति ॥ न च तत्वनिर्णयेति ॥ सकृदेकस्येति ॥ सकृत् तत्वनिर्णयवैलोम्याऽपत्तिमात्रेण एकस्य तत्वनिर्णयवैलोम्याऽपत्तिमात्रेण च इत्यर्थः । ननु वादस्य तत्वनिर्णयवैलोम्याऽपत्त्या पर्यवसानाभावेऽपि, तत्वनिर्णयेनैव पर्यवसानं

---

[1] अपर्यवसाने इति पाठेन भाव्यमिति भाति.

(वे. टि.) स्यात् इत्यत आह ॥ न हित त्वनिर्णयस्येति ॥ वादिप्रतिवादिनोरन्यतरस्य तत्वनिर्णयवैलोम्याऽपत्तिरेव [1]तत्वनिर्णय इत्यर्थः ॥ ननु इदं अनुव्याख्यानानुसारेण वादे तत्वनिर्णयवैलोम्यं पराजयहेतुतया उद्भावनीयमेव, न कथाऽवसितिकारणं इति कुतो न व्याख्यायते ? इत्यत आह ॥ साक्षादिति चात्रेति ॥ ननु विरोधाऽदिषु षट्सु निग्रहस्थानेषु कस्य साक्षात् तत्वनिर्णयवैलोम्यरूपत्वं ? कस्य च न ? इति अपेक्षायां आह ॥ विरोधाऽदिष्विति ॥ करिष्याम इति ॥ 'वादे चतुर्धा निग्रहस्थानगतिः' इत्यादिनेति शेषः ।

### वादे पराजितस्य कृत्यम्

(टी॰ तत्वनिर्णयवैलोम्यं प्राप्तवतः किं कार्यं ? इत्यपेक्षायां आह

संवादे श्लाघ्यतैव स्यात् गुरुत्वमितरस्य च ॥ १८ ॥
तत्वनिर्णयवैलोम्ये............................... ।

वादिनः प्रतिवादिनो वा तत्वनिर्णयवैलोम्ये प्राप्ते तत्र च तेन संवादे कृते तस्य विमलबोद्धृतया स्तुत्यतैव स्यात् । न तु पराजितत्वेनापमानः । इतरस्य च तत्वं निर्णीतवतो गुरुत्वं स्यात् ।

तत्वनिर्णयवैलोम्यं प्राप्तोऽपि यदि मतिमान्द्याऽदिना तत्र न संवादं करोति तस्य कर्तव्यं आह

...........................निन्द्यो दण्ड्योऽथ वा भवेत् ।

अथ पक्षान्तरे । असंवादे, निन्द्यो भवेत् दोषाधिक्ये दण्ड्यो भवेत् इति ।

(रा॰ टि.) ॥ तत्र चेति ॥ तत्र तत्वनिर्णयवैलोम्यविषये । तेन तत्वनिर्णयं प्राप्तेन ।

(वे. टि.) [2]तत्वनिर्णयवैलोम्यं इत्यस्य इतरस्य इत्यनेन अन्वयभ्रान्तिं निवारयितुं आह ॥ वादिना इत्यादि ॥ पक्षान्तरमेव आह ॥ दोषाऽधिक्य इति ॥ अनेन दोषतारतम्येन निन्दादण्डयोः व्यवस्थितविभाषायां वाशब्द इत्युक्तं भवति ।

### जल्पे पराजयकारणम्

(टी.) जल्पे च 'यावत् परो जितः' इत्युक्तं । तत्र जल्पे कः पराजयहेतुः? इत्यपेक्षायां आह

विरोधाऽसङ्गतिन्यूनतूष्णीम्भावाऽदिकैर्जितः ॥ १९ ॥
भवेज्जल्पे.........................................

[1] तत्वनिर्णयलिङ्गमित्यर्थः इति पाठेन भाव्यमिति भाति.    [2] तत्वनिर्णयवैलोम्ये इति पाठेन भाव्यमिति भाति.

(टी.) आदिपदेन संवादाऽधिक्ययोः ग्रहणम् ।

वितण्डायां पराजयकारणम्

प्रसङ्गात् वितण्डायां निग्रहादिकं अतिदिशति

..................वितण्डायां न्यायो जल्पवदीरितः ।

वितण्डायां च इत्येतवता पूर्णे यत् अधिकमुपादत्ते तेन जल्पे यावत् परो जितः इत्युक्तप्रवृत्तिप्रकारपर्यवसानयोरपि अतिदेशो लभ्यते । अन्यथा प्रकृतत्वात् निग्रहस्थानमात्राऽतिदेशो विज्ञायेत । ततश्च स्वपक्षस्थापनां विना जल्पवदेव वितण्डा इत्युक्तं भवति ।

जल्पवितण्डयोः पराजितस्य कृत्यम्

विरोधाऽदि प्राप्तवतो जल्पवितण्डयोः कि कार्यं ? इत्यपेक्षायां आह

संवादे दण्ड्यता न स्यात् वितण्डाजल्पयोरपि ॥ २० ॥
पराजितत्वमात्रं स्यात्........................ ।

विरोधाऽदिषु प्राप्तनिग्रहस्थानविषये वितण्डायां जल्पे च यदि वादी प्रतिवादी वा संवादं कुरुते तदा नासौ सभापतिना दण्ड्यः । किन्तु ? खण्डिताहङ्कारतया अपमानविषय एव स्यात् ।

जल्पवितण्डयोः प्राप्तनिग्रहस्थानानङ्गीकर्तुः कर्तव्यम्

यदि आग्रहवशात् प्राप्तेऽपि दोषे न संवादं करोति तत्राह

..........................निन्द्यो दण्ड्योऽपि वाऽन्यथा ।

वाशब्दो दोषतारतम्येन निन्दादण्डयोः व्यवस्थितविभाषायां वर्तते । अपिशब्दो दण्डेऽपि निन्दासमुच्चये ।

(रा. टि.) निग्रहादिकमिति ॥ प्रवृत्तिप्रकार आदिपदार्थः ॥ संवादं कुरुत इति ॥ 'भवत्ययं दोषः' इति अनुमतिं कुरुत इत्यर्थः ॥ खण्डिताहङ्कारतयेति ॥ स्वपरपक्षस्थापनदूषणसङ्कल्पभ्रंशवत्तया इत्यर्थः ।

(वे. टि.) ॥ निग्रहस्थानमात्रातिदेश इत्यत्र अतिदेशशब्देन अनुकर्षणं विवक्षितं इति ज्ञातव्यम् । ततोऽपि दोषाऽधिक्ये कर्तव्यं अपिशब्दसूचितं ॥ दण्डेपीति ॥

(टी.) वादिप्रतिवादिनोः निग्रहस्थानचिन्ताप्रसङ्गात् प्राश्निकापराधं अपोहमुखेन सूचयति

अनुवादाऽदिराहित्य नैव जल्पेऽपि दूषणम् ॥ २१ ॥

एवकारो हेतुसूचनार्थः ।

एके मन्यन्ते, प्राश्निकैः वाद्युक्तस्य प्रतिवादिनं प्रति, प्रतिवाद्युक्तस्य च वादिनं प्रति अनुवादः करणीयः । अप्रतिबुद्धौ च वादिप्रतिवादिनौ बोधनीयौ । तदकरणे तेषां अपराध इति । तदेतत् जल्पे वितण्डायामपि अनुवादाऽदिराहित्यं प्राश्निकानां न दूषणम्, अनुवादाद्यभावेऽपि वादिप्रतिवादिभ्यां जल्पवितण्डयोः प्रवर्तयितुं शक्यत्वेन तस्य तदकर्मत्वात् । किं नाम ? प्रागुक्तस्वकर्माननुष्ठानमेव प्राश्निकानां अपराध इति मतान्तरनिरासाय अपोह इति ज्ञातव्यम् ।

जल्पवितण्डयोः कथातः प्रागपि निग्रहस्थानसम्भवः

वादिप्रतिवादिनोः जल्पाऽरम्भोत्तरकालीनं निग्रहस्थानं उक्तम् । कथातः प्रागपि सम्भवात् आह

विद्याहीनत्वलिङ्गेऽपि वादिनोः स्यात् पराजयः ।

सम्भावितसमानविद्ययोरेव जल्पवितण्डाऽधिकारित्वात् कथातः प्रागेव वादिप्रतिवादिनोः अन्यतरस्य प्रतियोग्यपेक्षया विद्याहीनत्वलिङ्गे पदवाक्यप्रमाणाज्ञत्वदोषे प्राप्ते पराजय एव । दूरे. जल्पाऽऽदि । एतेन 'कथाबाह्यानां अनिग्रहस्थानत्वं' इति परास्तम् ।

(रा. टि.) ॥ अपराधमपोहमुखेनेति ॥ अनुवादाप्रतिबुद्धप्रतिबोधनयोः अपराधत्वाभावमुखेन 'स्वयं वा प्राश्निकैर्वादे' इत्यत्र उक्तकर्माननुष्ठानरूपं अपराधं इत्यर्थः । 'अयं न दोषः' इत्युक्ते अन्यस्तु दोष इति लाभात् इति भावः । अप्रतिबुद्धौ गुणदोषाज्ञानिनौ । अन्यापोहेन लब्धं आह ॥ किं नामेत्यादिना ॥ प्रागुक्तेति ॥ स्वयं वा प्राश्निकैर्वादे इत्यत्र उक्तेनि वा विष्णुभक्तिर्हि इत्युक्तेति वा अर्थः । अपोहेन कस्मात् एतदुक्तं ? आह ॥ मतान्तरेति ॥ अनुवादाऽदिराहित्यस्य दोषत्ववादिमतान्तरेत्यर्थः ॥ समानविद्ययोरिति ॥

(रा. टि.) ययोरेव समं वित्तं ययोरेव समं श्रुतं ।
तयोः विवाहो वादश्च ........................ ॥

इत्युक्तेः इति भावः । वादो विवाद इत्यर्थः ॥ पदेति ॥ शब्दमीमांसातर्कशास्त्राऽज्ञत्वदोष इत्यर्थः ॥ एतेनेति ॥ 'विद्याहीनत्व' इत्यादिना कथातः प्राक्तनस्याऽपि निग्रहस्थानत्वकथनेन इत्यर्थः ॥ पद्धत्यादौ अनिग्रहस्थानत्वोक्तिः परमताभिप्राया वा विद्याहीनत्वात् अन्यनिग्रहस्थानाभिप्राया वा इति ज्ञेयम् ।

(वे. टि.) अपोहमुखेनेति ॥ व्यतिरेकमुखेन इत्यर्थः । 'अयं अस्य न दोषो भवति' इत्युक्ते 'तदतिरिक्त एव तस्य दोषः' इति प्राप्नोति इति भावः ॥ एवकारसूचितं हेतुं दर्शयति ॥ अनुवादाद्यभावेऽपीति ॥ लिङ्गेऽपि इति अपिशब्दाभिप्रायं आह ॥ कथातः प्रागपीति ॥

सर्वेषामपि निग्रहस्थानानां विरोधादिषु षट्स्वेवान्तर्भावः

(टी.) ननु विरोधादिव्यतिरिक्तानि हेत्वाभासादीनि निग्रहस्थानानि सन्ति । विजयमात्रप्रयोजनयोश्च जल्पवितण्डयोः पराजयनिमित्तानि सम्भावितानि च । अतः कथं विरोधाऽदिषट्केनैव जल्पाऽदौ पराजयः? इत्यत आह

तदभावात् नैव षट्कात् अन्यो निग्रह इष्यते ॥ २२ ॥
अन्तर्भावात् इहान्येषां निग्रहाणाम्............... ।

अन्येषां विरोधाऽदिपदैः अगृहीततया ततोऽन्यत्वेन शङ्कितानां हेत्वाभासादीनां इह षट्के अन्तर्भावात्, षट्कानन्तर्भूतानां च आश्रयासिद्ध्यादीनां तदभावात् निग्रहस्थानत्वाभावात्, जल्पवितण्डयोः षट्कादन्यनिग्रहस्थानानङ्गीकारो न दोषाय इति ॥

कथं हेत्वाभासाऽदीनां एतेष्वन्तर्भावः? कथं च अनन्तर्भूतानां अनिग्रहस्थानत्वं? इत्यत आह

...........................इति स्म ह ।

उक्तपरामर्शे इतिशब्दः । स्म ह इति निपातौ सुप्रसिद्धिं द्योतयतः । हेत्वाभासाऽदीनां विरोधाऽदिषु अन्तर्भावः, अनन्तर्भूतानां च अनिग्रहस्थानत्वं विरोधाऽदीनां हेत्वाभासाऽदीनां च स्वरूपयाथात्म्यज्ञाने सति सुज्ञानमेव इति किं तत्र यत्नेन ? इति ।

कथातः पूर्वं विद्याहीनत्वलिङ्गेन पराजय इत्युक्तं, तन्न। कथामन्तरेण विद्याहीनत्वलिङ्गस्य अप्रतीतेः इत्यत आह

विद्यापरीक्षापूर्वैव वृत्तिर्जल्पवितण्डयोः ॥ २३ ॥

(टी.) जल्पवितण्डाऽधिकारिणोः खलु विद्याहीनत्वलिङ्गेन कथातः प्राक् पराजय इष्यते। जल्पवितण्डाप्रवृत्तिश्च विद्यापरीक्षापूर्वैव। विद्यापरीक्षा च वादेनैव। वादे च न सम्भावितसमानविद्यत्वाऽपेक्षा। एवं च विद्यापरीक्षया विद्याहीनत्वनिश्चयात् न विरोधः। विद्यासाम्ये तु जल्पवितण्डे इति।

अपस्मारादिना प्राप्तानामपि विरोधादीनां न पराजयहेतुत्वम्

विरोधाऽदीनि निग्रहस्थानानि इत्युक्तं। तत्र विशेषं आह

स्खलितत्वाऽदिमात्रेण न तत्राऽपि पराजयः।

तत्र जल्पवितण्डयोरपि स्खलनेन अपस्माराऽदिवशेन वा प्राप्तैः विरोधाऽदिभिः न पराजयो मन्तव्यः, अपटुकरणत्वाऽदिना सम्भवतः स्खलनाऽऽदेः प्रतियोग्यपेक्षया अपकर्षस्य अद्योतकत्वात्। किन्तु वादकथायाम् इति।

(रा. टि.) ॥ हेत्वाभासाऽदीनीति ॥ उदाहरणाऽभासतर्कपराहत्यादिः आदिपदार्थः। व्याचष्टे ॥ अन्येषामित्यादिना ॥ 'उक्तपरामर्श इतिशब्दः इत्युक्तम्। तद्व्यनक्ति ॥ हेत्वभासाऽदीनां विरोधाऽदिष्वन्तर्भाव इति। व्याचष्टे ॥ जल्पवितण्डाऽधिकारिणोः इत्यादिना ॥ वृत्तिशब्दार्थः प्रवृत्तिः इति। तत्र इत्यनुवादः। जल्पवितण्डयोः इति व्याख्या। आदिपदार्थं आह ॥ अपस्माराऽदीति ॥

(वे. टि.) वस्तुतोऽन्यत्वे अन्तर्भावासम्भवात् आह ॥ अन्यत्वेन शङ्कितानामिति ॥ 'हेत्वाभासाः विरोधाऽदिभ्योऽन्ये विरोधाऽदिपदैः अगृहीतत्वात्' इति शङ्कितानां इत्यर्थः ॥ इह षट्केऽन्तर्भावादिति ॥ तथा च विरोधाऽदिपदैः अगृहीतत्वं असिद्धं इति भावः ॥ कथामन्तरेणेति ॥ तथा च अनवस्था इति भावः। नन्वेवं अनवस्था इत्यत्र आह ॥ वादे चेति ॥ 'न तत्रापि' इति अपिशब्दाभिप्रायं आह ॥ किन्तु वादेति ॥

(टी.) [1]तत्र वादे चतुर्धा निग्रहस्थानगतिः। किञ्चित् असम्भावितमेव, यथा प्रतिज्ञाहानिः प्रतिज्ञासन्न्यासो निरर्थकं अर्थान्तरं अविज्ञातार्थं अपार्थकं इति षट्कम्। एषां अज्ञातिसङ्गूहन-

प्रकारत्वात् तत्वबुभुत्सुतया च वादे तदभावात्। प्रमादात् सम्भवेऽपि उद्भाव्य त्याजनीयानि। किञ्चित् सम्भवदपि अनुद्भाव्यमेव, यथा प्रतिज्ञान्तरं हेत्वन्तरं अज्ञानं अप्रतिभा विक्षेपः मतानुज्ञा पर्यनुयोज्योपेक्षणं इति सप्तकम्। एतदुद्भावनानुद्भावनयोः तत्वनिर्णयाऽनुगुण्यवैगुण्याभावात्। किञ्चित् उद्भाव्यमात्रम्, यथा विरोधः अप्राप्तकालं न्यूनं अधिकं पुनरुक्तं अननुभाषणं अपसिद्धान्तः इति सप्तकम्। किञ्चित् कथाऽवसानिकम्, यथाहेत्वाभासो निरनुयोज्याऽनुयोग इति द्वयम्।

(रा. टि.) ननु वादे पित्रादिना विद्यासाम्यादिनिर्णयात् प्रागेव केनचित् निग्रहस्थानेन अन्यतरनिग्रहे कथापर्यवसानात् तयोः स्वरूपनिर्णयो वादेनापि असम्भवी इत्यतः तत्र कथाऽवसाननिग्रहस्थानमेव नास्ति इति भावेन आह ॥ **तत्र वाद इति** ॥ वादेनैव विद्यासाम्याऽदिनिर्णये कर्तव्ये सति इत्यर्थः। यद्वा पूर्वभाविवाद इत्यर्थः।

सुधायां तु विक्षेपस्य असम्भावितमध्ये अननुभाषणस्य अनुद्भाव्यमध्ये, निवेशोक्तिः द्वैरूप्यस्याऽपि सत्त्वात् इत्याहुः।

(वे. टि.) तत्वनिर्णयवैलोम्यं वादे साक्षात् पराजयः।

इत्यत्र वादे पराजयहेतुः द्विविधः मुख्यामुख्यभेदात् इत्युक्तम्। तत्प्रपञ्चनाय परोपन्यस्तानि वादे मुख्यामुख्यपराजयहेतुनिग्रहस्थानानि दर्शयति ॥ **वादे चतुर्धेति** ॥ गतिः स्थितिः ॥ **एषामशक्तीति** ॥ उपलक्षणमेतत्। पराज्ञानप्रकाशकत्वं च ज्ञातव्यम्। तथा च प्रतिज्ञाहानिसंन्यासार्थान्तराणां स्वाशक्तिसङ्गूहनार्थत्वं, निरर्थकापार्थकाविज्ञातार्थानां पराज्ञानप्रकाशनार्थत्वं इति विवेकः ॥ **तदभावादिति** ॥ स्वाशक्तिसङ्गूहनपराज्ञानप्रकाशनयोः अभावात् इत्यर्थः ॥ **प्रमादात्** इत्युपलक्षणम्। भ्रमात् इत्यपि द्रष्टव्यम् ॥ **उद्भाव्य त्याजनीयानीति** ॥ तदा तृतीयकोटौ निवेश इत्यर्थः। इयांस्तु विशेषः, प्रतिज्ञाविरोधाऽदीनां बुद्धिपूर्वकाणामेव सम्भवः। हान्यादीनां तु अबुद्धिपूर्वकाणां इति।

ननु 'समीचीनमेव साधनं त्वयोपन्यस्तं। मया च तत्र असदेव दूषणं उक्तं। तद्भयात् किमर्थं त्वं साधनं त्यजसि? अपलपसि वा?' इत्येवं सद्विषययोः हानिन्यासयोः उद्भावने सत्साधनेन तत्वनिर्णयसम्भवात् कथाऽवसानिकत्वस्य प्राप्त्या कथं तृतीयकोटौ प्रवेशः? इति चेत्। मैवम्। न हि अत्र हान्याद्युद्भावनेन तत्वनिर्णयः। किन्तु? सद्धान्यादौ तत्वनिर्णयाभावप्रसङ्गरूपं बाधकं प्रदर्श्य हान्यादित्याजनेनैव। अत एव किमर्थं त्यजसि? इत्याद्युक्तं।

---

[1] वे. वादे चतुर्धा.

(वे. टि.) एवञ्च न तृतीयकोटौ प्रवेश इति सद्विषयप्रतिज्ञाहानित्वाऽदिना कथाऽवसानिकत्वेऽपि निग्रहस्थानत्वसाक्षाद्व्याप्यधर्मावच्छेदेन विवक्षितस्य कथाऽवसानिकत्वस्य अत्र अभावात्। सद्विषयप्रतिज्ञाहानित्वाऽदिकं च न निग्रहस्थानत्वसाक्षाद्व्याप्यं, किन्तु? तद्व्याप्यप्रतिज्ञाहानित्वाऽदिव्याप्यं इत्यवधेयं इत्यप्याहुः ॥ आनुगुण्यवैगुण्याभावादिति ॥ एतेषां पुरुषदोषत्वात् इति भावः ॥ उद्भाव्यमात्रमिति ॥ उद्भाव्य त्याजनीयमित्यर्थः ।

(टी.) तत्वनिर्णयस्य हि साक्षात् विरुद्धा विपरीतप्रतिपत्तिः, सा च हेत्वाभासाऽद्यनुद्भावने भवति। पारम्पर्यात् [1]विरोधादयः। व्यासङ्गाऽदिना तत्वनिर्णयसामग्रीप्रतिरोधात् प्रतिज्ञाविरोधाऽदीनाम्। आकाङ्क्षासन्निधियोग्यतावत्तया प्रतिसंहितं प्रमाणाप्रतिहतं च वाक्यं खलु तत्वनिर्णयाङ्गम्, न अन्यत्। तत्र प्रतिज्ञाविरोधे योग्यताविरहः। अप्राप्तकाले तु आकाङ्क्षाविरहः। न्यूने तु आकाङ्क्षितासमभिव्याहारेण सन्निधिविरहविशेषः। अधिके तु अनाकाङ्क्षिताभिधानेन आकाङ्क्षाऽभावः। पुनरुक्तेऽपि एवम्। अननुभाषणे तु उक्ताननुसन्धानेन असन्निधानम्। अपसिद्धान्ते तु सम्मुग्धप्रमाणाऽबाधोत्क्रान्तिः इति।

तदिदं आचार्याणां असम्मतम्, आत्यन्तिकसाधनदूषणनिवृत्तौ एव वादावसानस्य उक्तत्वात् इति ॥

(रा. टि.) विपरीतप्रतिपत्तिः साक्षात् विरुद्धा इत्यन्वयः। तत्वनिर्णयवैलोम्यं इत्यर्थः ॥ पारम्पर्यात् विरोधाऽदय इति ॥ कथाऽवसानिका इत्यनुषङ्गः ॥ पारम्पर्यं व्यनक्ति ॥ व्यासङ्गाऽदिनेति ॥ सामग्रीति ॥ आकाङ्क्षासन्निधियोग्यतारूपशाब्दसामग्री। प्रतिबन्धं व्यनक्ति ॥ आकाङ्क्षेत्यादिना ॥ अप्राप्तकाल इति ॥ क्रमविपर्यासरूप इत्यर्थः। विलम्बेन उच्चरितत्वाभावात् आह ॥ सन्निधिविरहविशेष इति ॥ एवमिति ॥ आकाङ्क्षाऽभावः इत्यर्थः ॥ उक्तेति ॥ वादिना प्रतिवादिना वा यदुच्यते तस्य अननुसन्धानेन असन्निधानं इत्यर्थः ॥ सम्मुग्धेति ॥ स्वाऽचार्यवाक्यस्य प्रमाणत्वेन स्वयं अङ्गीकारात् तद्विरुद्धाभ्युपगमरूपस्य प्रत्यक्षानुमानाऽदिविशेषव्यवहारहीनसामान्यप्रमाणबाध इत्यर्थः। अनेन [2]प्रमाणप्रतिहतत्वरूपसामग्रीप्रतिबन्ध उक्तो भवति ॥ तदिदमिति ॥ साक्षाद्वा परम्परया वा [3]कथाऽवसानिकहेत्वाभासाऽदिकं इत्येतत् इत्यर्थः। कुतः? इत्यत आह ॥ आत्यन्तिकेति ॥ तथैव प्राक् साक्षात् पराजयः इत्यत्र व्याख्यानात् इति भावः। उक्तं च सुधायाम् 'वादाऽवसानं तु अन्यतरस्य साधनदूषणयोः स्थितयोः अन्यतरस्मिंश्च निस्साधनदूषणे सति भवति। अत एव हि तत्वनिर्णयः' इति।

---

[1] वे. विरोधे व्यासङ्गादिना. [2] प्रमाणाप्रतिहतत्व. [3] कथावसानिकं हेत्वाभासादिकम्.

(वे. टि.) ननु उद्भाव्यत्वाविशेषे कथं प्रतिज्ञाविरोधाऽदीनां उद्भाव्यत्वमात्रत्वं, हेत्वाभासनिरनुयोज्यानुयोगयोस्तु कथाऽवसानिकत्वं, इति व्यवस्था ? इत्यत आह ॥ **तत्वनिर्णयस्य हीति** ॥ **साक्षाद्विरुद्धेति** ॥ प्रामाभावावगाहितया विरुद्धा इत्यर्थः ।

विपरीतप्रतिपत्तिशब्देन संशयविपर्ययौ विवक्षितौ । इदमुपलक्षणम् । अप्रतिपत्तिरपि ग्राह्या । द्विविधो हि हेत्वाभासः प्रतीत्यजनकः विपरीतप्रतिपत्तिजनकश्चेति । तत्र स्वरूपासिद्धानवध्यसितौ प्रतीत्यजनकौ । तदतिरिक्ताः विपरीतप्रतिपत्तिजनकाः । तत्रापि अनैकान्तिकसत्प्रतिपक्षौ संशयजनकौ, विरुद्धकालात्ययापदिष्टौ तु [1]विपरीतप्रतीतिजनकौ इति विवेकः ।

ततश्च हेत्वाभासानुद्भावने दुष्टेन हेतुना न तत्वनिर्णयः । तदुद्भावनेन तु तस्मिन् साधने भग्ने प्रतिसाधनेन तत्वनिर्णयसम्भवात् कथाऽवसानिकत्वं हेत्वाभासोद्भावनस्य । निरनुयोज्यानुयोगानुद्भावने हि छलाद्यसद्दूषणदूषितेन साधनेन तत्वनिर्णयायोगात् तदुद्भावनेन असद्दूषणे भग्ने सति दोषशङ्काशून्येन साधनेन तत्वनिर्णयसम्भवात् तस्याऽपि कथाऽवसानिकत्वं इति द्रष्टव्यम् । तदिदं आह ॥ **सा चेति** ॥ **पारम्पर्यादिति** ॥ प्रतिज्ञाविरोधाऽदीनां पारम्पर्यात् विरोधे इत्यन्वयः । **तत्वनिर्णयस्य** इति वर्तते । **पारम्पर्यात्** इत्युक्तमेव विवृणोति ॥ **व्यासङ्गाऽदिनेति** ॥ **तत्वनिर्णयसामग्रीप्रतिरोधादिति** ॥ व्यासङ्गः व्यग्रता ।

व्यग्रताजनकत्वेन तत्वनिर्णयसामग्रीप्रतिरोधकत्वं अधिकपुनरुक्तयोरेव, न प्रतिज्ञाविरोधाऽदीनां सर्वेषाम् । अधिके पुनरुक्ते च अनाकाङ्क्षितेऽभिहिते, किमर्थं इदमुक्तं ? इति व्यग्रप्रतिपत्ता न विशिष्टं वाक्यं आकाङ्क्षादिमत्तया अनुसन्धातुमर्हति इति । आदिमदेन योग्यताऽदिविरहसङ्ग्रहः ।

प्रतिज्ञाविरोधाऽदीनां तत्वनिर्णयसामग्रीप्रतिरोधकत्वं दर्शयितुं तत्वनिर्णयसामग्रीं तावत् आह ॥ **आकाङ्क्षेति** ॥ **प्रमाणाप्रतिहतमिति** ॥ समबलप्रमाणेन अप्रतिहतं इत्यर्थः, । प्रबलप्रमाणाप्रतिहतेः योग्यताग्रहणेनैव लाभात् इति ज्ञेयम् ॥ **सन्निधिविरहविशेष इति** ॥ आकाङ्क्षितस्य अविलम्बेन उच्चारणं हि सन्निधिः इत्युच्यते । तदभावश्च अस्य आकाङ्क्षितस्य विलम्बेन उच्चारणे अनुच्चारणे च भवति इति न्यूने सन्निधिविरहविशेष इत्यर्थः । अत एव **पद्धतौ** 'सन्निध्यभावविशेषः' इत्युक्तम् ॥ **आकाङ्क्षाऽभाव इति** ॥ [2]उक्तरीत्या आकाङ्क्षाऽऽदिमतोऽविलम्बेन प्रतिसन्निहितत्वस्यैव सन्निधिशब्दार्थतया विवक्षणीयत्वात् । अन्यथा मौनिकृतश्लोके उच्चारणाभावेन अव्याप्तिप्रसङ्गात् । अत एव आह ॥ **उक्तानुसन्धानेन असन्निधानमिति** ॥ तत्व-

---

[1] विपर्ययजनकौ [2] उक्तरीत्या आकाङ्क्षादित्मवेनअनुसन्धानाभाव इत्यर्थः । अयमपि सन्निध्यभावविशेष एव । आकाङ्क्षादिमतोऽविलम्बेन इति पठान्तरम्.

निर्णयाङ्गतया यदुक्तं आकाङ्क्षाऽऽदिमत् वाक्यं तस्य अननुसन्धानेन इत्यर्थः ॥ **प्रमाणाऽबाधेति** ॥ प्रमाणा-प्रतिहतं इति विशेषणस्य अपगमः इत्यर्थः । सिद्धान्तस्य प्रामाणिकतया अभ्युपगतार्थरूपत्वात् इति भावः । नन्वेवं अपसिद्धान्तस्य प्रमाणबाधरूपत्वेन योग्यताविघटकत्वमेव प्राप्तं, न उक्तरूपप्रमाणाप्रतिहतिविघटकत्वं इत्यत उक्तम् ॥ **सम्मुग्धेति** ॥ तत्सिद्धान्तमूलप्रमाणे प्रामाण्यं अपसिद्धान्तोद्भावनकर्तुः परस्य सन्दिग्धं इत्यर्थः। तथा च अपसिद्धान्तस्य उक्तरूपप्रमाणाप्रतिहतिविघटकत्वमेव इति भावः ।

अनेन **विरोधाऽदिषु तत्वनिर्णयवैलोम्येतरविवेकं तु करिष्यामः** इति यदुक्तं तदपि कृतं भवति इति ज्ञातव्यम् । तथा हि, आद्यद्वितीयकोटिनिविष्टानां निग्रहस्थानानां प्रायः पुरुषदोषरूपाणां संवादाऽनुक्ति-रूपतया तयोः तत्वनिर्णयवैलोम्येतरत्वम् । प्रतिज्ञान्तरहेत्वन्तरयोस्तु **पद्धत्युक्तरीत्या** निग्रहस्थानत्वम् । प्रति-ज्ञासन्न्यासाऽर्थान्तरयोः विरोधासङ्गनिरूपत्वेन अर्थदोषत्वेऽपि तयोः स्वाशक्तिसङ्गूहनार्थत्वेन वादे अवक्तव्यत्वात् तृतीयकोटिनिविष्टानां च अर्थवचनदोषतया विरोधासङ्गतिन्यूनाधिकरूपत्वात् तेषां उक्तरीत्या न साक्षात् तत्वनिर्णयवैलोम्यरूपत्वं । चतुर्थकोटिनिविष्टयोस्तु हेत्वाभासनिरनुयोज्यानुयोगयोः विरोधासङ्गतिविशेषरूपत्वात् तयोः उक्तरीत्या साक्षात् तत्वनिर्णयवैलोम्यरूपत्वम् इति ॥ **आत्यन्तिकसाधनदूषणनिवृत्तावेवेति** ॥ हेत्वा-भासोद्भावनेन एकस्य साधनस्य निवृत्तावपि तस्यैव अन्यस्य वा पुनः साधनान्तरस्फूर्तौ तैः तत्वनिर्णयसम्भवेन कस्यापि दूषणान्तरास्फूर्तावेव वादाऽवसानस्य उक्तत्वात् इत्यर्थः ।

(टी.) **कथालक्षणोपसंहारद्वारेण, न एतत् वाद्यन्तरोक्तवत् असाधु प्रतिपत्तव्यं इत्याह**

वादजल्पवितण्डानां इति शुद्धं स्वलक्षणम् ॥ २४ ॥

**यद्यपि कथासामान्यलक्षणं च उक्तम्, तथापि तत् आर्थिकं इति वादाऽदिविशेषोपसंहार एव कृतः । वादाऽदीनामेव व्यवहाराङ्गत्वं न तु कथासामान्यस्य इत्यतो वा । यस्मात् स्वलक्षणं स्वरूपलक्षणं तस्मात् शुद्धं अव्याप्त्याऽदिशून्यम् । न हि तत्स्वरूपं तत् न व्याप्नोति व्यभिचरति च इति ।**

(रा. टि.) ॥ **सामान्यलक्षणं चोक्तमिति** ॥ कथापदाऽवृत्त्यादिना स्वकृतव्याख्याऽनुरोधेन इति भावः ॥ **आर्थिकमिति** ॥ विभागोक्त्या तस्य सामान्यलक्षणपूर्वकत्वनियमेन आक्षेपलब्धस्यैव अस्माभिः व्याख्यातत्वेन कण्ठतोऽनुक्तत्वात् इति भावः ॥ **इत्यतो वेति** ॥ वादादिविशेषोपसंहारः कृत इत्यनुकर्षः । व्याचष्टे ॥ **यस्मा-दित्यादिना** ॥ अव्याप्त्यादिहीनतां व्यनक्ति ॥ **न हीति** ॥ तत् इति ॥ तत् वादाऽदिलक्ष्यं **न व्याप्नोति न हि** इति असम्भवाव्याप्ती निरस्ते । **न हि व्यभिचरति च** इति अतिव्याप्तिः निरस्ता ।

(वे. टि.)॥ वाद्यन्तरोक्तवदिति ॥ वाद्यन्तरोक्तफलाऽधिकारिभेदगर्भलक्षणवत् इत्यर्थः ॥ आर्थिकमिति ॥ विशेषविभागोद्देशान्यथानुपपत्त्या सूचितयोजनया लब्धं इत्यर्थः ॥ शुद्धं स्वलक्षणं इत्यनयोः एकार्थत्वभ्रान्तिनिरासाय आह ॥ यस्मादिति ॥ हेतुसद्भावं उपपादयति ॥ न हीति ॥ उक्तानां प्रवृत्तिप्रकारभेदगर्भलक्षणानां वादाऽदिस्वरूपत्वाभावात् इति भावः। यद्यपि अधिकारिभेदगर्भाण्यपि लक्षणानि पूर्वं उक्तानि, तथाऽपि तानि पररीतिं आश्रित्य उपलक्षणत्वेन उक्तानि इति अदोषः। अत एव अधिकारिभेदस्तु उपलक्षणत्वेन उक्तः इत्युक्तम्।

### ग्रन्थस्य साधुतासमर्थनम्

(टी.) न केवलं एतत् कथालक्षणं उपपत्त्या साधु प्रतिपत्तव्यम्। किं नाम? परमाऽप्तोक्तत्वात् आगमान्तरसिद्धत्वाच्च इति दर्शयन् उक्तस्य विनियोगं आह

आनन्दतीर्थमुनिना ब्रह्मतर्काऽनुसारतः।
कथालक्षणमित्युक्तं प्रीत्यर्थं शार्ङ्गधन्वनः ॥ २५ ॥

भक्त्यतिशयवशात् भगवान् आचार्यः प्रकरणनिर्माणफलत्वेन परमेश्वरप्रशंसापुरस्सरं तत्प्रसादं आशास्ते

### ग्रन्थफलाशंसनम्

सदोदितामितज्ञानपूरवारितहृत्तमाः।
नरसिंहः प्रियतमः प्रीयतां पुरुषोत्तमः ॥ २६ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितेषु दशप्रकरणेषु कथालक्षणं सम्पूर्णं ॥

सदोदितं अनादित आविर्भूतं प्रलयेऽपि अविलुप्तं। अमितं आलोचने सर्वविषयम्। सदोदिताऽमितज्ञानपूरेण तं दत्वा इति यावत्। वारितं अस्मदीयं हृत्तमः अज्ञानं अनेन इति तथोक्तः। तस्मात् परमोपकारित्वात् स्वभावेन परमप्रेमविषयत्वाच्च तत्प्रसादाऽऽशंसनमेव युक्तम् इति।

(रा. टि.)॥ आनन्दतीर्थमुनिना इत्यस्य अभिप्रायः परमाऽप्तोक्तत्वात् इति। ब्रह्मतर्क इत्यादेः तात्पर्यं आगमान्तरेति।

प्रकरणनिर्माणफलत्वेन इत्यस्य तत्प्रसादं आशास्ते इत्यन्वयः। अनेन उत्तरार्धार्थं उक्तो भवति। पूर्वार्धार्थं आह। परमेश्वरप्रशंसापुरस्सरमिति ॥ तं दत्वेति ॥ तादृशज्ञानप्रवाहं दत्वा इत्यर्थः। अस्मदीयं भगवत्पादीयम्। तद्विशेषणतात्पर्यं परमेत्यादि। प्रियतमपदतात्पर्यं स्वभावेनेत्यादि।

(वे. टि.) ॥ **उपपत्त्येति** ॥ स्वलक्षणरूपया इत्यर्थः ॥ **परमाऽऽप्तेति** ॥ **मुनिना** इत्यनेन आप्तत्वस्य, आनन्दप्रदशास्त्रकर्तृत्वार्थकेन **आनन्दतीर्थ** इत्यनेन तत्परमत्वस्य च लाभात् इति भावः ॥ **आगमान्तरेति** ॥ परमाऽऽप्तभगवत्पादोक्तेः आगमत्वात् तदपेक्षया ब्रह्मतर्कस्य आगमान्तरत्वं इति ज्ञातव्यम्। तथा च स्वभावाभिज्ञं प्रति स्वोक्तेरेव आगमत्वं तदनभिज्ञं प्रति ब्रह्मतर्कस्य इति भावः। **शार्ङ्गधन्वन** इत्यत्र शार्ङ्गं धनुः यस्य इति विग्रहः। 'धनुषश्च' इति समासान्तोऽङ्।

**सदोदितामितज्ञानस्य** ईश्वरीयत्वे तस्य अज्ञानाभावेन न तन्निवर्तकत्वोक्तिः युक्ता। ज्ञानस्य स्वसमानाधिकरणाऽज्ञाननिवर्तकत्वस्वाभाव्यात् इत्यतो यथावत् व्याचष्टे ॥ **सदोदितमित्यादिना** ॥ 'आलोचने सर्वविषयं' इत्यत्र 'ईशादन्यत्र' इति ग्राह्यम्। सदोदित इति विशेषणस्य प्रियतम इति विशेषणस्य च प्रयोजनं क्रमेण दर्शयति ॥ **परमोपकारित्वादिति** ॥ **स्वभावेनेति** ॥ उपकारित्वप्रयुक्तं न प्रेम, येन पृथगुक्तिः व्यर्था इति भावः।

(टी.) श्रीमदानन्दतीर्थार्यहृदयामलमन्दिरा।
इन्दिराऽर्चितपादाब्जा देवता पातु नः सदा ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाऽऽचार्यविरचितकथालक्षणविवरणं जयतीर्थभिक्षुणा विरचितं सम्पूर्णम् ॥**

(रा. टि.) 'सदेहमानिहरये प्रणमेत्' इत्युक्तरीत्या मुख्याधिष्ठानाऽऽनन्दकरग्रन्थकर्तृहृद्गतं भगवन्तं ग्रन्थान्ते प्रार्थयते ॥ **श्रीमदिति** ॥ **इन्दिरेत्यादिना** प्रशंसा।

कथालक्षणटीकाया भावदीपो यथामति।
राघवेन्द्रेण यतिना कृतः प्रीत्यै रमापतेः ॥

इति श्रीमत्सुधीन्द्रतीर्थगुरुपादशिष्यराघवेन्द्रतीर्थयतिकृतः कथालक्षणटीकाभावदीपः सम्पूर्णः

(वे. टि.) समापितग्रन्थः अन्तेऽपि मङ्गलं आचरति ॥ **श्रीमदानन्देति** ॥

रघूत्तमगुरुप्रोक्तो भावो जयमुनेरिह।
वेदेशभिक्षुणा बालबोधायाऽल्पतयेरितः ॥
माध्वीयशुद्धहृदयाम्बुरुहस्थो रमापतिः।
व्यासोऽस्त्वनेन सुप्रीतः कथानिर्णीतसद्गुणः ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितकथालक्षणपञ्चिकायाः श्रीमज्जयतीर्थभिक्षुविरचितायाः विवरणं रघूत्तमशिष्यवेदेशभिक्षुविरचितं सम्पूर्णम्।**



अनीनदत्पद्मभवो मृदङ्गं जगौ हनूमान् जगतामधीशम् ।
अदर्शयत्तालगतीः कपर्दी ननर्त गोपालकबालमौलिः ॥

श्रीः

# अथ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितेषु दशप्रकरणेषु

# तृतीयं उपाधिखण्डनम्

श्रीजयतीर्थभिक्षुविरचितेन विवरणेन

श्रीब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थरचितया मन्दारमञ्जरीटिप्पण्या समलङ्कृतेन

विभूषितम्



कामधेनुर्यथा पूर्वं सर्वाभीष्टफलप्रदा ।
तथा कलौ वादिराजश्रीपादोऽभीष्टदः सताम् ॥

श्रीः

# अथ श्रीमदानन्दतीर्थ भगवत्पादाचार्यविरचितेषु दशप्रकरणेषु

# तृतीयं उपाधि खण्डनम्

श्रीजयतीर्थभिक्षुविरचितया टीकया विभूषितम्

टीका

रमाया रमणं नत्वा गुणमाणिक्यमण्डनम् ।
तत्वप्रकाशिकाव्याख्यां करिष्यामो यथामति ॥

अथ श्रीब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचिता उपाधिखण्डनटीकायाः मन्दारमञ्जरी टिप्पणी प्रारभ्यते

हरिः ॐ

[1] लक्ष्मीकरतलाम्भोजलालनीयपदाम्बुजम् ।
प्रणमामि हयग्रीवं देवताचक्रवर्तिनम् ॥ १ ॥

श्रीमदानन्दतीर्थार्यचरणाम्बुरुहद्वयम् ।
शिवेन्द्रादिशिरोभूषामादरादभिवादये ॥ २ ॥

जयतीर्थमुनिं नत्वा भक्त्याऽस्माकं गुरूनपि ।
तत्वप्रकाशिकाव्याख्यां यथामति विवृण्महे ॥ ३ ॥

पारिप्सितग्रन्थाविघ्नपरिसमाप्त्यादिप्रयोजनकमविगीतशिष्टाचारानुमितश्रुतिप्रमाणकं परदेवताप्रणामलक्षणं मङ्गलमाचरन् ग्रन्थकर्ता जयतीर्थाचार्यश्चिकीर्षितं निर्दिशति ॥ रमाया इति ॥ रमणमिति 'कृतल्युटो बहुलम्'

---

[1] 'कमलारमणं नत्वा पूर्णबोधेष्टदैवतम् । तत्वप्रकाशिकाव्याख्यां करिष्यामो यथामति ॥ १ ॥
स्पष्टार्थो य इह ग्रन्थः स न व्याक्रियते मया । ग्रन्थगौरवभीरुत्वान्न चोदग्रन्थं बहूच्यते ॥ २ ॥
मङ्गलाचरणपूर्वकं चिकीर्षितं निर्दिशति ॥ रमाया रमणमिति ॥ नन्द्यादित्वात् कर्तरि ल्युट्' इति मुद्रितः पाठः । अयं पाठो न साधुरिति भाति । तत्वप्रकाशिकाव्याख्याया जयतीर्थकर्तृकायाः स्वकर्तृकत्वाभावेन प्रथमश्लोकोत्तरार्धस्यानुपपन्नत्वात् ।

इति कर्त्रर्थे ल्युटः स्मरणात् कर्तरि ल्युट् । रमारमणस्यैव नम्यत्वे हेतुमाह ॥ **गुणमाणिक्येति** ॥ गुणा एव माणिक्यानि तेषां मण्डनमित्यर्थः ॥ **तत्वप्रकाशिकाव्याख्यामिति** ॥ ब्रह्ममीमांसासहितवेदान्तविषयादितत्व-प्रकाशिकाव्याख्यामित्यर्थः । करिष्याम इति परसमवेतक्रियाफलाभिधायिना परस्मैपदेन शिष्यानुजिघृक्षया ग्रन्थो निर्मीयत इति सूचयति ।

## अवतरणिका

(टी.) **परमात्मनोऽत्यन्तभिन्नस्य स्वतश्चिदानन्दाद्यात्मकस्यापि जीवस्य अनाद्यविद्याकामकर्मादि-निमित्तोऽयं परमार्थ एव अन्यथाकारो दुःखाद्यनर्थो न परमेश्वरप्रसादादृते अपगच्छति । न च असाक्षा-त्कृतोऽसौ प्रसीदति । न च अविदितस्वरूपः शक्यते साक्षात्कर्तुम् इति सकलगुणाकरतया निश्शेष-दोषगन्धविधुरतया च तं प्रतिपादयितुमशेषाम्नायाः प्रवर्तन्ते । तदुपकरणभूता च ब्रह्ममीमांसेति परमार्थः ।**

(मं. टि.) ननु किमर्थमिदं प्रकरणमारभ्यते भगवत्पादैः? न च वेदान्तानां समीमांसानां विषयप्रयोजनादि-स्वरूपनिर्णयार्थमारभ्यते, तन्निर्णयश्च वेदान्तादौ जिज्ञासूनां प्रवृत्त्यर्थः, प्रवृत्तिश्च ज्ञानसम्पादनद्वारा मोक्षपर्यवसायि-नीति वाच्यम् । मोक्षस्य ईश्वरप्रसादैकसाध्यत्वेन ज्ञानानपेक्षणादित्याशङ्क्याह ॥ **परमात्मन इत्यादिना न चासा-क्षात्कृतोऽसौ प्रसीदतीत्यन्तेन ग्रन्थेन** ॥ जीवस्य दुःखाद्यनर्थः परमेश्वरप्रसादादृते नापगच्छतीति सम्बन्धः । ननु दुःखादेरानन्दादिवदनिवृत्तिः किं न स्यात्? इत्यत आह ॥ **अन्यथाकार इति** ॥ आनन्दादिवन्न स्वाभाविकत्वं [1]अन्तःकरणधर्मत्वाद्दुःखादीनामिति भावः । तर्हि मायिमत इव दुःखादीनां मिथ्यात्वं स्यादिति । नेत्याह ॥ [2]**परमार्थत इति** ॥ दुःखादीनां स्वरूपेण [3]अन्तःकरणे परमार्थत्वात् तदनुसन्धातृत्वस्य दुःखित्वस्य जीवे परमार्थत्वान्न कस्यापि मिथ्यात्वमित्यर्थः । ननु तस्यानर्थस्यानिमित्तकत्वे स्वरूपानन्दादिवत्स्वाभाविकत्वं स्यात् । सनिमित्तकत्वे च निमित्तस्यापि निमित्तान्तरापेक्षायामनवस्था स्यादित्यत आह ॥ **अनाद्यविद्याकाम-कर्मेति** ॥ सनिमित्तकत्वेऽपि निमित्तस्यानादित्वान्नानवस्थेत्यर्थः । **अविद्या** भावरूपाज्ञानम् । **कामो** रागः । **कर्म** काम्यादिकर्म । अविद्यायाः स्वरूपेणानादित्वम् इतरयोस्तु प्रवाहत इति द्रष्टव्यम् ।

## स्वरूपतोऽनादित्वपरिष्कारः

ननु किमिदमनादित्वं नाम । किं प्रागभावाप्रतियोगित्वं? किं वा कारणशून्यत्वं? आद्येऽपि किं स्वप्रागभावाप्रतियोगित्वं? अन्यप्रागभावाप्रतियोगित्वं वा? प्रागभावमात्राप्रतियोगित्वं वा? आद्येऽपि किं

---

[1] आगन्तुकत्वाद्दुःखादीनामिति भावः । [2] ॥ परमार्थ इति ॥ [3] अन्तःकरणपरिणामत्वेन परमार्थत्वात् तदनुसन्धातृत्वस्य च.

(मं. टि.) स्वप्रागभावः प्रसिद्धः? उत न? आद्ये कथमयं न तत्प्रतियोगी स्यात्? इत्यसम्भवः। द्वितीये त्वसम्भवः। [1]स्वप्रागभावाप्रसिद्धौ तत्प्रतियोगित्वाभावस्य दुर्ज्ञानत्वात्। [2]नापि द्वितीयः। घटस्यापि पटप्रागभावाप्रतियोगिनोऽनादित्वापातात्। तृतीयेऽपि मात्रशब्दः किं कार्त्स्न्यवाची? किं वा सामान्यवाची? नाद्यः। घटस्याऽपि [3]कृत्स्नप्रागभावाप्रतियोगिनोऽनादित्वापातात्। न हि घटः पटादिप्रागभावप्रतियोगी। न द्वितीयः। आकाशादिप्रतियोगिकप्रागभावस्याप्रामाणिकत्वात् प्रामाणिकाप्रामाणिकयोः [4]सामान्याभावात्। एवमेव कारणशून्यत्वमिति द्वितीयोऽपि निरसनीयः। तस्मादविद्यानादित्वं दुर्निरूपमिति। अत्रोच्यते।

घटादौ प्रमिता तावत्प्रागभावेन युक्तता।
आरोप्य बुद्धिपूर्वं सा गगनादौ निषिद्ध्यते ॥

स्वप्रागभावाप्रतियोगित्वमेवानादित्वम्। यत्तु 'स्वप्रागभावाप्रसिद्धौ [5]स्वप्रागभावप्रतियोगित्वाभावोऽप्यसिद्धः' इति तत्र किं 'प्रतियोगिनोऽसत्वेऽभावोऽपि न स्यात्' इत्यर्थो विवक्षितः? किं वा 'प्रतियोगिनोऽसत्वे तज्ज्ञानोपायाभावेन प्रतियोगिज्ञानपूर्वकमभावज्ञानं च न स्यात्' इति? नाद्यः। प्रागभावप्रध्वंसयोः प्रतियोगिसत्त्वेन व्याप्तत्वेऽपि अत्यन्ताभावस्य तेन व्याप्त्यभावात्। अत्यन्ताभावो हि प्रत्युत प्रतियोगिनोऽसत्त्वमेवापेक्षते। प्रकृते च स्वप्रागभावप्रतियोगित्वात्यन्ताभावस्य लक्षणत्वेन विवक्षितत्वात्। न द्वितीयः। [6]घटादौ प्रमितस्य स्वप्रागभावप्रतियोगित्वस्य गगनादौ बुद्धिपूर्वकमारोप्य निषेधात्। निषेधो हि प्रसक्तिपूर्वकः। प्रसक्तिश्च बुद्धिपूर्वकारोप एव। 'इह भूतले घटो नास्ति' इत्यादौ भूतलान्तरे प्रमितस्य घटस्य इह भूतले बुद्धिपूर्वकमारोप्य निषेधे एतद्भूतलस्य घटाभावः सिद्ध्यति यथा एवमेवात्रापि घटादौ प्रमितस्य स्वप्रागभावप्रतियोगित्वस्य गगनादौ बुद्धिपूर्वकमारोप्य निषेधे गगनस्य स्वप्रागभावप्रतियोगित्वाभावो ज्ञातो भवति। अथ वा घटादौ स्वप्रागभावप्रतियोगित्वस्य दर्शनात् 'गगनं स्वप्रागभावप्रतियोगि वस्तुत्वात् घटवत्' इत्याद्यनुमानाभासैर्गगनादेः स्वप्रागभावप्रतियोगित्वे प्रसक्ते तन्निषिद्ध्यत इति नाप्रसक्तप्रतिषेधः। एवमेव स्वकारणराहित्यस्वोत्पत्तिराहित्यादीन्यनादित्वलक्षणान्यूह्यानि। एवमेव [7]प्रध्वंसाप्रतियोगित्वं नित्यत्वमित्यादीन्यपि [8]समर्थनीयानीति दिक्।

## प्रवाहतोऽनादित्वपरिष्कारः

[9]नन्वथापि प्रवाहतोऽनादित्वमिति कोऽर्थः? प्रवाहोऽनादिरित्यर्थ इति चेत्। स किं प्रवाहिभ्यो भिद्यते? उत न? आद्येऽपि स किं प्रवाहिभिरारभ्यते? उत [10]ज्ञाप्यते? आद्ये कथमयमनादिः स्यात्?

---

[1] प्रागभावाप्रसिद्धौ. [2] न द्वितीयः [3] कृत्स्नप्रागभावाप्रतियोगिनोऽनादित्वप्रसङ्गात्. [4] सामान्यस्याभावात्.
[5] स्वप्रागभावप्रतियोगित्वाभावोऽप्यप्रसिद्ध इति. [6] इत आरभ्य अथवा इत्यन्तो भागो मुद्रितपुस्तके नास्ति.
[7] ध्वंसाप्रतियोगित्वं. [8] समर्थनीयानि. [9] तथापि. [10] ज्ञायते.

(मं. टि.) द्वितीयेऽपि किं प्रवाहिणां प्रत्येकं ज्ञापकत्वं ? किं वा मिलितानां ? नाद्यः। एकैकप्रवाहिदर्शनेऽपि प्रवाहबुद्धिप्रसङ्गात्। न द्वितीयः। तेषां क्रमभाविनां मेलनस्यैवासम्भवात्। नाऽपि द्वितीयः। सादिप्रवाहाभिन्नस्य प्रवाहस्यानादित्वायोगात्। तस्मात्कर्मादीनां [1]प्रवाहतोऽनादित्वमिति व्याख्यानमयुक्तमिति। अत्रोच्यते

प्रवाह इति गीयन्ते सजातीयाः प्रवाहिणः।
कालेनोपाधिना ग्रस्ता नानावृक्षा वनं यथा ॥

न प्रवाहिभ्योऽतिरिक्तः प्रवाहोऽस्ति। सजातीयानां प्रवाहिणामेव पूर्वापरकालवृत्तित्वेनोपाधिना प्रवाहशब्दार्थत्वात्। [2]दृष्टं चैतत्। एकदेशस्थत्वेनोपाधिना अनेकवृक्षाणामेव [3]वनशब्दार्थत्वात्। तेषामनादित्वं च एकप्रवाहमध्यपतितानेकप्रवाहिप्रतियोगिकप्रागभावावच्छिन्नकालावृत्तित्वानधिकरणध्वंसप्रतियोगिप्रवाहित्वमिति न कश्चिद्दोषः।

### प्रकरणस्य प्रयोजनादिसमर्थनम्

ननु जीवस्वरूपानन्दस्य स्वतः सिद्धत्वात् तद्विरुद्धदुःखस्य तत्रानवकाशान्नेश्वरप्रसादेन सम्पाद्यमस्तीत्यत आह ॥ स्वतश्चिदिति ॥ चिदानन्दाद्यात्मकस्यापि नापगच्छतीति विधेयविशेषणमेतत्। स्वरूपानन्दादिना बाह्यदुःखादेर्विरोधाभावात् दुखादिनिवृत्तेरीश्वरप्रसादसाध्यत्वमस्तीत्यर्थः। उपलक्षणमेतत्। स्वरूपानन्दस्य नित्यत्वेऽपि आविर्भूतानन्दस्य प्रयोजनत्वात् आविर्भावस्येश्वरप्रसादसाध्यत्वादित्यपि द्रष्टव्यम्। परमात्माभिन्नस्य जीवस्य कुतोऽनर्थप्राप्तिः? इत्यत आह ॥ परमात्मनो भिन्नस्येति ॥ व्यावहारिकभेदसद्भावेऽपि न पारमार्थिकानर्थो जीवस्य सम्भवतीत्यत आह ॥ अत्यन्तेति ॥ परमार्थत इत्यर्थः। यद्वा [4]भास्करमतनिरासेन अभेदासहिष्णुभेदप्रतिपादनाय अत्यन्तमित्युक्तम्। मोक्षस्येश्वरप्रसादसाध्यत्वेऽपि तत्साक्षात्कारं विना तत्प्रसादाभावात् अपरोक्षज्ञानजनकानां वेदान्तानां सप्रयोजनत्वात् तद्विषयकप्रवृत्तिहेतुभूतविषयादिनिर्णायकस्यास्य प्रकरणस्यापि सप्रयोजनत्वमित्यभिप्रायः।

नन्वेवमप्यपरोक्षज्ञानमेव [5]मोक्षपर्यवसायि। वेदान्तैश्च परोक्षज्ञानमेव क्रियत इत्यत आह ॥ न चेति ॥ अविदितेति ॥ परोक्षज्ञानेनाविदितेत्यर्थः। घटाद्यपरोक्षज्ञानस्य परोक्षज्ञानपूर्वकत्वनियमाभावेऽपि ईश्वरापरोक्षज्ञानस्योपासनासाध्यत्वात् उपासनायाश्च [6]परोक्षज्ञानपूर्वकत्वनियमादिति भावः। नन्वीश्वरपरोक्षज्ञानं लोकत एव प्राप्तमिति किं वेदान्तैः? इत्याशङ्क्याह ॥ सकलेति ॥ यद्यपि कार्यत्वाद्यनुमानेनेश्वरस्वरूपमात्रमवगतम्। तथापि तन्नोपासनाङ्गम्। [7]श्रुत्याद्युक्तगुणविशिष्टस्यैवोपास्यत्वादिति भावः। कर्मकाण्डस्यापीश्वरज्ञानहेतुकर्म-

---

[1] प्रवाहतोऽनादित्वव्याख्यानमयुक्तमिति. [2] दृष्टपूर्वं चैतत्। एकदेशावस्थानोपाधिना. [3] वनशब्दार्थत्वदर्शनात्.
[4] भास्करमतनिरासाय. [5] प्रयोजनपर्यवसायि. [6] परोक्षज्ञानपूर्वकत्वादिति भावः [7] श्रुत्युक्त.

(म. टि.) प्रतिपादकत्वात् ब्रह्मण्येव महातात्पर्यमित्याह ॥ **अशेषेति** ॥ न चैवं ब्रह्ममीमांसावैयर्थ्यम्। [1]वेदार्थ-निर्णायकन्यायव्युत्पादकत्वादित्याह ॥ **तदुपकरणेति** ॥

### मायावाद्यभिमतविषयादिनिरूपणम्

**(टी.) अपरे तु स्वतः [2]परमात्मभूतस्यैव जीवस्य अज्ञानादिनिमित्तोऽयमपरमार्थ एवानर्थोऽद्वैतज्ञानैकनिबर्हणीय इत्यतोऽस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते। तदितिकर्तव्यतारूपा ब्रह्ममीमांसा चेति मन्यन्ते।**

(मं. टि.) वेदान्तानां विषयादितत्वनिर्णयार्थं चैतत्प्रकरणम्। किं [3]विषयाद्याभासप्रसक्तिरस्ति? इत्याशङ्क्य अस्तीत्याह ॥ **अपरे त्वित्यादिना मन्यन्त इत्यन्तेन ग्रन्थेन** ॥ वेदान्तस्य प्रयोजनमात्मैकत्वविद्येत्याह ॥ **आत्मैकत्वविद्येति** ॥ प्रतिपत्तिशब्देन प्राप्तिर्विवक्ष्यते। [4]आत्मैकत्वविद्यायाः प्रयोजनमाह ॥ **अनर्थोऽद्वैतज्ञानैकनिबर्हणीय इति** ॥ यद्वा वेदान्तानामात्मैकत्वं विषय इत्याह॥ **आत्मैकत्वविद्येति** ॥ प्रतिपत्तिशब्देन प्राप्तिर्विवक्ष्यते। यद्धि यत्प्रतिपत्त्यर्थं स तस्य विषय इति प्रसिद्धम्। प्रयोजनमाह ॥ **अनर्थोऽद्वैतज्ञानैकनिबर्हणीय इति** ॥ इत्यनर्थनिबर्हणार्थमिति शेषः। अनर्थस्याद्वैतज्ञाननिवर्त्यत्वे हेतुमाह ॥ **अपरमार्थ इति** ॥ अपरमार्थत्वे हेतुमाह ॥ **अज्ञानादिनिमित्त इति** ॥ निमित्तशब्दः कारणमात्रवाची तद्विशेषोपादाने पर्यवस्यतीति द्रष्टव्यम्। तत्र हेतुमाह ॥ **स्वतः परमात्मभूतस्येति** ॥ ननु स्वतः परमात्माभिन्ने जीवे स्वाभाविकानर्थ इव अज्ञाननिमित्तकोऽपि न सम्भवतीत्यत आह ॥ **अयमिति** ॥ युक्त्यसहत्वमनर्थस्य भूषणं। प्रतीतिमात्रं तु प्रत्यक्षसिद्धत्वान्नापलापार्हमिति भावः। ननु ज्ञानस्याज्ञानमात्रनिवर्तकत्वान्न दुःखादिनिवर्तकत्वं, तत्राह ॥ **अस्य प्रहाणायेति** ॥ अस्येत्यज्ञानस्येत्यर्थः। साक्षादनर्थनिवृत्तिहेतुत्वाभावेऽपि अनर्थहेत्वज्ञाननिवृत्त्यर्थमात्मैकत्वविद्येत्यर्थः। अविद्यानिवृत्तेः कथमनर्थनिवृत्तिहेतुत्वम्? तत्राह ॥ **अनर्थहेतोरिति** ॥ अनर्थोपादानस्येत्यर्थः। उपादाननिवृत्तेरुपादेयनिवृत्तिहेतुत्वं सुप्रसिद्धमिति भावः।

### मङ्गलाचरणम्

**(टी.) तमेतं शास्त्रस्य पराभिमतमधिकारिविषयप्रयोजनसम्बन्धं निरस्य स्वाभिमतं समर्थयितुमिदं प्रकरणमारभमाणो भगवानाचार्यो नारायणस्तवनतत्प्रीतिप्रार्थनारूपमादितो मङ्गलमाचरति।**

नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः।
अशेषदोषरहितः प्रीयतां कमलालयः ॥ १ ॥

**अगण्यगुणानां नित्यैकनिलया सदा मुख्याश्रया आकृतिः मूर्तिर्यस्यासौ तथोक्तः। प्रीयतां अस्माकमिति शेषः। अभ्यर्हितत्वेन सिद्धत्वात् इदं नोक्तम्। अत्राऽद्य विशेषणद्वयं स्तुत्यर्थमपि**

---

[1] वेदान्तार्थं.   [2] श्री. परब्रह्मभूतस्य.   [3] विषयाद्याभासप्रसक्तिरित्याशङ्क्य.

[4] यद्धि यत्प्रतिपत्त्यर्थं स तस्य विषय इति प्रसिद्धम्। आत्मैकत्वविद्यायाः प्रयोजनमाह ॥ अनर्थोऽद्वैतज्ञानैकनिबर्हणीय इति ॥ अनर्थनिबर्हणार्थमिति शेषः।

(टी.) उत्तरप्रबन्धप्रसङ्गोपक्षेपाय कृतम् । अथ वा नानिर्धारितस्वरूपस्य प्रसादाशंसनं युक्तम् । न च लक्षणेन विना निर्धारणमिति लक्षणद्वयाभिधानमिदम् । यथोक्तम्

अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि ।
तावदेवेश्वरो नाम तत्र भेदोऽपि न क्वचित् । इति ॥

**नारायणप्रीतिरिव रमायाः प्रीतिरपि प्रार्थनीयेति ज्ञापनाय कमलालयः इत्युक्तम् ।**

(मं. टि.) [1]तस्माद्विषयाभासस्य प्रसक्तत्वात्तन्निराकरणं युक्तमित्याह ॥ **तमेतमिति** ॥ तदनेनास्य प्रकरणस्य वेदान्तविषयादितत्वं विषयः । तदवधारणं प्रयोजनं । वेदान्तशुश्रूषुरधिकारी । सम्बन्धस्तु यथायोग्यमूहनीय इत्युक्तं भवति ।

ननु मीमांसया [2]वेदान्तार्थनिर्णये विषयादिकं तत्रैव निश्चेष्यत इति किमनेन प्रकरणेनेति चेत् नैष दोषः । वेदान्तविषयकप्रवृत्तिहेतुभूतस्य विषयादितत्वावधारणस्य [3]प्रवृत्तिसाध्यवेदान्तश्रवणसाध्यत्वे अन्योन्याश्रयप्रसङ्गेन प्राक् प्रवृत्तेः सामान्याकारेण [4]तज्ज्ञानोपायप्रकरणारम्भोपपत्तेः ।

॥ **नारायणस्तवनेति** ॥ नारायणस्तवननारायणप्रीतिप्रार्थनरूपमङ्गलद्वयाचरणं 'भूयांसि मङ्गलान्यनुष्ठितानि भूयसो विघ्नान् घ्नन्ति' इति सूचनार्थम् । [5]तेन क्वचिन्मङ्गले कृतेऽपि प्रारिप्सितपरिसमाप्त्यदर्शनान्मङ्गलं न परिसमाप्त्यादिहेतुरिति शङ्का निरस्ता । तत्र विघ्नानां भूयस्त्वान्मङ्गलस्य ल्पीयस्त्वादिति भावः ॥ **मुख्याश्रयेति** ॥ अन्येषां बहुगुणाश्रयत्वमात्रेण अगण्यगुणाश्रयत्वमौपचारिकम् । अस्य तु मुख्यमित्यर्थः । यद्यपि गुणगुणिनोरत्यन्ताभेदः । तथापि विशेषबलादाश्रयाश्रयिभावो द्रष्टव्यः । विशेषस्वरूपं च विवेचयिष्यामः ॥ **अभ्यर्हितत्वेनेति** ॥ कमलाविशिष्टनारायणप्रीतेः स्वस्यैव मुख्यपात्रत्वात् मुख्ये सम्भवत्यमुख्यायोगादित्यर्थः । अथ वा असति विशेषे [6]स्वाभिलष्यमाणेनेष्टेन अन्तरङ्गतया स्वस्यैव सम्बन्धदर्शनादित्यर्थः । यद्वा 'भिक्षां देहि' इत्यादाविव वाक्यप्रयोक्तृत्वेन [7]स्वस्यैव प्रकृतत्वादित्यर्थः ॥ **अत्राद्यमिति** ॥ न चोभयत्र तात्पर्ये वाक्यभेदः शङ्क्यः । स्तुतौ तात्पर्येण विशेषणद्वये प्रयुक्ते उत्तरग्रन्थारम्भोपपादनस्य प्रासङ्गिकत्वादिति अपिशब्दार्थः । पक्षान्तरमाह ॥ **अथ वेति** ॥ यद्यपि एकेनैव लक्षणेन वस्तुसिद्धिः । तथापि एकलक्षणोपपादनायान्यस्मिन् कथिते अव्याप्त्याद्यभावात्तदपि लक्षणं [8] भवतीत्यर्थः ॥ १ ॥

---

[1] तस्माद्विषयाद्याभासस्य. [2] वेदान्तार्थनिर्णयविषयादिकं. [3] प्रवृत्तिसाध्यवेदान्तश्रवणसाध्यत्वेन.
[4] तज्ज्ञापनाय प्रकरणारम्भोपपत्तेः [5] एतेन. [6] स्वाभिलिप्समानेनेष्टेन.
[7] प्रकृतत्वात् । अप्रकृतादभ्यर्हितत्वेनेत्यर्थः [8] फलतीति भावः.

(टी.) अत्राहुरद्वैतवादिनः, जीवब्रह्मणोरेकत्वं खलु सकलवेदान्ततन्मीमांसाशास्त्रप्रतिपाद्यम्। न च तत् नारायणाख्यस्य परब्रह्मणः सदा अगण्यगुणाश्रयत्वे सम्भवति। अताद्रूप्यत्वात् जीवस्य। न हि परस्परविरुद्धस्वभावयोरेकत्वं दृष्टम्। अतो न स्वभावतोऽगण्यगुणाधिकरणत्वं नारायणस्येति।

(मं. टि.) वेदान्तादिविषयादितत्वनिर्णयाय प्रकरणं चेत् किमनेन अकाण्डताण्डवायितेन अज्ञाननिराकरणेन? इत्याशङ्क्य तत् सङ्घटयितुं शङ्कते ॥ अत्राहुरित्यादिना॥ नारायणः किं परब्रह्म? उत न? न चेद् अपसिद्धान्तः। ब्रह्म चेत् सोऽप्यल्पगुणः स्यात्। जीवो वा अनन्तगुणः स्यात। विरुद्धधर्माश्रययोरभेदायोगात्। अभेदस्य च प्रामाणिकत्वादिति चोद्यार्थः। ननु त्वन्मते जीवब्रह्मणोः स्वाभाविकाभेदेऽपि सर्वज्ञत्वाल्पज्ञत्वादिवत् ममापि अनन्तगुणवत्वतदभावव्यवस्था किं न स्यात? इत्यत आह ॥ स्वभावत इति ॥ मम तु सार्वज्ञ्यादिकमौपाधिकमित्यर्थः।

अज्ञानानुपपत्त्या ऐक्यस्य शास्त्रार्थत्वनिरासः

(टी.) तदयुक्तम्, स्यादिदं यदि जीवब्रह्मणोरेकत्वं शास्त्रार्थः स्यात्। न चैवं सम्भवति। तथात्वे शास्त्रस्य अनारम्भणीयत्वप्रसङ्गात्। यत् खलु अधिकारिविषयप्रयोजनसम्बन्धवत् तत् आरम्भणीयं दृष्टम्। न च एतत् अद्वैतवादे सम्भवति अधिकार्यादिसिद्धेरज्ञानसिद्ध्यधीनत्वात्। न च तत्पक्षे अज्ञानमुपपद्यते। कथम्? इति तत्राह

अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चन।

अज्ञानं हि कस्यचित् क्वचित् सम्भवति। न च तत्पक्षे परमात्मातिरिक्तं वस्तु विद्यत इति तस्यैवाज्ञानं वक्तव्यम्। न च तस्य कुतश्चन [1]कुत्रापि तत् सम्भवति सर्वज्ञत्वात्। अतो व्यापकीभूताश्रयविषयानुपपत्त्या व्याप्यस्याज्ञानस्याप्यनुपपत्तिः।

(मं. टि.) अभेदस्य प्रामाणिकत्वमेवासिद्धमिति परिहरति ॥ तदयुक्तमिति॥ यत्खल्वधिकारीति ॥ अधिकारिस्वरूपमात्रज्ञानस्य अधिकारिप्रवृत्तिहेतुत्वाभावेऽपि अधिकारिविशेषणापरिज्ञाने 'अहमधिकार्यस्मिन्न वा' इति सन्देहेन प्रवृत्तिप्रतिबन्धात् अधिकारिविशेषणज्ञानमपि प्रवृत्त्यङ्गमिति भावः ॥ अधिकार्यादीति ॥ अज्ञानिनोऽधिकारित्वात् अज्ञातस्य विषयत्वात् अज्ञाननिवृत्तेश्च प्रयोजनत्वादिति भावः। सर्वज्ञस्याज्ञानं न घटते चेत् 'निराश्रयमज्ञानमस्तु' इत्याशङ्क्य साश्रयत्वनियममाह ॥ अज्ञानं हि कस्यचिदिति ॥ सविषयत्वं चाङ्गीकरणीयमित्याह ॥ क्वचिदिति ॥ 'अस्य अत्र अज्ञानं' इत्यनुभवादज्ञानस्य विषयसापेक्षत्वं [2]आश्रयसापेक्षत्वं अङ्गीकर्तव्यमिति हिशब्दार्थः।

---

[1] कुत्र च तत् सम्भवति. [2] आश्रयसापेक्षत्वमिति आत्मसापेक्षत्वं च.

(मं. टि.) नन्वथापि परमात्मातिरिक्त एवाश्रयोऽस्त्वित्यत आह ॥ न चेति ॥ परमात्मातिरिक्तं [1]अज्ञानाधिकरण पारमार्थिकं? किं वा अपारमार्थिकं? आद्यं दूषयति ॥ [2]वस्तु न विद्यत इति ॥ द्वितीये तस्याज्ञानकल्पितत्वादन्योन्याश्रयः स्यादिति भावः। फलितं दर्शयति ॥ इतीति ॥[3] सर्वज्ञस्यापि दोषबलादज्ञानं किं न स्यात्? इत्यत आह ॥ कुतश्चनेति ॥ दोषस्याप्यविद्यां विना असम्भवादिति भावः। अथ वा कुतश्चनेति प्रतीकमुपादाय [4]कुत्र चेति तद्व्याख्या। एवं च विषयासम्भवप्रतिपादनमपि कारिकारूढं भवति। ततश्च विषयासम्भवेनाज्ञानासम्भवमुपपादयितुं 'अज्ञानं हि क्वचिद्भवति' इत्यज्ञानस्य सविषयत्वसमर्थनं टीकाकारीयं सङ्गच्छते। उक्तार्थे हेतुमाह ॥ सर्वज्ञत्वादिति ॥ समानाश्रयसमानविषयकज्ञानाज्ञानयोर्विरोधात् ईश्वरज्ञानस्य च सर्वविषयकत्वात् न तस्य किञ्चिद्विषयकमज्ञानं सम्भवतीत्यर्थः। उपसंहरति ॥ अत इति ॥

ननु कथमत्र प्रयोगः? अज्ञानं नास्ति आश्रयसापेक्षत्वे सति तद्रहितत्वात्, विषयसापेक्षत्वे सति तद्रहितत्वाद्वा, साश्रयनिराश्रयान्यतरानन्तर्भावाद्वा, सविषयनिर्विषयान्यतरानन्तर्भावाद्वा इत्यादिषु आश्रयासिद्धेः। अथैवं प्रयोगः, प्रमेयत्वं साश्रयनिराश्रयान्यतरमात्रनिष्ठं सविषयनिर्विषयान्यतरमात्रनिष्ठं वा धर्मत्वात् [5]घटवदिति। अनेन चानुमानद्वयेन साश्रयनिराश्रयसविषयनिर्विषयानन्तर्भाविनोऽज्ञानस्य [6]असत्वमापाद्यत इति चेत् अत्र वक्तव्यम्, किं मात्रपदव्यावर्त्यमिति। [7]उभयव्यतिरिक्तमिति चेत् तत्किं प्रमितं? उत न? नाद्यः। प्रमितत्वादेव [8]तत्र प्रमेयत्वसम्भवेन मात्रशब्देन पुनस्तद्व्यावर्तने व्याघातात्। न द्वितीयः। अप्रमितव्यावृत्त्यर्थे पदप्रयोगानुपपत्तेः। तस्मात् 'व्याप्यस्याज्ञानस्याप्यभावः' इति कथमुक्तं? इति चेत् इत्थमभिप्रेत्योक्तम्। जगदुपादानं नाज्ञान निराश्रयत्वात् निर्विषयत्वादित्यन्वयव्यतिरेकिद्वयेन उभयवादिसिद्धस्य [9]जगदुपादानस्याज्ञानत्वनिषेधात् न त्वदभिमताज्ञानसिद्धिः। नियमेन आश्रयविषयज्ञप्तिसापेक्षप्रतीत्यविषयत्वस्य हेतुत्वान्न कश्चिद्दोषः। यद्वा परारीत्या प्रसक्तं मात्रपदेन व्यावर्त्यत इति पूर्वप्रयोग एवास्त्विति।

### सर्वज्ञत्वाज्ञानाभावयोर्व्याप्तिसमर्थनम्

(टी.)ननु सर्वज्ञस्याज्ञता न घटत इत्यत्र नान्वयदृष्टान्तः। परमात्मना विना अन्यस्य सर्वज्ञस्याभावात्। नापि व्यतिरेकदृष्टान्तः। अज्ञानाश्रयस्यान्यस्य परेणानभ्युपगमात्। तत् कथमेतत्? इति। मैवं। 'यो यत्र ज्ञानवान् नासौ तत्राज्ञानवान्' इति सामान्यव्याप्तेरविरोधात्।

---

[1] किं पारमार्थिकमज्ञानाधिकरणं? किं वा अपारमार्थिकम्?

[2] ॥ न वस्तु विद्यत इति ॥ द्वितीयस्याज्ञानकल्पितत्वात् आत्माश्रयः स्यादिति भावः

[3] सर्वज्ञस्यापि विशेषबलादज्ञानं किं न स्यादित्यत आह ॥ कुतश्चनेति ॥ विशेषस्याप्यविद्यां विना असम्भवादिति भावः इति मुद्रितः पाठः। मायिमते विशेषानङ्गीकारेण अयं पाठो नैव साधुः। [4] कुत्रेति. [5] घटवदित्यनुमानद्वयेन. [6] असत्वमापद्यत इति चेत् अत्र वक्तव्यम्. [7] अतिरिक्तमिति चेत्. [8] प्रमेयत्वसद्भावेन मात्रशब्देन पुनः तद्व्यावर्तने व्याघातः

[9] जगदुपादानस्याज्ञानस्य निषेधात् इति पाठान्तरम्। अयं पाठोऽसाधुरेव। अज्ञानस्य जगदुपादानताया उभयवादिसिद्धत्वाभावात्.

(टी.) ननु सर्वं हि यो जानाति स सर्वज्ञः । तिस्रश्चास्य विधाः सम्भवन्ति । प्रमाणतो वा सर्वं जानीयात् भ्रान्त्या वा स्वभावसिद्धया प्रज्ञया वा । न चैता विधा विना अज्ञानेनोपपद्यन्ते । कूटस्थस्य अज्ञानादृते प्रमातृत्वायोगात् । भ्रान्तेश्च अज्ञानकार्यत्वात् । स्वरूपप्रज्ञायाश्च नान्तरेणाज्ञानमशेषार्थसङ्गतिः । असङ्गत्वात् 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः । अतः सर्वज्ञताप्यज्ञानवत्तामाक्षिपत्येव परमात्मनो, न प्रतिक्षिपतीति । मैवम्, मा भूत् प्रमाणेन मा च भूत् भ्रान्त्या, स्वरूपज्ञानेनैव परमात्मनः सर्वज्ञताङ्गीकारात् । असङ्गत्वं तु तत्कृतफललेपाभावमात्रम् । न च सम्बन्धविरह एव । 'यथाऽऽकाशस्थितो नित्यं वायुः' इत्यादितथाविधदृष्टान्तोपादानात् । तदिदमुक्तम् 'अखिलसंवेत्तुः' इति । अत्र सम् इत्युपसर्गेण भ्रान्त्या सर्वज्ञतां वारयति, ताच्छीलकतृन्प्रत्ययेन प्रमाणजन्यताम् इति स्वभावज्ञानेनैवोक्ता भवति ।

(मं. टि.) शङ्कते ॥ नन्विति ॥ विमतः कदाऽपि किञ्चिद्विषयकाज्ञानवान्न भवति सदा सर्वज्ञत्वात् यो यदा यत्र ज्ञानवान् नासौ तदा तत्राज्ञानवान् यथोभयसम्मतः । विमता विषया वा कदापि न तदज्ञानविषयाः सदा तज्ज्ञानविषयत्वात् यो यदा यज्ज्ञानविषयः नासौ तदा तदज्ञानविषयः यथोभयसंमत इत्यभिप्रेत्य सिद्धान्तयति ॥ मैवमिति ॥

शङ्कते ॥ नन्विति ॥ प्रमाणत इति ॥ अन्तःकरणवृत्त्येत्यर्थः ॥ भ्रान्त्या वेति ॥ ननु कथमेतत्? भ्रान्तिर्हि विशेषाज्ञाननिबन्धना । विशेषाज्ञानं च सर्वज्ञस्य न सम्भवतीति चेन्न । विशेषज्ञानस्यापि भ्रान्तिरूपस्य स्थाणौ करचरणादिभ्रान्तेरिव भ्रान्त्यङ्गत्वात् । आद्ये अज्ञानावश्यम्भाव इत्याह ॥ कूटस्थस्येति ॥ कूटवत्तिष्ठतीति कूटस्थः निर्विकारः तस्येत्यर्थः । प्रमातृत्वं हि प्रमाश्रयत्वं । आश्रयाश्रयिभावश्च निर्विकारे न सम्भवतीति भावः । द्वितीयेऽप्यज्ञानमावश्यकमित्याह ॥ भ्रान्तेश्चेति ॥ तृतीयेऽप्यज्ञानं स्वीकर्तव्यमित्याह ॥ स्वरूपेति ॥ इति श्रुतेरिति ॥ सङ्गाभावः श्रुत्यर्थ इति मन्यते । परिहरति ॥ मैवमिति ॥ स्वरूपज्ञानेनेति ॥ ननु कथमेतत्? स्वरूपज्ञानस्य अज्ञानस्फोरकत्वेन तद्विरोधित्वाभावात् । ततश्च 'यो यत्र ज्ञानवान् नासौ तत्राज्ञानवान्' इति व्याप्तौ वृत्त्यतिरिक्तस्य स्वरूपज्ञानस्यापि विवक्षायां व्यभिचारः । 'त्वदुक्तमर्थं न जानामि' इत्यत्र ज्ञायमान एव साक्षिणा त्वदुक्तेऽर्थे अज्ञानस्यास्माभिरङ्गीकारात् । वृत्तिमात्रविवक्षायां तु असिद्धिः । स्वरूपज्ञानेनैव सर्वज्ञत्वाङ्गीकारेण वृत्तेरभावादिति चेत् । मैवं । वृत्तिमात्रस्य विरोधित्वे परोक्षवृत्तेरप्यज्ञाननिवर्तकत्वप्रसङ्गात् । तच्च त्वया 'परोक्षवृत्त्याप्यज्ञाननिवृत्तौ अभिव्यक्तापरोक्षैकरसचैतन्यसंभेदेन अतीतादेरपरोक्षप्रसङ्गः' इति बाधकं पश्यता नाङ्गीक्रियते । अपरोक्षवृत्तिर्विरोधिनीति चेन्न । तथा सति श्रवणमात्रेणापरोक्षज्ञानं वदतस्तव श्रवणजन्यज्ञानेनैव अज्ञाननिवृत्तौ मननादिवैयर्थ्यापातात् । ननु स्फुरणपर्यवसायिनी वृत्तिरज्ञानविरोधिनी । श्रवणमात्रेण च मनननिदिध्यासनसम्पाद्यासम्भावनाविपरीतभावनाप्रतिबन्धनिरा-

(मं. टि.) साभावेन स्फुरणपर्यवसायिनी वृत्तिर्नोदेतीति चेत् तर्हि प्राप्ताप्राप्तविवेकेन स्फुरणापरपर्यायं स्वरूपज्ञानमेव निवर्तकमिति कथं सर्वज्ञस्याज्ञानम्। अपि च वृत्तेरज्ञानोपादेयत्वात् उपादानोपादेययोश्च विरोधाभावात् विरोधस्य च निवर्त्यनिवर्तकभावप्रयोजकत्वात् न कुत्रापि वृत्तिरज्ञानविरोधिनी । एवं च 'त्वदुक्तमर्थं न जानामि' इत्यादौ स्वरूपज्ञानाङ्गीकारे तदपि पक्षतुल्यमिति कुतो व्यभिचारः ? इत्यलम् ।

॥ न च सम्बन्धेति ॥ सम्बन्धाभावपरत्वे व्याप्तत्वव्याघातः । युगपत्सर्वसम्बन्धित्वस्य व्याप्तत्वात् । न च महत्परिमाणाश्रयत्वं व्याप्तत्वम् । त्वया ब्रह्मणि परिमाणानङ्गीकारात् । न च देशपरिच्छेदाभावो व्याप्तत्वम् असत्यतिव्याप्तेः । [1]न ह्यसत् 'अत्रैव' इति देशविशेषेणावच्छिद्यते । न च सत्त्वे सतीति विशेषणीयम् । ब्रह्मण्यपि स्वरूपातिरिक्तसत्त्वानभ्युपगमात् । तत्तद्वस्तुसम्बन्धाभावे तस्यैवासम्भवाच्च । सर्वत्र विद्यमानत्वं व्याप्तत्वमिति चेन्न । सर्वत्र विद्यमानत्वे तत्सम्बन्धस्यावर्जनीयत्वादिति भावः । युक्त्यन्तरमप्याह ॥ यथेति ॥ ताच्छीलिकतृन्प्रत्ययेनेति ॥ 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इत्यधिकृत्य 'तृन्' इत्यनेन सूत्रेण विहितो यस्तृन्प्रत्ययः तेनेत्यर्थः । यद्यपि 'विद्यतिर्विन्ते' इत्यनिट्कारिकायां श्यना श्नमा च निर्देशात् विद सत्तायां विद विचारणे [2]इत्यनिट्त्वोक्त्या विद ज्ञान इत्यस्य सेट्त्वज्ञापनात् 'वेदिता विद्यानां' इति प्रयोगाच्च ज्ञानार्थविवक्षायां अखिलसंवेदितुः इति वक्तव्यम् । तथापि विद विचारण इत्यस्य अनिट्त्वेन परिगणनात् अनिट्कारिकायां 'विन्नवित्तौ विचारित' इति विचारणार्थस्यानिट्त्वेन प्रयोगाच्च विचारणार्थेन विदधातुना विचारसाध्यविशेषज्ञानस्य लक्षयितुं शक्यत्वात् अखिलसंवेत्तुः इति प्रयोगः साधुरिति द्रष्टव्यम् ।

### जीवब्रह्मणोरुपाधिनिमित्तभेदशङ्का

(टी.) शङ्कते

## उपाधिभेदाद्घटत इति चेत्.................. ॥

उपाधिनिमित्तो भेद उपाधिभेदः । घटते अज्ञतेति सम्बन्धः । यदुक्तं 'ब्रह्मणोऽखिलसंवेत्तुरज्ञता न घटत, इति तन्न। अज्ञानस्य जीवाश्रयत्वाभ्युपगमात् । ननु जीवो ब्रह्मणो न भिद्यत इति ते मतं । सत्यं, तथाप्युपाधिनिमित्तो भेदोऽस्त्येव । तत्र यथा सत्यपि बिम्बप्रतिबिम्बयोरैक्ये दर्पणाद्युपाधिनिमित्तभेदात् बिम्बस्यावदातत्वेऽपि प्रतिबिम्बस्य श्यामता घटते एवं जीवब्रह्मणोः सत्यप्यभेदे ब्रह्मणः सर्वज्ञत्वेऽपि जीवस्याज्ञता घटत एव उपाधिभेदादिति ।

---

[1] 'न ह्यसत्' इतीदं वाक्यं 'तत्तद्वस्तुसम्बन्धाभावे' इत्येतद्वाक्यानन्तरं मुद्रितपुस्तके दृश्यते । तदनन्वितम् । अतोऽयमेव पाठः साधुरिति भाति.

[2] इत्यनयोर्धात्वोरनिट्त्वोक्त्या.

(मं. टि.) उपाधिभेदात् सर्वज्ञस्याज्ञानं घटत इति शङ्कितं मूले। तदयुक्तमेव। उपाधीनामन्योन्यभेदेऽपि सर्वज्ञस्याज्ञानानुपपत्तेस्तदवस्थत्वात् इत्यत आह ॥ **उपाधिनिमित्त इति** ॥ नायमुपाधीनां भेद इति षष्ठीतत्पुरुषः। किं तर्हि? मध्यमपदलोपी समासः। अथ वा उपाधेर्भेद इति पञ्चमीतत्पुरुषः। हेतौ पञ्चमी। यद्वा षष्ठीसमास एवास्तु। षष्ठ्यर्थश्च हेतुहेतुमद्भाव इत्यर्थः। जीवब्रह्मणोरुपाधितो भेदेऽपि कथं सर्वज्ञस्याज्ञानं? इत्याशङ्क्य अभिप्रायमाह ॥ **यदुक्तमित्यादिना** ॥ नन्वौपाधिकभेदसद्भावेऽपि स्वाभाविकाभेदेन जीवस्य सर्वज्ञता किं न स्यात्? इत्यत आह ॥ **तत्रेति** ॥ उपाधितो भेदे सतीत्यर्थः। [1]औपाधिकधर्मिभेदमात्रेणौपाधिकसार्वज्ञादिव्यवस्थोपपत्तेः स्वाभाविकधर्मव्यवस्थायाश्चानङ्गीकारान्न स्वाभाविकभेदापेक्षेति भावः।

### जीवाज्ञानवादिमायिमते अज्ञानोपाध्योर्भेदे अपसिद्धान्तानवस्थादोषौ

(टी.) तदिदं दूषयितुं पृच्छति

..................................स स्वभावतः ॥ २ ॥

अज्ञानतो वा.................................. ।

स्यादपीदं जीवाज्ञानमतं यद्युपाधिरुपपद्येत। स एव त्रिविच्यतां। किं स्वभावतः अकल्पित इति यावत्। अज्ञानतो वा कल्पितः इति शेषः। आद्यं दूषयति

............द्वैतस्य सत्यता स्वत एव चेत्।

तथा चापसिद्धान्तः स्यात् इति भावः। द्वितीयं निराकरोति

अनवस्थितिरज्ञानहेतौ........................ ॥

अज्ञानहेताविति तत्पुरुषो बहुव्रीहिश्च द्वावपि तन्त्रेण उपात्तौ। स इति प्रथमान्तं प्रकृतमपि अर्थात् इह सप्तम्यन्तं सम्बद्ध्यते। अज्ञानस्य हेतौ उपाधौ अज्ञानहेतुके अङ्गीक्रियमाणे अनवस्थितिः स्यात्। सति खलु उपाधौ तद्भिन्नस्य जीवस्य अज्ञानं स्यात्। उपाधिश्च अज्ञाने सति स्यात् अज्ञानं च उपाधौ सतीति। नन्वेवमज्ञानोपाधिपरम्परैव स्यात् नानवस्था इति चेन्न। असिद्धविषयत्वेनानवस्थात्वात्। अज्ञानं प्रतीतिसिद्धं परम्परां कल्पयिष्यतीति चेन्न। आत्यन्तिकभेदेनैव तस्योपपत्तेः।

### जीवाज्ञानवादिमायिमते अज्ञानोपाध्योर्भेदे अन्योन्याश्रयदोषः

स्यादेवं, यदि अज्ञानोपाधिव्यक्तिभेदः स्यात्। न चैवं, एकमेव अज्ञानं उपाधिश्च इत्यङ्गीकारादिति चेत् एवं तर्हि मा भूत् अनवस्था। अन्योन्याश्रयस्तु भविष्यति इत्याह

[1] औपाधिकधर्मभेदमात्रेण इति मुद्रितपाठः धर्मिणोर्जीवब्रह्मणोरेवौपाधिकभेदस्य प्रकृतत्वादसाधुरेव।

........................वाऽन्योन्यसिद्धिता ॥ ३ ॥

(टी.) वाशब्दो व्यवस्थितविकल्पे । अन्योन्येन सिद्धिर्ययोस्तावन्योन्यसिद्धी तद्भावोऽन्योन्यसिद्धिता । अज्ञानोपाध्योरिति सम्बन्धः ।

जीवाज्ञानवादिमायिमते अज्ञानोपाध्योर्भेदे चक्रकदोषः

ननूपाधेरज्ञाननिमित्तकत्वेऽप्यज्ञानस्य उपाधिहेतुकत्वाभावात् कथं इतरेतराश्रयः? भेद एव ह्युपाधिनिमित्तोऽङ्गीक्रियत इत्यत आह

चक्रकापत्तिरथ वा........................ ।

अथ वा इत्ययं निपातसमुदायः पक्षान्तरद्योतकः । यद्यपि भेद एवोपाध्यधीन उक्तः तथापि उपाधिभिन्ने जीवेऽपि अज्ञानमङ्गीक्रियमाणं परम्परया उपाधिहेतुकं भवेत् इति नेतरेतराश्रयः शक्यसमाधानः । परम्परानाश्रयणेऽपि चक्रकमापद्यत एव । अज्ञानाधीन उपाधिः तदधीनो भेदः भिन्नाश्रयमज्ञानमिति । अथ वा अथशब्द एव पूर्वत्र सम्बद्ध्यते । वाशब्देन आत्माश्रयत्वादिकं पक्षान्तरे सूचयति ।

(मं. टि.) ननु अज्ञानहेतौ इत्यत्र किं षष्ठीतत्पुरुषो विवक्षितः? किं वा बहुव्रीहिः? उभयं वा ? नाद्यद्वितीयौ । उपाध्यज्ञानयोः कार्यकारणभावाभावेनानवस्थानवकाशात् । न तृतीयः । युगपदुभयविवक्षायोगादित्यत आह ॥ अज्ञानहेताविति तत्पुरुषो बहुव्रीहिश्चेति ॥ [1] उभयविवक्षानुपपत्तिं परिहरति ॥ तन्त्रेणेति ॥ सकृदुच्चरितमनेकोपकारकं तन्त्रम् ॥ स इतीति ॥ स स्वभावतः इत्यतोऽनुषक्तस्य तच्छब्दस्य यथाश्रुतविभक्त्यङ्गीकारे अनन्वयात् 'सक्तून् जुहोति' इत्यादाविव विभक्तिविपरिणामः क्रियत इति भावः । उपाधेः कारणभूताज्ञानसापेक्षत्वेऽपि नाज्ञानस्योपाधिसापेक्षत्वं भेदमात्रसापेक्षत्वात् इत्याशङ्क्याह ॥ सति खलूपाधौ तद्भिन्नस्येति ॥ नानवस्थेति ॥ बीजाङ्कुरादाविव उत्पत्तिज्ञप्तिप्रतिबन्धकत्वाभावेन नानवस्था दूषणमित्यर्थः । तत्र बीजाङ्कुरपरम्परा प्रामाणिकी । अत्र त्वज्ञानादिपरम्परा अप्रामाणिकीत्यनवस्था दूषणमिति परिहरति ॥ [2] न सिद्धेति ॥ कार्यमेवाज्ञानं कारणपरम्परां कल्पयिष्यतीति कथमप्रामाणिकत्वं? इति शङ्कते ॥ अज्ञानं प्रतीतिसिद्धमिति ॥ परिहरति ॥ नेति ॥ आत्यन्तिकभेदाङ्गीकारेणैवाज्ञानप्रतीतिर्निर्वाह्या । अन्यथा अनन्तोपाध्यादिव्यक्तीनां कल्प्यतया गौरवं स्यादिति एवकारार्थः ॥ 'व्यवस्थितविकल्प इति ॥ उपाधिव्यक्तीनामज्ञानव्यक्तीनां च आनन्त्ये अनवस्था, उपाधिव्यक्तेरज्ञानव्यक्तेश्च एकैकत्वे अन्योन्याश्रय इति पक्षभेदेन व्यवस्थितयोर्दूषणयोर्विकल्पे वाशब्दो वर्तते । अनवस्थाया अनन्तव्यक्तिसापेक्षत्वात् अन्योन्याश्रयस्य च व्यक्तिद्वयसापेक्षत्वात् एकस्मिन्नेव

---

[1] युगपदुभयविवक्षानुपपत्तिरित्यत आह ॥ तन्त्रेणेति ॥ सकृदुच्चरितस्यानेकोपकारकत्वं तन्त्रत्वम् । [2] ॥ असिद्धेति ॥

(मं. टि.)पक्षे वैकल्पिकदूषणद्वयायोगादित्यर्थः ॥ अथ वा इत्यत्र निपातसमुदायः किं व्यवस्थितविकल्पार्थः? किं वा अव्यवस्थितविकल्पार्थः । नाद्यः । 'उपाधौ सति तद्भिन्नस्य जीवस्याज्ञानं, अज्ञाने सत्युपाधिः' इत्यन्योन्याश्रयपक्ष एव 'उपाधौ सति भेदः, भेदे सत्यज्ञानं, अज्ञाने च सति उपाधिः' इति चक्रकाश्रयोक्तेः पक्षभेदाभावात् । न द्वितीयः । कोटित्रयसद्भावेन अन्योन्याश्रयविकल्पानुपपत्तेरित्यत आह ॥ यद्यपीत्यादिना ॥ व्यवस्थितविकल्पार्थ एव निपातसमुदायः । न च पक्षभेदाभावः । परम्पराश्रयणपक्षे अन्योन्याश्रयः । तदनाश्रयणे च चक्रकापत्तिरिति पक्षभेदात् । अत एव अथ वेत्ययं निपातसमुदायः इति टीकायां पक्षान्तरशब्देन परम्परानाश्रयणपक्षो विवक्षित इति द्रष्टव्यम् । अथ वा उक्तविकल्पं अथशब्दोऽद्योतयत् । वाशब्दोऽनुक्तविकल्पार्थ इत्याह ॥ अथ वेति ॥

### जीवाज्ञानवादिमायिमते अज्ञानोपाध्योरभेदे अपसिद्धान्तात्माश्रयदोषौ

(टी.) तत्रेयमाशङ्का । स्यादेतदन्योन्याश्रयादिकं यदि अन्तःकरणादिकं अज्ञानादन्यदेवोपाधितया अङ्गीक्रियते । न चैवम् । अज्ञानस्योपाधितया अङ्गीकारात् ।

नन्वविद्या किंसम्बन्धिनी भेदनिमित्तं । दर्पणादिद्रव्यमपि किंसम्बन्धि भेदनिमित्तं । मुखमात्रसम्बन्धि इति चेत् इहापि चित्स्वरूपमात्रसम्बन्धि अज्ञानं जीवब्रह्मभेदं करोति । स्वरूपमात्रसम्बन्धिनोप्यज्ञानस्य जीवभागपक्षपातिता दर्पणादिवत् युज्यत इति ।

तत्रापि वक्तव्यं तत् अज्ञानमज्ञानकल्पितं? उत न? इति । नेति पक्षे पूर्ववदपसिद्धान्तः । आद्ये त्वात्माश्रयः स्यादिति । नन्वज्ञानं जीवब्रह्मभेदश्चानादिरेव । किं नाम? अज्ञानाधीन एवेति कथमात्माश्रयादिकं? इति । मैवं । किञ्चिदुपकाराभावे तदधीनताया एव मृषात्वात् । तद्भावे त्वात्माश्रयाद्यनिस्तारात् । उत्पत्तिज्ञप्त्योरिव प्रवृत्त्यादेरपि प्रतिबन्धेन तस्य दूषणत्वात् । बिम्बप्रतिबिम्बयोरभेदाभावस्यान्यत्रोपपादितत्वात् दृष्टान्तो निरस्त एव ।

(मं. टि.) नन्वज्ञानमेव चेदुपाधिस्तर्हि तदेव भेदकं वाच्यम् । तथा च तत्किं असम्बद्धं भेदनिमित्तं? उत सम्बद्धं? आद्येऽतिप्रसङ्गः । द्वितीयं विकल्पयति ॥ नन्वविद्या किंसम्बन्धिनीति ॥ अविद्या जीवसम्बन्धिनी ब्रह्मसम्बन्धिनी वा? नोभयमपि । तद्विभागस्य अविद्याऽधीनत्वादिति किंशब्दार्थः । दर्पणादिद्रव्यमपि किं बिम्बसम्बन्धि भेदनिमित्तं? किं प्रतिबिम्बसम्बन्धि? नोभयमपि । तद्विभागस्य उपाधिसम्बन्धाधीनत्वादिति गूढाभिसन्धिः परः परिहरति ॥ दर्पणादीति ॥ चिन्मात्रसम्बन्ध्यज्ञानं भेदनिमित्तमिति गूढाभिसन्धिरभिप्रायं विवरितुं शङ्कते ॥ मुखमात्रेति ॥ अभिप्रायं विवृणोति ॥ इहापीति ॥ दर्पणादिवद्युज्यत इति ॥ उपाधेः प्रतिबिम्बपक्षपातित्वस्याभाव्यादित्यर्थः ॥ पूर्ववदपसिद्धान्त इति ॥ अज्ञानस्यानिर्वचनीयत्वं वदता तस्याप्यर्थादज्ञानकल्पितत्वा-

(मं. टि.)भ्युपगमादिति भावः । यद्वा अज्ञानस्य कल्पितत्वं वदता तस्यानादित्वे कल्पितत्वायोगात् सादित्वे वाच्ये उपादानान्तराभावात् [1]अज्ञानोपादानकत्वस्य अर्थादङ्गीकृतत्वादिति भावः । अथ वा अज्ञानस्य कल्पितत्वं वदता अन्तःकरणादेरिव अज्ञानस्याधिष्ठानचैतन्यावरणं विना कल्पनायोगात् अज्ञानं च विना आवरणान्तराभावात् अज्ञानकल्पनापि अज्ञानाधीनेत्यर्थादङ्गीकृतत्वादिति भावः । आद्यं दूषयति ॥ **आद्ये त्वात्माश्रयः स्यादिति ॥**

एतेनैतदपि निरस्तं, यथा भवतां भेदो भेदान्तरमन्तरेणैव भिन्नः एवमज्ञानमज्ञानान्तरमन्तरेणैव कल्पितम् । यथोक्तं,

> भेद्यं च भेद च भिनत्ति भेदो यथैव भेदान्तरमन्तरेण ।
> मोहं च कार्यं च भिनत्ति मोहस्तथैव मोहान्तरमन्तरेण ॥ इति ।

अज्ञानान्तरानपेक्षणेनानवस्थाया अभावेऽपि आत्माश्रयापरिहारात् । न च भेदः प्रतिबन्दी । न हि यथा त्वया अज्ञानेतराध्यासः अज्ञानसापेक्षः अज्ञानाध्यासस्तु तन्निरपेक्ष इति स्वीक्रियते तथा मया स्वरूपभेदवादिना घटादौ भिन्नत्वं भेदान्तरसापेक्षं भेदे तु तन्निरपेक्षमित्यङ्गीक्रियते । किं नाम ? सर्वत्र निरपेक्षमिति । तथा च त्वयापि तद्वदेव अन्तःकरणाध्यासोऽपि अज्ञाननिरपेक्ष इत्यङ्गीकार्यं स्यात् । तथा चापसिद्धान्त इत्यलम् ।

**शङ्कते ॥ नन्विति ॥** चशब्देन अज्ञानकार्योपाधेरपि प्रवाहतोऽनादित्वमुक्तं । किं नामेत्यत्र अज्ञानशब्देन तदुपादानकोपाधिरपि विवक्ष्यते ॥ **अज्ञानाधीन एवेति ॥** यथा अज्ञानसम्बन्धस्य 'षडस्माकमनादयः' इत्युक्तत्वेन अनादित्वेऽप्यज्ञानाधीनत्वं सम्बन्धस्य सम्बन्धिनिरूप्यत्वात् तद्वत् [2]जीवब्रह्मविभागोऽपि अनादिरपि अज्ञानाधीन इत्यर्थः । कथमात्माश्रयादिकं ? इत्यत्र [3]प्रकृतार्थे दूषणमिति शेषः । विभागस्याज्ञानाधीनत्वं तत्कृतोपकाराभावे न सम्भवतीत्युपकारो वक्तव्यः । स च नोत्पत्तिः । अनादित्वेनैव त्वया अङ्गीकारात् । नापि ज्ञप्तिः । अज्ञानाद्यप्रतीतावपि 'अहमन्यः' इति विभागप्रतीतेरित्याह ॥ **किञ्चिदुपकाराभाव इति ॥**

एतेन सम्बन्धप्रतिबन्द्यपास्ता । सम्बन्धप्रतीतेः सम्बन्धिप्रतीतिसापेक्षत्ववत् विभागप्रतीतेः अज्ञानप्रतीतिसापेक्षत्वाभावात् । अथ द्रव्यत्वगुणित्वयोरिवानादित्वेऽपि प्रयोज्यप्रयोजकभावोऽङ्गीक्रियते । तत्र यथा गुणित्वस्य द्रव्यत्वाधिकरणनियामकत्वात् तत्प्रयोजकत्वं एवं प्रकृतेऽपि अज्ञानादेर्विभागाधिकरणनियामकत्वात् तत्प्रयोजकत्वं । ततो विभागस्याज्ञानाधीनत्वमुपपन्नमिति तत्राह ॥ **तद्भावे त्विति ॥** अस्माभिस्तु गुणित्वादेः कस्य-

---

[1] अज्ञानोपादानकत्वस्यापि. [2] जीवब्रह्मविभागोऽनादिरपि. [3] प्रकृतार्थदूषणमिति.

(मं. टि.) चित् स्वतो नियताश्रयत्वमङ्गीक्रियते । न चैवं त्वया अङ्गीकर्तुं शक्यम् । अज्ञानादेरपि ब्रह्मण्यद्वितीये स्वतोऽसम्भवादिति भावः । ननु उत्पत्त्याद्यप्रतिबन्धकत्वात् नान्योन्याश्रयादि दूषणमित्यत आह ॥ उत्पत्तिज्ञप्त्योरिवेति ॥ प्रवृत्त्यादेरिति ॥ अत्र आदिशब्देन नियमनं विवक्षितं । प्रवृत्तिग्रहणं तु दृष्टान्तार्थं । [1]यथा स्वप्रवर्त्यस्य स्वप्रवर्तकत्वे स्वस्यैव स्वप्रवर्तकत्वे वा प्रवृत्तिप्रतिबन्धः एवं स्वनियम्यस्य स्वनियामकत्वे स्वस्यैव स्वनियामकत्वे वा नियमनप्रतिबन्धः स्यात् । [2]' येन आकारेण यत् यन्नियम्यं न तत् तेन आकारेण तन्नियामकं ' इति व्याप्तेः नियम्यनियामकभावस्य भेदगर्भत्वाच्चेत्यर्थः ।

## जीवाज्ञानवादिमायिमते अज्ञानस्योपाधित्वे अनुपपत्तयः

किं च उपाधेरत्यन्तासतः चैतन्यसम्बन्धे अतिप्रसङ्गात् प्रातिभासिकत्वं वक्तव्यं । न च तद्वक्तुं शक्यं । प्रातिभासकत्वस्य प्रतिभाससम्बन्धाधीनत्वेन अन्योन्याश्रयप्रसङ्गात् । अपि चायमुपाधिः किं केवलचैतन्यवेद्यः? [3]किं वोपाधिभिन्नचैतन्यवेद्यः? नाद्यः आरोपितस्य यावत्प्रतीत्यनुवर्तननियमेन तदनुवृत्तिप्रसङ्गात् । न द्वितीयः । अन्योन्याश्रयात् । किं चायं घटादिः गगन इव ब्रह्मण्युपाधिः? किं वा दर्पणादिर्मुख इव? यद्वा अङ्गुल्यवष्टम्भादिश्चन्द्र इव? अथ वा जपाकुसुमादिः स्फटिकादाविव? नाद्यः । असङ्गस्याज्ञानेतरसम्बन्धाभाववत् स्वभावतोऽज्ञानसम्बन्धस्याप्यनुपपत्तेः । न द्वितीयः । आत्मनोऽतीन्द्रियस्य प्रतिबिम्बनासम्भवात् । अतीन्द्रियस्यापि प्रतिबिम्बने पर्वतगतगुरुत्वस्यापि आदर्शे प्रतिबिम्बनेन आदर्शस्यानुद्धार्यत्वप्रसङ्गः । [4]नापि तृतीयः प्रमेयसम्बन्धित्वेन त्वया अङ्गीकारात् । करणासम्बन्धित्वाच्च । न चतुर्थः स्वगतधर्मानुपसङ्क्रामकत्वात् । न हि जपाकुसुमादौ रक्तत्वमिवाज्ञानादौ दुःखाद्यनुसन्धातृत्वमस्ति । किञ्च औपाधिक इति कोऽर्थः । किमुपाधिकृत इति? किं वा उपाधिज्ञापित इति? नाद्यः सत्त्वाविरोधेन मयाऽपि तदङ्गीकारात् । द्वितीयेऽपि किं विद्यमान एव ज्ञाप्यते? किं वा अविद्यमानप्रतिभासमात्रं क्रियते? नाद्यः इष्टापत्तेः । न द्वितीयः प्रमेयसम्बन्ध्युपाधेः तदभावस्य वक्ष्यमाणत्वात् । किं च अयं विभागः किं सादिः? उत अनादिः? नाद्यः मुक्तस्य संसारप्रसङ्गात् । न द्वितीयः । अध्यस्तत्वायोगात् । न हि स्वरूपेणानादिरध्यस्यते । अन्यथा ब्रह्मणोऽपि तथाभावः प्रसज्येत । यच्चोक्तमुपाधेः प्रतिबिम्बपक्षपातित्वमिति तन्न । तथात्वे बिम्बस्थानीयब्रह्मगतसर्वज्ञत्वादेरनुपाधिकत्वापातात् ।

## चैतन्यमात्रस्याज्ञानसम्बन्धानुपपत्तिः

किं च चैतन्यमात्रस्याज्ञानसम्बन्धः किमौपाधिकः? किं वा स्वाभाविकः? । आद्यऽनवस्थादिः । द्वितीये आनन्दादिवदनिवृत्तिप्रसङ्गः । किं च न सुखमात्रवत् चैतन्यमात्रमस्ति । ब्रह्मादिभावस्यानादित्वात् ।

---

[1] तत्प्रवर्त्यस्य तत्प्रवर्तकत्वे. [2] येनाकारेण यन्नियम्यं. [3] किंवोपाधेर्भिन्नचेतनवेद्यः

[4] निर्विशेषस्य प्रतिबिम्बनानुपपत्तेः । नापि तृतीयः

(मं. टि.) मुक्तावपि 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मत्वस्यानपायश्रवणात्। अन्यथा उपचरितार्थत्वप्रसङ्गात्। किं च स्फुरणस्यैव अज्ञानविरोधित्वोपपादनात् कथं चैतन्यस्याज्ञानसम्बन्धः। अपि च वक्ष्यमाण आकाशस्य उपाधिसम्बन्धनिरासप्रकारोऽत्रापि द्रष्टव्य इत्यलं प्रपञ्चेन।

चैतन्यमात्रस्याज्ञाननिरासप्रपञ्चस्तु

मोहं तत्साधकः साक्षी साधयेदहमो यदा।
अज्ञोऽहमिति केन स्याच्चिन्मात्रस्याज्ञता तदा॥

इत्यादिना अन्यत्रास्माभिः कृतो द्रष्टव्यः। अज्ञानस्यैव प्रतिफलनार्हत्वलक्षणोपाधित्वपक्षे दूषणान्तरमाह॥ बिम्बेति॥ ततश्चोपाधेः प्रतिबिम्बपक्षपातित्वस्वभावकल्पनं चाप्रामाणिकमिति भावः।

सत्योपाधिकृतसत्यभेदवाद्यद्वैतवादानुवादनिरासौ

(टी.) अपर आह, 'स्यादिदं मायावादिनां दूषणं, नास्माकं। 'एकमेव ब्रह्म अन्तःकरणाद्यनन्तोपाध्यवच्छेदात् अनन्तजीवभावमापद्यते' इत्यङ्गीकारेऽपि भेदस्य उपाधीनां च अस्माभिर्मिथ्यात्वानङ्गीकारात्। भेदसत्यत्वाङ्गीकारेऽपि स्वाभाविकभेदानङ्गीकारेण अद्वैतवादाविरोधात्। उपाधेः अज्ञानकल्पितत्वाभावेन अनवस्थाद्यभावात्। अंशांशिभावेन बिम्बप्रतिबिम्बभावाभावात्। अतो ब्रह्मजीवसम्बन्धिनी सर्वज्ञत्वाज्ञत्वे न विरुद्ध्येते' इति तत्राह

................भेदश्चोपाधितः कुतः।

मायावादे ह्युपाधेर्भेदस्य च कल्पितत्वेन अनवस्थादिदोषप्रसक्तावपि उपाधिनिमित्तो भेदावभास इत्येतावानंशो युज्यते। अङ्गुल्यवष्टम्भादिना चन्द्रादिभेदाध्यासदर्शनात्। अस्मिंस्तु पक्षे अनवस्थादिदोषाभावेऽपि उपाधितः भेदो भवतीत्येतन्न युज्यते। तदयोगे च जीवब्रह्माश्रयतया अज्ञतासर्वज्ञत्वयोर्व्यवस्थानं सुतरां न युज्यते इति चशब्दार्थः।

(मं. टि.) मायावादिभिः भेदस्योपाधिकृतत्वानङ्गीकारात् भेदश्चोपाधितः कुतः? इत्यनुक्तोपालम्भमाशङ्क्य मतान्तरनिराकरणपरतया भेदश्च इति पादं व्याख्यातुं शङ्कते॥ अपर आहेति॥ अन्तःकरणादीत्यादिशब्देन स्थूलोपाधिं देहं विवक्षति॥ मिथ्यात्वानङ्गीकारादिति॥ प्रत्यक्षादिप्रमाणसिद्धत्वादित्यर्थः॥ अद्वैतवादाविरोधादिति॥ सत्यस्याप्युपाध्यधीनस्य उपाधिनिवृत्त्या निवृत्तेः। न च पूर्वं भिन्नस्य पश्चात् कथमभेदः? इति वाच्यम्। ज्ञानेनाभेदस्य सम्पादनात्। औपाधिकभेदनिवृत्तौ तदभावलक्षणाभेदावश्यम्भावाच्चेति भावः। अस्मिन् पक्षे अज्ञानस्योपाधिसापेक्षत्वेऽपि नोपाधेरज्ञानसापेक्षत्वं। तदकल्पितत्वात्। तस्मान्नान्योन्याश्रयादिरित्याह॥ उपाधेरिति॥

(मं. टि.) ननु लोके बिम्बप्रतिबिम्बयोः सत्यभेदाभावात् तदात्मकयोर्जीवब्रह्मणोः कथं सत्यभेदः? इति मायावादिशङ्कां निरस्यति ॥ अंशांशिभावेनेति ॥ अंशांशिनोर्विरुद्धपरिमाणयोर्लोकेऽपि दृष्टः पारमार्थिकभेद इति भावः ।

मायावादे दूषणसमुच्चयाभावात् चशब्दानुपपत्तिमाशङ्क्याह ॥ मायावाद इत्यादिना चशब्दार्थ इत्यन्तेन ॥ नात्र मायावादे दूषणद्वयं समुच्चीयते । किं तर्हि? सत्योपाधिवादे उपाधिकृतभेदानुपपत्तिः सार्वज्ञ्यादिव्यवस्थानुपपत्तिश्च समुच्चीयत इत्यर्थः ।

### उपाधेर्विद्यमानावयवभेदज्ञापकत्वं

(टी.) कुतः सत्योपाधितः सत्यभेदोत्पत्तिर्न युज्यते? इत्यत आह

विद्यमानस्य भेदस्य ज्ञापको नैव कारकः ॥ ४ ॥
उपाधिर्दृष्टपूर्वो हि........................ ।

हिशब्दो हेतौ । यस्मात् महारजनाद्युपाधिर्विद्यमानस्यैव पटाद्यवयवभेदस्य ज्ञापक एव दृष्टपूर्वो न तु प्रागविद्यमानस्य कारकः । अतो भेदश्चोपाधितः कुतः इति सम्बन्धः । अत्र उपाधिः कारको न दृष्टपूर्व इत्येतावदेव वक्तव्यम् । विद्यमानस्य ज्ञापक इत्युक्तिस्तु 'कारकत्वाभावे वैयर्थ्यं स्यात्' इति शङ्कानिरासार्था इति ज्ञातव्यम् ।

(मं. टि.) कारणानुगुणं कार्यं भविष्यतीति शङ्कते ॥ कुतः सत्योपाधित इति ॥ भेदस्योपाधिकार्यत्वमेवासिद्धमित्याह ॥ अत आहेति ॥

### उपाधेरवयविभेदकत्वाभावः

(टी.) न च महारजनादिः पटस्यैव भेदकः 'द्वौ पटौ' इत्यप्रतीतेः । न च दण्डकुण्डलोपाधिभ्यां एक एव देवदत्तो भिद्यत इति वाच्यम् । देवदत्तभेदस्य अप्रतीतेः । दण्डकुण्डलसम्बन्धात् विशिष्टद्वयस्यैवोत्पत्तेः । न चैवमेवास्तु प्रकृते इति वाच्यम् । उपाध्यपगमे जीवस्य विनाश एव न ब्रह्मैक्यापत्तिः इत्यापत्तेः । जीवे नष्टे स्वरूपमात्रावशेष एव तथोच्यत इति चेत् । तर्हि ब्रह्मण्येव बन्धमोक्षावङ्गीकृतौ स्याताम् इत्युक्तदोषापत्तिरिति ।

(मं. टि.) ननु महारजनाद्युपाधिर्यदि नामांशानां भेदकः स्यात् तदा ज्ञापकः स्यादपि तेषां पूर्वमेव भिन्नत्वात् । न चैवं । पटं प्रत्येव भेदकत्वादिति मन्दाशङ्कां परिहरति ॥ न च महारजनादिरिति ॥

(मं. टि.) नन्वेक एव देवदत्तो नानोपाधिसम्बन्धात् नाना व्यवह्रियते । न च व्यवह्रियमाणभेदाभावे व्यवहारभेदः सम्भवति । तस्मादुपाधिर्भेदकारक इति । अत आह ॥ **न च दण्डेति** ॥

### विशिष्टस्य पदार्थान्तरत्वे पूर्वपक्षः

ननु विशेषणविशेष्यतत्सम्बन्धातिरिक्तं न विशिष्टं पश्यामः । तथा हि, तत्किं नित्यं ? अनित्यं वा ? नाद्यः, सर्वदोपलम्भप्रसङ्गात् । विशेषणविशेष्यसम्बन्धोऽभिव्यञ्जकः ततो न सर्वदोपलब्धिरिति चेत् स किं सत्तया ज्ञापकः? किं वा ज्ञाततया ? नाद्यः, विशेषणविशेष्यतत्सम्बन्धज्ञानाभावेऽपि विशिष्टधीप्रसङ्गात् । न द्वितीयः। सम्बन्धविशेषणविशेष्यज्ञानादेव विशिष्टव्यवहारोपपत्तौ तज्ज्ञाप्यविशिष्टविषयकज्ञानात् तद्व्यवहारकल्पने गौरवात् । नाप्यनित्यमिति द्वितीयः । समवायिकारणाभावात् । तथा हि, न तावत् विशेषणविशेष्याभ्यामन्यत् समवायिकारणं सम्भाव्यते । विशेषणविशेष्ययोरपि न प्रत्येकमुपादानत्वम् । एकस्य द्रव्योपादानत्वायोगात् । मिलितयोश्चेदुपादानत्वं, तदा 'रूपी घटः' इत्यत्र रूपी नाम विशिष्टो रूपारब्धो घटारब्धश्चेत्युररीकरणीयम् । तच्चायुक्तम् । गुणस्य [1] समवायिकारणस्याभावात् । द्रव्यगुणारब्धस्य तदुभयात्मकत्वापत्त्या द्रव्यत्वगुणत्वयोः साङ्कर्यप्रसङ्गाच्च । अपि च यावन्ति विशेषणानि तावन्ति विशिष्टान्यङ्गीकरणीयानि । तानि चैकस्मिन्नेव विशेष्ये वर्तन्त इति मूर्तानां सामानाधिकरण्यं प्रसज्येतेति कथं [2]विशिष्टद्वयस्यैवोत्पत्तेः इत्युक्तं ? इति ।

### विशिष्टस्य पदार्थान्तरत्वसमर्थनम्

अत्रोच्यते,

दण्डीत्यादिव्यवहृतेर्मूलभूता विशिष्टधीः ।<br>
विभिन्नं पुरुषादिभ्यो विशिष्टमवलम्बते ॥

दण्डीत्यादिविशिष्टव्यवहारनिमित्तं विशिष्टज्ञानं तावदङ्गीकार्यं । विशिष्टज्ञानं विना विशिष्टव्यवहारानुदयात् । यच्च विशिष्टज्ञानालम्बनं तदेव विशिष्टं नाम । आलम्बनान्तरानिरूपणात् । तथा हि, दण्डीत्यादिविशिष्टप्रत्यये किं विशेषणविशेष्यौ विषयौ ? किं वा अगृहीतासंसर्गौ तावेव ? यद्वा विशेषणविशेष्यतत्सम्बन्धाः? अदण्डिव्यावृत्तं देवदत्तस्वरूपमात्रं वा ? आद्येऽपि किं प्रत्येकं तयोर्विषयत्वं ? किं वा मिलितयोः? नाद्यः, दण्डदेवदत्ताद्येकैकज्ञानेनापि विशिष्टव्यवहारप्रसङ्गात् । न द्वितीयः, 'इमौ दण्डदेवदत्तौ' इति गृहीतासंसर्गेण विशेषणविशेष्यविषयकसमूहालम्बनज्ञानेनापि विशिष्टव्यवहारप्रसङ्गात् । नापि द्वितीयः, 'इमौ दण्डदेवदत्तौ'

---

[1] समवायिकारणताभावात् इति पाठेन भाव्यमिति भाति, [2] विशिष्टद्वयोत्पत्तेः इत्युक्तं ? इति.

(मं. टि.) इति समूहालम्बनज्ञानेनापि विशिष्टव्यवहारप्रसङ्गात् । तत्रासंसर्गे विद्यमानेऽपि तद्ग्रहनियमाभावेन तस्यागृहीतासंसर्गकविशेषणविशेष्यविषयकत्वात् । नह्यसंसृष्टयोर्दण्डदेवदत्तयोः स्वरूपज्ञाने असंसर्गग्रहोऽपेक्ष्यते । नापि तृतीयः, 'दण्डदेवदत्ततत्सम्बन्धाः' इति समूहालम्बनज्ञानात् 'दण्डी' इति विशिष्टज्ञानस्य वैलक्षण्याभावप्रसङ्गात् । विषयभेदाभावात् । विषयभेदं विना ज्ञानयोर्वैलक्षण्यायोगाच्चेति । चतुर्थेऽपि अदण्डिव्यावृत्तिः 'दण्डी' इति विशिष्टज्ञाने प्रतीयते न वा ? न चेत् 'दण्डी देवदत्तः' 'देवदत्तोऽयं' इति ज्ञानद्वयस्य वैलक्षण्यं न स्यात् । विषयभेदस्यानिरूपितत्वात् । प्रतीयते चेत् सा किं स्वरूपेण प्रतीयते ? किं वा [1]देवदत्तादिविशिष्टाकारेण । नाद्यः, व्यावृत्तेरन्योन्याभावरूपाया निरधिकरणायाः प्रत्येतुमशक्यत्वात् । अधिकरणान्तरस्य अप्रस्तुतत्वाच्च । द्वितीये यथा दण्डवैशिष्ट्यं नाम अदण्डिव्यावृत्तिमात्रं तथा व्यावृत्तिवैशिष्ट्यमपि अव्यावृत्तव्यावृत्तिमात्रं ? किं वा पदार्थान्तरं ? द्वितीये सिद्धं नः समीहितम् । प्रथमे साऽपि अव्यावृत्तव्यावृत्तिर्विशिष्टज्ञाने प्रतीयते न वा ? न चेदुक्तदोषः । प्रतीयते चेत् सा किं स्वरूपेण ? किं वा देवदत्तादिविशिष्टत्वाकारेण ? इत्यादिप्रश्नापर्यवसानात् अनवस्था स्यात् ।

## विशिष्टस्य पदार्थान्तरत्वे प्रमाणोपन्यासः

तर्कितेऽर्थे प्रमाणं च 'दण्डी देवदत्तः' इति विशिष्टव्यवहारः दण्डदेवदत्ततत्सम्बन्धातिरिक्तविषयकव्यवहर्तृसमवेतविशेषज्ञानजन्यः विशिष्टव्यवहारत्वात् कुण्डलीतिव्यवहारवत्, दण्डीति व्यवहारो [2]दण्डदेवदत्ततत्सम्बन्धातिरिक्तविषयकव्यवहर्तृसमवेतविशेषज्ञानजन्यः सत्यपि तज्ज्ञाने कदाप्यनुत्पद्यमानत्वात् संमतवत् । ईश्वरज्ञाने नार्थान्तरतां परिहर्तुं व्यवहर्तृसमवेतेत्युक्तम् । न च द्वितीयानुमाने असिद्धिः । 'दण्डदेवदत्ततत्सम्बन्धाः' इति समूहालम्बने सञ्जातेऽपि 'दण्डी' इति विशिष्टज्ञानं विना तद्व्यवहाराभावात् । समूहालम्बनज्ञानस्य निर्विकल्पकतुल्यत्वेन विशिष्टव्यवहाराजनकत्वस्य त्वयाप्यङ्गीकारात् ।

## विशिष्टस्य पदार्थान्तरत्वे परोक्ताक्षेपनिरासः

यदप्युक्तं तत्किं नित्यमनित्यं वेत्यादि । तत्र ब्रूमः, यत्र विशेषणविशेष्यौ नित्यौ तत्र विशिष्टो नित्य एव । यत्र तावनित्यौ तत्रानित्य इति । तत्रानित्येषु विशिष्टेषु तद्विशेषणान्युपादानानि न विशेष्यमपि । येन मूर्तानां सामानाधिकरण्यप्रसङ्गः । येन च द्रव्यगुणद्वयारब्धे कार्ये जातिसाङ्कर्यप्रसङ्गः । विशेष्यसन्निधानं तु निमित्तमेव । एकस्योपादानत्वं कथम् ? इति चेन्न । एकेनैव दीर्घतन्तुना पटारम्भदर्शनात् । एकस्य गुणोपादानत्ववत् द्रव्योपादानत्वस्याप्युपपत्तेश्च । एकस्योपादानत्वे अवयवसंयोगलक्षणासमवायिकारणाभावात्

---

[1] देवदत्ताविशिष्टाकारेण इति पाठान्तरम् । इदं च उत्तरानानुगुण्यादयुक्तम् ।

[2] दण्डदेवदत्ततत्सम्बन्धविषयकव्यवहर्तृसमवेतज्ञानजन्यः इति मुद्रितपुस्तकस्थं पाठान्तरं अर्थान्तरत्वादिदोषदुष्टं असाध्वेव ।

(मं. टि.) कथं कार्योत्पत्तिः? इति चेन्न । कार्यस्य असमवायिकारणजन्यत्वनियमस्य अस्माभिरनङ्गीकारात् । अङ्गीकारे वा विशेषणविशेष्यसंयोगस्यैवासमवायिकारणत्वोपपत्तेश्च । न च रूपस्य गुणत्वात् द्रव्यारम्भकत्वानुपपत्तिः । 'गुणत्वं आरम्भकत्वसमानाधिकरणं सत्तासाक्षाद्व्याप्यजातित्वात् द्रव्यत्ववत्' इत्यनुमानेन तत्साधनात् । रूपादेरपि 'एकं रूपम्' इत्यबाधितप्रतीतेः सङ्ख्यारम्भकत्वप्रतीतेश्च । अथ वा विशेषणविशेष्ययोरुभयोरुपादानत्वमस्तु । न च मूर्तानां सामानाधिकरण्यानुपपत्तिः । परमाणुप्रदेशेऽपि मूर्तानन्तजीवावस्थानवत् ईश्वरशक्त्या अस्याप्युपपत्तेः । एकस्मिन्नेव तन्तौ द्वितन्तुकादिमहापटपर्यन्तावयविपरम्परायाः त्वयाप्यङ्गीकाराच्च । विशिष्टस्य मया द्रव्यत्वानङ्गीकाराच्च । न च जातिसाङ्कर्यप्रसङ्गः । द्रव्येणोपादानेन गुणत्वप्रतिबन्धात् गुणेनोपादानेन च द्रव्यत्वप्रतिबन्धात् तदुभयारब्धस्य द्रव्यगुणानन्तर्भाविनः पदार्थान्तरत्वाङ्गीकारात् । ननु यदा विशेष्यमपि विशिष्टोपादानं तदा तत्वविवेकग्रन्थे 'कार्यकारणयोश्च' इत्युक्त्वा कथं पुनराचार्यो 'विशिष्टशुद्धयोः' इति पृथग्विशेष्यविशिष्टयोर्ग्रहणमकरोदिति चेत् गोबलीवर्दन्यायेनेत्यवेहि । यद्यपि विशिष्टविशेष्ययोरभेदः तथापि भेदस्याप्यङ्गीकारात् सत्येव विशेष्ये विशिष्टोत्पत्तिरुपपद्यत एव । तदेतदाह ॥ [1]विशिष्टद्वयस्योत्पत्तेरिति ॥ तर्हीति ॥ श्रवणादिजन्यज्ञानवत एव मोक्षान्वयात् [2]बन्धमोक्षयोः सामानाधिकरण्यनिर्बन्धादिति भावः ।

आकाशे औपाधिकभेदशङ्कानिरासौ

(टी.) नन्वेकस्मिन्नेवाकाशे घटमठाद्युपाधिभिर्भेदः क्रियमाणो दृश्यत एव । नेत्याह

......................खेऽपि देशान्तरस्य सः ॥ ४ ॥
ज्ञापको विद्यमानस्य................ ।

यदा आकाशे भेदो नास्तीति सिद्धान्तः तदा अन्तरशब्दो विशेषवचनः । ततश्च 'खेऽपि प्रागेव विद्यमानस्य देशविशेषस्य ज्ञापक एव स उपाधिरङ्गीक्रियते न तु भेदस्य कारकः' इति नायं दृष्टान्त इत्यर्थः । यदा तु घटमठाद्याकाशभेदाभ्युपगमः तदा खेऽपि घटाद्युपाधिः प्राग्विद्यमानस्यैव देशान्तरस्य देशभेदस्य ज्ञापक एव न तु कारक इति योज्यम् ।

(मं टि.) सिद्धान्ते आकाशांशानां देशविशेषाणां यावद्द्रव्यभावित्वात अत्यन्ताभेदस्याङ्गीकारात् भेदवाच्यन्तरशब्दप्रयोगो नोपपद्यत इत्यत आह ॥ यदेति ॥ परेणौपाधिकभेदोऽङ्गीक्रियते । तं प्रति स्वाभाविकभेदमङ्गीकारयतीत्याह ॥ यदा तु घटेति ॥

---

[1] विशिष्टद्वयस्यैवोत्पत्तेरित्ति, इति पाठान्तरम्.   [2] न बन्धमोक्षयोः सामानाधिकरण्यमिति भावः इति मुद्रितपुस्तकस्थपाठान्तरस्य बन्धमोक्षयोर्वैयधिकरण्यसमर्थनपरतया असाधुत्वेति भाति.

(मं. टि.) किं [1]घटाकाशमहाकाशयोर्भेद उपाधिकृत इत्युच्यते? किं वा घटाकाशमठाकाशयोः? आद्योत्तरत्वेन कारिकाखण्डं व्याचष्टे ॥ यदेति ॥ द्वितीयोत्तरत्वेन तदेव खण्डं व्याचष्टे ॥ यदा त्विति ॥ [2]उपाधेः कारकत्वे उपाध्यपेक्षैव न स्यात्। भेदस्य स्वरूपत्वेनोपाधेरुपयोगानिरूपणात्।

भेदस्य वस्तुस्वरूपत्ववादिसिद्धान्तिमते उपाधेर्ज्ञापकत्वानुपपत्तिनिरासः

(टी.) ननु भेदो नाम वस्तुस्वरूपमेव स तद्दर्शनेनैव दृश्यः। न चोपाधेः स्वरूपदर्शने उपयोगोऽस्ति। तत्कथमुच्यते उपाधिर्भेदस्य ज्ञापक इति? तत्राह

..................मूढबुद्धिव्यपेक्षया ।

अस्ति भेदस्य वस्तुस्वरूपत्वं तथापि तद्विशेष इति प्रतिपादितमन्यत्र। ततो वस्तुप्रतीतावपि भेदाप्रतीतिरभेदप्रतीतिश्च युज्यते। तदा भेदज्ञापने अस्त्येवोपाधेरुपयोग इति।

(मं. टि.) [3]ननु ज्ञापकत्वेऽप्ययं दोषः समः। स्वरूपाभिन्नस्य भेदस्य पूर्वमेव सिद्धेः। अस्माभिर्भेदस्य स्वरूपत्वाङ्गीकारादिति शङ्कते ॥ ननु भेदो नामेति ॥ तवेति शेषः। तर्हि स्वरूपदर्शन एव तदपेक्षाऽस्त्वित्यत आह ॥ न चेति ॥ उपाध्यप्रतीतावपि स्वरूपप्रतीतेरिति भावः। ननु मूढा अप्युपाधिप्रतीतिं विनैव स्वरूपप्रतीतौ स्वरूपाभिन्नं भेदं प्रतिपद्यन्त एव। अतः कथं तदपेक्षयाप्युपाध्युपयोगः? इति तत्राह ॥ अस्तीति ॥

(टी.) नन्वाकाशे विद्यमानस्यैव भेदस्योपाधिर्ज्ञापक इति कस्मात् अङ्गीकार्यम्? अविद्यमानस्योत्पादक एव कस्मान्नाङ्गीक्रियते? इति। तत्राह

न चेदुपाधिसम्बन्ध एकदेशेऽथ सर्वगः ॥ ५ ॥

यद्युपाधिर्विद्यमानस्यैव भेदस्य ज्ञापक इति नेष्यते। किन्तु? अविद्यमानस्यैव कारक इत्यङ्गीक्रियते। तदैवं वक्तव्यम् किं घटाद्युपाधिराकाशसम्बन्धी तद्भेदं करोति उतासम्बद्धः। द्वितीयेऽतिप्रसङ्गः। आद्येऽपि वाच्यं, स उपाधिसम्बन्ध आकाशस्यैकदेशे वर्तते उत सर्वाकाश इति। आद्ये दोषमाह

---

[1] किं घटाकाशमठाकाशयोर्भेद उपाधिकृत इत्युच्यते? किं वा घटाकाशमठाकाशयोः स्वरूपं? इति पाठान्तरं नैव युक्तमिति भाति। घटाकाशमठाकाशस्वरूपस्य यदा त्वित्यादिव्याख्यानान्तरेण उपाधिकृतत्वानिराकरणात्.

[2] उपाधेरकारकत्वे इति पाठान्तरं तत्पक्षस्य मायावादिना अनुपादानात् असाध्विति भाति.

[3] ननु कारकत्वेऽप्ययं दोषः समः स्वरूपाभिन्नस्य भेदस्य पूर्वमेव सिद्धेरिति चेन्न। अस्माभिर्भेदस्य स्वरूपत्वानङ्गीकारात् इति शङ्कते इति मुद्रितः पाठः ' तत्कथमुच्यते उपाधिर्भेदस्य ज्ञापक इति ' इति टीकया विरुद्धत्वादुपेक्ष्यः

### एकदेशगतस्योपाधेर्भेदकारकत्वे अनवस्थात्माश्रयदोषौ

एकदेशेऽनवस्था स्यात्........................ ।

(टी.) ' चेदुपाधिसम्बन्ध इति ' वर्तते । यदि घटाद्युपाधिसम्बन्धो गगनैकदेशवर्तीत्युच्यते तदा तस्याप्याकाशैकदेशस्य औपाधिकत्वं वक्तव्यं । सोऽप्युपाधिरुपाध्यन्तरकृतैकदेशे सम्बद्धय भेदक इत्यनवस्था । उपाध्यन्तरानङ्गीकृतावात्माश्रयः स्यात् । द्वितीयं दूषयति

### उपाधेः सर्वगतत्वे भेदकत्वानुपपत्तिदोषः

........................सर्वगश्चेन्न भेदकः ।

यद्युपाधिसम्बन्धः सर्वाकाशगतः स्यात् तदासौ नाकाशभेदस्य कारकः स्यात् । कृत्स्नस्यैकोपाधिनैव ग्रस्तत्वात् । इदमुक्तं भवति । असम्बद्धस्योपाधेरवच्छेदकत्वे काश्मीरस्थेन महारजनेन केरलवर्तिनो वाससोऽवच्छेदप्रसङ्गात् सम्बद्ध एवोपाधिर्भेदक इति वक्तव्यम् । घटाकाशसंयोगश्च आकाशे व्याप्यवृत्तिश्चेत् सर्वाकाशस्य घटाकाशत्वात् आकाशभेदहेतुर्न स्यादिति प्रदेशवृत्तिरित्यङ्गीकार्यम् । तस्य च प्रदेशस्योपाधिकृतत्वे अनवस्थादिप्रसङ्गात् स्वाभाविकत्वमेवेष्टव्यम् । तथा च प्राक्सिद्धस्य आकाशभेदस्य उपाधिना कर्तुमशक्यत्वात् उपाधिर्विद्यमानस्यैव भेदस्य ज्ञापको विज्ञायत इति ।

(मं. टि.) ननु असम्बद्धस्यैवोपाधेर्भेदकत्वमङ्गीक्रियते । न चातिप्रसङ्गः । भेदप्रतीतेस्तत्प्रतीत्यधीनत्वस्यैव नियामकत्वात् । ततश्च एकदेशोऽथ सर्वगः इति विकल्पोऽनवसरपराहत इत्याशङ्क्याह ॥ यद्युपाधिरित्यादिना ॥ न चेदित्यस्यार्थं विवृण्वन् तात्पर्यमाह ॥ तदेवमित्यादिना ॥ असम्बन्धे भेदप्रतीतेस्तत्प्रतीत्यधीनत्वमेव न स्यादिति भावः । नन्वसम्बन्धेऽपि अन्वयव्यतिरेकबलादुपाधेर्भेदकत्वमिति नातिप्रसङ्ग इत्याशङ्क्याभिप्रायमाह ॥ इदमुक्तं भवतीत्यारभ्य विज्ञायत इत्यन्तेन ग्रन्थेन ॥ विद्यमानभेदज्ञापनमात्रेण उपाध्यन्वयव्यतिरेकयोश्चरितार्थत्वादिति भावः ।

### नैयायिकमतेन उपाधेरंशवृत्तित्वाभावशङ्का तन्निरासश्च

(टी.) प्रदेशवृत्तित्वं नाम स्वात्यन्ताभावसमानाधिकरणत्वमिति चेन्न । तस्य विरुद्धत्वात् ।

(मं. टि.) ननु प्रदेशवृत्तित्वं । नाम नांशवृत्तित्वं । किं तर्हि ? अन्यदेवेति तटस्थो नैयायिकः शङ्कते ॥ प्रदेशवृत्तित्वं नामेति ॥ भावाभावयोः स्वाभाविकविरोधान्नैतद्युज्यत इत्याह ॥ नेति ॥

### अत्यन्ताभावान्योन्याभावयोः स्वप्रतियोगिसामानाधिकरण्याभावः

ननु ' अत्यन्ताभावोऽपि प्रतियोगिसमानाधिकरणः अभावत्वात् प्रागभाववत् ' इति चेत् मैवम् । भावाभावयोर्विरोधपरिहारो द्वेधा भवति कालभेदेन वा देशभेदेन वेति । प्रागभावप्रध्वंसाभावयोस्तु कालभेदेन

(मं. टि.) विरोधपरिहारात् प्रतियोगिसामानाधिकरण्याङ्गीकारेऽपि न कश्चिद्दोषः। अत्यन्ताभावस्य तु नित्यत्वात् कालभेदेन विरोधपरिहारासम्भवेन देशभेदेनैव विरोधः परिहरणीय इति कथं सामानाधिकरण्यं? अथ नित्योऽप्यन्योन्याभावः प्रतियोगिसमानाधिकरणो दृश्यते। घटवत्येव भूतले घटान्योन्याभावानुभवात्। अतः कथं विरोधपरिहारस्तत्र? इति चेदित्थम्; अभावो हि प्रतियोगितावच्छेदकावच्छिन्नेन प्रतियोगिना विरुद्ध्यते न पुनः प्रतियोगिमात्रेण। अन्यथा अदण्डिनि पुरुषे विद्यमान एव 'दण्डी पुरुषो न' इति निषेधो न स्यात्। तत्र प्रतियोगितावच्छेदकदण्डावच्छिन्नस्य पुरुषस्यासत्त्वेपि प्रतियोगिमात्रस्य पुरुषस्य सत्वात्। एवं चान्योन्याभावोऽपि यद्यपि प्रतियोगिमात्रसमानाधिकरणः तथापि प्रतियोगितावच्छेदकतादात्म्यावच्छिन्नेन प्रतियोगिना न समानाधिकरणः। 'न हि भूतले घटो भूतलात्मना वर्तते' इति नान्योन्याभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसमानाधिकरणः। तथा च प्रयोगः 'अत्यन्ताभावः प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसमानाधिकरणत्वे सति तादृक्प्रतियोगिसमानकालीनो न अभावत्वात् संमतवत्' तदेतदाह ॥ तस्य विरुद्धत्वादिति ॥ [1]तस्येति ॥ भावाभावयोः सामानाधिकरण्यस्येत्यर्थः।

### अंशभेदेन अत्यन्ताभावस्य स्वप्रतियोगिसमानाधिकरण्यशङ्कापरिहारौ

नन्वत्यन्ताभावेऽप्यंशभेदेन विरोधपरिहारोऽस्तु। हस्तपादाद्यवच्छेदकभेदेन पुस्तकसंयोगतदत्यन्ताभावयोर्दर्शनादिति चेन्न। तत्रांशभेदवत् गगनेंऽशभेदाभावात्।

### प्रतीतिबलात् अत्यन्ताभावस्य स्वप्रतियोगिसामानाधिकरण्यशङ्कापरिहारौ

**(टी.) प्रतीतत्वादविरोध इति चेन्न। आकाशभेदवादिनं प्रति प्रतीत्यसिद्धेरिति।**

(मं. टि.) नन्वथापि प्रतीतिबलात् संयोगतदत्यन्ताभावयोः सामानाधिकरण्यमस्तु। प्रमाणेनैव विरोधपरिहारादिति शङ्कते ॥ प्रतीतत्वादिति ॥ न प्रतीतिमात्रं व्यवस्थापकं अतिप्रसङ्गात्। किं तर्हि? प्रमारूपा प्रतीतिः। प्रामाण्यं च विरोधे परिहृते, विरुद्धार्थग्राहकयोः [2]अन्यतराप्रामाण्यस्य अवश्यम्भावात्। विरोधपरिहारश्च प्रमाणबलादित्यन्योन्याश्रयः। तस्मात् युक्त्या विरोधं परिहृत्य पश्चात् प्रतीतेः प्रामाण्यं विज्ञेयं। तच्चात्र नास्तीति नैतद्युक्तमिति परिहारे स्थितेऽपि परिहारान्तरमाह ॥ न आकाशेति ॥ आकाशांशानामन्योन्यभेदवादिनं प्रतीत्यर्थः। वैयधिकरण्येनैव प्रतीतिनिर्वाहे न सामानाधिकरण्यकल्पकं किञ्चिदस्तीति भावः।

---

[1] 'तस्य विरुद्धत्वात्' इति वाक्यानन्तरं टीकायां 'तस्य' इति पदाभावात् ॥ तस्येति ॥ इति प्रतीकधारणं लेखकप्रमादागतमिति भाति। तस्य विरुद्धत्वादिति वाक्यगतं 'तस्य' इति पदमनूद्य भावाभावयोरित्यादिना व्याख्यातमिति भाति.

[2] अन्यतरप्रामाण्यस्य.

### आकाशांशानामन्योन्यभेदाङ्गीकारे आकाशस्य अनित्यत्वशङ्कापरिहारौ

(मं. टि.)एवं चेदाकाशस्य सावयवत्वेनानित्यत्वं स्यादिति चेन्न। सांशत्वेऽपि सावयवत्वाभावेन आपादकासिद्धेः। व्याहतमेतदिति चेत्। किमंशा एवोपादानापरपर्यायावयवा इत्यभिमानः? किं वा तद्व्यासा? इति।

### अवयवातिरिक्तांशसमर्थनम्

नाद्यः पटावयवतन्त्वतिरिक्तानां हस्तवितस्त्याद्यवच्छेद्यानामंशानामनुभवात्। तथा हि, न तावत्पटस्तदवच्छेद्यः तस्य ततोप्यधिकपरिमाणत्वात्। अनेकहस्तावच्छेद्ये एकहस्तावच्छेद्यत्वं सुतरां सम्भवतीति चेत् तर्हि परममहतो मध्यमपरिमाणत्वं मध्यमपरिमाणस्याणुत्वमापद्येतेति साधु समर्थितं तार्किकमतं। स्वरूपेणाधिकपरिमाणस्यापि खण्डपटावच्छिन्नस्य अल्पपरिमाणत्वं च भविष्यतीति चेन्न। अनुपदमेव निराकरिष्यमाणत्वात्। किं चैवमनेकत्वसङ्ख्ययैव एक इति व्यवहारनिर्वाहे एकत्वमप्रामाणिकमापद्येत। परिमाणभेदेन द्रव्यभेदावश्यम्भावेन एकस्मिन् परिमाणद्वयायोगाच्च।

नापि तन्तवस्तदवच्छेद्याः तेषां ततोऽप्यल्पपरिमाणत्वात्।

खण्डपटास्तदवच्छेद्या इति चेत् किमनारभ्यारम्भवादोऽङ्गीक्रियते? किं वा आरभ्यारम्भवादः? आद्ये तन्तुमहापटातिरेकेण आन्तरालिककार्यमेव नाङ्गीक्रियते? उत अङ्गीकृत्यापि तस्य पटारम्भकत्वं नाङ्गीक्रियते? आद्येऽपि किं तन्नोत्पद्यते? उत उत्पन्नमपि महापटस्य स्वप्रतिबन्धकत्वात् तदवस्थानसमये स्वयं नश्यति? इति। उभयथापि महापटावस्थानसमये कथं खण्डपटावकाशः। द्वितीये त्विष्टापत्तिः।

आरभ्यारम्भवादेऽपि किं खण्डपटाः महापटोपादानभूताः? उत न? न चेत् सिद्धं नः समीहितं। उपादानातिरिक्तांशानां त्वयैवोपपादनात्। प्रथमेऽपि किं त एव पटस्योपादानानि? किं वा तन्तवोऽपि? नाद्यः, 'इह तन्तुषु पटसमवायः' इति प्रतीत्यभावप्रसङ्गात्। तन्तूनामनुपादानत्वात्। परम्परयोपादानत्वेन तथा प्रतीतौ 'त्र्यणुके पटः' इति प्रतीयेत। द्वितीये खण्डपटा अपि तन्त्वारब्धा इति वक्तव्यं। आरम्भकान्तराभावात्। न च तद्युक्तं। तन्त्वारभ्यपटारम्भकाणां तेषां तन्तुवत् तन्तूपादेयत्वायोगात्। पटारम्भकतन्त्वारब्धस्य पटवत् पटोपादानत्वायोगाच्च।

### एकद्रव्यारम्भकस्य द्रव्यान्तरानारम्भकत्वनियमभङ्गः

ननु त्वत्पक्षेऽप्यंशास्तन्तूपादेया इति वक्तव्यं। गत्यन्तराभावात्। तथा च अन्यद्रव्यारम्भकस्य अन्यद्रव्यारम्भकत्वमन्यत्रादृष्टमापद्येतेति चेन्न। स्वारब्धपटनाशे तेषामेव तन्तूनां पटान्तरारम्भकत्वदर्शनात्। युगपदेव नास्तीति चेन्न। अत्राप्यंशारम्भानन्तरमंश्यारम्भाङ्गीकारेण तदभावात्।

(मं. टि.) तथापि तन्तुष्वेवांशांशिनोरवस्थानात् मूर्तानां सामानाधिकरण्यं प्रसज्यत इति चेन्न। पटतदवयवयोरेकस्मिन्नेव भूतले वृत्तिदर्शनात्। अवयवावयविभावानापन्नयोस्तथाभावो नास्तीति चेन्न। आलोकमण्डलव्याप्त एव देशे वायुसञ्चारदर्शनात्। निबिडावयवत्वे सतीति विशेष्यत इति चेन्न। तस्य आपेक्षिकस्य सर्वत्र सम्भवात्। आत्यन्तिकस्य [1]हीरादन्यत्रासम्भवात्। पटवत्येव भूतले तदुपरक्तमहारजनवर्तनानुभवाच्च। अंशांशिभावानापन्नयोरेव तथात्वमिति वक्तुं शक्यत्वाच्च। समवायवृत्त्या तथाभावो नास्तीति चेत् अत्रापि तया वृत्त्या के नामाङ्गीकुर्वते?। मया समवायस्यैवानङ्गीकारात्। उपादानोपादेययोरभेदेन अन्तत आश्रयाश्रयिभावाभावाच्च। तस्मान्नावयवा एवांशाः।

अंशा अवयवव्याप्ता इति द्वितीयेऽपि किं यत्रांशाः तत्रावयवा इति व्याप्तिः? किं वा यदांशास्तदा अवयवा इति? योंऽशी सोऽवयवीति वा? नाद्यः मूर्तानां सामानाधिकरण्यविरोधेन त्वयाऽपि तदनङ्गीकारात्। न द्वितीयः इष्टापत्तेः। गगने यदा अंशास्तदा द्व्यणुकावयवपरमाणूनामङ्गीकारात्। न तृतीयः नित्यत्वेन निरवयवेऽपीश्वरे 'एते स्वांशकलाः पुंसः' इत्यादावंशस्मरणात्। अपि च 'आकाशं सावयवं सांशत्वात्' इति चेदनुमानप्रयोगः तदा 'आकाशं सावयवं बाह्येन्द्रियग्राह्यविशेषगुणत्वात्' इत्यादिभिः निरंशत्वेऽपि सावयवत्वं किं न स्यात्? विपक्षे बाधकाभावान्नैतैः सावयवत्वसाधनं युक्तमिति चेत् समः समाधिः।

### अंशानां अनित्यत्वनियमभङ्गः

तथापि सांशत्वे किं 'अंशानामनित्यत्वादंशिनोऽप्यनित्यत्वं स्यात्' इति विपक्षे दण्डः? किं वा 'अंशानामन्योन्यसंयोगस्य अनित्यत्वादंशिनोऽप्यनित्यत्वं स्यात्' इति। नाद्यः अंशानामपि नित्यत्वाङ्गीकारात्।

न च नित्यांशे प्रमाणाभावः, 'अंशत्वं नित्यनिष्ठं सकलमहदवयव्यनुस्यूतद्रव्यवृत्तित्वात् अवयवत्ववत्' इति अनुमानसद्भावात्। कर्मत्वादौ व्यभिचारपरिहाराय द्रव्यग्रहणं। तावत्युक्ते परस्यासिद्धिः। द्व्यणुकस्यावयवित्वेऽप्यंशाभावात् अतो महदित्युक्तं। तावत्युक्ते [2]तन्त्वादौ व्यभिचारः। तत्परिहारार्थं सकलावयव्यनुस्यूतेत्युक्तं। तन्तूनां पटावयव्यनुस्यूतत्वेऽपि सकलावयव्यनुस्यूतत्वाभावात्तत्र व्यभिचारपरिहारः। न चासिद्धिसाधनवैकल्ये शङ्क्ये। सर्वेषां महतामवयविनां सांशत्वात् सावयवत्वाच्च।

### संयोगस्यानित्यत्वनियमभङ्गः

नापि द्वितीयः। 'संयोगत्वं नित्यवृत्ति सम्बन्धमात्रवृत्तिधर्मत्वात् समवायत्ववत्' इत्यनुमानेन नित्यसंयोगसाधनेनांशानां नित्यसंयोगस्याङ्गीकारात्। तस्मात् 'अकाशभेदवादिनं प्रति' इति साधूक्तं।

---

[1] क्षीरादन्यत्रासम्भवात्. [2] तन्तुत्वादौ.

### सत्योपाधिकृतसत्यभेदवादे सुखादिभोगस्य नियतप्रमातृकत्वाभावदोषः

(टी.) सत्योपाधिकृतसत्यभेदवादे दोषन्तरं चाह

सुखदुःखादिभोगश्च स्वरूपैक्ये न भेदतः ॥ ६ ॥

दृश्यो हि........................................... ।

हिंशब्दो व्याप्तिसूचनार्थः। भवतु वा आकाशादिभेदः कथञ्चित् औपाधिकः। जीवब्रह्मणोः जीवानां च भेदस्तु स्वाभाविक एवाङ्गीकार्यः। स्वरूपैक्ये स्वाभाविकैक्ये सुखदुःखादिभोगस्य भेदेन दर्शनं न स्यात् सम्प्रतिपन्नैकात्मवत्।

(मं. टि.) ॥ भेदेनेति ॥ भिद्यत इति भेदः। कर्मणि घञ्। इत्थम्भूतलक्षणे तृतीया। आश्रयविशेषणं चैतत्। भिन्नेनाश्रयेणोपलक्षितस्य दर्शनं न स्यादित्यर्थः। नियतप्रमातृत्वं न स्यादिति यावत्। एवमेव स्वरूपैक्ये न भेदतः इति कारिकास्थोऽपि भेदशब्दो व्याख्येयः ॥ सम्प्रतिपन्नैकात्मवदिति ॥ 'तत्र तस्येव' इत्यनेन सूत्रेण तत्रेव इत्यर्थे वतिः। सम्प्रतिपन्नैकात्मनीवेत्यर्थः।

### भेदस्य मिथ्योपाधिकृतत्ववादे काल्पनिकव्यवस्थाया अभ्युपगमवादेनाङ्गीकारः

(टी.) ये तु 'मिथ्योपाधिनिमित्तो भेदभ्रमः' इति वदन्ति तेषां सुखदुःखादीनामपि मिथ्यात्वात् काल्पनिकी व्यवस्था घटेतापि।

### भेदभ्रमस्य मिथ्योपाधिनिमित्तत्ववादे काल्पनिकव्यवस्थाया अप्यनुपपत्तिसमर्थनम्

(मं. टि.) ननु तेषां काल्पनिकी व्यवस्था घटेत इत्ययुक्तं। तथा हि, किं तेषां व्यवस्था न प्रतीयत इति न दोषः? उत अपारमार्थिकीति? यद्वा युक्त्यसहेति? नाद्यः अनुभवसिद्धत्वात्। द्वितीये सा किं व्यवस्थापकमेव नापेक्षते? किं वा पारमार्थिकं? नाद्यः यक्षानुगुणबलिवत् तदनुगुणव्यवस्थापकस्य आवश्यकत्वात्। अन्यथा अपारमार्थिकजीवत्वादिव्यवस्थासिद्ध्यै अविद्यानङ्गीकारप्रसङ्गात्। न द्वितीयः, अपारमार्थिकस्यापि व्यवस्थापकस्य स्वाभाविकभेदव्यतिरेकेण निराकरिष्यमाणत्वात्। न तृतीयः

दुर्घटत्वं भूषणं चेत्स्यादविद्यात्वमात्मनः।

इति वक्ष्यमाणातिप्रसङ्गात्।

(मं टि.) ननु एकजीववादे एकस्यैव दुःखानुसन्धातृत्वं । इतराणि निर्जीवानि शरीराणि । तथा च अन्यो दुःखानुसन्धातैव नास्ति । कुतोऽव्यवस्था ? इति चेन्न ।

### तत्परिहारः

त्वदज्ञानकल्पितेनापि मया दुःखानुभवात् । तथैव मदज्ञानकल्पितोऽसीति चेत् त्वदज्ञानेन तथा कल्पने 'अयं दुःखी' इति तव प्रतीतिरस्तु । 'अहं दुःखी' इति मम तु कथं प्रतीतिः? नास्ति सा तवेति चेन्न परबुद्धेरप्रत्यक्षत्वात् । तथापि तावकीनानुभवे मम किं प्रमाणं इति चेत् रूपे चक्षुष इव मद्वचनैकवेद्ये तस्मिन्मद्वचनस्यैव प्रमाणत्वात् । स्वतः प्राप्तस्य च प्रामाण्यस्य बाधकापोद्यत्वात् तथाविधे मद्वचने बाधकाभावाच्च ।

किञ्चैवं सति 'प्रतिवादिनं मां प्रति उत्तरं दत्तं त्वया' इत्यत्र प्रमाणाभावादननुभाषणं नाम निग्रहस्थानमापद्येत । तत्र त्वदनुभवः प्रमाणमिति चेन्न । मम कल्पितस्याननुभवितृत्वात् । मयाप्यनुभवालापमाश्रित्य अनुभूयाऽपि नानुभूयत इति वक्तुं शक्यत्वाच्च ।

प्राश्निकानुभवः तत्र प्रमाणमिति चेन्न । तेषामप्यननुभवितृत्वात् । [1]अनुभवितृत्वेऽपि 'अकल्पकैरस्माभिर्दुःखमनुभूयते' इति प्राश्निकानुभवस्य प्रामाण्यसम्भवाच्च । अथैवं ब्रूषे 'त्वमेव कल्पकोऽहं त्वत्कल्पितः' इति, तदापि त्वया अनुभवापलापेऽपि ये नानुभवापलापिनः तेषां कल्पकात्मातिरिक्तानां दुःखानुभवितृत्वं न स्यात् । अपि चैवं अनुभवापलापे लोकायतं प्रति 'मम शरीरं' इत्याद्यनुभवबलेन शरीरातिरिक्तात्मसाधनं 'अहमज्ञः' इत्याद्यनुभवबलेन भावरूपाज्ञानसाधनं परमप्रेमास्पदत्वानुभवेन आनन्दात्मकत्वसाधनमित्यादिकं त्वयोक्तमसङ्गतं स्यात् ।

तस्मात् '**काल्पनिकी व्यवस्था घटेत**' इत्ययुक्तमिति । सत्यं, अभ्युपगमवादोऽयमित्यदोषः । अत एवाघटनमेव पारमार्थिकमिति सूचयितुं घटेतापि इति अपिशब्दः प्रयुक्तः ।

### सुखदुःखाद्यनुभवभेदस्य आत्मभेदसाधकत्वोपपादनम्

**(टी.) ननु सुखदुःखादयोऽन्तःकरणधर्माः । तद्भेदात् कथञ्चित् अन्तःकरणभेदः साध्यतां । आत्मभेदे तु किमायातम्? इत्याशङ्कापरिहाराय भोग इत्युक्तं । न वयं सुखादिभेदात् [2]अन्तःकरणभेदं साधयामः । किं नाम ? 'स्वरूपाभेदे सुखाद्यनुसन्धानं स्यात्' इति ब्रूमः ।**

---

[1] मदभिलषितेऽपि 'अकल्पकैरप्यस्माभिर्दुःखमनुभूयते' [2] आत्मभेदे तु किमायातम्' इति शङ्कानुरोधेन 'आत्मभेदं साधयामः' इति पाठेन भाव्यमिति भाति.

(मं. टि.) दुःखादीनामन्तःकरणधर्मत्वेन [1]तद्भेदसाधकत्वेऽपि सुखाद्यनुसन्धातृत्वाननुसन्धातृत्वलक्षणा-दात्मगताद्विरुद्धधर्मादात्मभेदो भविष्यतीति परिहरति ॥ इत्याशङ्कापरिहारायेति ॥

सुखदुःखादिव्यवस्थान्यथानुपपत्तेरात्मभेदासाधकत्वशङ्का

(टी.) एतेनैतदपि निरस्तं, यत् केनचित् व्यवस्थान्यथानुपपत्त्या भेदमाशङ्क्य उक्तम् ' न तावत् धर्मभेदो [2]व्यवस्था। धर्मभेदेऽपि धर्मिणो भेदाप्रतीतेः। नापि भिन्नाश्रयधर्मभेदः। इतरेतराश्रयप्रसङ्गात्। न च विरुद्धधर्मभेदः। ऐकात्म्यवादिनं प्रति सुखादीनां विरोधासिद्धेः' इति।

सुखदुःखाद्यनुसन्धानव्यवस्थान्यथानुपपत्तेरात्मभेदसाधकत्वसमर्थनम्

सुखदुःखाद्यनुसन्धानभावाभावरूपव्यवस्थाया अङ्गीकृतत्वात्।

' स्वरूपैक्ये अनुसन्धानं स्यात् ' इति तर्के व्याप्त्यभावशङ्का तत्परिहारश्च

ननु एतदनुसन्धानं किमंशानामापाद्यते? उतांशिनः? नाद्यः व्याप्त्यभावात्। हस्तगत-सुखस्य पादगतेन अननुसन्धानात्। न द्वितीयः तस्य अभोक्तृत्वादिति। मैवम् उभयथाप्यदोषात्। न हि तत्तद्भोगायतनानां सङ्क्रान्तिरापाद्यते। किं तु? सुखाद्यनुसन्धानमात्रम्। तत् अंशानामस्त्येव। भोक्तृभूतांशवतोंऽशिनोऽभोक्तृत्वासिद्धेश्च।

अतीतसुखादाविव अननुसन्धानं किं न स्यात्? इति चेत्, न हि वयं वर्तमानतया अनुभवं स्मरणं वा अनुसन्धानं ब्रूमः। किं नाम? स्वीयतया अनुभवमात्रं। न च तन्नास्ति अतीत-सुखादाविति।

तदयं प्रसङ्गार्थः 'यदि जीवब्रह्मणी जीवाश्च स्वभावतोऽभिन्नाः स्युः तदा अन्योन्यगतसुख-दुःखादिविषये स्वीयतया अनुभववन्तः स्युः यथा सम्प्रतिपन्नः' इति। ' विमताः परस्परमैक्यरहिताः चेतनत्वे सत्यन्योन्यगतसुखदुःखाद्यनुसन्धानशून्यत्वात् यो येनैक्यवान् चेतनः स तत्सुखाद्यनुसन्धा-नवान् यथा सम्प्रतिपन्नः' इत्यनुमानं वा अनेन सूचितं। चैतन्यावच्छिन्नत्वात् व्याप्तेर्न कश्चित् क्षुद्रोपद्रवः।

(मं. टि.)॥ यत्केनचिदिति॥ तत्र किं धर्मभेदो [2]व्यवस्था? किं वा भिन्नाश्रयधर्मभेदः? विरुद्धधर्मभेदो वा इति विकल्पान् हृदि निधाय प्रथमं प्रत्याचष्टे॥ न तावदिति॥ द्वितीयं मत्याह॥ नापीति॥ इतरेतराश्रयप्र-

---

[1] तद्धेतुसाधकत्वेऽपि [2] व्यवस्थापकः

(मं. टि.) सङ्गादिति ॥ धर्मिभेदे धर्माणां भिन्नाश्रयत्वं, धर्माणां भिन्नाश्रयत्वे च सति धर्मिभेदसिद्धिरित्यन्योन्यसापेक्षत्वात् । तृतीयं प्रत्याचष्टे ॥ न चेति ॥ विरोधः किं सहानवस्थानलक्षणः? किं वा वध्यघातकभावलक्षणः? नाद्य इत्याह ॥ ऐकात्म्यवादिनं प्रतीति ॥ न द्वितीयः एकात्मसमवेतयोः पूर्वोत्तरज्ञानयोर्वध्यघातकभावलक्षणविरोधसद्भावेन आत्मभेदप्रसङ्गात् । तत्र कालभेदेन विरुद्धधर्माश्रयत्वमुपपद्यते । प्रकृते तु युगपदेव देवदत्ते सुखस्य यज्ञदत्ते दुःखस्य च प्रतीतेराश्रयभेदो वक्तव्य इति चेन्न । तदाश्रययोर्भेदे विरोधासिद्धेः 'नाजात एकोऽन्यं हन्ति, नाप्यन्याधारः' इति न्यायेनेत्यर्थः । किं च खरतरदिनकरकिरणैर्निर्दग्धोर्ध्वकायस्य शिशिरतरसलिलावगाढापरभागस्यापर्यायमेव सुखदुःखदर्शनेन तयोर्न सहानवस्थानं नापि वध्यघातकभाव इति भावः ।

चेतनाचेतनानुगतभेदव्यवस्थापकनिर्धारः

॥ सुखदुःखाद्यनुसन्धानेति ॥ चेतनेष्वेवेदं व्यवस्थापकं यत् 'सुखं दुःखं वा योऽनुसन्दधाति सोऽननुसन्धातुर्भिद्यते' इति । चेतनाचेतनानुगतस्य भेदव्यवस्थापकस्य प्रश्ने तु 'यो यद्वृत्तिधर्माश्रयः स तस्माद्भिद्यते' इति वा 'यत्र यत्तादात्म्यमारोप्यते स तस्माद्भिद्यते' इति वा 'यत्र यदात्मकत्वं न प्रतीयते स तस्माद्भिद्यते' इति वा उत्तरं वक्तव्यं । विकल्पासहत्वान्नायं तर्कः साधुरिति शङ्कते ॥ नन्विति ॥ अननुसन्धानादिति ॥ अनुसन्धाने च 'पादे मे वेदना शिरसि सुखं' इति न प्रतीयेत । किं तर्हि? उभयत्रोभयं प्रतीयेतेति भावः ॥ तस्याभोक्तृत्वादिति ॥ स्वरूपानन्दस्य [1]ज्ञानाभिन्नस्य स्वतः स्फुरणेऽपि न बाह्यसुखाद्यनुसन्धानं । तत्साधनान्तःकरणावच्छेदाभावादिति भावः । परिहरति ॥ मैवमिति ॥ न तावदाद्ये दोषः । पादावच्छिन्नदुःखस्य हस्तगतेनांशेन अननुसन्धाने पादतललग्नकण्टकोद्धरणाय हस्तव्यापारानुपपत्तेः । न च पित्रादेः पुत्रादिदुःखपरिजिहीर्षयेव प्रवृत्तिः । आक्रन्दितादिलिङ्गाद्यनुसन्धानं विनैव झटिति प्रवृत्तेः । न चांशी दुःखमनुसन्धाय अंशं प्रेरयतीति युक्तं । अंशव्यापारकल्पने गौरवात् । न चांश्येव तत्र व्याप्रियत इति युक्तं । पादलग्नकण्टकजनितदुःखमप्यंश्येवानुसन्धत्त इति प्रसङ्गात् । 'पादे मे दुःखं' इत्यनुभवस्तत्र प्रमाणमिति चेत् इहापि 'हस्ते मे व्यापारः' इत्यनुभवः प्रमाणं ।

एवं तर्हि 'पादे मे दुःखं' इति नियतप्रतीतिर्न स्यादित्यत आह ॥ न हीति ॥ सङ्क्रान्तिरिति ॥ इतरांशसम्बन्ध इत्यर्थः । येन नियमेन प्रतीतिर्न स्यादिति वाक्यशेषः ॥ किं त्विति ॥ श्रूयमाणशब्दस्य श्रोत्रसम्बन्धेऽपि वीणायाः क्वणननिमित्तत्वात् 'वीणायां शब्दः' इतिवत् पादे दुःखहेतोः कण्टकस्य सम्बन्धात् तदवच्छेदेन प्रतीतिरिति भावः ॥ भोक्तृभूतेति ॥ अंशिनः सर्वगतस्य [2]अन्तःकरणाद्यवच्छेदात् भोगः स्यादेव । न चेत् तन्न्यायेनैव पादावच्छिन्नदुःखाद्यनुसन्धानं देहिनो न स्यादिति भावः ।

अनुसन्धानशब्दार्थविवरणम्

'ननु 'अनुसन्धानं स्यात्' इत्यत्र किं सुखादीनामनुभव आपाद्यते? किं वा स्मरणं? यद्वा अन्यतरत्? अथ वा प्रत्यक्षानुभवः? आहोस्वित्प्रत्यक्षज्ञानजन्यं स्मरणं? यद्वा तदन्यतरत्? नाद्यद्वितीयतृतीयाः

---

[1] ज्ञानभिन्नस्य इति मुद्रितपुस्तकस्थपाठो विरुद्ध इति भाति. [2] अन्तःकरणावच्छेदात्.

(मं. टि.) इष्टापत्तेः । देवदत्तेन यज्ञदत्तसुखोल्लासादिना तत्सुखानुमानात् तस्य च स्मरणजनकत्वात् स्मरणानुभवयोरुभयोरङ्गीकारात् । चतुर्थं प्रत्याह ॥ अतीतेति ॥ देवदत्तस्य स्वीय एवातीते सुखे इन्द्रियसंनिकर्षजन्यप्रत्यक्षानुभवाभावात् तत्र व्यभिचार इत्यर्थः । पञ्चमं दूषयति ॥ आदीति ॥ वर्तमानमादिपदार्थः । वर्तमानस्वीय एव सुखे स्मरणाभावात्तत्र व्यभिचार इत्यर्थः । षष्ठेऽप्येतदेव दूषणं ॥ आदीति ॥ अनागतमादिशब्दार्थः । तत्र इन्द्रियसंनिकर्षाभावान्न तत्प्रत्यक्षज्ञानं । अत एव न तज्जन्यस्मरणं चेत्यर्थः ,

यद्वा दुःखानुसन्धातृत्वं खलु 'अहं दुःखी' इत्यनुभवः । न चातीतेन दुःखेन तथा दुःखानुभवोऽस्तीत्याशङ्कते ॥ अतीतेति ॥ सुखादीत्यादिशब्देन दुःखादिकं विवक्षति । अस्मिन् पक्षे परिहारग्रन्थे स्मरणग्रहणं अतीते स्मरणनियमाभावादुपपन्नमिति द्रष्टव्यं ।

परिहरति ॥ न हीति ॥ अनुभवं स्मरणं च प्रत्येकं क्रोडीकृतं वा वर्तमानतया अनुभवं तज्जन्यस्मरणं च प्रत्येकं क्रोडीकृतं वा अनुसन्धानं न ब्रूम इत्यर्थः । यद्वा अनुभवविशेषं स्मरणं वा अनुसन्धानं न ब्रूमः । येनातीतादावनुभवस्मरणनियमाभावेन व्यभिचारः स्यादित्यर्थः । एवं न चेत्तर्ह्यनुसन्धानशब्दार्थो वक्तव्य इति शङ्कते ॥ किं नामेति ॥ परिहरति ॥ स्वीयतयेति ॥ ईश्वरस्यापि सर्वापरोक्षविदो यज्ञदत्तदुःखानुभवितुः तद्दुःखानुसन्धातृत्वं मा भूदिति स्वीयग्रहणं । अनुभवशब्देन स्मृत्यन्यं ज्ञानं विवक्षति । मात्रशब्देन कालविशेषाऽकलनं व्युदस्यति । एवं च न व्याप्तिभङ्ग इत्याह ॥ न चेति ॥ विवक्षितश्चानुभवोऽतीतादावप्यानुमानिकः सम्भवतीति भावः ।

नन्वथापि [1]अतीतादौ व्यभिचारः । अतीतस्य यस्य कस्यचित् आनुमानिकानुभवसम्भवेऽपि सर्वस्य तथात्वनियमाभावात् । न ह्यतीतं सर्वमप्यनुमीयत इति चेत् एवं तर्ह्यनुभवशब्देन साक्ष्यनुभवो विवक्ष्यतां । न चातीतादौ व्यभिचारः । स्वसत्तासमये स्वीयतयाऽनुभवस्यापाद्यत्वात् । अतीतादावपि स्वसत्तासमये स्वीयतया अनुभवसद्भावादिति भावः । फलितं दर्शयति ॥ तदयमिति ॥ एकपदं चैतत् । सोऽयं प्रपञ्च इत्यर्थः । प्रसङ्गस्तर्कः अर्थः प्रयोजनं यस्य प्रपञ्चस्य सोऽयं प्रसङ्गार्थः । अथ वा प्रसङ्गरूपस्य सुखेत्यादिवाक्यस्य अयं वक्ष्यमाणोऽर्थोऽभिप्रेतार्थ इत्यर्थः । अत्र तदिति भिन्नं पदं । तच्च तस्मादित्यर्थे वर्तते ।

॥ विमता इति ॥ ननु कथमेतदनुमानं ? ऐक्यप्रसिद्धौ तन्निषेधायोगात् । अप्रसिद्धौ तु तदभावस्यासिद्धत्वेन अप्रसिद्धविशेषणत्वापत्तेरिति चेन्न । प्रतियोग्यप्रसिद्धावप्यभावप्रसिद्धेरन्यत्रोक्तत्वात् । यद्वा 'यज्ञदत्तधर्मिकमैक्यं न देवदत्तप्रतियोगिकं देवदत्तसुखाद्यनुसन्धानरहितधर्मिकत्वात् यत् ऐक्यं यत्प्रतियोगिकं तत् तत्सुखानुसन्धातृधर्मिकं यथा देवदत्तेन देवदत्तस्यैक्यं' इति वा 'देवदत्तप्रतियोगिकमैक्यं न यज्ञदत्तधर्मिकं

[1] अतीतसुखादिविषयकानुभवरहिते इत्यर्थः । एवमग्रेऽपि.

(मं. टि.)तत्सुखाननुसन्धातृप्रतियोगिकत्वात् यन्नैवं तन्नैवं यथा यज्ञदत्तेन यज्ञदत्तस्यैक्यं ' इति वा प्रयोगस्य विवक्षितत्वात् । ननु घटस्य स्वनिष्ठसुखाद्यननुसन्धातुरपि स्वेनैक्यं विद्यत एव । तथा च तत्र व्यभिचार इत्याशङ्क्याह ॥ चैतन्येति ॥

'स्वरूपैक्ये अनुसन्धानं स्यात्' इति तर्के उपाधिशङ्का

(टी.) ननु दृष्टान्तस्थले अनुसन्धानस्य उपाधिभेदाभावः प्रयोजकः, न तु स्वरूपैक्यमात्रं प्रकृते तु उपाधिभेदसद्भावात् कथमनुसन्धानप्रसङ्गः?

सिद्धान्त्युक्तानुमाने अप्रयोजकत्वशङ्का

कथं च अन्यनिमित्तस्य अनुसन्धानस्याभावात् स्वरूपैक्याभावानुमानं इति ।

पूर्वोक्तशङ्कापरिहारः

अत आह

..........उपाधिभेदेऽपि.......... ।

पूर्ववाक्येन सम्बन्धः । अनेन अनुसन्धानं प्रति उपाधिभेदाभावो न प्रयोजकः । किं नाम? स्वरूपैक्यमेव' इत्युक्तं भवति । तत् कुतो ज्ञायते? इत्यत आह

................हस्तपादादिगो यथा ।

अस्यापि पूर्वेणैव सम्बन्धः । 'स्वरूपैक्ये सति हस्तपाद्युपाधीनां भेदे सत्यपि अनुसन्धानदर्शनात् तदेव प्रयोजकम् नोपाधिभेदाभावः' इति ज्ञायते । अन्यथा उपाधिभेदात् हस्तपादादिगतसुखादिभोग एकस्य न स्यात् । अतः 'उपाधिभेदेऽपि हस्तपादादिगतसुखादिभोगवत् स्वरूपैक्ये सर्वोपाधिगतोऽसौ भेदेन न दृश्येत' इति ।

(मं. टि.) तर्कस्योपाधिं शङ्कते ॥ नन्विति ॥ उपाधिभेदाभाव एव चेत्प्रयोजकः तर्हि यज्ञदत्तशरीराविष्टपिशाचदुःखाद्यनुसन्धानं यज्ञदत्तस्य स्यादिति । तत्राह ॥ न तु स्वरूपैक्यमात्रमिति ॥ उपाध्यैक्यस्वरूपैक्ययोरुभयोरपि प्रयोजकत्वं । अतो नोक्तदोष इत्यर्थः । उपाधेः साधनाव्यापकत्वमाह ॥ प्रकृत इति ॥

(मं. टि.) अनुकूलतर्काभावादप्रयोजकं चानुमानमित्याह ॥ कथं चेति ॥ अन्यनिमित्तस्येति ॥ उपाध्यैक्यावच्छिन्नस्वरूपैक्यनिमित्तकस्येत्यर्थः । नैमित्तकस्यानुसन्धानस्याभावो हि निमित्ताभावं कल्पयति । प्रकृते तु न स्वरूपैक्यमात्रं निमित्तं । किं तर्हि ? विशिष्टमित्युक्तं । विशिष्टाभावश्चोपाध्यैक्याभावमात्रेणोपपद्यत इति स्वरूपैक्याभावानङ्गीकारे बाधकं नेति भावः ।

सिद्धान्तयतीत्याह ॥ अत आहेति ॥ न प्रयोजक इति ॥ अन्वयव्यतिरेकाभ्यां प्रयोज्यप्रयोजकभावस्य निर्णेतव्यत्वात् उपाध्यैक्यस्य व्यतिरेकव्यभिचारान्नाप्रयोजकमनुमानं । नापि तर्कः सोपाधिकः । साध्यव्यापकत्वाभावादिति भावः ।

संश्लिष्टोपाधेरनुसन्धानप्रयोजकत्वशङ्का तन्निरासश्च

(टी.) अथापि स्यात् । संश्लिष्टोपाधित्वमनुसन्धाने प्रयोजकं । तदभावात् प्रकृते नानुसन्धानमिति चेत् किमुपाधिसंश्लेषमात्रं प्रयोजकम् ? उत स्वरूपैक्ये सति ? नाद्यः मातृसुखादेर्गर्भस्थेनानुभवप्रसङ्गात् ।

स्वरूपैक्यविशिष्टसंश्लिष्टोपाधेरनुसन्धानप्रयोजकत्वशङ्कानिरासः

न द्वितीयः स्वरूपैक्यमात्रस्य प्रयोजकत्वे सम्भवति विशेषणप्रक्षेपे प्रमाणाभावात् । दोषान्तरं च सूचयति

नानादेहगभोगानुसन्धानं योगिनो यथा ॥ ७ ॥

स्वरूपैक्यसद्भावात् विश्लिष्टनानादेहगतसुखाद्यनुसन्धानं सौभर्यादियोगिनो दृष्टमिति तदेवानुसन्धाने प्रयोजकं नोपाधिसंश्लेषोऽपीति ज्ञायते । अन्यथा योगप्रभावोत्पादितानेकशरीरगतसुखाद्यनुसन्धानं योगिनो न स्यात् । अतो योगिनः स्वरूपैक्यात् उपाधिषु विश्लिष्टेष्वपि यथा नानादेहगतसुखादिभोगानुसन्धानं तथा प्रकृतेऽप्यापाद्यत एवेति ।

(मं. टि.) प्रयोजकस्य व्यतिरेकव्यभिचारपरिहारार्थं उपाधेः साध्यव्यापकतासिद्ध्यर्थं च उपाधिर्विशिष्यत इति शङ्कते ॥ अथापीति ॥ सिद्धान्ती तत्परिजिहीर्षुर्विकल्पयति ॥ किमुपाधीति ॥ आद्ये दूषणं प्रतिजानीते ॥ नाद्य इति ॥ कोयमुपाधीनामन्योन्यसंश्लेषो नाम ? किं सम्बन्धमात्रं ? किं वा उत्पत्तिमारभ्य सम्बन्धः ? यद्वा मिलित्वा एकावयव्यारम्भकत्वं ? नाद्यः तस्य प्रकृतेऽपि सत्वात् । न द्वितीय इत्याह ॥ मात्रिति ॥ अन्वयव्यभिचारान्न संश्लिष्टोपाधिरनुसन्धाने प्रयोजक इति नासदुक्तमनुमानमप्रयोजकं । नापि

(मं. टि.) तर्कः सोपाधिकः। 'यत्रानुसन्धानं तत्रोपाधिसंश्लेषः' इति साध्यव्यापकत्वेऽपि साध्याभावाविनाभूताभावप्रतियोगिनः स्वरूपैक्यस्य प्रयोजकत्वे सम्भवति साध्याभावाविनाभूताभावरहितस्योपाधेरेवाप्रयोजकत्वं। यथोक्तं,

एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः।
साध्याभावाविनाभावी स उपाधिर्यदत्ययः॥

इति भावः। उभयोत्पत्तिमारभ्य सम्बन्धो विवक्षित इति चेन्न। देवतावचनादिना मध्ये हस्ताद्युत्पत्तिदर्शनेन व्यभिचारात्। अनाद्यसम्बन्धो विवक्षित इति चेन्न। सति हस्ते पादच्छेददर्शनादिति भावः।

स्वरूपैक्ये सति संश्लेषः प्रयोजक इति द्वितीयं दूषयति॥ **न द्वितीय इति॥ दोषान्तरं सूचयतीति॥** यद्यपि उपाधिसंश्लेषविशिष्टस्वरूपैक्यस्य नानुसन्धानप्रयोजकत्वं। योगिषु व्यतिरेकव्यभिचारादित्ययमर्थो मूलग्रन्थे मुखत एवोच्यते तथापि दोषान्तरत्वाकारेण सूच्यत्वं। विशेषणप्रक्षेपे प्रमाणाभावादिति स्वेनोक्तस्याचार्येण सूचितत्वादिति भावः। अथ वा व्यभिचारस्थलस्य कथनेऽपि व्यभिचारः सूच्यत इति तात्पर्यं। 'एकावयव्यारम्भकत्वं संश्लेषः' इति पक्षोऽप्यनेनैव योगिषु व्यतिरेकव्यभिचारकथनेन निरस्तो वेदितव्यः।

### अन्तःकरणरूपोपाधिभेदाभावस्य अनुसन्धानप्रयोजकत्वशङ्का तन्निरासश्च

ननु अन्तःकरणरूपोपाधिभेदाभावोऽनुसन्धाने प्रयोजकः। एवं च चैत्रस्य हस्तपादादिभेदेऽपि अन्तःकरणभेदाभावात् योगिनोऽपि शरीरभेदेऽपि अन्तःकरणभेदाभावादनुसन्धानोपपत्तिः। देवदत्तयज्ञदत्तयोस्तु अन्तःकरणभेदादननुसन्धानं। मातृगर्भस्थयोरपि अन्तःकरणभेदादननुसन्धानोपपत्तौ 'स्वरूपैक्ये सति' इति न विशेषणीयं। तेन गौरवं च नास्तीति चेत्

नैष दोषः। सुप्तौ अन्तःकरणविलयमङ्गीकुर्वतस्तव मते प्रत्यहमन्तःकरणभेदसद्भावेन 'पूर्वद्युर्मया दुःखमनुभूतं' इत्यनुसन्धानाभावप्रसङ्गात्। सुप्तमुक्तयोरन्तःकरणरूपोपाधिभेदाभावेन तयोः जाग्रत्संसारसम्बन्धिदुःखाद्यनुभवप्रसङ्गाच्च। एकस्यैवाणुभूतस्यान्तःकरणस्य विप्रकृष्टदेशस्थितानेकयोगिशरीरसम्बन्धासम्भवेन योगिनोऽपि अन्तःकरणभेदसद्भावाच्च। अन्यथा देवदत्तयज्ञदत्तयोरप्यन्तःकरणैक्यप्रसङ्गात्।

### अविद्यारूपोपाधिभेदाभावस्यानुसन्धानप्रयोजकत्वशङ्का तन्निरासश्च

ननु तर्ह्यविद्यारूपोपाधिभेदाभावः अनुसन्धाने प्रयोजकः। एवं च न दोषः, सुषुप्तावन्तःकरणविलयवत् अविद्याविलयाभावात् अविद्याया अन्तःकरणवदणुत्वाभावेन योगिन्यविद्याभेदाभावात् देवदत्तयज्ञदत्तादौ च **अनेकजीववादे** अविद्याभेदात् **एकजीववादे** तु व्यवस्थाया एवाभावादिति चेत्

(मं. टि.) उच्यते, अविद्यारूपोपाधिभेदाभावस्यानुसन्धाने प्रयोजकत्वे मायोपाधिकस्येश्वरस्य च ऐन्द्रियकसुखाद्यनुसन्धानं स्यात् ।

### अज्ञानरूपोपाधिभेदाभावस्यानुसन्धानप्रयोजकत्वशङ्का तन्निरासश्च

अज्ञानरूपोपाधिभेदाभावोऽनुसन्धाने प्रयोजक इति चेन्न । मायायां लोकेऽज्ञानपदाप्रयोगात् । न हि मायाविनमज्ञानिनमाचक्षते । न च मायावी कस्यचिदर्थस्याज्ञानादैन्द्रजालिकं दर्शयति । किं तु ? ओषधिविशेषज्ञानादेव । किं च मुक्तस्याज्ञानरूपोपाधिभेदाभावात् संसारिसम्बन्धिदुःखाद्यनुसन्धानप्रसङ्गः ।

### अज्ञानरूपोपाध्यैक्यस्यानुसन्धानप्रयोजकत्वाशङ्का तन्निरासश्च

अज्ञानरूपोपाध्यैक्यमनुसन्धाने प्रयोजकमिति चेत् तर्हि मुक्तस्य स्वरूपसुखानुभवो न स्यात् । 'चैतन्यैक्येऽप्यन्तःकरणभेदात् अविद्याभेदाद्वा अननुसन्धानं' इत्यत्र मां प्रति दृष्टान्ताभावेन शरीरभेदवदन्तःकरणादिभेदस्यापि चैतन्यैक्ये सति अनुसन्धानाप्रतिबन्धकत्वात् ।

### भोगायतनाभेदस्यानुसन्धानप्रयोजकत्वशङ्का तन्निरासश्च

एतेनैतदपि निरस्तं 'यथा खलु स्वकर्णपुटपरिच्छिन्ननभोभागसमवायिशब्दोपलम्भेऽपि भागान्तरवर्तिशब्दानुपलम्भः तथा सुखदुःखप्रयत्नाद्युपलम्भानुपलम्भव्यवस्थितिसिद्धेस्तत्कर्णशष्कुलीमण्डलावच्छिन्नस्य नभसस्तत्र तत्र श्रोत्रभाववत् तत्तद्भोगायतनावच्छेदलब्धजीवभावस्य तत्र तत्र भोगोपपत्तौ किमनेकात्मकल्पनादुर्व्यसनेन' इति ।

अव्याकृताकाशस्यास्माभिः श्रोत्रत्वानङ्गीकारात् । आकाशस्य स्वतः सांशत्वोपपादनाच्च । योगिनो भोगायतनभेदेऽपि [1] भोगाव्यवस्थाया उक्तत्वाच्च । किं च यथा अनेकात्मवादे तत्तत्कर्णपुटस्य तत्तदीयत्वनियमः न तथैकात्मवादे तत्तद्भोगायतनस्य नियमोऽस्ति । तथा च स्वीयकर्णपुटद्वयपरिच्छिन्ननभोभागवृत्तिशब्दोपलम्भवदेकात्मवादे सर्वेषां भोगायतनानां स्वीयत्वात् सर्वभोगायतनपरिच्छिन्नात्मसम्बन्धिसुखदुःखाद्यनुभव एकैकस्य स्यादेवेत्यलं ।

### योगिनो नानादेहगतभोगानुसन्धानस्यासिद्धिशङ्का तन्निरासश्च

(टी.) स्यादेतत् । परबुद्धेरप्रत्यक्षत्वात् योगिनो नानादेहगतभोगानुसन्धानं कुतः सिद्धम् ? इत्यत आह

---

[1] भोगानुसन्धानव्यवस्थाया उक्तत्वाच्च, इति पाठेन भाव्यमिति भाति.

न चेद्भोगानुसन्धानं तदिच्छा योगिनः कुतः ।

(टी.) इच्छापूर्वं खलु योगिनोऽनेकशरीरोपादानं पुराणेषु पठ्यते। तत्र यदि योगिनोऽनेकशरीरगतसुखाद्यनुसन्धानं न स्यात् तदा तस्य तदिच्छैव न स्यात् । शरीरोपादानस्य प्रयोजनान्तराभावात् । अप्रयोजनस्य प्रेक्षावता निवर्तिष्यमाणत्वात् । अतो ज्ञायते अस्त्यनुसन्धानमिति ।

योगिनो नानाशरीरग्रहणे अनुसन्धानातिरिक्तप्रयोजनाभावस्य असिद्धिशङ्का तत्परिहारश्च

न च योगिनोऽविवेकिनः । येनानुसन्धानासाधनमपि देहबाहुल्यं तदर्थमिच्छन्तीति कल्पयामः ।

(म॰ टि.) आक्षिपति ॥ स्यादेतदिति ॥ परिहरति ॥ अत आहेति ॥ योगिनः प्रवृत्तिः किमिच्छापूर्विका? उत न? आद्यः मूलग्रन्थेन दूषितः । द्वितीयं दूषयति ॥ इच्छापूर्वकं खल्विति ॥ इच्छापूर्वकमिति पक्षे किं सप्रयोजनं? किं वा निष्प्रयोजनं? आद्यं दूषयति ॥ तत्रेति ॥ तथा सतीत्यर्थः । ननु 'सप्रयोजनत्वेऽपि प्रयोजनमात्रमपेक्षते न तु सुखाद्यनुसन्धानमिति नियमः' इति तत्राह ॥ शरीरेति ॥ द्वितीयं दूषयति ॥ अप्रयोजनस्य चेति ॥

ननु 'प्रयोजनान्तराभावात्' इत्यसिद्धो हेतुः देहबहुत्वस्य वैभवार्थत्वादित्यत आह ॥ न चेति ॥ तदर्थमिति ॥ तच्छब्देन योगिन इत्यत्र विशेषणत्वेन प्रकृतो योगः तपोजन्यापूर्वरूपो विवक्ष्यते । तस्यार्थः प्रयोजनं । देहबहुत्वविशेषणं चैतत् । वैभवार्थमिति शेषः । यद्वा बुद्धिस्थत्वात् तच्छब्देन वैभवं परामृश्यते । वैभवायेत्यर्थः । अतिप्रयाससाध्ययोगजन्यापूर्वस्य प्रेक्षावतां क्षुद्रफले व्ययीकरणानुपपत्तेरिति भावः ।

प्रकारान्तरेण प्रयोजनान्तराभावस्यासिद्धिशङ्का तत्परिहारश्च

(टी.) अथोच्येत, न योगिनः अनेकशरीरोपादित्सया अनेकशरीरगतसुखाद्यनुसन्धानमेकस्य कल्पयितुं शक्यते देहबाहुल्यार्थमेवेच्छोपपत्तेः । [1]न च तस्य वैयर्थ्यादप्रयोजकत्वं । कर्मक्षयाय भोगार्थत्वात् । भोगश्च विनाप्यनुसन्धानेन तत्र तत्र तद्गतांशैः शक्यते कर्तुमिति । तत्राह

अनुसन्धानरहितदेहबाहुल्यमन्यथा ॥ ८ ॥
सिद्धमेव हि तत्पक्षे विशेषो योगिनः कुतः ।

न योगिनः अनुसन्धानेन विना केवलदेहबाहुल्यार्थमेवेच्छेति कल्पयितुं शक्यते । तथा सति अनुसन्धानरहितदेहबाहुल्यस्य योगित्वेन विनापि विद्यमानत्वाद्योगिनोऽनेकशरीराधिष्ठातृत्वमिति

[1] न च तस्य वैयर्थ्यादप्रयोजनत्वं इति पाठेन भाव्यमिति भाति । 'ततः कथं तस्य प्रयोजनत्वं?' इति मन्दारमञ्जरीसंवादोऽस्मिन्नेव पाठे घटते,

(टी.) विशेषो न स्यात्। अस्ति चासौ। तेन ज्ञायते 'न शरीरबाहुल्यमात्रायेच्छा योगिनः किं तु ? तद्गतभोगाद्यनुसन्धानार्था' इति। कथमयोगिनोऽपि शरीरबाहुल्यं सिद्धम् ? इत्यत उक्तं ॥ तत्पक्ष इति ॥ सर्वशरीरगतचेतनानां स्वभावतोऽभेदस्य परेणाङ्गीकृतत्वादिति।

(मं. टि.) 'प्रयोजनान्तराभावात्' इत्यस्य असिद्धिमाशङ्कते ॥ अथेति ॥ कल्पनं चासङ्घटितमित्याह ॥ एकस्येति ॥ जीवस्याणुत्वेन नानाशरीरगतसुखाद्यनुसन्धातृत्वानुपपत्तेरिति भावः। देहबाहुल्यं च न स्वरूपेण पुरुषार्थः। ततः कथं तस्य प्रयोजनत्वम् ? इत्यत आह ॥ न चेति ॥ स्वरूपेणापुरुषार्थत्वेऽपि पुरुषार्थान्तरसाधनत्वमस्तीत्याह ॥ भोगार्थत्वादिति ॥ ननु भोगो नाम किं सुखादिकमेव ? किं वा तदनुसन्धानं ? नाद्यः अननुसंहितस्यापि सुखस्य पुरुषार्थत्वे परसुखस्यापि पुरुषार्थत्वप्रसङ्गात्। द्वितीये सिद्धं नः समीहितमित्यत आह ॥ कर्मक्षयायेति ॥ अननुसंहितस्यापि सुखस्य संसारनिदानकर्मनाशकत्वेन पुरुषार्थत्वमिति भावः। ननु तथापि सुखादेर्ज्ञातैकसत्वादुत्पन्नं सुखं ज्ञायेतैवेति तत्राह ॥ भोगश्चेति ॥ अनुसन्धातुरंशिनः सर्वदेहव्यापित्वाभावात् अनुसन्धात्रभावबाधितत्वेन 'यत् सुखं तत् ज्ञातैकसत्' इति व्याप्तिर्नाङ्गीक्रियत इति भावः। तर्हि भोगश्च न स्यात् सानुसन्धातृकस्यैव शरीरस्य भोगायतनत्वादित्यत आह ॥ तत्र तत्र तद्गतांशैरिति ॥ अनुसन्धाने अंश्यपेक्षा सुखदुःखोत्पत्तिलक्षणभोगस्तु अंशसन्निधानमात्रेण भवतीति भावः। अंशैरिति करणे तृतीया। करणत्वं च शरीरस्य भोगायतनताया उपपादकत्वादौपचारिकं।

### 'यत् सुखं तत् अनुसन्धीयत एव' इति व्याप्तिसमर्थनम्

नानाशरीरेष्वंशानामनङ्गीकारे निर्जीवशरीर इव भोगोऽपि न स्यात्। अंशानामङ्गीकारे अंश्यप्यङ्गीकर्तव्यः। न चाणुत्वविरोधः अणोरपि शक्त्या पादादिव्यापित्ववत् नानादेहव्यापित्वस्याप्युपपत्तेः। तेन विना अंशानामवस्थानायोगात्। तयोरेकत्वात्। योगे वा पादादाविव अंशद्वारा अंशी चानुसन्दधीत। तथा च 'यत्सुखमुत्पन्नमविनष्टं च तदनुसन्धीयत एव' इति व्याप्तेर्बाधकाभावात् अन्यकर्मफलस्य चान्येनानुसन्धातुमशक्यत्वात् तस्यैवानुसन्धानं सुस्थं।

### सुखादिरूपभोगस्यानुसन्धानानङ्गीकारे योग्ययोगिनोरविशेषापादनसमर्थनम्

अपि चानुसन्धानाभावेऽपि कर्मक्षयार्थत्वेन भोगः सार्थकोऽस्तु। अनुसन्धानराहित्याविशेषात् 'योगिनोऽयोगिनो विशेषो न स्यात्' इत्यभिप्रायेण सिद्धान्तयति ॥ तत्राहेति ॥ मूलग्रन्थे अन्यथा इत्यत्र अपिशब्दाध्याहारेणाह ॥ योगित्वेन विनापीति ॥ ननु 'विशेषो न स्यात्' इत्यत्र विशेषशब्देन अनेकदेहअन्यदुःखानुसन्धानाननुसन्धानरूपो विशेषो विवक्षितः? किं वा एकशरीरयोगित्वानेकशरीरयोगित्वलक्षणः? अथ वा स्वभोगसाधनानेकशरीरभावाभावलक्षणः? नाद्यः योगिनोऽप्यनुसन्धानाभावेनेष्टापत्तेः। नापि द्वितीयः ऐकात्म्यवादि-

(मं. टि) नामयोगिनोऽप्यनेकशरीरसद्भावेनेष्टापत्तेः । तृतीयस्तु स्यादेव अयोगिनोऽनेकशरीरत्वेऽपि तेषां स्वभोगसाधनत्वाभावात् इत्याक्षिपति ॥ **कथमयोगिन इति** ॥ भोगस्य स्वीयत्वं यदि नाम स्वानुसन्धेयत्वं तदा न योगिनोऽपि तत् । स्वशरीरजन्यत्वं चेत् अयोगिनोऽप्यस्तीत्यभिप्रायेण परिहरतीत्याह ॥ **अत उक्तमिति** ॥

### आत्मैक्यवादिभिर्योग्ययोगिनोर्विशेषसमर्थनम्

(टी.) अथ मन्येत, एकस्यैव योगिनोऽनेकशरीरगतसुखानुसन्धानाभावेऽपि [1]योगिन एवानेकशरीरत्वम् इति विशेषो युज्यते । तेषां शरीराणां तत्कर्मफलभोगार्थत्वात् । भोगस्य च अनुसन्धानेन विनाप्युपपत्तेः । न चैवं सकलदेहगतचेतनानां स्वभावतोऽभेदेऽपि [2]देहबाहुल्यस्य अस्ति देवदत्तकर्मफलभोगार्थतेति ।

### तन्मतनिराकरणम्

तदेतदसत् , सर्वदेहगतात्मनां देवदत्ताभेदेन सर्वकर्मणामपि देवदत्तसम्बन्धित्वापत्त्या सर्वदेहानां देवदत्तकर्मफलभोगार्थताऽभावानुपपत्तेः । अभेदेऽपि देवदत्तोपाधिकृतमेव कर्म देवदत्तसम्बन्धि नान्यदिति नियम इति चेन्न । अभेदादेव सर्वोपाधीनामपि देवदत्तोपाधित्वापातात् । देवदत्तकर्मनिर्मित एव देवदत्तोपाधिर्नेतरोऽभेदेपीति चेत् तत्राह

> सिद्धौ हि कर्मभेदस्य स्यादुपाधिविभिन्नता ॥९ ॥
> तत्सिद्धौ चैव तत्सिद्धिरित्यन्योन्यव्यपाश्रयः ।

**इदं देवदत्तस्यैव इदं यज्ञदत्तस्यैव इति कर्मभेदसिद्धौ तत्तत्कृतत्वेन अयं देवदत्तोपाधिः अयं यज्ञदत्तोपाधिः इति उपाधिविभिन्नता स्यात् स्वरूपाभेदेन निमित्तान्तराभावात् । उपाधिभेदसिद्धावेव कर्मभेदसिद्धिः उक्तादेव हेतोः । ततश्च अन्योन्याश्रयात् नैकमपि सिद्ध्यति । कर्मोपाधिव्यक्तिभेदाभान्योन्याश्रय इति चेत् । तथाप्यनवस्था स्यात् । अनादित्वान्नेति चेन्न । असिद्धविषयत्वेन मूलक्षतेः । कर्माण्युपाधयश्च विभिन्ना एव दृश्यन्त इति चेत् सत्यं, तद्भेदस्य स्वाभाविकात्मभेदेनैवोपपत्तेः । तदेवं योगिनोऽनुसन्धानाभावे विशेषाभावप्रसङ्गादनुसन्धानमङ्गीकार्यं, अभेदो वा त्याज्यः । अनुसन्धाने च सति उपाधिविश्लेषोऽकिञ्चित्कर इति 'स्वरूपैक्याङ्गीकारे सुखदुःखादिभोगो भेदेन न दृश्येत' इत्युक्तं युक्तं ।**

---

[1] मं. टि. योगिन एवानेकशरीरसद्भाव इति-

[2] मं. टि. शरीरबाहुल्यस्य.

(मं. टि ) शङ्कते ॥ अथेति ॥ अनेकशरीरसद्भाव इति ॥ स्वभोगसाधनानेकशरीरसद्भाव इत्यर्थः। ॥ भोगार्थत्वादिति ॥ भोगप्रयोजनकत्वादित्यर्थः। भोगस्य स्वीयत्वं दुर्निरूपमित्युक्तमित्याशङ्क्य तन्निरूपयितुं भोग विशिनष्टि ॥ तत्कर्मफलेति ॥ स्वकर्मक्षयकारित्वं स्वीयत्वमित्यर्थः। कर्मक्षयाय भोगार्थत्वात् इत्यत्र भोगस्य अपुरुषार्थत्वशङ्कानिरासाय कर्मक्षयः फलत्वेनाभिहितः। इदानीं त्वविशेषशङ्कानिरासार्थमभिधीयत इति न पौनरुक्त्यं ॥ भोगस्य चेति ॥ 'सुखत्वादिकं ज्ञातैकसन्मात्रनिष्ठं न भवति धर्मत्वात् घटत्वादिवत्' इत्यनुमानेनोत्पन्नस्यापि सुखस्याननुसन्धानोपपत्तेरिति भावः। अयं च विशेषः अयोगिनो नास्तीत्याह ॥ न चैवमिति ॥ एवं योगिवत् शरीरबाहुल्यस्य यज्ञदत्तादिशरीराणां देवदत्तकर्मफलभोगार्थता नेति सम्बन्धः।

यदुक्तमनुमानं तत्र ज्ञातैकसन्मात्रनिष्ठत्वं प्रसिद्धं न वा ? न चेत् तदभावोऽप्यप्रसिद्ध इत्यप्रसिद्धविशेषणत्वं। प्रसिद्धं चेत् यत्र प्रसिद्धं [1]तन्निष्ठधर्म एव व्यभिचारः। अस्मद्रीत्या आत्मत्वादौ व्यभिचारश्च। आत्मनः स्वकर्मकसंविद्रूपत्वात्। सुखादेर्ज्ञातैकसत्वानङ्गीकारे संशयादिगोचरत्वापत्तिरिति तर्कबाधश्च। सुखादिज्ञानरूपस्य साक्षिणो नित्यत्वेन तज्ज्ञानस्यावश्यकत्वाच्चेत्यादयो दोषा ऊह्याः। तस्माद्भोगानुसन्धानं दुष्परिहरं।

अपि च अस्त्वनुसन्धानं विनापि भोगः तथापि न विशेषः सूपपाद इत्याह ॥ तदेतदिति ॥ कारिकायां भेदभिन्नताशब्दौ भिन्नस्वामिकत्वापरपर्यायनियमवाचकौ। कर्मोपाधिस्वरूपभेदपरत्वे प्रकृतानुपयोगादित्याह ॥ इदं देवदत्तस्येति ॥ कोटिद्वयाङ्गीकारे खलु अन्योन्याश्रयः। प्रकृते च अनेककोटिसद्भावान्नान्योन्याश्रय इति शङ्कते ॥ कर्मेति ॥ एवं तर्ह्यनवस्थाऽस्त्विति परिहरति ॥ तथापीति ॥ प्रवाहस्यानादित्वात् बीजाङ्कुरादाविव नानवस्था दोषायेति शङ्कते ॥ अनादित्वादिति ॥ दृष्टः कर्मोपाधिनियमोऽनन्यथासिद्धश्चेत्खलु नियम्यनियामकभावापन्नां कर्मोपाधिपरम्परां कल्पयेत्। स एव न दृश्यत इति गूढाभिसन्धिः परिहरति ॥ नासिद्धेति ॥ अभिप्रायमजानानः पर आह ॥ कर्माणीति ॥ विभिन्ना इति ॥ कर्माणीत्यनेन विभिन्नानीति लिङ्गव्यत्ययेन सम्बन्धः। नियमस्य दृष्टत्वमात्रमङ्गीकरोति ॥ सत्यमिति ॥ कल्पकत्वं तु नाङ्गीक्रियते अन्यथासिद्धत्वादिति गूढाभिसन्धिं विवृणोति ॥ तद्भेदस्येति ॥ अयं भावः, 'यद्धि यस्य कारणं न तत्तस्य कार्यं' इति यथा नियमः तथा यो धर्मो यन्निरूप्यकारणतावच्छेदकः नासौ तन्निरूप्यकार्यतावच्छेदकः यथा तन्तुत्वं' इत्यपि नियमः। तत्र पटनिरूप्यकारणतावच्छेदकस्य तन्तुत्वस्य न पटप्रतियोगिककार्यतावच्छेदकत्वं। न हि कश्चिदपि तन्तुः पटजन्यः। येन तन्तुत्वं पटाख्यकारणनिरूप्यकार्यतावच्छेदकं स्यात्। प्रकृते च उपाधिनियमनिरूप्यकारणतावच्छेदकस्य कर्मनियमत्वस्य तन्निरूप्यकार्यतावच्छेदकत्वमस्त्येव। कस्यचित्कर्मनियमस्योपाधिनियमकारणत्वेऽपि कस्यचित् कर्मनियमस्योपाधिनियमकार्यत्वात्। बीजाङ्कुरादौ गत्यन्तराभावात्तथा अङ्गीक्रियते। न चैवं प्रकृते। अन्यथाप्युपपन्नत्वादिति। उपसंहरति ॥ तदेवमिति ॥ योगिनोऽनुसन्धानलक्षणविशेषमनङ्गीकृत्य अनेकशरीरित्वलक्षणविशेषाङ्गीकारे अयोगिनस्तदभावसिद्ध्यर्थं आत्माभेदस्त्याज्य इत्याह ॥ अभेदो वेति ॥

---

[1] तत्र धर्म एव, इति पाठेन भाव्यमिति.

(मं. टि.) योगिनो विशेषसिध्यर्थं चात्माभेदत्यागे घट्टकुटयां प्रभातवृत्तान्तायितं स्यादिति भावः । अथ तत्परिहाराय योगिवदयोगिनोऽप्यनेकशरीरित्वमङ्गीक्रियते तथा योगिनोऽनुसन्धानलक्षणविशेषोऽस्तीत्यभिमानः तदा उपाधि-संश्लेषविश्लेषौ नानुसन्धानाननुसन्धाननियामकौ योगिषु संश्लेषव्यतिरेकेऽप्यनुसन्धानदर्शनेन व्यतिरेकव्यभिचारात् विश्लेषसद्भावेऽप्यनुसन्धानदर्शनेन अन्वयव्यभिचाराच्चेत्याह ॥ अनुसन्धाने चेति ॥

### अद्वैतवादद्वयसाधारणदोषकथनम्

(टी.) एवमसत्योपाधिनिमित्ताध्यस्तभेदमङ्गीकुर्वतां सत्योपाधिकृतसत्यभेदमभ्युपगच्छतां चाद्वैतवादिनां पक्षं पृथङ्निराकृत्य साधारणदोषेणापि दूषयति

आत्मस्वभावभेदस्य विदोषत्वेन चाखिलः ॥ १० ॥
प्रत्यक्षादिविरोधाच्च दुष्टः पक्षोऽयमञ्जसा ।

'जीवात्मपरमात्मनोः जीवानां च यो भेदः स स्वभावत एव, न मिथ्यासत्योपाधिनिमित्तः' इति पक्षस्य । विदोषत्वेनेत्युपलक्षणं । प्रामाणिकत्वेनेत्यपि ज्ञातव्यं । अयमखिलः पक्ष इत्युक्तोभयविधाद्वैतसिद्धान्तः । प्रत्यक्षादिविरोधाच्चेत्युपलक्षणं । प्रमाणाभावाच्चेत्यपि द्रष्टव्यं । परपक्षप्रतिक्षेपेण स्वपक्षसाधनेन च सिद्धान्तस्य प्रतिष्ठा तदभावे दुष्टता । परपक्षप्रतिक्षेपो द्विविधः बाधकसाधकभावाभावव्युत्पादनभेदात् । स्वपक्षसाधनमपि साधकबाधकभावाभावव्युत्पादनभेदेन द्विविधं । तत्रैकैकस्याप्यभावो दुष्टत्वहेतुः किमु सर्वस्येति । तदिदमुक्तं अञ्जसा इति । तत्र आत्मस्वभावभेदबाधकस्य तदभेदसाधकस्य चाभावोऽन्यत्र व्युत्पादितः ।

(मं. टि.) मूलग्रन्थे दुष्टः पक्षोऽयम् इत्यत्र महाप्रकृतस्य पक्षद्वयस्य दुष्टत्वं विवक्ष्यते । तथा चाखिलपदप्रयोगो युक्त इत्यभिप्रेत्य वृत्तानुवादपूर्वकं वर्तिष्यमाणमवतारयति ॥ एवमिति ॥ आत्मेत्यत्र भेदं प्रति आत्मनो न धर्मित्वमात्रं नापि प्रतियोगित्वमात्रं । परेणापि आत्मनो जडात्, जडस्य चात्मनो भेदाङ्गीकारात् । किं तर्हि ? उभयमित्याह ॥ जीवेति ॥ स्वभावभेदस्य इत्यत्र पञ्चमीतत्पुरुषो विवक्षित इत्याह ॥ स्वभावत इति ॥ स्वभावत इत्यस्यार्थमाह ॥ [1]न मिथ्योपाधिनिमित्त इति ॥ भेदशब्देन तत्पक्षो लक्ष्यत इत्याह ॥ इति पक्षस्येति ॥ चशब्दार्थमाह ॥ विदोषत्वेनेत्युपलक्षणमिति ॥ ज्ञातव्यमिति ॥ चशब्दसूचिततया ज्ञातव्यमित्यर्थः ।

---

[1] ॥ न मिथ्यासत्योपाधिनिमित्तो वेति ॥ इति मुद्रितपुस्तकगतः पाठः साधुरिति भाति । स्वभावपदेन पक्षद्वयस्याप्यपाकरणात् । अस्मिन्नपि पाठे वाशब्दः प्रामादिक इति भाति.

(मं. टि.)नन्वेवं तह्युपलक्षणं न स्यात्, चशब्देनोक्तत्वादिति चेन्न । चशब्दस्य निपातत्वात् निपातानां च द्योतकत्वेन अभिधायकत्वाभावात् । द्योतितत्वेऽपि अनभिहितत्वमात्रेणोपलक्षणपदप्रयोगोपपत्तेः । निपातानां चाभिधायकत्वे [1]समुच्चयो वर्तत इत्यभिप्रायेण 'चो वर्तते' इति प्रयोगः स्यात् । [2]चशब्दस्यार्थान्तरमाह ॥ **प्रत्यक्षादीति** ॥ अत्राप्युपलक्षणपदप्रयोगः पूर्ववन्निर्वाह्यः । यद्वा चशब्दयोरुक्तासाधारणदूषणसमुच्चयार्थत्वं परस्परसमुच्चयार्थत्वं वा आश्रित्य उभयत्राऽपि उपलक्षणपदप्रयोगो मुख्य एव द्रष्टव्यः ।

### अञ्जसा इत्येतत्पदकृत्यम्

**अञ्जसा दुष्टः** इत्युक्तं । तत्र अञ्जसा इत्यस्यार्थमाह ॥ **परपक्षेत्यादिना** ॥ **साधकबाधकभावाभावव्युत्पादनभेदेनेति** ॥

### भावत्वस्य दुर्निरूपत्वपूर्वपक्षः

ननु किमिदं भावत्वं नाम? निष्प्रतियोगिकत्वं? उत अभावादन्यत्वं? यद्वा अभावत्वानधिकरणत्वं? अथ वा अभावविरोधित्वं? उत 'अस्ति' इति प्रत्ययविषयत्वं? आहोस्वित् 'नास्ति' इति प्रत्ययाविषयत्वं? नाद्यः सादृश्यादावव्याप्तेः । तस्यापि प्रतियोगिनिरूप्यत्वात् । न द्वितीयः अभावस्यापि यत्किञ्चिदभावादन्यत्वेनातिव्याप्तेः । न तृतीयः अभावत्व एवातिव्याप्तेः । तस्य तदनधिकरणत्वात् । न चतुर्थः नित्यत्वाभावस्याप्यनित्यत्वाभावविरोधित्वेनातिव्याप्तेः ।

न पञ्चमः अभावस्यापि 'घटाभावोऽस्ति' इति प्रतीतिविषयत्वेनातिव्याप्तेः । अथ मतं, प्रथमप्रतीतौ 'अस्ति' इति प्रतीयमानत्वं विवक्षितं । एवं च नातिव्याप्तिः । 'घटो नास्ति' इति ज्ञात्वैव 'घटाभावोऽस्ति' इति ज्ञानादिति चेत् केयं 'अस्ति' इतिप्रतीतिः? किं 'अस्ति' इति व्यवहारोत्पादिका? किं वा अस्तिपदार्थविषयिका? किं वा अस्तित्वप्रकारिका? नाद्यः अव्याप्तेः । 'घटोऽस्ति' इति ज्ञानस्यापि 'अस्ति' इति व्यवहारजनकत्वनियमाभावेन त्वदुक्तस्यास्तीतिप्रत्ययविषयत्वस्याभावात् । उत्पन्नस्यापि ज्ञानस्य व्यवजिहीर्षाभावेन व्यवहाराजनकत्वात् । न द्वितीयः अभावे अतिव्याप्तेः । अभावस्य अस्तिपदार्थत्वाभावे कथं पश्चात् 'घटाभावोऽस्ति' इति प्रतीतिः?

तृतीये किमिदमस्तित्वं? सत्वं वा? भावत्वं वा? आद्ये अनुगतसत्तामनङ्गीकुर्वता त्वया स्वरूपसत्वमेव वक्तव्यं? तत्किं स्वरूपप्रतीतावेव प्रतीयते? उत न? न चेत् कथं घटविषयिका प्रथमप्रतीतिरस्तित्वावलम्बिनी?

---

[1] समुच्चितौ वर्तते इति मुद्रितपुस्तकस्थपाठ एव साधुरिति भाति. [2] चशब्दान्तरार्थमाह इति मुद्रितपुस्तकस्थः पाठः प्रथमचकारस्य अर्थान्तराकथनेन द्वितीयचकारस्यैव अर्थकथनेन साधुरिति भाति.

(मं. टि.) प्रथमे अभावविषयिकाऽपि प्रथमा प्रतीतिः कथमस्तित्वालम्बिनी न स्यात् ? अभावेऽपि स्वरूपसत्ताया: भाव इव प्रथममेव प्रत्येतव्यत्वात् । द्वितीये अन्योन्याश्रयः । तस्मान्न पञ्चमः ।

नापि षष्ठः घटस्यापि 'घटाभावो नास्ति' इति प्रत्ययविषयत्वेन असम्भवात् । प्रथमप्रतीतौ 'नास्ति' इत्यप्रतीयमानत्वं विवक्षितम् । न चैवमसम्भवः । भावस्य प्रथमं 'घटोऽस्ति' इत्यस्तित्वप्रकारेणैव प्रतीतेः । नाप्यतिव्याप्तिः । अभावस्य प्रथममेव 'नास्ति' इत्येव नास्तित्वाकारेणैव प्रतीतेरिति चेन्न । त्वन्मते घटादेरपि प्रथममेव 'अन्यात्मना नास्ति' इति प्रतीतेः । अन्यथा स्वेतरसर्वात्मना प्रतीतिप्रसङ्गात् । भेदस्य स्वरूपत्वेन तथाप्रतीत्यवश्यम्भावाच्च । तस्माद्भावत्वं दुर्निरूपम् ।

### अभावत्वस्य दुर्निरूपत्वपूर्वपक्षः

किं चेदमभावत्वं नाम ? सप्रतियोगिकत्वं वा ? भावादन्यत्वं वा ? भावत्वानधिकरणत्वं वा ? भावविरोधित्वं वा ? 'अस्ति' इति प्रत्ययाविषयत्वं वा ? 'नास्ति' इति प्रत्ययविषयत्वं वा ? नाद्यः सादृश्यादावतिव्याप्तेः । न द्वितीयः भाव एवातिव्याप्तेः । भावस्यापि यत्किञ्चिद्भावादन्यत्वात् । न तृतीयः भावत्वानधिकरणत्वस्य अभावरूपत्वेनात्माश्रयत्वात् । न चतुर्थः शीतस्पर्शस्याप्युष्णस्पर्शविरोधित्वेनातिव्याप्तेः ।

ननु च स्वाभाविकभावविरोधित्वं विवक्षितं । न चैवं शीतस्पर्शविरोधिन्युष्णस्पर्शे अतिव्याप्तिः । शीतस्पर्शस्योष्णस्पर्शाभावव्याप्तत्वेनैवोपाधिना उष्णस्पर्शविरोधित्वेन स्वाभाविकविरोधाभावात् । भावाभावयोस्तु स्वाभाविक एव विरोधः उपाधेरस्फुरणात् । न च भावज्ञानस्याभावज्ञानाधीनत्वेन अन्योन्याश्रयः शङ्क्यः । पदार्थाश्रयत्वस्य भावत्वात् । न चाभावेऽतिव्याप्तिः । अभावे हि भवन् पदार्थो भावो वा अभावो वा । नाद्यः भावाश्रयत्वे भावत्वापत्तेः । न द्वितीयः अभावे अभावाङ्गीकारे आत्माश्रयत्वादिति चेन्न ।

विरोधस्यानिरूपणात् । स किं सहानवस्थानलक्षणः? किं वा वध्यघातकभावलक्षणः । नाद्यः तस्याभावरूपत्वेनात्माश्रयत्वात् । द्वितीयेऽपि तदभावव्याप्तत्वं वा तदभावरूपत्वं वा । उभयथाऽप्यन्योन्याश्रयः । अथ प्रागभावप्रध्वंसयोर्भावेन सह कालतो विरोधः । अत्यन्ताभावस्य तु देशत इत्यादिप्रतिनियत एव विरोध इति चेन्न । अनुगतविरोधशब्दार्थस्याभावे लक्षणाननुगतेः ।

यच्चोक्तं 'पदार्थाश्रयत्वं भावत्वं' इति तत्र वक्तव्यं, अभावस्यापि किञ्चिल्लक्षणमस्ति ? न वा ? इति । न चेद्भावाद्व्यावृत्तिर्न स्यात् । अस्ति चेत् कथं पदार्थाश्रयत्वाभावः? लक्षणस्यैव पदार्थत्वात् । ननु लक्षणमभावानाश्रितमपि तटस्थं सत् इतरेभ्यो व्यावृत्तिं अनुगतं व्यवहारं च करोतीति चेत् तथापि तटस्थलक्षणलक्ष्यत्वरूपधर्माश्रयत्वेन पदार्थाश्रयत्वावश्यम्भवात् । न चात्माश्रयः व्यक्तिभेदाद्भावे भावान्तरवदभावेऽपि अभावान्तरस्यानुभवसिद्धत्वाच्च । तस्मान्न चतुर्थः ।

(मं. टि.) नापि पञ्चमः अभावस्यापि 'घटाभावोऽस्ति' इति प्रत्ययविषयत्वेनासम्भवात् । प्रथमप्रतीतिविवक्षायां तु पूर्ववदेव भङ्गीभेदेन दूषणान्यूह्यानि । नापि षष्ठः घटस्यापि 'घटभावो नास्ति' इतिप्रत्ययविषयत्वेनातिव्याप्तेः । प्रथमप्रतीतौ 'नास्ति' इतिप्रत्ययविषयत्वमिति चेन्न । दत्तोत्तरत्वात् ।

किञ्च प्रतीतौ प्रथमग्रहणं 'प्रथमं योऽस्ति' इत्येवं कालविशेषणं ? किं वा प्रथमा या प्रतीतिरिति प्रतीतिविशेषणं ? नाद्यः बुद्धेर्विरम्यव्यापाराभावात् । द्वितीयेऽपि किम् इह जन्मनि या स्वविषयिका प्रथमा प्रतीतिः सा विवक्षिता ? किं वा एकसामग्रीजन्यासु स्वविषयिकासु या स्वविषयिका प्रथमा प्रतीतिः सा ? अथ वा यदा यदा स्वयं जायते तदा तदा स्वविषयकं ज्ञानद्वयमस्ति आपातजं विमर्शजं चेति। तत्रापातजा या संवित् सा ? नाद्यः गिरिदरीवर्तिनो गजाभावस्य ज्ञानात्पूर्वमेव जातायां 'यत् प्रमेयं तदस्ति' इत्यस्यां सामान्याकारेण प्रमेयमात्रविषयिकायां वन्यगजाभावस्य प्रथममस्तित्वेनैव प्रतीत्या लक्षणाव्याप्तेः । न द्वितीयः? एकसामग्र्या अनेकज्ञानजनकत्वायोगात् । सामग्रीभेदाभावे कार्यभेदस्य आकस्मिकत्वप्रसङ्गात् । न तृतीयः 'घटाभावो नास्ति' इति वाक्यात्प्रथममेव घटस्य नास्तित्वाकारेण प्रतीत्या लक्षणस्यातिव्याप्तेः ।

तस्माद्भावत्वाभावत्वयोर्दुर्निरूपत्वात् भावाभावव्युत्पादनभेदेन इत्युक्तं अयुक्तमिति वैतण्डिको मन्यते ।

### भावत्वाभावत्वव्यवस्थाया उभयवादिभ्यामङ्गीकार्यत्वसमर्थनम्

अत्रोच्यते

भावाभावपदे तावत्प्रयुज्येते त्वयापि ते।
प्रवृत्तिहेतुसापेक्षे पदत्वात्संमतं यथा ॥

भावाभावशब्दप्रयोग एव नाङ्गीक्रियते ? उत अङ्गीकृत्यापि प्रयोगे तत्प्रवृत्तिनिमित्तं नास्तीत्युच्यते ? अथ प्रवृत्तिनिमित्तमङ्गीकृत्यापि प्रवृत्तिनिमित्तस्यानिर्वचनीयत्वं मन्यसे ? नाद्यः त्वयापि तत्प्रयोगात् । न द्वितीयः प्रवृत्तिनिमित्ताभावे पदप्रयोगानुपपत्तेः । न तृतीयः मिथ्यापदप्रवृत्तिनिमित्तदृष्टान्तेन अस्यापि निर्वचनार्हत्वसाधनात् । न च साध्यवैकल्यं शङ्क्यम् । मिथ्यापदप्रवृत्तिनिमित्तस्य मिथ्यात्वस्य त्वयैव महाप्रयत्नेन निरुक्तत्वात् । तस्मात् सामान्येन भावत्वाभावत्वयोर्व्यवस्थितिर्वादिप्रतिवादिभ्यामङ्गीकर्तव्येति स्थिते विशेषजिज्ञासायामुच्यते ।

### भावत्वनिरुक्तिः

अभावत्वावच्छिन्नाधारतानिरूप्याधेयताश्रयान्यत्वप्रतियोगित्वं भावत्वं । अभावत्वावच्छिन्ना या आधारता, तया निरूप्या या आधेयता, तस्या आश्रयश्चासावन्यत्वं च, तदपेक्षयैव प्रतियोगित्वमित्यर्थः । अन्यत्वप्रति

(मं. टि.) योगित्वमित्युक्ते अभावेऽतिव्याप्तिः। तत्परिहारार्थमभावत्वावच्छिन्नेत्यादिना अन्यत्वं विशेषितं। अभावस्याप्यभावान्तरनिष्ठाधारत्वप्रतियोगिकाधेयताश्रयान्यत्वप्रतियोगित्वेऽपि न सा आधारता अभावत्वेनावच्छिद्यते। अभावत्वस्य प्रतियोगिन्यपि सत्त्वात्। प्रतियोगिनिष्ठस्य चान्यत्वाधिकरणतावच्छेदकत्वायोगात्।

### अभावत्वनिरुक्तिः

अभावत्वं च स्वप्रतियोगिकानुयोगिनिर्विशेषतादात्म्यवत्प्रतियोग्यनुयोगित्वं। स्वं प्रतियोगि यस्यासौ स्वप्रतियोगिकः। स चासावनुयोगी च। अनुयोगी नाम प्रतियोगिप्रतिसम्बन्धी। तेन सह निर्विशेषतादात्म्यमस्यास्तीति स्वप्रतियोगिकानुयोगिनिर्विशेषतादात्म्यवान्। स चासौ प्रतियोगी च। तं प्रत्यनुयोगी तस्य भावस्तत्वमिति विग्रहः। प्रतियोग्यनुयोगित्वमित्युक्ते सादृश्यादावतिव्याप्तिः। तस्य स्वप्रतियोगिनौ गोगवयौ प्रत्यनुयोगित्वात्। तत्परिहाराय स्वप्रतियोगिकानुयोगितादात्म्यवदित्युक्तं। एवं च नातिव्याप्तिः। सादृश्यप्रतियोगिकेन केनचिदपि गोगवययोः तादात्म्याभावेन सादृश्यप्रतियोगिकानुयोगितादात्म्यवत्प्रतियोगिनौ प्रत्यनुयोगित्वाभावात्। न चासम्भवः। घटाभावस्य स्वप्रतियोगिकेन घटाभावाभावरूपेणानुयोगिना तादात्म्यवन्तं घटाख्यं प्रतियोगिनं प्रत्यनुयोगित्वात्। अभावाभावस्य भावत्वात्। नञ्द्वयेन प्रकृताभिधानात्। तावत्युक्तेऽप्यतिव्याप्तिः। सादृश्यप्रतियोगिकेन भेदेन गोगवययोस्तादात्म्यवत्त्वात्। तदर्थं निर्विशेषेत्युक्तं। एवं च नातिव्याप्तिः भेदस्य स्वधर्मिणा सविशेषाभेदाङ्गीकारात्। घटादेर्घटादित्वेन भावत्वेऽप्यभावनिषेधात्मनाऽभावत्वाच्च।

### अभावाभावस्य भावरूपत्वानङ्गीकारे अनवस्थादोषः

ये पुनरभावाभावो न भावः किं तर्हि? अभावव्यवहारादभाव एवेत्याहुः। तेषामभावपरम्परया अनवस्था दुर्वारा। तस्माद्युक्तं भावाभावव्युत्पादनमेदेन इति। प्रपञ्चस्य प्रयोजनमाह॥ तत्रैकस्येति॥ तत्र चतुर्णां मध्य इत्यर्थः।

### जीवभेदस्य प्रत्यक्षत्वसमर्थनम्

(टी.) भेदसाधकाभेदबाधकव्युत्पादनायोत्तरं वाक्यं। तत्रेदमाह, यदुक्तं 'प्रत्यक्षादिसिद्धो जीवेश्वरयोर्जीवानां च भेदः, तत एव तदभेदः प्रत्यक्षादिविरुद्धः' इति तदयुक्तं, सर्वस्य हि स्वात्मैव प्रत्यक्षो न तु जीवान्तरमीश्वरो वा। न च प्रत्यक्षाप्रत्यक्षधर्मः प्रत्यक्षो वायुवनस्पतिसंयोगवत्। तत्कथं भेदः प्रत्यक्षः? इत्याशङ्कां परिहरञ्जीवभेदस्य प्रत्यक्षतां तावत्समर्थयते।

चेष्टालिङ्गेन सात्मत्वे परदेहस्य साधिते॥ ११॥
अन्यत्वं स्वात्मनस्तस्मात्सर्वैरेवानुभूयते।

(टी.)' भेदो हि नैक एव अनेकधर्मः' इत्युपपादितमन्यत्र । किन्तु ? एकस्मिन् धर्मिणि परप्रतियोगिक एव । तस्य च प्रत्यक्षता धर्मिणः प्रत्यक्षतां प्रतियोगिनश्च स्मरणमपेक्षते । तत्र धर्मी स्वात्मा तावत् प्रत्यक्षसिद्धः । प्रतियोगिस्मृतिहेतुश्चानुभवोऽनुमानाद्भवति । तथा हि, परशरीरं तावत्प्रत्यक्षसिद्धं । तस्य चेष्टादिलिङ्गेन स्वशरीरवत् सात्मकत्वमनुमातुं शक्यते । चेष्टा नाम हिताहितप्राप्तिपरिहारेच्छापूर्वको व्यापारः । न परिस्पन्दमात्रं येन व्यभिचारः स्यात् । न चैवं सन्दिग्धासिद्धता । हिताहितप्राप्तिपरिहारानुगुणतायाः स्वात्मदृष्टान्तेनैवावगमात् । अतः तस्मात् परशरीराधिष्ठातुः स्वात्मनोऽन्यत्वं प्रत्यक्षं भवितुमर्हति । न चैवं सम्भवनामात्रं । सर्वैः अपि तु अनुभूयत एव । न हि चेष्टाविशेषानुमितप्रयत्नविशेषवतः परात्मनः स्मृतौ सत्यां तथाविधप्रयत्नविरहिणं स्वात्मानं प्रत्यक्षत एवानुभवंस्तस्मात्स्वात्मनोऽन्यत्वं नानुभवति इति युज्यते ।

(म.टि.) सिद्धान्तिनैवमुक्ते अन्यस्तत्परिजिहीर्षतीत्याह ॥ तत्रेदमाहेति ॥ बुद्धिपरिकल्पितप्रतिवाद्यभिप्रायेण प्रथमपुरुषप्रयोगः । अनूदितं दूषयति परः ॥ तदयुक्तमिति ॥ स्वात्मैवेत्येवकारस्य व्यावर्त्यमाह ॥ न त्विति ॥ भेदस्तावदुभयधर्मः । उभयप्रतीतिसापेक्षत्वात् । तत्र किं सामान्यादिवत् प्रत्येकं परिसमाप्तः? किं वा संयोगादिवत् व्यासज्यवृत्तिः? नाद्यः एकव्यक्त्युपलम्भेऽपि गोत्वोपलम्भवत् धर्मिप्रतियोग्यन्यतरप्रतीत्यैव भेदप्रतीतिप्रसङ्गात् । द्वितीयं दूषयति ॥ न चेति ॥

ननु चेष्टालिङ्गेन इति मूलग्रन्थे आनुमानिकत्वं प्रतियोगिनोऽभिहितं । किमनेनोक्तं भवति ? किं भेदस्य प्रामाणिकत्वमात्रं ? किं वा प्रत्यक्षसिद्धत्वं ? नाद्यः उपक्रमाननुकूलत्वात् । न द्वितीयः प्रत्यक्षानुपपत्तेरुक्तत्वादित्याशङ्क्याह ॥ भेदो हीति ॥ 'एक एवानेकधर्मो न' इत्युपपादितमिति सम्बन्धः ॥ प्रतियोगिनश्च स्मरणमपेक्षत इति ॥ प्रतियोगिस्मरणमात्रेण सादृश्याभावादीनां सप्रतियोगिकानां प्रत्यक्षतादर्शनात् 'स्तम्भः पिशाचो न भवति' इति अप्रत्यक्षप्रतियोगिकभेदस्य प्रत्यक्षतादर्शनाच्चेति भावः ।

### सम्भावितस्मृतिलक्षणानामतिव्याप्तिदोषः

ननु किमिदं स्मरणत्वं नाम ? किं ज्ञानजन्यज्ञानत्वं ? अनित्यज्ञानजन्यज्ञानत्वं वा ? अनित्यविशिष्टज्ञानजन्यज्ञानत्वं वा ? स्वसमानविषयकानित्यविशिष्टज्ञानजन्यज्ञानत्वं वा ? स्वसमानाधिकरणस्वसमानविषयकविशिष्टज्ञानजन्यज्ञानत्वं वा ? नाद्यः अनुभवस्यापि नित्येश्वरज्ञानजन्यत्वेनातिव्याप्तेः । न द्वितीयः विशिष्टानुभवस्यापि विशेषणविषयकनिर्विकल्पकज्ञानजन्यत्वेनातिव्याप्तेः । न तृतीयः लिङ्गाद्यनुभवस्यापि लिङ्गविषयकविशिष्टज्ञानजन्यत्वेन अतिव्याप्तेः । न चतुर्थः श्रोतृगतसमानविषयकवक्तृगतविशिष्टज्ञानजन्ये श्रोतृगते शब्दानुभवेऽतिव्याप्तेः । न पञ्चमः देवदत्तसमवेतपूर्वानुभवजन्ये पूर्वानुभूतविषयके देवदत्तसमवेतप्रत्यभिज्ञानेऽतिव्याप्तेः ।

### एकदेशिमतानुसारेण स्मरणलक्षणम्

(मं. टि.) नैष दोषः । यावत्स्वविषयविषयकविशिष्टानुभवजन्यज्ञानत्वस्य स्मृतित्वात् । न चैवं प्रत्यभिज्ञानानुभवेऽतिव्याप्तिः । प्रत्यभिज्ञायाः पूर्वाननुभूततत्ताविषयिकाया यावत्स्वविषयविषयकविशिष्टानुभवजन्यत्वाभावादिति केचित्परिहरन्ति ।

### एकदेश्यभिमतस्मृतिलक्षणे असम्भवदोषः

'तत्रैकं सन्धित्सोरपरं च्यवते' इतिन्यायेनातिव्याप्तिं समादधतोऽसम्भवस्योत्थानात् । स्मृतेरप्यननुभूततत्ताविषयकत्वात् । ननु च तत्ता नाम तद्देशकालसम्बन्धः । सोऽपि पूर्वमनुभूत एवेति चेन्न । तथात्वे तदानीमेव 'तत्' इति प्रतीतिप्रसङ्गात् । ननु विषयभेदाभावेऽपि संस्कारजन्यत्वाजन्यत्वाभ्यां तत्तोल्लेखानुल्लेखाविति चेन्न । प्रतीतिवैलक्षण्यस्य विषयवैलक्षण्याधीनत्वात् । कारणभेदमात्रेण प्रतीतिवैलक्षण्याङ्गीकारे प्रत्यक्षज्ञाने 'वह्निः' इति प्रतीयेत । अनुमितौ तु 'व्याघ्रः' इति प्रतीयेत । सामग्रीभेदस्य तत्र सत्वात् । तस्मात् एकदेशिनां परिहारो न युक्तः ।

### स्वमतेन स्मृतिलक्षणम्

वयं तु ब्रूमः ।

संस्कारमात्ररूपा या मनसो व्यापृतिस्तया ।
मन्यन्ते स्मरणं जन्यं ज्ञानं मध्वमतानुगाः ॥

संस्कारमात्ररूपावान्तरव्यापारजन्यज्ञानत्वं स्मृतित्वं । अवान्तरव्यापारजन्यज्ञानत्वमित्युक्ते अनुभवे अतिव्याप्तिः । अनुभवस्यापि इन्द्रियार्थसंनिकर्षलक्षणावान्तरव्यापारजन्यत्वात् । तत्परिहारार्थं व्यापारं संस्कारात्मकत्वेन विशेषयितुं संस्कारग्रहणं । तावत्युक्ते प्रत्यभिज्ञानेऽतिव्याप्तिः । तस्यापि तत्तांशे संस्काराख्यप्रत्यासत्तिजन्यत्वात् । तत्परिहाराय अवधारणार्थकमात्रग्रहणं । एवं च नातिव्याप्तिः । प्रत्यभिज्ञाया इदमंशे इन्द्रियसम्प्रयोगलक्षणव्यापारेणापि जन्यत्वात् ।

### तत्ताया अनुभवविषयत्वसमर्थनम्

ननु तत्ताया अननुभूतत्वात् तत्र संस्कारस्य अवान्तरव्यापारत्वाभावात् मात्रग्रहणं व्यर्थं । न व्यर्थं । तत्ताया अपि कथञ्चिदनुभूतत्वात् । अतीतो देशकालसम्बन्धो हि तत्ता । 'तत्र तदा तत् आसीत्' इति स्मरणोत्पत्तेः । तत्र 'आसीत्' इति भूतार्थवाचिलङादिप्रत्ययप्रयोगात् तद्देशकालसम्बन्धस्यातीतत्वप्रतीतेः । भूतत्वमतीतत्वं प्रध्वंसप्रतियोगित्वमिति च पर्यायः । तथा चोक्तं तत्वोद्योतटीकायां टीकाकारैः 'न हि स इत्यस्य तद्देशकालसम्ब-

(मं. टि.) न्धमात्रमर्थः । किं नाम ? तस्यातीतत्वमपि' इति । तच्च स्मरणे प्रतीयमानं तद्देशकालसम्बन्धस्यातीतत्वं यद्यपि न पूर्वमनुभूतं, पूर्वं तद्देशकालसम्बन्धस्य वर्तमानत्वेनातीतत्वाभावात् तदानीमेव तच्छब्दप्रयोगप्रसङ्गाच्च तथापि तद्देशकालसम्बन्धस्वरूपमात्रस्य अनुभूतत्वात् प्रत्यभिज्ञायास्तस्मिन्नंशे संस्कारः संनिकर्षो भवत्येवेति न व्यर्थं मात्रग्रहणं ।

### अननुभूतस्य तत्तातीतत्वस्य स्मृतिविषयत्वसमर्थनम्

ननु तर्ह्यननुभूतस्यापि तद्देशकालसम्बन्धातीतत्वस्य स्मरणाङ्गीकारेऽतिप्रसङ्गः स्यात् । न स्यात् । पूर्वमनुभूतस्य तद्देशकालसम्बन्धस्य यत् अतीतत्वं तस्यैवाननुभूतस्यापि स्मरणं । अन्यस्य सर्वस्यानुभूतस्यैव स्मरणमिति नियमात् । अननुभूतस्याप्यतीतत्वस्य स्मरणदर्शनात् । न ह्यतिप्रसङ्गभिया दर्शनापलापो युक्तः । किं तर्हि ? दृष्टमङ्गीकृत्य ततोऽन्यत्रातिप्रसङ्गं परिहर्तुं व्यवस्था कल्प्या । अन्यथा तत्रैवातिप्रसङ्गात् ।

### तत्तातीतत्वेनासंनिकृष्टस्यापि मनसस्तज्ज्ञानजनकत्वम्

नन्वथापि अतीतत्वस्याननुभूतत्वात् तत्र संस्कारलक्षणसंनिकर्षाभावात् संनिकर्षान्तरस्य च अङ्गीकार्यत्वात् स्मृतौ संस्कारमात्रप्रत्यासत्तिजन्यत्वं नास्तीति लक्षणस्यासम्भवः स्यादिति चेन्न । तद्देशकालसम्बन्धेन सह संस्काराख्यप्रत्यासक्तियुक्तेन मनसा करणेन तद्देशकालसम्बन्धातीतत्वस्यासंनिकृष्टस्याप्याकलनात् । स्मृतिरपि यदि सम्बन्धमेवाकलयेत् तदा प्रत्यभिज्ञानवदनुभवः स्यात् । प्रत्यभिज्ञायां तु इदन्ताया इन्द्रियार्थसंनिकर्षः [1]प्रामाणिक इत्युक्तं । उद्बुद्ध एव संस्कारः प्रत्यासत्तिः न संस्कारमात्रं । तेन संस्कारे सत्यपि स्मरणानुदयात् नास्य प्रत्यासत्तित्वमिति चोद्यं निरस्तं । तस्मात् सुष्ठूक्तं **प्रतियोगिनः स्मरणमपेक्षते** इति ।

॥ **न चैवमिति** ॥ 'विमतं शरीरं हिताहितप्राप्तिपरिहारेच्छापूर्वकव्यापाररहितं न भवति शरीरत्वात् मच्छरीरवत्' इत्यनुमानेन हेतुसाधनादिति भावः । नन्वेवं तर्ह्यनेनैव सात्मकत्वं साध्यतां किमनया प्रणाड्या ? इति चेन्न । शरीरत्वमात्रस्य सात्मकत्वेन मृतशरीरे व्यभिचारात् । हिताहितप्राप्तिपरिहारेच्छापूर्वकव्यापारविशिष्टस्य च शरीरत्वस्यासिद्धत्वात् साक्षात्साधनायोगात् । सावयवत्वादिनैव सकर्तृकत्वादिसाधनसम्भवेन कार्यत्वादेर्वैयर्थ्यप्रसङ्गाच्च । अनुभूयत एव सर्वैरिति कारिकास्थावधारणार्थमाह ॥ **न चैवमिति** ॥ ततश्च प्रत्यक्षाप्रत्यक्षधर्मत्वेन अप्रत्यक्षत्वसाधनं बाधितमिति भावः । अनुभवे विप्रतिपद्यमानं प्रत्याह ॥ **न हि चेष्टेति** ॥ भेदकज्ञानस्य भेदज्ञानसामग्रीव्याप्तत्वात् विरुद्धधर्मरूपभेदकज्ञाने तद्व्यापकभेदज्ञानसामग्र्यवश्यम्भावात् सामग्रीसद्भावेऽपि कार्यानङ्गीकारे व्याघातादिति हिशब्दार्थः ।

### भेदस्य स्वाभाविकत्वसमर्थनम्

**(टी.) स्यादेतत् , तथापि तस्य भेदस्य स्वाभाविकत्वं कुतः? इति चेत् , मैवं स्वाभाविकत्वं हि यदा सत्यत्वं स्यात् तदा प्रमाणसिद्धत्वादेव तत् सिद्ध्यति । प्रामाण्यं च प्रत्यक्षस्य अन्यत्रोपपादितं । सत्योपाधिकृतत्वं तु पूर्वमेव निरस्तमिति न पुनः प्रयतितव्यं ।**

---

[1] प्रमापकः, इति मुद्रितपुस्तकस्थः पाठः साधुरिति भाति.

(मं. टि.) आक्षिपति ॥ **स्यादेतदिति** ॥ परिहरति ॥ **मैवमिति** ॥ स्वाभाविकत्वं किं सत्यत्वं ? किं वा अनौपाधिकत्वम् ? इति विकल्पं हृदि निधाय आद्यमनूद्य दूषयति ॥ **स्वाभाविकत्वं हीति** ॥

### सत्यत्वस्य दुर्निरूपत्वपूर्वपक्षः

अथ किं सत्यत्वं ? अबाध्यत्वमिति चेत् तदेव विविच्यतां । निषेधाप्रतियोगित्वमिति चेन्न । घटादेरपि निषेधप्रतियोगित्वेन लक्षणासम्भवात् । त्रैकालिकनिषेधाप्रतियोगित्वमिति चेन्न । अश्वत्वस्य गवि त्रैकालिकनिषेधप्रतियोगित्वेन तत्राव्याप्तेः । न हि गौः कदाचिदप्यश्वत्वाश्रयः । प्रतिपन्नोपाधाविति विशिष्यत इति चेन्न । तथाप्यनित्यस्य घटादेरसत्यत्वप्रसङ्गः । त्रैकालिकनिषेधाप्रतियोगित्वं हि त्रैकालिकनिषेधप्रतियोगित्वाभावः । घटादेरनित्यस्य स्वसमयात् प्रागूर्ध्वं च निषेधप्रतियोगित्वेन त्रैकालिको योऽयं निषेधप्रतियोगित्वाभावः तद्रहितत्वात् । अथ त्रैकालिकत्वं न तन्निषेधप्रतियोगित्वाभावविशेषणं । किं तर्हि ? निषेधविशेषणं । एवं च त्रिकालावस्थायी यो निषेधः तत्प्रतियोगित्वाभावः सत्यत्वमिति लक्षणवाक्यार्थः । स च घटादेरपि सम्भवति । घटादेर्निषेधस्य त्रिकालावस्थायित्वाभावादिति चेत् एवमपि घटस्यैव प्रतिपन्नोपाधौ पटात्मना त्रिकालावस्थायिनिषेधप्रतियोगित्वं वर्तेत इत्यव्याप्तिस्तदवस्था । अथ यदात्मना यस्त्रिकालावस्थायिनिषेधाप्रतियोगी स तदात्मना सन्निति लक्षणवाक्यार्थः । तथा च घटस्य घटात्मना त्रिकालनिषेधाप्रतियोगित्वात् तदात्मना सत्वं पटात्मना तु तत्प्रतियोगित्वात् तदात्मना असत्वं । अत एव सर्वं स्वात्मना सत् तदन्यात्मना असदित्यस्माकं मतमिति चेत् तर्हि असतोऽपि सत्वापातः । तस्यापि येन केनचिदाकारेण त्रैकालिकनिषेधाप्रतियोगित्वात् । न ह्यसत् त्रैकालिकनिषेधप्रतियोगित्वाकारेण त्रैकालिकनिषेधप्रतियोगि । तेनाकारेण असदपि सदस्तु को दोषः? इति चेत् अस्ति महान् दोषः । सदसतोरुभयोरपि आकारभेदेन सत्वासत्वाभ्युपगमे सदसद्विवेकानुपपत्तेः । तस्मात्सत्वं दुर्निरूपमिति प्रामाणिकत्वेन तत्साधनमसङ्गतमिति ।

### केषाञ्चिन्मतेन प्रतिबन्द्या सत्त्वस्य दुर्निरूपत्वनिराकरणम्

अत्र केचित्, ब्रह्मणि यादृशं परेषां सत्त्वं तादृशमेवास्माकं भविष्यतीति प्रतिबन्द्या परिहरन्ति ।

### अन्येषां मतेन सत्त्वनिरुक्तिः

अपरे तु, त्रैकालिकनिषेधप्रतियोगित्वतदविनाभूतेतरधर्मावच्छिन्नतया त्रैकालिकनिषेधाप्रतियोगित्वं सत्त्वं । न चैवमसत्यतिव्याप्तिः । असतस्त्रैकालिकनिषेधप्रतियोगित्वतदविनाभूतधर्मान्तरैस्त्रैकालिकनिषेधाप्रतियोगित्वेऽपि तदितरधर्मावच्छिन्नतया तत्प्रतियोगित्वात् । न चासम्भवः । घटादेस्त्रैकालिकनिषेधप्रतियोगित्वतदविनाभूतेतरघटत्वादिधर्मावच्छेदेन त्रैकालिकनिषेधाप्रतियोगित्वाविरहात्<sup></sup>[illegible]ः ।

### स्वमतेन सत्त्वनिरुक्तिः

(मं. टि.) वयं तु ब्रूमः ।

स्वदेशकालनिष्ठश्च स्वनिष्ठेन प्रकारतः ।
विशिष्टस्य निषेधो यस्तदयोगि सदुच्यते ॥

स्वसमानकालीनस्वसमानाधिकरणस्वनिष्ठधर्मावच्छिन्ननिषेधप्रतियोगित्वाभावाश्रयत्वं सत्त्वं ।

### एकदेशिमतेन सत्वलक्षणस्य असति अतिव्याप्तिनिरासः

निषेधप्रतियोगित्वाभावाश्रयत्वमित्यनेनैव असत्यतिव्याप्तिः परिहृता । तस्य निस्स्वरूपस्योक्तधर्माश्रयत्वाभावात् ।

### असति एकधर्माभावे तद्विरुद्धधर्मशङ्का तत्परिहारश्च

ननु यद्यसतो न निषेधप्रतिगित्वाभावाश्रयत्वं तर्हि निषेधप्रतियोगित्वाश्रयत्वं स्यादिति चेत्, न स्यात् । सतामेव हि सत्स्वरूपाणामाश्रयत्वयोग्यानां तदाश्रयत्वाभावे तद्विरुद्धधर्माश्रयत्वनियमः । असतस्तु निःस्वरूपस्याश्रयत्वयोग्यतैव नास्तीति कुतस्तद्विशेषप्रसक्तिः । अन्यथा गवि ब्राह्मणत्वाभावे क्षत्रियत्वाद्यन्यतमः स्यादित्युक्ते कः परिहारः?

ननु क्षत्रियत्वादीनां [1]मनुष्यत्वव्यापकत्वात् व्यापकस्य मनुष्यत्वस्य अभावे तद्व्याप्यक्षत्रियत्वादेरप्यभावः । 'एकस्य विशेषस्याभावे तद्विरुद्धविशेषान्तरस्य भावः' इति नियमस्तु यत्र विरुद्धविशेषद्वयव्यापकं सामान्यमस्ति तत्रैव । गवि तु विशेषद्वयव्यापकं मनुष्यत्वसामान्यमेव नास्तीति परिहार इति चेत् स एव प्रकृतेऽपि परिहारः । असतो हि यदि नाम आश्रयत्वसामान्यं स्यात् तदा त्वदुक्तं स्यात् । अपि तु तन्नास्ति निःस्वरूपत्वादित्यन्ये ।

### ग्रन्थकृन्मतेन असति अतिव्याप्तिनिरासः

[2]वस्तुतस्तु नासतो देशकालौ । किं तु? तदत्यन्ताभावस्येति ।

### सत्त्वलक्षणस्यात्माश्रयाव्याप्त्यसत्वदोषशङ्का

नन्वेतल्लक्षणं एतल्लक्षणे अस्ति? उत न? आद्ये आत्माश्रयः । द्वितीये लक्षणस्याव्याप्तिः । अलक्ष्यत्वे च कथमस्यासतो लक्षणत्वं? इति चेन्न ।

---

[1] मनुष्यत्वव्याप्यत्वात् इति मुद्रितपुस्तकगत एव पाठः साधुः ।

[2] स्वदेशकालनिष्ठपदेन स्वाधिकरणत्वेन प्रतीयमानदेशकालनिष्ठत्वं विवक्षितं । असतो देशकालयोरभावात् तदत्यन्ताभावीयदेशकाल्योरेव स्वाधिकरणत्वेन प्रतीयमानत्वात् स्वदेशकालनिष्ठात्यन्ताभावप्रतियोगित्वमसति वर्तत इत्यसति नातिव्याप्तिरिति भावः ।

(मं. टि.) अनुगतलक्षणमङ्गीगीकुर्वतां प्रमेयत्वे प्रमेयत्वाङ्गीकार इवात्माश्रयस्योत्पत्तिज्ञप्त्यप्रतिबन्धकतया अदोषत्वात्।

### सिद्धान्ते आत्माश्रयत्वादिदोषपरिहारः

प्रतिव्यक्ति लक्षणभेदमङ्गीकुर्वतामस्माकं त्वात्माश्रयप्रसक्तेरेवाभावात्। प्रतिव्यक्ति लक्षणभेदाङ्गीकारे लक्षणस्याव्याप्तिः स्यादिति चेन्न दोषः। न हि लक्षणस्य सकललक्ष्यानुगतिर्व्याप्तिः। किं तर्हि? लक्षणवाक्यस्य विवक्षिततत्तद्व्यक्तिपर्यवसानं। सर्वलक्षणेऽप्येवमेवेति **सिद्धान्तरहस्यम्**। तच्च प्रकृतेऽपि सम्भवत्येव। स्वशब्दस्य सर्वनामत्वेन विवक्षितव्यक्तिपर्यवसानसम्भवात्। विवक्षितव्यक्त्यपर्यवसाने च स्वशब्दस्य सर्वनामत्वं व्याहन्येत। यथाह **पतञ्जलिः** 'सर्वेषां नामानि सर्वनामानीत्यन्वर्थसञ्ज्ञा' इति।

### सत्वलक्षणान्तरम्

अथ वा साक्षात्प्रमाविषयतावच्छेदकधर्माश्रयत्वं सत्वं। 'भ्रमो ममासीत्' इति प्रमाणज्ञानस्य शुक्तिरजतत्वादिकमपि परम्परया विषयो भवतीत्यतिव्याप्तिः स्यात्। तदर्थं साक्षादित्युक्तं। न च साध्याविशेष्यं शङ्क्यम्। सत्वप्रकारकप्रमाणविषयत्वस्य हेतुत्वात्। प्रमाणविषयतावच्छेदकधर्माश्रयत्वस्य च साध्यत्वात्। अवच्छेद्यावच्छेदकयोश्च भिन्नत्वात्।

### प्रामाणिकत्वसत्त्वयोर्व्याप्तिसमर्थनम्

नन्वथापि कथं प्रामाणिकत्वस्य सत्वेन व्याप्तिः? शुक्तिरजतस्यासत्यस्यापि 'शक्तिरजतज्ञानं ममासीत्' इति प्रमाविषयत्वादिति चेन्न। ज्ञानान्तरप्रणाडीमनपेक्ष्य साक्षात्प्रमाविषयत्वस्य हेतुत्वात्। शुक्तिरजतादेश्च ज्ञानद्वारा प्रमाविषयत्वात्।

### प्रमासामान्यलक्षणपूर्वपक्षः

अथ केयं प्रमा? यथार्थज्ञानं प्रमेति चेत् यथाशब्दः किं सादृश्यवाची? किं वा अनतिक्रमाद्यन्यतमवाची? नाद्यः घटज्ञानयोः घटत्वादिना सादृश्याभावात्। कथञ्चित्सादृश्यस्य चातिप्रसञ्जकत्वात्। न द्वितीयः 'यथाऽसादृश्ये' इत्यसादृश्यार्थे अव्ययीभावविधानात्। अव्ययीभावस्य च नपुंसकत्वविधानात् 'उपकुम्भम्' इत्यादिवत् 'यथार्थं प्रतीतिः' इत्यादिप्रयोगापातात्। न चैवं व्यवहारः। 'यथार्था प्रतीतिः' इत्येव व्यवहारात्। तस्मात् प्रमात्वं दुर्निरूपमिति।

### सिद्धान्ते प्रमालक्षणम्

अत्रोच्यते

यथार्थज्ञानमित्येव प्रमाया लक्षणस्थितिः।<br>
स्मृतेरपि च लक्ष्यत्वादतिव्याप्तिकथा मुधा॥

(मं. टि.) यथार्थज्ञानं प्रमा। न च स्मृतावतिव्याप्तिः तस्या अपि लक्ष्यत्वात्। न च यथाशब्दार्थानिरुक्तिः सादृश्यस्य यथाशब्दार्थत्वात्। सादृश्यं च ज्ञानार्थयोः सत्तया। न च भ्रमेऽतिव्याप्तिः। तत्र ज्ञानस्य सत्त्वात् अर्थस्य च असत्त्वात् ज्ञानार्थयोः सत्तया सादृश्याभावात्। एवं च यथा सादृश्यविशिष्ट एव अर्थो यस्येति बहुव्रीह्याश्रयणे यथार्थशब्दस्याभिधेयवल्लिङ्गं लोकसिद्धं सिद्धं॥ यथाशब्दोऽतिक्रमे वर्तत इति टीकाकारवचनं तु फलितप्रदर्शनपरतया व्याख्येयं। ज्ञानार्थयोः सादृश्यकथनेन ज्ञानस्य अर्थानतिक्रमणस्य आवश्यकत्वाच्च। एवमेव च 'धर्माय जिज्ञासा धर्मजिज्ञासा' इति पूर्वमीमांसाभाष्यं, धर्मजिज्ञासयोः यूपदार्वादिवत् उपादानोपादेयलक्षणप्रकृतिविकृतिभावाभावात् 'धर्माय' इति चतुर्थीसमासे व्याकरणविरोधमाशङ्क्य फलितप्रदर्शनपरतया भट्टेन व्याख्यातमिति।

## स्मृतिप्रामाण्यसमर्थनम्

इह केचित्, स्मृतेः प्रामाण्ये विप्रतिपद्यन्ते। ते प्रष्टव्याः, किं क्लृप्तप्रमाकरणाभावात् स्मृतेः प्रमात्वानभ्युगमः? किं वा अनुमानाद्यजन्यत्वेऽपि असंनिकृष्टार्थोल्लेखित्वात्? किं वा असदर्थोल्लेखित्वात्? यद्वा वृद्धव्यवहाराभावात्?

नाद्यः सुखादिप्रमायां क्लृप्तस्यैव मनसः स्मृतावपि करणत्वात्। बाह्यप्रमायां न क्लृप्तमिति चेन्न 'घटो मयाऽनुभूतः' इत्यनुव्यवसायस्य मनोमात्रकरणकत्वेन मनसो बाह्यार्थविषयकप्रमायामपि क्लृप्तत्वात्। साक्षाद्बाह्यप्रमितौ न क्लृप्तं मन इति चेत्, मा भूत् इहापि संस्कारद्वारैव मनसा स्मरणोत्पादनात्। एतेन स्मरणकरणे संस्कारे प्रमाकरणत्वव्यवहाराभावान्न तस्य प्रमापकत्वमिति निरस्तं। मनस एव तत्करणत्वात्।

न द्वितीयः प्रत्यभिज्ञायां व्यभिचारात्। प्रत्यभिज्ञायां अपि तद्देशकालसम्बन्धस्यासन्निकृष्टस्यैव आकलनात्। तत्र संस्काराख्यः सन्निकर्षोऽस्तीति न व्यभिचार इति चेदिहापि तथैवेत्यसिद्धिः।

तृतीयेऽपि किमत्यन्तासदर्थोल्लेखित्वं? किं वा स्वकाले अविद्यमानार्थोल्लेखित्वं? यद्वा अन्यथोल्लेखित्वं? नाद्यः असिद्धेः। न द्वितीयः अतीतानागतविषयिकायां अव्यभिचरितशकुनादिलिङ्गजन्यानुमितौ व्यभिचारात्। ननु 'अग्निरासीत्' वृष्टिर्भविष्यति' इत्याद्यनुमितावपि अग्निप्रध्वंसस्य व्यवहितवृष्टिप्रागभावस्य विषयत्वाङ्गीकारात् तस्य च तदा वर्तमानत्वान्न व्यभिचार इति चेत्तर्हि तत्कालादिप्रध्वंस एव विषयीक्रियते। स च स्मृतिकाले वर्तमान एवेति त्वद्धेतोरसिद्धिः। न चाननुभूतस्य तत्कालसम्बन्धप्रध्वंसस्य आकलने स्मृतेरनुभूतमात्रविषयकसंस्कारसीमोल्लङ्घनं स्यादिति अन्यस्यापि स्मरणं स्यादिति युक्तं। कालान्तरभाव्यनुभवस्य कालान्तरभाविनीं स्मृतिं प्रति

(मं. टि.) कारणतानिर्वाहार्थं कल्प्यमानस्य संस्कारस्य यादृशस्वभावाङ्गीकारे स्मृतिकारणता निरूढा भवेत् तादृश-स्वभावस्यैव धर्मिप्रमाणसिद्धत्वेनानतिप्रसङ्गात् ।

न तृतीयः असिद्धेः । स्मृतिर्हि ' तत्र तदा तत् तादृशमासीत् ' इति उल्लिखति । न च तत् तादृशं तत्र नासीत् । येन स्मृतिरन्यथोल्लेखिनी स्यात् ।

एतेन ' स्मृतिः स्वविषयस्य वर्तमानतोल्लेखिनी संस्कारजन्यज्ञानत्वात् प्रत्यभिज्ञावत् ' इत्यनुमानेन स्मृते-रनुभूततत्कालसम्बन्धादिविशिष्टस्वविषयस्य वर्तमानतोल्लेखितासाधनात् तादृशावस्थाविशिष्टस्य च अवर्तमानत्वात् अवर्तमाने वर्तमानतोल्लेखिनी स्मृतिरन्यथोल्लेखिनी ' इति निरस्तं । ' आसीत् ' इत्यतीततोल्लेखस्यानुभवसिद्धत्वेन वर्तमानतोल्लेखितासाधने बाधात् । अतीतकालादिसम्बन्धप्रध्वंसस्य स्मृतिविषयस्य वस्तुतो वर्तमानस्यैव वर्तमानतो-ल्लेखितासाधने सिद्धसाधनत्वात् ।

एतेन ' याचितमन्नं कमनीयमिव स्मृतेः प्रामाण्यं ' इति उदयनोपालम्भोऽपि निरस्तः । प्रध्वंसांशे अनुभवाभावेन तदंशे प्रमात्वस्य तत्प्रमात्वानधीनत्वात् ।

किं च स्मृतिविषये विशेष्यमात्रस्य वर्तमानतोल्लेखसाधने सिद्धसाधनं । विशिष्टस्य तथात्वसाधने साध्यवै-कल्यं दृष्टान्तस्य । ननु यदि स्मृतिः स्वविषयस्य घटादेर्वर्तमानतां नाकलयेत् तदा ' गृहे घटः' इति ज्ञानानन्तरं घटार्थी न प्रवर्तेतेति चेन्न । न हि स्मृतिः ' स घट इदानीं वर्तते ' इत्युल्लिखति । किं तर्हि ? ' तदा आसीत् ' इत्येव । विशेष्यस्य घटादेर्वर्तमानताऽवर्तमानतयोस्तु उदासीनैव । अन्यथा काञ्चीतः काशीं गतः तत्र यथानुभूत-पुत्रस्मरणेनैव तस्य स्थितिनिश्चये [1]'पुत्रः पुनः क्वास्ते ' इति न सन्दिहेत । क्वचित्प्रवृत्तिस्तु ' इदानीमेव घटस्त-त्रानुभूतः, न चैतन्मध्ये तस्यापहर्ता सम्भावितः' इति सम्भावनारूपेण ज्ञानान्तरेणेत्यनुभवसिद्धं ।

नापि चतुर्थः अस्मदीयवृद्धैः स्मृतेः प्रमात्वेन व्यवहारात् । त्वदीयवृद्धव्यवहाराभावस्य त्वयाप्यनादरणी-यत्वात् । लौकिकैरपि प्रमात्वेन व्यवहाराच्च । तस्मात्स्मृतेः प्रमात्वं सुस्थमिति न लक्षणस्यातिव्याप्तिः ।

## प्रमालक्षणान्तरनिरासेन स्वोक्तलक्षणसमर्थनम्

एतदेव प्रमालक्षणं, लक्षणान्तराभावात् । तथा हि, किं संवाद्यनुभवत्वं ? किं वा अविसंवाद्यनुभवत्वं ? यद्वा समर्थप्रवृत्तिजनकानुभवत्वं ? अथ वा तथ्योऽयमनुभवत्वं ? उत अबाधितानुभवत्वं ? आहोस्वित् तद्वति तत्प्रका-रकानुभवत्वं ? नाद्यः ज्ञानान्तरेण तथोल्लेख्यमानत्वस्य च संवादित्वे धारावाहिकविभ्रमेऽतिव्याप्तेः । प्रमान्तरेण

---

[1] पुनः ' पुत्रः क्वास्ते ' इति न सन्दिहेत इति मुद्रितपुस्तकस्थः पाठः एव साधुरिति भाति.

(मं. टि.) तथोल्लेख्यमानत्वस्य संवादित्वे प्रमात्वस्यैव निरूप्यमाणत्वेनात्माश्रयात् । न द्वितीयः अनुपसञ्जातबाधभ्रमेऽतिव्याप्तेः । न तृतीयः उपेक्षाज्ञानेऽव्याप्तेः । न चतुर्थः निर्विकल्पकेऽव्याप्तेः । न हि निर्विकल्पकजातीयं किञ्चिदपि प्रवृत्तिं जनयति । तज्जातीयस्य क्वचित्प्रवृत्तिजनकत्वे च तत्र योग्यतायाः कल्पयितुमशक्यत्वात् । निर्विकल्पकस्य प्रमात्वानङ्गीकारे अपसिद्धान्तात् । न पञ्चमः अन्योन्याश्रयात् । अबाधितत्वं हि बाधरहितत्वं । बाधश्च विरोधिप्रमा । ततश्च प्रमाज्ञानं विना बाधज्ञानाभावात् बाधज्ञानं विना च बाधरहितानुभवरूपप्रमाज्ञानाभावात् कथं नान्योन्याश्रयः? षष्ठेऽपि यावन्तो धर्मा वर्तन्ते तावत्सर्वधर्मप्रकारकत्वं विवक्षितं ? तन्मध्ये यत्किञ्चिद्धर्मप्रकारकत्वं वा ? नाद्यः असम्भवात् । न हि 'घटोऽयं' इति प्रमा घटगतसर्वधर्मप्रकारिका । न द्वितीयः भ्रमेऽतिव्याप्तेः । भ्रमेऽपि इदन्त्ववति शुक्तिकाशकले इदन्त्वप्रकारकत्वात् । इदमंशे भ्रमोऽपि प्रमैवेति चेन्न । प्रमात्वाप्रमात्वयोरेकत्रानवस्थानात् । इदमंशे प्रमात्वं रजतांशे भ्रमत्वमिति अंशभेदेनाविरोध इति चेन्न । त्वया हि प्रमाया गुणजन्यत्वं दोषाजन्यत्वं च, अप्रमायाः दोषजन्यत्वं गुणाजन्यत्वं च अङ्गीक्रियते। तत्कथं स्यात्? एकस्यैव तज्जन्यत्वातज्जन्यत्वयोर्विरोधात् । तत्राप्यंशभेदादविरोध इति चेन्न । ज्ञानस्य गुणत्वेनांशाभावात् । ज्ञानस्य निरवयत्वेनांशासम्भवेऽपि इदन्त्वं रजतत्वं चेति प्रकारावेवांशाविति चेन्न । इदन्त्वरजतत्वयोः प्रकारयोर्भेदेऽपि तयोर्गुणदोषजन्यत्वाभावेन विरोधाशामकत्वात् । गुणदोषजन्ये च ज्ञाने अंशभेदाभावेन विरोधस्य तदवस्थत्वात् । तस्मात् प्रमा चेत् सर्वथापि प्रमैव । अप्रमा चेदपि सर्वथा अप्रमैव । अप्रमाविषयस्यापि इदमंशस्याबाधः स्मृतिविषयघटादेर्वर्तमानतावदुपपद्यते । इदमंशाबाधमात्रेण च तत्र प्रमात्वव्यवहारः । किञ्च अंशभेदेन प्रमात्वाप्रमात्वयोरङ्गीकारे 'घटोऽयं' इति प्रमाया अपि घटत्वांशे अप्रमात्वं स्यात् । तत्र तद्वति तत्प्रकारकत्वाभावात् । न हि 'घटोऽयं' इति ज्ञाने घटत्वे प्रकाररूपं विशेषणं प्रतीयते । प्रतीतौ वा तस्मिन् विशेषणे विशेषणान्तराप्रतीतेः तत्रैवाप्रमात्वं स्यात् । तत्रापि विशेषणान्तरप्रतीत्यङ्गीकारे अनवस्था स्यात् । न च अनवस्था न दोष इति शङ्क्यम् । उत्तरोत्तरप्रकारापरिज्ञाने पूर्वपूर्वप्रकारिज्ञानासम्भवेन मूलक्षतेः । त्वन्मते प्रकारज्ञानस्य प्रकारावच्छिन्नप्रकारिज्ञानहेतुत्वात् । तथा च अनवस्थापरिहारार्थं क्वचित् निष्प्रकारकस्य पदार्थस्य प्रमितिविषयत्वावश्यम्भावेन तत्रैवांशे तस्याः प्रतीतेरप्रमात्वावश्यम्भाव इति अंशभेदेन प्रमाप्रमयोरुभयोरपि प्रमाप्रमोभयात्मकत्वापातात् प्रमाप्रमाविभागो न स्यादिति महानतिप्रसङ्गः ।

विशेष्यावृत्त्यप्रकारकत्वं विवक्षितमिति चेन्न । 'देवदत्तस्य गौः' 'ईश्वरस्येच्छा' इत्यादौ विशेष्यगवाद्यवृत्तेर्देवदत्तादेः प्रकारतानुभवेनाव्याप्तेः । त्वत्पक्षे जातिसमवाययोः सर्वगतत्वेन शुक्त्यादावपि रजतत्वादेर्वृत्त्याऽतिव्याप्तेश्च । तयोराधाराधेयभाव एव नास्तीति चेन्न । समवायस्यैव इहप्रत्ययहेतुत्वेन तदतिरिक्तस्याधाराधेयसम्बन्धस्याभावात् । तदेतदभिप्रेत्योक्तं प्रमाणपद्धतौ टीकाकारैः **यथावस्थितमेव ज्ञेयं यद्विषयीकरोति तत्प्रमाणम्** इति । यदि पुनरिदमंशे प्रमात्वं स्यात्तदा एवकारो व्यर्थः स्यात् । लक्ष्ये [1]इदमंशे वर्तमानत्वस्यादोषत्वात् । प्रका-

[1] इदमंशज्ञाने इति पाठेन भाव्यमिति भाति.

(मं. टि.) रांशे च यथावस्थितज्ञेयविषयीकारित्वाभावात् । यद्वा यादृच्छिकसंवादिविप्रलम्भकवाक्यस्यानुप्रमाणताव्युदासाय एवकारो व्याख्येयः । तथा च न शुद्धाऽप्रमासाधनप्रयास इत्यलं प्रपञ्चेन ।

#### आत्मभेदस्य सत्यमिथ्योपाधिकृतत्वमेव स्वाभाविकत्वमिति शङ्कानिरासः

द्वितीयं दूषयति ॥ सत्योपाधिकृतत्वं त्विति ॥ मिथ्योपाधिकल्पितत्वं तु सत्यत्वसाधनेन निरस्तमिति भावः ।

#### जीवानां मिथो भेदस्य अनुमानसिद्धत्वसमर्थनम्

(टी.) अनेन जीवभेदस्य विरुद्धधर्मसंसर्गेणानुमानेनापि सिद्धिरुक्ता भवति ।

(मं. टि.) अनुमानं च जीवभेदे प्रमाणयति ॥ अनेनेति ॥ विरुद्धधर्मकथनेनेत्यर्थः । ननु पारमार्थिको भेदः साध्यते ? किं वा अपारमार्थिकः? नाद्यः अप्रसिद्धविशेषणत्वात् । अस्माभिः पारमार्थिकस्य कुत्राप्यनङ्गीकारात् । न द्वितीयः सिद्धसाधनत्वादिति चेत् नैष दोषः धर्मिसत्तासमानसत्ताकभेदस्य साध्यत्वात् । एवं च नाप्रसिद्धविशेषणता व्यावहारिकसत्ताश्रयघटधर्मिकस्य तद्भेदस्य त्वयापि धर्मिसत्तासमानव्यावहारिकसत्ताङ्गीकारात् । नापि सिद्धसाधनता अत्र चैतन्यस्य पारमार्थिकसत्ताश्रयस्य धर्मित्वात् । तद्भेदस्यापि धर्मिसत्तासमानसत्ताकत्वेन साध्यमानस्य पारमार्थिकसत्ताश्रयत्वेन पर्यवसानात् । धर्माणां विरोधश्च सहानवस्थानलक्षणो विवक्षितः । न चैकात्मवादिनामसिद्धो विरोध इति वाच्यं । सहानवस्थितत्वेन प्रतीयमानत्वस्य वा सहावस्थितत्वेनाप्रतीयमानत्वस्य वा सहानवस्थानशब्देन विवक्षितत्वात् ।

तथा च प्रयोगः, 'देवदत्तो यज्ञदत्तप्रतियोगिकस्वसत्तासमानसत्ताकभेदाश्रयः तदनिष्ठत्वेन प्रतीयमानधर्माश्रयत्वात् तन्निष्ठत्वेनाप्रतीयमानधर्माश्रयत्वाद्वा, यदेवं तदेवं यथा घटानिष्ठत्वेन प्रतीयमानस्य घटनिष्ठत्वेन अप्रतीयमानस्य वा पटत्वादिधर्मस्याश्रयः पटो घटप्रतियोगिकस्वसत्तासमानसत्ताकभेदाश्रयः' इति ।

#### जीवेश्वरभेदे प्रत्यक्षप्रमाणसमर्थनम्

(टी.) एवं जीवानां परस्परभेदस्य प्रत्यक्षत्वे असम्भवं परिहृत्य प्रत्यक्षता चोपपादिता । इदानीं जीवेश्वरभेदस्य प्रत्यक्षतामुपपादयति

अज्ञता चाल्पशक्तित्वं दुःखित्वं स्वल्पकर्तृता ॥ १२ ॥
सर्वज्ञत्वादीशगुणविरुद्धा ह्यनुभूतिगाः ।

(टी.) जीवनिष्ठतयेति पूरणीयं। हिशब्दो यस्मादित्यर्थे। तस्मादीशादपि स्वात्मनोऽन्यत्वं सर्वै-रनुभूयत एवेति पूर्वोक्तानुवृत्त्या अन्वयः। न हीशधर्मविरुद्धधर्मवन्तमात्मानं प्रत्यक्षतः पश्यन् ततोऽन्य-त्वं न पश्यतीति युज्यते। अतिस्फुटतां भेदप्रत्यक्षस्योपपादयितुं विरुद्धधर्मबाहुल्योपपादनं।

जीवेश्वरभेदे अनुमानप्रमाणसमर्थनम्

अनेन जीवेश्वरभेदस्य अनुमानसिद्धता चोपपादिता भवति।

(मं. टि.) विरुद्धधर्मकथनेनैव ईश्वरप्रतियोगिकजीवाश्रयभेदेऽप्यनुमानं प्रमाणमुक्तमित्याह॥ अनेनेति॥ प्रयोगस्तु 'विमतौ अन्योन्यप्रतियोगिकधर्मिसत्वासमानसत्ताकभेदाश्रयौ अन्योन्यानिष्ठतया प्रतीयमानधर्माश्रयत्वात् संमतवत्' इति। ननु किमत्र अन्तःकरणावच्छिन्नं चैतन्यं पक्षः? किं वा चैतन्यमात्रं? नाद्यः सिद्धसाधनत्वात्। अवच्छेदकभेदेनावच्छिन्नभेदस्यास्माभिरङ्गीकारात्। अवच्छिन्नस्य व्यावहारिकत्वात् तत्समानसत्ताकस्य व्यावहा-रिकस्य भेदस्य अस्माभिरप्यङ्गीकारात्। न द्वितीयः तत्र विरुद्धधर्माभावेन असिद्धेरिति चेत् नैष दोषः। ययोर्ब्रह्म-त्वादिकल्पना तत्पक्षे तयोस्तत्त्वंपदार्थयोः पक्षीकरणात्। अन्यथा अभेदसाधकानुमानेऽपि अवच्छिन्नपक्षीकारे अप-सिद्धान्तात्। अन्यथा सिद्धसाधनतापसङ्गादिति। नचैवमसिद्धिः। संसारिण्यल्पज्ञत्वादेः प्रत्यक्षेण, ब्रह्मणि च सार्व-ज्ञ्यादेः श्रुत्या सिद्धत्वात्।

जीवेश्वरभेदसाधकानुमानस्यासिद्धिशङ्कापरिहारः

(टी.) स्यादेतत्, यदि सार्वज्ञ्यादिगुणवत्तया ईश्वरः सिद्धः स्यात् तदेव कुतः? इत्यत आह

सार्वज्ञ्यादिगुणा विष्णोः श्रुतिषु प्रतिपादिताः॥ १३॥

यः सर्वज्ञः स सर्ववित्, पराऽस्य शक्तिर्विविधैव श्रूयते, य आत्माऽपहतपाप्मा, स हि सर्वस्य कर्ता इत्याद्यास्विति शेषः।

(मं. टि.) चोदयति॥ स्यादेतदिति॥ परिहरति॥ अत आहेति॥ सार्वज्ञ्यादिकमल्पज्ञत्वादिविरुद्धं श्रुत्या ईश्वरस्य प्रतिपादयितुं क्रमेण ताः पठति॥ यः सर्वज्ञ इत्यादिना॥

भेदस्य धर्मिस्वरूपत्वपक्षे प्रतियोगिज्ञानादिनैष्फल्यशङ्का तन्निरासश्च

(टी.) ननु भेदो नाम वस्तुस्वरूपमेव। अतस्तद्दर्शनमेव भेददर्शनमिति किं प्रतियोगिप्रतीत्यनुस-रणेन? किं च तदुपपादनाय विरुद्धधर्मोपन्यासेन? मैवं, न निर्विशेषवस्तुमात्रं भेदः। तथा सति वस्तु-

(टी.) मात्रस्य परेणाप्यङ्गीकृतत्वात् विवादानुपपत्तेः । किं नाम ? अन्योन्याभाव एव । स च रूपादिवत् वस्तुना सविशेषाभिन्न इत्येव स्वरूपं भेद इत्यस्यार्थः । अन्योन्याभावश्च प्रतियोगिनिरूप्य इत्युपपन्नमेव तत्प्रतीत्यनुसरणं । सादृश्यादिना सत्यप्यन्योन्याभावो नोपलभ्यत इति विरुद्धधर्मोपन्यासोऽप्युपपद्यते । अत एव भेद इति प्रस्तुतेऽपि अन्यत्वं इत्युक्तं ।

(मं. टि.) शङ्कते ॥ ननु भेदो नामेति ॥ अतस्तद्दर्शनमेव भेददर्शनमिति ॥ तच्च प्रतियोगिप्रतीत्यनपेक्षमिति वाक्यशेषः । विरुद्धधर्मकथनं च असङ्गतं, स्वरूपाभिन्ने भेदे कस्यापि विप्रतिपत्तेरभावादित्याह ॥ किं चेति ॥ तदुपपादनाय विरुद्धधर्मोपन्यासेन च किं ? इति चशब्दो भिन्नक्रमः । परिहरति ॥ मैवमिति ॥ ननु स्वरूपातिरेके भेदस्यानवस्थाप्रसङ्गात् स्वरूपमात्रत्वं भेदस्येति शङ्कते ॥ किं नामेति ॥ परिहरति ॥ अन्योन्याभाव इति ॥ तादात्म्यनिषेध इति यावत् ॥ सविशेषेति ॥ विशेषेण सहैकाधिकरणक इत्यर्थः ।

### विशेषाङ्गीकारे प्रमाणाक्षेपः

ननु विशेषे किं प्रमाणं ? 'घटस्य भेदः' इति सम्बन्धव्यवहारः प्रमाणमिति चेन्न । 'देवदत्तस्य कम्बलः' इतिवत् भेदेनैवोपपत्तेः । अभेदे सत्यपि सम्बन्धव्यवहारः प्रमाणमिति चेन्न 'घटस्य रूपम्' इतिवत् अभेदेनाप्युपपत्तेः । भेदासहिष्णवभेदे सत्यपि सम्बन्धव्यवहारः प्रमाणमिति चेन्न । तस्यासिद्धेः । तत्प्रतीतौ तत्प्रतीतिरित्याद्यभेदकार्यस्य अभेदमात्रेणोपपत्तौ 'घटस्य भेदः' इति सम्बन्धप्रतीतिप्रापितस्य भेदस्याप्यङ्गीकार्यत्वेन भेदस्य घटेन आत्यन्तिकाभेदासम्भवात् ।

नन्वीश्वरतद्गुणयोः भेदो नाङ्गीकार्यः ।

एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ॥

इति भेदप्रतिषेधात् । तथा च भेदासहिष्णुरभेदोऽङ्गीकार्यः । अथापि श्रूयते 'आनन्दो ब्रह्मणः' इति ब्रह्मानन्दयोः सम्बन्धः । तथा च तन्निर्वाहार्थं विशेषोऽङ्गीकर्तव्य इति चेत्, नाङ्गीकर्तव्यः । 'एवं धर्मान्' इति श्रुतौ च आत्यन्तिकभेदनिषेधात् । भेदमात्रनिषेधे सम्बन्धव्यवहारे कारणत्वेन क्लृप्तभेदस्य परित्यागप्रसङ्गात् । क्लृप्तकारणपरित्यागेन अक्लृप्तकारणान्तरकल्पने च संसर्गव्यवहारे कारणत्वेन क्लृप्तसंसर्गप्रत्ययस्य परित्यागेन असंसर्गाग्रहस्यैव कारणत्वकल्पनेन अख्यातिपक्षपातप्रसङ्गात् । न च भेदाभेदयोर्विरोधात् तद्विरोधशमनाय विशेषोऽङ्गीकार्य इति वाच्यं । विशेषस्यापि [1]भेदकार्यस्य भेदवदभेदविरोधित्वेन अभेदेन सहावस्थानासम्भवात् । तत्र प्रतीतत्वादविरोध इति चेत्समं भेदाभेदयोरपीति ।

---

[1] भेदकार्यकरस्य इति मुद्रितपुस्तकस्थपाठ एव साधुरिति भाति.

(मं टि.) एतेनैतदपि परास्तं। घटभेदशब्दौ तावदपर्यायतया प्रसिद्धौ। न चैतयोरपर्यायत्वं घटपट-शब्दादाविवात्यन्तभिन्नार्थवाचित्वेन सम्भवति। घटतद्भेदयोरात्यन्तिकभेदाभावात्। नापि घटरूपादिशब्दवद्भिन्नाभिन्नार्थवाचित्वेन, घटतद्भेदयोरत्यन्ताभेदात्। तस्मात् तदपर्यायतानिर्वाहकः कश्चिदङ्गीकार्यः स एव विशेष इति। उक्तन्यायेन भेदाभेदाङ्गीकारेणैव सर्वव्यवस्थोपपत्तेः। तस्मान्न विशेषे प्रमाणमस्ति।

### विशेषे लक्षणाभावशङ्का

नापि लक्षणमस्ति। तथा हि, न तावद्भेदव्यवहारनिर्वाहकत्वं तल्लक्षणं, घटपटभेदव्यवहारनिर्वाहके भेदेऽतिव्याप्तेः। नाप्यभिन्ने भेदव्यवहारनिर्वाहकत्वं, घटाभिन्ने रूपे 'घटस्य रूपं' इति भेदनिबन्धनसम्बन्धव्यवहारनिर्वाहकभेदेऽतिव्याप्तेः। अत्यन्ताभिन्ने भेदव्यवहारनिर्वाहकत्वमिति चेन्न असम्भवात्। एकपदार्थाभिधाय्यनेकशब्दापर्यायतानिर्वाहकत्वमिति चेन्न। 'शुक्लः पटः' इत्यत्र एकपटाभिधाय्यनेकशब्दापर्यायतानिर्वाहके शुक्लपद' प्रवृत्तिनिमित्ते शौक्ल्ये पटपदप्रवृत्तिनिमित्ते पटत्वे चातिव्याप्तेः। प्रवृत्तिनिमित्तभेदरहितैकार्थाभिधाय्यनेकशब्दापर्यायतानिर्वाहकत्वं लक्षणमिति चेन्न असम्भवात्। घटभेदादिशब्देष्वपि घटत्वभेदत्वादिप्रवृत्तिनिमित्तभेदसद्भावात्। [1]तस्मान्न विशेषे प्रमाणं लक्षणमप्यस्तीति।

### विशेषस्य भेदस्वरूपत्वशङ्का

अपि चायं विशेषः किं भेदकार्यं करोति? उत न? न चेत्किमनेनाङ्गीकृतेन। आद्ये भेद एवायं नामान्तरेणोच्यते। भेदकार्यकरस्यैव भेदत्वात्। क्लृप्तकारणं विना कार्यायोगात्।

### विशेषाङ्गीकारे भेदस्वरूपापलापशङ्का

एकस्यैव सम्बन्धव्यवहारकार्यस्य कारणद्वयं भेदो विशेषश्चेति। तत्र भेदो 'देवदत्तस्य कम्बलः' इत्यादिसम्बन्धव्यवहारहेतुः। 'घटस्य भेदः' इत्यादेस्तु व्यवहारस्य विशेषो हेतुरिति व्यवस्थाऽस्त्विति चेत्, किमनया कल्पनया? देवदत्तस्य कम्बलः' इत्यादिप्रत्ययप्रयोगयोरपि विशेष एव हेतुरस्तु। तथात्वेऽनुगमात्किं भेदेन? इति। तथा च भेदकार्यनिर्वाहार्थं कल्प्यमानो विशेषो भेदमेवोन्मूलयतीति।

### विशेषस्वरूपस्य दुर्निरूपत्वशङ्का

अपि च कोऽयं विशेषः? किं स्वभावभेदः? किं वा शक्तिविशेषः? आद्येऽपि किं घटस्य स्वभावः? किं वा भेदस्य? नाद्यः, स्वभावः स्वरूपमिति पर्यायौ। तथा च घटस्य विशेषाश्रयताया अनुपपत्तिः। स्वस्य स्वाश्रयतानु-

---

[1] 'तस्मान्न विशेषे लक्षणमप्यस्तीति' इति मुद्रितपुस्तकगतः पाठ एव साधुरिति भाति 'तस्मान्न विशेषे प्रमाणमस्ति' इति प्रमाणनिराकरणस्य पूर्वमेव कृतत्वात्.

(मं. टि.) पपत्तेः । न द्वितीयः भेदस्यापि घटस्वरूपत्वेन भेदस्वभावस्यापि विशेषस्य घटाश्रितत्वानुपपत्तेः । नापि द्वितीयः अभिन्ने भेदव्यवहारजननसमर्थायाः शक्तेरदर्शनात्। न हि शक्तिरपि स्वाविषये स्वकार्यं करोति। न चाभिन्नो भेदव्यवहारजननसमर्थशक्तिविषयः । व्याघातात् । किं च विशेषेऽपि विशेषाङ्गीकारेऽनवस्था । अनङ्गीकारे तु विशेषतत्स्वरूपतद्भेदशब्दानां पर्यायतापत्तिः । तस्माद्विशेषस्यानुपपन्नत्वात् सविशेषाभिन्नः इत्युक्तमयुक्तमिति ।

## विशेषे प्रमाणाभिधानम्

अत्र ब्रूमः ।

आनन्दो ब्रह्मणः कुम्भस्वरूपमिति भाषितं ।
सम्बन्धव्यवहारत्वात्सम्बन्धं कल्पयिष्यति ॥

'आनन्दो ब्रह्मणः' 'घटस्य भेदः' इत्यादिव्यवहारः सम्बन्धपूर्वकः सम्बन्धव्यवहारत्वात् संमतवत् । अन्यथा कारणं विना कार्याङ्गीकारे व्याघात । व्यवह्रियमाणस्य व्यवहारं प्रति विषयतया कारणत्वात् । औपचारिकोऽयं व्यवहार इति चेत् । कोऽर्थः? किं निर्निमित्त इति? किं वा आरोपितविषय इति? यद्वा क्लृप्तनिमित्ताभावेऽपि निमित्तान्तरवानिति? नाद्यः व्याघातादित्युक्तत्वात् । न द्वितीयः 'आनन्दो ब्रह्मणः' इत्यादि श्रौतव्यवहारस्याप्यारोपितविषयत्वे श्रुतेरप्रामाण्यप्रसङ्गात् । 'न घटस्य भेदः' 'न घटस्य स्वरूपं' इति विपरीतव्यवहाराभावेन 'घटस्य स्वरूपं' इत्यादिलौकिकव्यवहारस्याप्यभ्रान्तत्वात् । तृतीये सिद्धं नस्समीहितं । क्लृप्तभेदाख्यनिमित्ताभावेऽपि यन्निमित्तान्तरमङ्गीक्रियते तस्यैवास्माभिर्विशेषत्वेन व्यवहरणात् । स च सम्बन्धो भेदगर्भः सोमासम्भवे [1]पूतिकावत् भेदासम्भवे तत्प्रतिनिधिं कल्पयति यतः ।

## घटस्य स्वरूपमित्यादिव्यवहारस्य भेदाभेदाभ्यामुपपत्तिनिरासः

न च भेदासम्भवोऽसिद्धः भेदाभेदाङ्गीकारेणाप्युपपत्तेरिति युक्तं । 'एवं धर्मान्' इति तन्निषेधात् । न च तत्राप्यात्यन्तिकभेद एव निषिद्ध्यत इति युक्तं । लोकेऽपि धर्मधर्मिणोरात्यन्तिकभेदाभावस्य सिद्धत्वेन विशिष्य कथनानुपपत्तेः । धर्मधर्मिणोरात्यन्तिकभेदाभावश्च भाष्यकारटीकाकाराभ्यामेवान्यत्रोपपादितः । 'घटस्य स्वरूपं' इत्यादावपि न भेदाभेदावङ्गीकारार्हौ। घटस्य स्वरूपातिरेकेण घटस्याभावेन तयोर्मात्रयाऽपि भेदासम्भवात् । भेदाभेदयोर्विरोधेन तद्विरोधशमनार्थं विशेषस्य आवश्यकत्वाच्च ।

## अभेदविरोधिभेदप्रतिनिधेर्विशेषस्याभेदाविरोधित्वम्

न च विशेषस्यापि भेदप्रतिनिधित्वेनाभेदविरोधः समान इति वाच्यं । माणवके मुख्यसिंहव्यवहारनिमित्तस्य सिंहत्वस्य विरोधेऽपि अमुख्यक्रौर्यादेरविरोधवदत्राप्युपपत्तेः । धर्मिग्राहकप्रमाणेन विशेषस्य भेदकार्यकरस्यापि अभेदाविरोधेनैव सिद्धत्वात् । तत्र विरोधापादकतर्कस्यापि धर्मिग्राहकप्रमाणविरोधेनानुत्थानाच्च ।

---

[1] पूतीकवत्, इति मुद्रितपुस्तकस्थः पाठ एव साधुरिति भाति.

## विशेषेण भेदकार्यनिर्वाहे भेदवैयर्थ्यशङ्कानिरासः

(मं. टि.)न चानेनैव सर्वकार्यनिर्वाहे भेदो दत्ततिलाञ्जलिः स्यादिति युक्तं। तथात्वे सर्वत्र [1]पूतिकाग्रहणे सम्भवति सोमापेक्षाभावप्रसङ्गात्। सिंहेऽपि क्रौर्यस्यानुगतत्वेन सिंहव्यवहारनिर्वाहकत्वे सम्भवति सिंहत्वस्य दत्त-तिलाञ्जलित्वप्रसङ्गाच्च। तत्र 'मुख्ये सम्भवति नामुख्यं कल्प्यते' इति चेत् समः समाधिः।

## घटस्य स्वरूपमिति व्यवहारस्य सामान्यविशेषविषयकत्वनिरासः

ननु 'घटस्य स्वरूपं' इत्यादिव्यवहारः सामान्यविशेषविषयकः। स्वरूपस्य पटादावपि साधारण्यात्। तथा च सामान्यविशेषभावेन भिन्नविषयकत्वात् 'घटस्य स्वरूपं' इत्यादिव्यवहारो न विशेषकल्पक इति चेन्न। 'घटस्य स्वरूपं' इत्यत्र स्वरूपशब्देन किं घटस्वरूपं विवक्षितं? किं वा अन्यस्य स्वरूपं? सामान्यं वा? नाद्यः तस्याप्यसाधारण्येन सामान्यविशेषभावाभावात्। न द्वितीयः तस्यैतदीयत्वायोगात्। न तृतीयः घटाद्यसाधारण-स्वरूपातिरिक्तस्य सर्वानुगतस्यैकस्याभावात्। भावे वा सर्वाद्वैतापत्तेः। ननु स्वरूपस्यानुगतस्याभावेऽपि स्वरूपत्वं नाम धर्मः घटादावप्यनुगतः। न तथा घटत्वं। तावतैव सामान्यविशेषभाव इति चेन्न। अस्माभिरनुगतस्य स्वरूपत्व-स्याप्यनङ्गीकारात्। अङ्गीकारे वा 'द्रव्यं घटः' 'मनुष्यो ब्राह्मणः' इत्यादिवत्सामानाधिकरण्यमेव स्यात। न तु सम्बन्धव्यवहारः। सामान्यविशेषभावमात्रेण षष्ठीप्रयोगे 'ब्राह्मणस्य मनुष्यः' इत्यपि स्यात्।

## विशेषे लक्षणाभिधानम्

एतेन अत्यन्ताभेदे भेदव्यवहारनिर्वाहकत्वं विशेषलक्षणं चोपपादितं द्रष्टव्यं।

## विशेषे प्रमाणान्तराभिधानम्

अपि च 'ब्रह्मतदानन्दघटतत्स्वरूपतद्भेदादिपदानि अपर्यायतानिर्वाहकपदार्थवन्ति अपर्यायपदत्वात् घट-पटपदवत्' इति। स चापर्यायतानिर्वाहकः न तावद्घटपटादाविव अत्रापि भेदः सम्भवति। ब्रह्मतदानन्दादीनां भेदा-भावात्। नापि घटतद्रूपादिष्विव भेदाभेदौ, आत्यन्तिकाभेदस्योपपादितत्वात्। तथा च तन्निर्वाहकः कश्चित्पदा-र्थोऽङ्गीकर्तव्यः। स एव च विशेष इति हि गीयते। यथोक्तं भगवत्पादैः

> भेदहीने त्वपर्यायशब्दान्तरनियामकः।
> विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः॥

---

[1] पूतीकग्रहणे इति पाठः साधुरिति भाति.

(मं. टि )इति। अथ मतं 'घटतद्भेदादिपदानामत्यन्ताभिन्नार्थत्वं भवेत्। तथापि तेषामपर्यायतानिर्वाहार्थं न विशेषः कल्पनीयः। घटत्वभेदत्वादिप्रवृत्तिनिमित्तभेदादेव अपर्यायतोपपत्तेः। न च घटतद्भेदयोर्भेदाभावे कथं घटत्वभेदत्वयो-रपि भेदः? इति वाच्यं। धर्मिभेदाभावेऽपि धर्मभेददर्शनात्'इति। तन्न। अत्यन्ताभिन्नार्थाभिधायिनां शब्दानां प्रवृत्ति-निमित्तभेदमात्रेणापर्यायत्वे घटकलशादिशब्दानामप्यपर्यायताप्रसङ्गात्। कपालोपादानत्वं घटत्वं, कपालसंयोगास-मवायिकारणकत्वं कलशत्वं इत्यपि वक्तुं शक्यत्वात्। 'स्थितस्य गतिश्चिन्त्यते' इति कथमतिप्रसङ्गः? इति चेन्न। अनतिप्रसञ्जकस्यैव चिन्तनीयत्वात्। तस्मात् 'शुक्लः पटः' इत्यादावपि विशेषबलादेवापर्यायत्वं वाच्यं।

### विशेषलक्षणान्तरस्थापनम्

एवं च अभिन्नार्थाभिधाय्यनेकशब्दापर्यायतानिर्वाहकत्वं च विशेषलक्षणं स्थापितं भवति। भेदसञ्जीविन्यां त्वस्माभिर्विशेषमाच्छाद्य नैयायिकादिपक्षाश्रयणेन भेदपटादिशब्दानामपर्यायत्वं प्रत्यपादीति न तेनास्य विरोधः।

### विशेषे अनुमानान्तरम्

'अयं घटः एतद्घटनिष्ठभेदातिरिक्तभेदकार्यकराश्रयः घटत्वात् घटान्तरवत्' इत्यनुमानाच्च विशेषसिद्धिः। न चास्यानुमानस्य आभाससमानयोगक्षेमत्वं शङ्क्यम्। तर्कानुग्रहाननुग्रहाभ्यां विशेषात्।

### विशेषस्य शक्तिविशेषरूपत्वसमर्थनम्

यच्चोक्तं, अपि च कोऽयं विशेषः? इत्यादि। तत्र शक्तिविशेषो विशेष इति ब्रूमः। न च शक्तेः स्वावि-षये कथं कार्यकरत्वं? इति वाच्यं, विशेषाख्यायाः शक्तेर्धर्मिग्राहकप्रमाणेन अभिन्ने भेदकार्यविषयकत्वाकारेणैव सिद्धत्वात् अभिन्ने भेदकार्यस्य स्वाविषयत्वाभावात्।

### विशेषस्य धर्मिपदार्थस्वरूपत्वसमर्थनम्

स च विशेषस्तत्पदार्थस्वरूपमेव। न च तथात्वे आश्रयाश्रयिभावानुपपत्तिः। स्वाभिन्नेऽपि स्वाश्रयत्वसम्पा-दकत्वाकारेणैव तत्सिद्धेः।

### विशेषाङ्गीकारे अनवस्थादोषपरिहारः

यच्चोक्तं 'किं च विशेषे विशेषाङ्गीकारे अनवस्था' इत्यादि। तत्र विशेषे विशेषो नास्तीति ब्रूमः। कथं तर्हि तत्र भेदकार्यदर्शनं? आधारभूतविशेषमाहात्म्यबलादेवेत्यवेहि।

### अन्यत्रापि विशेषे माहात्म्यं धर्मिग्राहकप्रमाणसिद्धम्

कुत एतत्? इत्थं, यथा 'ज्योतिष्टोमेन यजेत' इति तृतीयया यागस्य करणत्वे प्रामाणिके सति तन्नि-र्वाहाय[1] कालान्तरदेशान्तरदेहान्तरभोग्यफलं कल्पयित्वा तस्य च फलस्य सद्यःप्रध्वस्तयागजन्यत्वानुपपत्तिपरिहारार्थं मध्ये अपूर्वमित्यादिकं कल्प्यते। प्रमाणसिद्धार्थनिर्वाहार्थं कल्प्यमानस्यापि प्रामाणिकत्वात्। एवं प्रकृतेऽप्युक्त-

(मं. टि.) प्रकारेण विशेषे प्रामाणिके सति तस्य यावता विना न निर्वाहस्तावत्सर्वमपि कल्पयामः। विशेषनिर्वाहकस्य सर्वस्यापि विशेषग्राहकप्रमाणेनैव आक्षिप्तत्वात्। यथाहुः

"प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि" इति।

तस्माद्विशेषे साधकसद्भावात् बाधकाभावाच्च विशेषोऽङ्गीकर्तव्य इति सविशेषाभिन्न इति साधूक्तं।

**ईश्वरगतसार्वज्ञ्यादिगुणानां सत्यत्वाक्षेपपरिहारौ**

(टी.) भवेदेवं, यदि सार्वज्ञ्यादिकमीश्वरस्य सत्यं स्यात्। न चैतदस्ति। तत्र प्रमाणाभावात्। 'यः सर्वज्ञः' इत्यादिश्रुतयस्तु सार्वज्ञ्यादिकमेव प्रतिपादयन्ति। न पुनस्तस्य सत्यतां। तथा अश्रवणात्। मृषा विरुद्धधर्माधिकरणतया तात्त्विकभेदप्रतीत्युपपादनमयुक्त। अतिप्रसङ्गादिति। अत आह

**सत्यः सो अस्य महिमेत्यादिवाक्यान्मृषा न च।**

सार्वज्ञ्यादिगुणा विष्णोरिति वर्तते। यद्यपि 'यः सर्वज्ञः' इत्यादिश्रुतयः सार्वज्ञ्यादिकमेव प्रतिपादयन्ति तथापि सः वेदोदितः, अस्य महिमा सर्वज्ञत्वादिः, सत्य एव इति वाक्यान्तरात् सत्यतावगमात् न सार्वज्ञ्यादिकं मृषा इति।

(मं. टि.) ॥ तथा अश्रवणादिति ॥ 'सर्वज्ञत्वादिकं सत्यं' इति अश्रवणादित्यर्थः। यत्र शब्दो गृहीतसङ्गतिकः तत्र प्रतीतिं जनयति। न च सर्वज्ञादिशब्दाः तत्सत्यत्वगृहीतसङ्गतिका इति भावः। ननु विरुद्धधर्मैरेव भेदसिद्धौ न तत्सत्यता अपेक्ष्यत इति। तत्राह ॥ मृषेति ॥ अतिप्रसङ्गादिति ॥ शुक्तिकायां शुक्तिकात्वविरुद्धस्य रजतत्वस्यारोपितस्य सत्वेन शुक्तिकायाः शुक्तिकातो भेदप्रसङ्गादित्यर्थः।

**सार्वज्ञ्यादिगुणबोधकानामेव श्रुतीनां तत्सत्यत्वे प्रमाणत्वसमर्थनम्**

(टी.) अङ्गीकृत्य चेदमुदितं। वस्तुतस्तु वस्तुविषयकमेव ज्ञानं तत्सत्यत्वे प्रमाणं। न पुनस्तत्र प्रमाणान्तरापेक्षा। प्रामाण्यस्य स्वतस्त्वस्य सिद्धत्वात्। अतो 'यः सर्वज्ञः' इत्यादिश्रुतिरेव तत्सत्यतां प्रतिपादयतीत्यनुपपन्न एवाक्षेपः। एवं सति शुक्तिरजतादिसत्यतापि स्यादिति चेन्न। औत्सर्गिकप्रामाण्यस्य करणदोषैर्बाधकप्रमाणैरपनयनेन तन्मिथ्यात्वस्य स्थितत्वात्। न चैवमेवास्तु प्रकृतेऽपीति वाच्यं। करणदोषबाधकप्रमाणाभावादित्याह

न च वेदोक्तमिथ्यात्वे मानं................ ।

(टी.)अत्र न च तन्मिथ्यात्वे मानं इति वक्तव्ये वेदोक्तेति करणदोषाभावोपपादनार्थमुक्तं । अपौरुषेयतया वेदे दोषाभावेऽपि प्रतिपत्तुरेव दोषः सम्भवतीति चेन्न । तस्यापि बाधकप्रमाणोन्नेयत्वेन तदभावे अभावनिश्चयात् ।

(मं. टि.)॥ अङ्गीकृत्य चेदमुदितमिति ॥ यथा 'विज्ञानमानन्दं ब्रह्म' इत्यादौ सत्यपदाभावेऽपि स्वतः प्रमाणभूतया श्रुत्यैव विज्ञानाद्यात्मकत्वं ब्रह्मणः पारमार्थिकसत्यं सिद्ध्यति तथा सर्वज्ञत्वादिकमपि श्रुत्या पारमार्थिकं सत्यं सिद्ध्यतीत्यर्थः । यद्यपि सत्यत्वं न पदार्थः नापि वाक्यार्थः सत्यत्वस्य सर्वज्ञादिपदार्थत्वाभावात् संसर्गव्यतिरिक्तत्वाच्च, तथापि श्रुतेः प्रामाण्यात् तदर्थेन सत्येन भवितव्यं इति आर्थिकं सत्यत्वं वाक्यार्थः । शक्यार्थस्य च अर्थात् सत्यत्वानङ्गीकारे 'सत्यं ज्ञानं' इत्यादावपि 'ब्रह्मण एव सत्यत्वं प्रतिपाद्यते न सत्यत्वस्य सत्यत्वं' इति ब्रह्मणि या सत्यता तस्याः सत्यता न स्यात् । इष्टापत्तिरिति चेन्न । ब्रह्मसत्यताया असत्यत्वे ब्रह्मासत्यताप्रसङ्गादिति भावः । ननु श्रुतेः प्रामाण्यमेव कुतः येन सत्यत्वं पारमार्थिकं स्यादित्यत आह ॥ [1]प्रामाण्यस्येति ॥ सिद्धत्वादिति ॥ स्थितत्वादित्यर्थः । ननु प्रामाण्यं स्वतस्तिष्ठतु । किं चातः? तस्मिन् हि ज्ञातेऽर्थसत्यता ज्ञायेत इति, अत्राप्येतदेवोत्तरं ॥ [2]प्रामाण्यस्येति ॥ सिद्धत्वादिति ॥ ज्ञातत्वादित्यर्थः । पक्षद्वयेऽप्यतिप्रसङ्गं शङ्कते ॥ एवं सतीति ॥ स्यादित्युपलक्षणं । प्रमीयेतेत्यपि द्रष्टव्यं । परिहरति ॥ नेति ॥ प्रामाण्यस्येत्युपलक्षणं तत्प्रमितेश्चेत्यपि द्रष्टव्यं । तत्र प्रामाण्यस्यापनयने हेतुः करणदोषैरिति । तत्प्रमित्यपनयने हेतुः बाधकप्रमाणैरिति । अनुसंहितैरिति शेषः । बाधकप्रमाणोदयात्पूर्वं तु प्रामाण्यं ज्ञायत एवेति भावः । स्थितत्वादित्यत्र प्रमितत्वादित्यप्यध्याहर्तव्यं । शङ्कते ॥ अपौरुषेयतयेति ॥ परिहरति ॥ नेति ॥ प्रतिपत्तुर्हि दोषः पदवाक्ययोः शक्तितात्पर्यापरिज्ञानं । तदपि प्रतीतार्थबाधकप्रमाणोन्नेयं । बाधकप्रमाणाभावेऽपि पदवाक्ययोः शक्तितात्पर्यसन्देहमात्रेण प्रतीतार्थपरित्यागे गवानयनवाक्यं श्रुत्वा तात्पर्यसन्देहेन न प्रवर्तेतेत्यर्थः ।

सार्वज्ञ्यादिगुणानां मिथ्यात्वाभावेन परमते अज्ञानासम्भवोपसंहारः

(टी.) ननु 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुत्या 'विमतो विशिष्टाकारो मिथ्या विशिष्टाकारत्वात् नीलं नभ इति विशिष्टाकारवत्' इत्याद्यनुमानेन च सार्वज्ञ्यादेर्मिथ्यात्वप्रतीतेः कथं तत्र प्रमाणाभावः? अतो व्यावहारिकसार्वज्ञ्यादिविषयाः 'यः सर्वज्ञः' इत्यादिश्रुतय इत्यत आह

........................तन्मानताऽपि न ॥ १४ ॥

'नेह नाना' इत्यादिश्रुतेः तत्र सार्वज्ञ्यादिमिथ्यात्वे मानताऽपि नास्ति । तथोपपादितमन्यत्र । एवं तस्य अनुमानस्यापि मानता नास्ति । धर्मिग्राहकप्रमाणविरोधादिति व्याख्येयं ।

---

[1] ॥ प्रामाण्येति ॥ इति मुद्रितपुस्तकगत एव पाठः साधुः प्रामाण्यस्तत्सत्त्वस्येति टीकानुरोधात् . [2] ॥ प्रमाण्येति ॥

(टी.) न मानमित्युक्तं । यत् उच्यते तस्यापि मानता नास्तीति अपिशब्दसम्बन्धः । तदेवं अद्वैतमते अज्ञानासम्भवोऽभिहितः ।

अज्ञानासम्भवादेव अद्वैतवादे अधिकार्याद्यसम्भवः

ततः किं ? इत्यत आह

अतोऽज्ञासम्भवादेव नाधिकार्यैक्यवादिनां ।

अज्ञो हि शास्त्रेऽधिक्रियते । उक्तविधया अज्ञानानुपपत्त्या अज्ञो न सम्भवति । ततश्च ऐक्यवादिनां मते शास्त्रस्य अधिकारी न सम्भवति ।

अतो नाज्ञातमिति च विषयो विषयान्तरे ॥ १५ ॥

अतः अज्ञानासम्भवात् अज्ञातं वस्तु न सम्भवति इति हेतोः ऐक्यवादिनां मते शास्त्रस्य विषयश्च न सम्भवति। किं तु ? विषयान्तरे देशान्तरे भेदवादे अधिकार्यादिकं सम्भवतीति उक्तोच्यमानवक्ष्यमाणशेषतया व्याख्येयं । अज्ञातो हि शास्त्रस्य विषयो भवति शास्त्रस्य परार्थत्वात् ।

अज्ञाभावात्फलं कस्य........................... ।

अज्ञे हि सति अज्ञाननिवृत्तिलक्षणं शास्त्रफलं तस्य सम्भवति । उक्तप्रकारेण अज्ञानानुपपत्त्या अज्ञाभावात् फलं कस्य स्यात् ? न कस्यापीति ।

...........................योगः शशनृशृङ्गयोः ।

एवं अधिकारिविषयप्रयोजनानां असत्वात् तत्सम्बन्धः शशनृशृङ्गयोः सम्बन्ध इवानुपपन्न एव । तथा च अद्वैतमते शास्त्रस्य अनारम्भणीयत्वं स्यादिति ।

(मं. टि.) व्यावहारिकसार्वज्ञ्यादिविषयकत्वात् सर्वज्ञादिवाक्यानामत्यन्ताप्रामाण्यं च नास्तीत्याह ॥ अत इति ॥ तन्मानताऽपि न इत्युक्तं मूलग्रन्थे । तदयुक्तं, श्रुत्यनुमानयोः सिद्धान्तिनापि प्रामाण्याङ्गीकारादित्याशङ्क्याह ॥ नेह नानेति ॥ तन्मानतेत्यत्र तच्छब्देन श्रुत्यनुमाने परामृश्येते । तत्र श्रुतेः परोक्तार्थव्याख्यानरूपमप्रामाण्यं । अनुमानस्य तु सर्वथेति मूलग्रन्थार्थ इत्यर्थः ॥ धर्मिग्राहकप्रमाणविरोधादिति ॥ सार्वज्ञ्यादीनामसिद्धौ आश्रयासिद्धिः । सिद्धौ च श्रुत्यैव च सिद्धत्वं वाच्यं । श्रुतेश्च प्रामाण्यात् सत्यत्वेन अर्थात् सिद्धमिति मिथ्यात्वसाधने धर्मिग्राहकप्रमाणबाध इत्यर्थः ।

मूलस्थातःशब्दार्थमाह ॥ उक्तविधयेति ॥ विषय इति कारिकाखण्डे अतो न इत्यस्माद्ग्रन्थात् न इत्यनुवर्तते। चशब्दश्च भिन्नक्रम इत्याह ॥ विषयश्च न सम्भवतीति ॥ विषयान्तरे इत्येतत् वाक्यान्तरमित्याह

(मं. टि.) ॥ किं त्विति ॥ उत्क्रोच्यमानेति ॥ भेदस्योपपादितत्वेन भेदमूलस्य विषयादेः उपपादितप्रायत्वात्, इदानीं च परमतनिरासेन स्वमते विषयादेरर्थादुक्तत्वात् अधिकार्यादेः सविस्तरं वक्ष्यमाणत्वाच्च त्रितयशोधने विषयान्तरे इत्यस्य वाक्यस्येत्यर्थः । तत्र विषयाभावमुपपादयति ॥ अज्ञातो हीति ॥ शास्त्रस्येति ॥ शास्त्रस्य परज्ञानप्रयोजनकत्वात् । परस्य चाज्ञात एव जिज्ञासा न ज्ञान इत्यर्थः । अज्ञाभावात्फलं कस्य इति वाक्यान्तरं । योगः शशनृशृङ्गयोः इत्यस्य असङ्गतार्थत्वमाशङ्क्य इवशब्दाध्याहारेण वाक्यार्थमाह ॥ एवमधिकारीति ॥

अज्ञानदौर्घट्यस्य भूषणत्वशङ्का तन्निरासश्च

(टी.) नन्वज्ञानासम्भव एव कथं ? ब्रह्मणो जीवस्य वा अज्ञानोपपत्तेः । न च तत्र दौर्घट्यमुक्तमज्ञानस्येति वाच्यं । यतोऽज्ञानमारोपितमेव । परमार्थसतो हि दौर्घट्यं बाधकं नारोपितस्य । प्रत्युत भूषणमेव । अन्यथा आरोपितत्वानुपपत्तेः । तदुक्तं

दुर्घटत्वमविद्याया भूषणं न तु दूषणं ।
कथञ्चिद्घटमानत्वेऽविद्यात्वं दुर्घटं भवेत् ॥ इति ।

तथा च कथमधिकार्यभावः? इत्याशङ्कां सिंहावलोकनन्यायेन परिहरति

दुर्घटत्वं भूषणं चेत्स्यादविद्यात्वमात्मनः ॥ १६ ॥

यद्यविद्याया अनुपपन्नतैव भूषणमित्यङ्गीक्रियते तदा आत्मनोऽविद्या इत्यपि नाङ्गीकर्तव्यं वस्तुद्वयकल्पने कल्पनागौरवात् । किं नाम ? आत्मैव अविद्या इत्यङ्गीकार्यं । ततश्च आत्मैव आत्मावरणं चेत् सर्वदा आवृतत्वप्रसङ्गो मोक्षे च आत्मनिवृत्तिरित्याद्यनुपपत्तिः अविद्याया भूषणं इत्येव समाधानं वाच्यं स्यात् । तस्मादनुपपत्तिर्वा परिहर्तव्या, अज्ञानं वा त्याज्यं ।

सत्यां प्रतीतौ इदमुच्यते । न च आत्मनोऽविद्यात्वं प्रतीयत इति चेत्समं प्रकृतेऽपि । न हि सर्वज्ञस्य ब्रह्मणोऽज्ञानं प्रतीयते । नापि 'परमात्मैवोपाध्यवच्छिन्नोऽहमज्ञः' इति प्रतीतिरस्ति । यथास्वरूपं प्रतिभासाभावश्च आत्मरूपाविद्ययैव कल्प्यतां लाघवादित्युक्तमेवेति ।

किञ्च अनुपपत्तिर्भूषणमित्यङ्गीकुर्वता अधिगतवेदान्तस्याप्यद्वैतवादिनो नित्यनिरयप्राप्तिरङ्गीकर्तव्या । सर्वज्ञस्य अज्ञानानुपपत्तेरिव अधिगतमहावाक्यस्य नित्यदुःखानुपपत्तेरपि भूषणत्वसम्भवात् । निरयादेरप्यविद्यामयत्वात् इत्याह

अन्धं तमोऽप्यलङ्कारो नित्यदुःखं शिरोमणिः ।

स्यादिति वर्तते । अधिगतमहावाक्यस्येति शेषः । अनेन परब्रह्मणोऽज्ञानमङ्गीकुर्वाणानामिदं फलं भवतीति सूचितं भवति ।

(मं॰ टि॰) ॥ परमार्थसतो हीति ॥ अरजते रजतत्वस्य मिथ्याभूतस्य दुर्घटस्यैव दर्शनादित्यर्थः । नन्वस्याः शङ्कायाः अतोऽज्ञासम्भवादेव इत्यतः प्रागेव प्रसक्तत्वात् अधिकारिविषयाद्यभावप्रतिपादनानन्तरं तत्परिहारोऽनवसरपराहतः । किं तु ? तत्परिहारानन्तरमेव अतोऽज्ञासम्भवादेव इत्यादिना अधिकारिविषयाद्यभावः प्रतिपादनीय इत्यत आह ॥ सिंहावलोकनन्यायेनेति ॥ सर्वदा आवृतत्वप्रसङ्ग इति ॥ आवरणस्य आत्मनो नित्यत्वादित्यर्थः ॥ मोक्षे च आत्मनिवृत्तिरिति ॥ आवरणानिवृत्तौ मोक्षस्यैवासम्भवादित्यर्थः । 'अरजते रजतत्वं च दोषवशात् प्रतीयते' इत्यादि उपपत्तिभिरेवोपपाद्यत इति दृष्टान्तोऽप्यसङ्गत इति द्रष्टव्यं । चोदयति ॥ सत्यां प्रतीतावितिं ॥ किमत्राज्ञानमात्रं प्रतीयते ? किं वा सर्वज्ञस्याज्ञानं ? आद्ये इष्टापत्तिः । तत्रानुपपत्त्यभावश्चेत्यभिप्रेत्य द्वितीयं दूषयति ॥ न हीति ॥ नन्वथाऽपि 'अहमज्ञः' इति प्रतीयते । अहमर्थश्चास्माभिः परमात्माभिन्नोऽङ्गीक्रियत इति कथं सर्वज्ञस्याज्ञानप्रतीत्यभावः? इति चेत् तत्रापि किमहमर्थमात्रस्याज्ञानं प्रतीयते ? किं वा अहमर्थस्य परमात्माभेदोऽपि ? आद्योऽङ्गीक्रियत इति मत्वा द्वितीयं दूषयति ॥ नापीति ॥ ननु तर्हि अनुपपत्तिपरिहाराय अज्ञानपरित्यागश्चेत् अपरिच्छिन्नानन्दाद्यात्मकब्रह्मप्रतिभासाभावः किंनिबन्धनः ? इत्यत आह ॥ यथेति ॥ किञ्चेति ॥ युक्तिविरोधस्य भूषणत्वे श्रुतिविरोधस्यापि भूषणत्वप्रसङ्गादिति भावः । नन्वविद्याया एव दुर्घटत्वं भूषणं न निरयादेरित्यत आह ॥ निरयादेरपीति ॥ उपादानोपादेययोरभेदादिति भावः ।

### मायावादतत्ववादयोरनारम्भणीयत्वारम्भणीयत्वयोर्विवरणम्

(टी॰) 'वेदवेदान्तयोर्जीवब्रह्मणोरेकत्वे तात्पर्यं' इत्यङ्गीकारे अधिकार्याद्यनुपपत्त्या अनारम्भणीयत्वं स्यात् । भेदपक्षे तु अधिकार्यादिसम्भवात् आरम्भणीयत्वोपपत्तिरिति विषयान्तरे इत्यनेनोक्तं । तत् विवृणोति

अतः परो मात्रयेतिपूर्वश्रुतिनिदर्शितः ॥ १७ ॥
अन्यमीशमितिश्रुत्या भिन्नजीववशं गतः ।
भिन्नत्वेनात्मसादृश्यदो यदेतिश्रुतेः सदा ॥ १८ ॥

अत इति अद्वैतपक्षे अधिकार्याद्यसम्भवं परामृशति । अत्र आद्यार्धश्लोकेन परमेश्वरः शास्त्रस्य विषयो दर्शितः । स च ईश्वरपदादेव विदित इति कथं शास्त्रस्य विषयः स्यात् ? इत्यत उक्तं परो मात्रयेति । ईश्वरसत्तामात्रस्य कथञ्चित् अधिगतत्वेऽपि तस्य अपरिमितगुणाकरतया श्रुतिनिदर्शितस्य तथा अनवगमात् सामान्यतो विशेषतश्च तदवगमार्थं शास्त्रमिति । द्वितीयार्धेन अधिकारी दर्शितः । स च परमात्मात्मकश्चेत् सर्वज्ञतया नाधिकारी स्यादिति श्रुत्या भिन्नत्वेन समर्थितः । यद्यपि अद्वैतपक्षे अधिकार्याद्यसम्भवस्योक्तत्वात् भिन्न एवाधिकारी सिद्धः, तथापि प्राक् 'प्रत्यक्षादिसिद्धो भेदः' इत्युक्तं, तत्र प्रत्यक्षानुमाने दर्शिते, आगमप्रदर्शनायेदं श्रुत्युदाहरणं । भिन्नत्वेन इत्यनेन प्रयोजनं दर्शितं । तत्र

(टी.) भिन्नत्वेन इति स्वरूपसङ्कीर्तनं । सादृश्योक्त्या भेदस्य लब्धत्वात् । सदा इति सादृश्यविशेषणं। प्रयोजने विप्रतिपत्तेः ' यदा पश्यः' इति श्रुतिरुदाहृता । जीवदृशं गतः इत्यनेन अधिकारिविषययोः सम्बन्धो दर्शितः । दृशं शास्त्रसाध्यामिति शेषः । तेन शास्त्रेण अधिकार्यादेः । सादृश्यदः इत्यनेन विषयप्रयोजनयोः । तत्रापि जीवस्येति शेषः । तेन अधिकारिप्रयोजनयोरपीति । विषयाद्युपपन्नमिति वाक्य शेषः । तेन अत इत्यस्य सम्बन्धः । एवमद्वैतमते शास्त्रस्यानारम्भणीयत्वप्रसङ्गाद्द्वैतमतं सम्भवतीति युक्तमेव नारायणस्यागण्यगुणत्वमुपपादितं ।

(मं. टि.) ॥ विषयान्तरे इत्यनेनैव स्वमते विषयादेः समर्थितत्वादुत्तरग्रन्थवैयर्थ्यमित्याशङ्क्य तद्विवरणरूपत्वान्न वैयर्थ्यमित्याह ॥ भेदेत्यादिना ॥ अतः परो मात्रया इति मूलग्रन्थे पूर्वशब्द आदिपर्यायः ॥ तथाऽनवगमादिति ॥ लोकत इति शेषः । ननु सामान्याकारेण ज्ञातत्वादेव न विषयत्वं । विशेषाकारस्य च अत्यन्ताप्रसिद्धत्वादेव न विषयत्वमिति विषयोऽनुक्त एव स्यादिति चेन्न । जिज्ञासाविषयो हि द्विविधः । धर्मी प्रकारश्चेति । तत्र प्रकारप्रसिद्धेरहेतुत्वेऽपि धर्मिप्रसिद्धेरेव स्वजिज्ञासाहेतुत्वात् । अत्र च सकलकल्याणगुणत्वादीनां प्रकाराणामसिद्धत्वेऽपि नारायणो धर्मी प्रसिद्ध इति जिज्ञासोचितैव । अन्यथा तवापि प्रश्नो न स्यादित्यलं ॥ सामान्यत इति ॥ अगण्यगुणाश्रयत्वेनेत्यर्थः ॥ विशेषत इति ॥ अगण्यगुणा आनन्दादय इति प्रतिपादनेनेत्यर्थः ॥ द्वितीयार्धेनेति ॥ विषयविशेषकथनेन अधिकार्यपि सूचित इत्यर्थः ॥ प्रत्यक्षादिसिद्धो भेद इति ॥ प्रत्यक्षेण सत्यतया भेदः सिद्ध इत्यर्थः । प्रत्यक्षेण सत्यतया भेदसिद्धिश्च भेदग्राहिप्रत्यक्षे बाधाभावात् ।

### भेदग्राहिप्रत्यक्षे बाधाभावाक्षेपः

ननु किमत्र स्वबाधाभावो हेतुः? किं वा अन्यबाधाभाव ? बाधमात्राभावो वा ? नाद्यः प्रसिद्ध्यप्रसिद्धिभ्यां तदभावस्य दुर्ज्ञानत्वात् । न द्वितीयः रज्जुसर्पभ्रान्तिबाधरहितशुक्तिरजतज्ञाने व्यभिचारात् । न तृतीयः प्रामाणिकाप्रामाणिकयोः सामान्यस्याप्यसम्भवात । किं च किमेतत्कालीयबाधाभावो हेतुः? किं वा सार्वकालिकबाधाभावः? नाद्यः तात्कालिकबाधाभावस्य शुक्तिरजतादिज्ञानेऽपि सम्भवात । न द्वितीयः कालान्तरभाविबाधकाभावस्य वर्तमानमात्रग्राहिणा प्रत्यक्षेण निश्चेतुमशक्यत्वात् । अपि च यत्किञ्चित्पुरुषबाधाभावो भ्रमेऽपि सुलभः । सर्वपुरुषबाधाभावस्तु प्रकृतेऽपि दुर्ज्ञान इति ।

### भेदग्राहिप्रत्यक्षे बाधाभावोपपादनम्

अत्रोच्यते, स्वबाधराहित्यं हेतुः । तत्र यदुक्तं ' तत्प्रसिद्ध्यप्रसिद्धिभ्यां तदभावस्य दुर्ज्ञानत्व' इति' तत्रोत्तरं दत्तमेव अनादित्वनिर्वचनसमये, अत्यन्ताभावस्य प्रतियोगिसत्वानपेक्षत्वादिति ।

### अत्यन्ताभावस्य निष्प्रतियोगिकत्ववादिनामाशयनिरूपणम्

(मं. टि.) ननु कथमभावो निष्प्रतियोगिकः स्यात्? इति चेन्न। किमिदं निष्प्रतियोगिकत्वं? प्रतियोगिप्रतीतिनिरपेक्षत्वं वा? प्रामाणिकप्रतियोगिहीनत्वं वा? नाद्यः अनुक्तोपालम्भात्। न ह्यस्माभिरत्यन्ताभावस्य प्रतीतिः प्रतियोगिप्रतीतिनिरपेक्षेत्युक्तं। किं तर्हि? 'प्रसक्तप्रतिषेधः' इत्युक्तं।

### अत्यन्ताभावस्य प्रतियोगिसत्त्वानपेक्षत्वे अनुमानप्रमाणोदाहरणम्

न द्वितीयः 'अभावत्वं निष्प्रतियोगिकनिष्ठं सत्तासाक्षाद्व्याप्यधर्मत्वात् भावत्ववत्' इत्यनुमानेन निष्प्रतियोगिकत्वसाधनात्।

### अत्यन्ताभावस्य सत्प्रतियोगिकत्वानङ्गीकारे अनुपपत्तिशङ्का

अथ भूतलान्तरे घटे विद्यमान एव 'एतद्भूतले घटो नास्ति' इति घटाभावोऽनुभूयते। न चायं प्रागभावप्रध्वंसाभावयोरन्यतरः। प्रतियोग्यसमानकालीनत्वात तयोः। नाप्यन्योन्याभावः। 'भूतलं घटो न भवति' इति प्रतीतिप्रसङ्गात्। ततः परिशेषात् अत्यन्ताभाव इति गम्यते। ततश्च अत्यन्ताभावः कथं निष्प्रतियोगिकः स्यात्? इति चेन्न।

### अत्यन्ताभावस्य सत्प्रतियोगिकत्वनिरासः

'इह भूतले घटो नास्ति' इत्यादौ भूतलघटसंसर्गस्यैव निषिद्ध्यमानत्वात्। अवश्यं चैतत् त्वयाप्यङ्गीकरणीयम्। घटस्य भूतलान्तरे सत्त्वेन स्वरूपेण निषेधासम्भवात्। संसृष्टत्वाकारेण निषिद्ध्यते घट इति चेत् तर्हि प्राप्ताप्राप्तविवेकेन संसर्ग एव निषिद्ध्यत इत्यायातं। 'सविशेषणे विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसङ्क्रामते' इति न्यायात्। कथं तर्हि घटशब्दोपादानं? इति चेन्न। 'भूतले' इत्यधिकरणसप्तम्या भूतलस्याश्रयत्वेऽभिहिते आश्रयत्वप्रतिसम्बन्धिनि आधेयत्वे च अर्थादुक्ते 'किंनिष्ठा आधेयता?' इत्याकाङ्क्षायां 'घटनिष्ठा' इति ज्ञापयितुं घटशब्दोपादानात्। एवं च 'इह भूतले घटो नास्ति' इत्यत्रापि भूतलघटयोराधाराधेयभावो निषिद्ध्यत इति स्थितं। तत्र यदि नाम तयोराधाराधेयभावः प्रागभूत् तदा अयमनुभवस्तत्प्रध्वंसविषयकः। यदि भविष्यति तदा तत्प्रागभावविषयकः। यदि न जातः नास्ति न भविष्यति तदा अत्यन्ताभावविषयकः। एवं च 'शशविषाणं नास्ति' इत्यादेः 'शशे विषाणं नास्ति' इत्याद्यर्थोऽपि न कल्पनीयः। तत्राप्यप्रामाणिकस्य शशविषाणस्यैव प्रतियोगित्वोपपत्तेः। तस्मादत्यन्ताभावस्य निष्प्रतियोगिकत्वात् स्वबाधात्यन्ताभावो हेतुरिति न कश्चिद्दोषः।

### भेदप्रत्यक्षे त्रैकालिकबाधाभावस्य प्रत्यक्षवेद्यत्वसमर्थनम्

यच्चोक्तं 'किमेतत्कालीनबाधाभावः? इत्यादि' तत्र त्रैकालिकबाधाभावो हेतुरिति वदामः। न च तदनिश्चयः। प्रत्यक्षेणैव तन्निश्चयात्। तथा हि

भावि तद्बाधकज्ञानं बाध्यज्ञानार्थशून्यतां।
तत्काले नैव गृह्णाति कालभेदे स्वबाधकं॥

(मं. टि.) कालान्तरभावि बाधकज्ञानं बाध्यज्ञानविषयाभावं गृह्णाति ? न वा ? न चेत् कथं बाधकं स्यात् ? गृह्णाति चेत् बाध्यज्ञानेन यस्मिन् काले स्वविषयोऽस्तीति गृहीतस्तस्मिन्नेव काले तद्विषयं नास्तीति गृहीयात् ? किं वा कालान्तरे नास्तीति ? द्वितीये तत् बाधकमेव न स्यात् । कालभेदेन तयोर्विरोधपरिहारात् । न हि घटकाले तस्यास्तित्वज्ञानं तदभावकाले तन्नास्तिताग्राहकेण बाध्यते । नाद्यः अनेन ज्ञानेन एतत्काले स्वविषयस्य प्रमितत्वेन कालान्तरभाविनापि एतत्काले एतद्विषयाभावस्य गृहीतुमशक्यत्वात् । कालान्तरभाविना एतद्विषयाभावग्रहणे च एतद्विरोधेन तस्यैवाप्रामाण्यनिश्चयात् ।

### भेदप्रत्यक्षे शुक्तिरजतप्रत्यक्षात् वैलक्षण्योपपादनम्

नन्वेवं तर्हि शुक्तिरजतादिज्ञानेनापि स्वविषयस्य त्रैकालिकबाधाभावो गृह्येतेति चेन्न तस्याप्रमाणत्वात् । अस्य तु प्रमाणत्वात् । प्रपञ्चग्राहिप्रत्यक्षस्य प्रामाण्यमेव कुतः? इति चेत् किं कुत उत्पद्यते? इति प्रश्नार्थः । किं वा कुतो ज्ञायते ? इति । उभयत्रापि स्वत एवेति परिहारः । प्रामाण्यस्वतस्त्वस्यान्यत्र निर्णीतत्वात् । नन्वयं परिहारः शुक्तिरजतज्ञानेऽपि समान इति चेन्न । संवादभावाभावाभ्यां विशेषात् ।

### संवादस्य अप्रामाण्यशङ्कानिरासकत्वे अनवस्थादोषाशङ्का तत्परिहारश्च

ननु संवादेऽपि कथं विश्वासः? इति चेत् संवादान्तरादित्यवेहि । ननु तर्ह्यनवस्था स्यात् । न स्यात् । न हि सर्वत्र संवादापेक्षा येनानवस्था । किं तु ? यत्र मनोवृत्तिज्ञानेषु विषयव्यभिचारः तत्रानाश्वासकारणसद्भावात् संवादापेक्षा । साक्षिज्ञाने तु न संवादापेक्षा । साक्षिणः कदापि विषयव्यभिचाराभावात् । एवं च साक्षिविषयेषु सुखादिषु यावत्पर्यवसानं तावदेव संवादापेक्षेति नानवस्था । प्रपञ्चितं चैतत् तत्र तत्र **टीकाकारै**रिति ।

### भेदप्रत्यक्षे भाविबाधकनिश्चायकप्रमाणाभावः

अपि च कालान्तरे बाधकं भविष्यतीति किं निश्चीयते ? किं वा संभाव्यते ? नाद्यः निश्चायकप्रमाणाभावात् । अद्वैतश्रुतीनां च अन्यत्र अन्यथा व्याख्यातत्वात् ।

### भेदप्रत्यक्षे भाविबाधकसम्भावनानिरासः

न द्वितीयः सम्भावनाबीजाभावात् । ज्ञानत्वमेव सम्भावनाबीजमिति चेत् तर्हि यत् बाधकज्ञानं सम्भाव्यते तस्यापि बाधकं ज्ञानत्वात् सम्भाव्यतां । किं चैतादृशश्रद्धाजाड्यवता कालान्तरं भविष्यतीति कथं निरणायि ? येन तत्र बाधकं सम्भाव्येत ।

### भेदप्रत्यक्षप्रामाण्यनिरासार्थमुक्तानां दोषाणां तद्बाधकतयोक्तवचनेष्वतिदेशः

किं च त्वदुक्तबाधकवचनानि प्रमाणानि ? न वा ? द्वितीये फलितमस्मन्मनोरथद्रुमेण । आद्ये कथं प्रामाण्यं निरणायि ? अबाधादिति चेत् त्वदुक्तानि बाधकानि स्वमेवानुसन्धत्स्वेत्यलं दुर्बलहिंसया । तस्मात् प्रत्यक्षादिसिद्धो भेदः इति साधूक्तं ।

**भेदप्रत्यक्षस्य व्यावहारिकभेदपरत्वे किं प्रमाणमिति प्रश्नायोग इति खण्डनोक्ताक्षेपः**

(मं. टि.)॥ इदं श्रुत्युदाहरणमिति ॥ नन्वत्र भेदप्रतिपादिका श्रुतिः व्यावहारिकभेदपरेति चेत् किमत्र प्रमाणं ? ननु भेदश्रुतेर्व्यावहारिकभेदपरत्वे खलु प्रमाणं पृच्छ्यते । तथा च यत्र प्रमाणं पृच्छ्यते सोऽर्थः प्रतीयते ? न वा ? न चेत् कथं प्रमाणप्रश्नस्यावसरः ? अप्रतीतार्थे प्रमाणप्रश्नायोगात् । प्रतीयते चेत् सा किं भ्रान्तिः ? किं वा प्रमा ? नाद्यः । भ्रान्तिसिद्धे प्रमाणं पृच्छतः तवैव भ्रान्तत्वप्रसङ्गात् । न हि भ्रान्तिसिद्धेऽर्थे प्रमाणं कश्चिदनुन्मत्तः पृच्छति । द्वितीये न नितरां प्रमाणप्रश्नः । त्वयैव प्रमितत्वाङ्गीकारात् । [1]प्रमायाः प्रमितत्वेऽपि प्रमाकरणं पृच्छ्यत इति चेन्न । करणं विना प्रमानुदयेन प्रमाबलादेव तत्करणस्याप्यनुमानात् । प्रमाकरणसामान्यस्य सिद्धत्वेऽपि विशेषज्ञानार्थं प्रश्न इति चेन्न । 'निर्विशेषं न सामान्यं' इति न्यायेन विशेषस्यापि सामान्यबलादेव कल्पनात् । तावतैवार्थसत्त्वसिद्धौ विशेषजिज्ञासाया निष्फलत्वाच्चेति कश्चित् स्वव्याघातमप्यजानानः खण्डनवादी मन्यते ।

**खण्डनोक्ताक्षेपस्य स्वव्याहत्या निरासः**

तं प्रति ब्रूमः ।

सा प्रमाप्रमयोरन्या या मतिस्तव वाक्यतः ।
निश्चेष्यते तद्विशेषः कथोत्तरमिति स्थितिः ॥

'भेदश्रुतिर्व्यावहारिकभेदपरा' इति तव वाक्यात्काचित्प्रतीतिरस्माकमपि जायत एव । तत्र यदुक्तं, सा किं प्रमा ? अप्रमा वा ? इति । तत्र प्रश्न एव नोपपद्यते । इदानीमपि तद्विशेषस्यास्माभिरनिश्चयात् । कथायां हि प्रवृत्तायां यदि त्वया भेदश्रुतीनां व्यावहारिकभेदपरत्वे प्रमाणमभिधीयेत तदा मूलप्रमाणसत्वात् त्वद्वाक्यं प्रमाणमिति निश्चित्य करणदोषाभावात् त्वद्वाक्यादस्माकं यज्ज्ञानमुत्पन्नं तत्प्रमाणमिति निश्चीयेत । यदि तु त्वया प्रमाणं नाभिधीयते परं त्वस्माभिरेव अव्यावहारिकपरत्वे प्रमाणमभिधीयेत तदा 'भेदश्रुतिर्व्यावहारिकभेदपरा' इति त्वद्वाक्यं मूलप्रमाणाभावात् अस्मदुक्तप्रमाणविरोधाच्चाप्रमाणमिति निश्चीयेत । करणदोषसद्भावात् त्वद्वाक्यजा प्रतीतिरप्रमेति निश्चीयेत । यदि च प्रागेवान्यतरनिश्चयः स्यात्तदा तवापि कथायां प्रवृत्तिर्न स्यात् । कथाफलस्य अन्यतरनिश्चयस्य प्रागेव सिद्धत्वात् । ननूत्पन्नं ज्ञानं प्रमात्वेनाप्रमात्वेन वा सिद्ध्येत् । उभयौदासीन्यं तु कथं ? इति चेत् सिद्ध्येदिति कोऽर्थः ? किमुत्पद्यत इति ? किं वा ज्ञायत ? इति । आद्ये इष्टापत्तिः । वस्तुगत्या तस्य प्रमात्वाप्रमात्वयोरन्यतरापन्नत्वात् । न द्वितीयः संशयकारणसद्भावे अन्यतरकोटिनिश्चेतुमशक्यत्वात् । न च संशयकारणमेव नास्तीति युक्तं । वादिविप्रतिपत्तिरूपकारणसद्भावात् । वयं हि त्वद्वाक्यं मूलप्रमाणरहितमिति मन्यामहे । भवांस्तु मूलप्रमाणसहितमिति मन्यते । ततः कथं विप्रतिपत्त्यभावः ? विप्रतिपत्त्यभावे च कथारम्भ एव न स्यादिति यत्किञ्चिदेतत् । स्वव्याघातस्तु स्पष्ट एव । तस्मायुक्तः प्रमाणप्रश्नः ।

अथ प्रमाणप्रश्नमङ्गीकृत्य प्रमाणं ब्रूषे अद्वैतवाक्यविरोधादिकं, तत्रोत्तरमन्यत्रोक्तमिति ।

---

[1] अत्र प्रमाया इत्यधिकमिति भाति.

(मं. टि.) किं चेदं व्यावहारिकत्वं नाम ? किं बाध्यत्वं ? किं वा प्रातिभासिकान्यत्वे सति बाध्यत्वं ? यद्वा पारमार्थिकान्यत्वे सति प्रातिभासिकान्यत्वं ? अथ वा ब्रह्मापरोक्षज्ञानातिरिक्तज्ञानाबाध्यत्वं ? आहोस्वित् ब्रह्मापरोक्षज्ञानातिरिक्तज्ञानाबाध्यत्वे सति बाध्यत्वं ? उत व्यवहारनिर्वाहकत्वं ? नाद्यः प्रातिभासिकेऽतिव्याप्तेः ! अत एव न द्वितीयः प्रातिभासिकस्यापि यत्किञ्चित्प्रातिभासिकान्यत्वेनातिव्याप्तेः । अत एव न तृतीयः प्रातिभासिकस्य पारमार्थिकान्यस्य यत्किञ्चित्प्रातिभासिकान्यत्वात् । प्रातिभासिकत्वस्यापि व्यावहारिकज्ञानाधीनत्वेन अन्योन्याश्रयात् । अत्यन्तं विमर्शे व्यावहारिकत्वमनिरूप्य प्रातिभासिकत्वस्य निरूपयितुमशक्यत्वात् । न चतुर्थः ब्रह्मण्यतिव्याप्तेः । तस्यापि ब्रह्मापरोक्षज्ञानातिरिक्तज्ञानाबाध्यत्वात । न पञ्चमः प्रारब्धकर्मण्यव्याप्तेः । तस्य ब्रह्मापरोक्षज्ञानानन्तरमप्यनुवर्तमानस्य ब्रह्मापरोक्षज्ञानबाध्यत्वायोगात् । किञ्च अस्मिन्नेव लक्षणेऽव्याप्तिः । स्वस्य स्वस्मिन्नवृत्तेः । न हि त्वया अस्माभिरिव लक्षणे लक्षणमङ्गीकृतं । येन सत्यत्वादिलक्षणेष्विव विवक्षितव्यक्तिविशेषे पर्यवसानेन आत्माश्रयः परिह्रियेत । षष्ठस्तु अस्माभिः प्रार्थनीय एवेति व्यावहारिकत्वं दुर्निरूपमिति ।

॥ स्वरूपसङ्कीर्तनमिति ॥ स्वप्रयोजनशरीरानन्तर्भावादिति भावः । ननु ' यदेति श्रुतौ परमं साम्यमुपैतीति साम्यमेवोच्यते न भेदः' इत्यत आह ॥ सादृश्येति ॥ सदेति सादृश्यविशेषणमिति ॥ अभिव्यक्तानन्दत्वादिना सादृश्यस्य सदातनत्वं प्रध्वंसाप्रतियोगित्वं । न तु त्रिकालवृत्तित्वं । तथात्वे तस्य कृतिसाध्यत्वायोगात् ॥ अधिकारिविषययोः सम्बन्धो दर्शित इति ॥ ज्ञातृज्ञेयभावः सम्बन्धः ॥ तेनेति ॥ शास्त्रस्याधिकारिणा ज्ञातृज्ञापकभावः सम्बन्धः, विषयेण ज्ञाप्यज्ञापकभावः सम्बन्धो दर्शित इत्यर्थः ॥ सादृश्यद इति ॥ विषयप्रयोजनयोः दातृदेयभावः सम्बन्धो दर्शित इत्यर्थः ॥ तेनाधिकारीति ॥ भोक्तृभोज्यभावलक्षणः सम्बन्धो दर्शित इत्यर्थः ॥ तेनात इति ॥ तेन अध्याहृतेन विषयाद्युपपन्नमित्यनेनेत्यर्थः ।

### नारायणागण्यगुणवत्त्वादिनिबन्धनस्य प्रयोजनम्

(टी.) किमस्य प्रयोजनम् ? इत्यत आह

मायावादतमोव्याप्तमिति तत्वदृशा जगत् ।
भातं सर्वज्ञसूर्येण प्रीतये श्रीपतेस्सदा ॥ १९ ॥

(मं. टि.) ॥ किमस्येति ॥ नारायणस्यागण्यगुणानुसन्धानमात्रेण नारायणप्रीतेः स्वप्रयोजनस्य सिद्धत्वान्निबन्धनकरणं निष्प्रयोजनमित्याक्षेपार्थः किंशब्दः । निबन्धनकरणेन साधूनां दुर्वाग्व्यूहितदुर्युक्तिनिबन्धनाज्ञानस्य निराकरणं स्यात । तेन चात्यन्तं श्रीपतिः प्रीणातीति परिहारार्थः ।

### ग्रन्थसमाप्तौ मङ्गलाचरणम्

(टी.) एवं समापितप्रकरणोपि भगवानाचार्योऽन्तेऽपि परमेश्वरप्रणामस्तवने विधत्ते

नमोऽमन्दनिजानन्दसान्द्रसुन्दरमूर्तये ।
इन्दिरापतये नित्यानन्दभोजनदायिने ॥ २० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितेषु दशप्रकरणेषु तृतीयं उपाधिखण्डनं सम्पूर्णम्

(टी.) आत्मसादृश्यद इत्युक्तं । न चायं पुरुषार्थः, इत्येतत्परिहाराय आद्यं विशेषणं। नानन्दः स्वरूपेण पुरुषार्थः इत्यतो नित्यानन्देति विशेषणं । भोजनं भोगः अनुभव इति यावत् ।

(मं टि.) ॥ समापितप्रकरणोऽपीति ॥ प्रकरणस्य समापितत्वात् प्रणामादेर्निर्विघ्नपरिसमाप्तिलक्षणप्रयोजनाभावेऽपि भक्तिवशात् प्रणमति अभिष्टौति चेति अपिशब्दार्थः । आनन्दस्वरूपस्य परमेश्वरस्य सादृश्येन अधिकारिणः किंप्रयोजनं ? आनन्दानुभवाभावदित्यत आह ॥ नित्यानन्देति ॥

(टी.) सदा सुरशिरोरत्नप्रभामोषिनखत्विषि ।
कमलाकमितुः पादयुगले रतिरस्तु मे ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततत्वप्रकाशिकाविवरणं श्रीमज्जयतीर्थभिक्षुविरचितं संपूर्णं ॥

(मं. टि.) एवं परिसमापिततत्वप्रकाशिकाव्याख्यो भगवांष्टीकाकारः एतादृशटीकाकरणस्य अन्ततो नारायण प्रीतिः प्रयोजनमिति ज्ञापयन् तत्प्रीतिं प्रार्थयते ॥ सदा सुरेति ॥

हयग्रीवपदाम्भोजनखदीधितिचन्द्रिकां ।
मनश्चकोर संसारसन्तप्त सततं पिब ॥

इति श्रीमत्समस्तदेवतामस्तकमणिकिरणारुणितपादारविन्दस्य अरविन्दनेत्रस्य श्रीमुख्यप्राणहृदयारविन्दराजहंसस्य सज्जनकुमुदचन्द्रस्य श्रीलक्ष्मीनिवासस्य श्रीहयग्रीवस्य किङ्करेण श्रीमत्परमहंसपारिव्राजकाचार्याणां ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण श्रीलक्ष्मीनारायणतीर्थाख्यात् यतिकुलतिलकात् अधीतश्रीमध्वशास्त्रामृतेन श्रीव्यासयतिना विरचिता मन्दारमञ्जरी तत्वप्रकाशिकाव्याख्याटिप्पणी सम्पूर्णा

श्रीः

# अथ श्रीमदानन्दतीर्थ भगवत्पादाचार्यविरचितेषु दशप्रकरणेषु

# तुरीयं मायावाद खण्डनम्

श्रीजयतीर्थभिक्षुकृतेन विवरणेन

श्रीब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थरचितया
मन्दारमञ्जरीटिप्पण्या समलङ्कृतेन

विभूषितम्

## श्रीजयतीर्थाः



माध्वग्रन्थान् स्वबन्धूनिव सरसहृदाऽऽलिङ्ग्य विज्ञातभावः
  संयोज्यालङ्कृताभिः स्वसहजमतिसम्भूतवाग्भिर्वधूभिः ।
कृत्वाऽन्योक्तीश्च दासीर्बुधहृदयगृहं प्रौढवृत्तीश्च वृत्ती
  र्दत्वाऽन्योन्याभियोगं जयमुनिरसकृद्वीक्ष्य रेमे कृतार्थः ॥

श्रीः

# अथ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितेषु दशप्रकरणेषु

# तुरीयं मायावाद खण्डनम्

## श्रीजयतीर्थभिक्षुविरचितया टीकया विभूषितम्

टीका

मङ्गलाचरणम्

नरसिंहमसह्योरुप्रत्यूहतिमिरापहं ।
प्रणिपत्य व्याकरिष्ये मायावादस्य खण्डनम् ॥

अथ श्रीब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचिता मायावादखण्डनटीकायाः
मन्दारमञ्जरी टिप्पणी प्रारभ्यते

कमलारमणं नत्वा पूर्णबोधेष्टदैवतं ।
व्याकुर्वे गहनां मायावादखण्डनपञ्चिकां ॥
स्पष्टार्थो य इह ग्रन्थः स न व्याक्रियते मया ।
ग्रन्थगौरवभीरुत्वान्न चोद्ग्रन्थं बहूच्यते ॥

मङ्गलाचरणपूर्वकं चिकीर्षितं निर्दिशति ॥ नरसिंहमिति ॥ नरसिंहस्यैव प्रणम्यत्वे हेतुः असह्योरुप्रत्यूहतिमिरापहं इति । प्रत्यूहानामसह्यत्वं नाम प्रारिप्सितपरिसमाप्तिरूपेष्टविरोधित्वात् द्वेष्यत्वं । उरुत्वं च तेषां बहुसङ्ख्याकत्वं महाश्रेयोविरोधित्वं वा अल्पमङ्गलानिवर्त्यत्वं वा । ततश्चायमर्थः, विघ्नास्तावत् असह्यत्वात् प्रयत्नेन निवर्तनीयाः । तन्निवृत्तिश्च तेषामुरुत्वात् नरसिंहप्रणामादन्येन न भवतीति स एव प्रणम्य इति ।

शास्त्रस्य सिद्धान्ताभिमतविषयादिनिरूपणम्

(टी.) इह हि विविधसांसारिकदुःखदर्शनेन विरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणस्तन्निवृत्त्यै [1]परमानन्दावाप्त्यै च सकलजीवजडात्मकात् प्रपञ्चात् परमार्थत एव अत्यन्तभिन्नं निखिलगुणोदारं

[1] मः. टि. परमानन्दावाप्तये.

निरस्तसमस्तदोषं परब्रह्म प्रतिपादयितुं सकलश्रुतिस्मृतीनां तदुपकरणभूतब्रह्ममीमांसायाश्च प्रवृत्तिरिति तत्त्वं ।

### मायावाद्यभिमतविषयादिनिरूपणम्

अपरे तु 'स्वतः परब्रह्मभूतस्यैव जीवस्य अज्ञाननिमित्तं दुःखादि । तत् [1]अद्वैतज्ञाननिवर्तनीयमित्यतोऽनर्थहेतोरस्य प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वशास्त्रारम्भः' इति वर्णयन्ति ।

(मं. टि.) ननु 'विषयाद्यभावात् इदं प्रकरणमनारम्भणीयं, ततश्च न व्याख्येयं' इत्याशङ्क्य श्रुतितन्मीमांसयोः पराभिप्रेतविषयादिनिराकरणपूर्वकं स्वाभिप्रेतं विषयादिकं समर्थयितुमिदं प्रकरणं प्रवृत्तं । तेनास्य प्रकरणस्य, श्रुत्यादिरूपस्य शास्त्रस्य यो विषयादिः तत् तत्वं विषयः । तदवधारणं पुंसः शास्त्रे श्रवणादिरूपप्रवृत्त्युपयोगित्वात् प्रयोजनं । तज्जिज्ञासुरधिकारी । तस्मात् 'इदं प्रकरणमारम्भणीयं ततश्च व्याख्येयं' इति भावेन शास्त्रस्य स्वाभिप्रेतं विषयादिकमाह ॥ इह हीत्यादिना ॥ अत्र शेषषष्ठ्यन्तेन ब्रह्ममीमांसातृतीयाध्यायोक्तार्थसङ्ग्राहकेण अधिकारी, चतुर्थ्यन्तेन चतुर्थाध्यायार्थसङ्ग्राहकेण प्रयोजनं, द्वितीयान्तेन प्रथमद्वितीयाध्यायार्थसङ्ग्राहकेण विषयो दर्शित इति द्रष्टव्यं । इह संसारे विरक्तस्य इति विषयसप्तमी । यद्वा इह अधिकार्यनधिकारिरूपसंसारिमध्ये अधिकारिणः इति निर्धारणे सप्तमी । 'परीक्ष्य लोकान् कर्मचितान्' 'शान्तो दान्त उपरतः' इत्यादिश्रुत्या वैराग्यस्य शमदमादेश्च अधिकारिविशेषणत्वोक्तेः विरक्तस्य शमदमादिमतः इति पदद्वयेन तदुभयोपादानं । मुमुक्षोः इति मन्दाधिकार्यभिप्रायं । उत्तमाधिकारिणां मुमुक्षाराहित्यस्य अन्यत्रोक्तत्वात् । वैराग्ये हेतुः विविधसांसारिकदुःखदर्शनेन इति । अन्यत्र दुःखदर्शनेन संसारे विरक्तत्वानुपपत्तेः सांसारिकत्वेन दुःखं विशेषितं । यद्वा दुर्जीवानां नित्यनिरये स्वरूपभूतदुःखानुभवेऽपि वैराग्यादर्शनात् सांसारिकग्रहणं । सुखमिश्रे संसारे किञ्चिद्दुःखदर्शनमात्रेण वैराग्यायोगात् विविधत्वेन दुःखं विशेषितं ॥ तन्निवृत्त्या इति । कतिपयदुःखनिवृत्तेः स्वतः सिद्धत्वेन ब्रह्मज्ञानासाध्यत्वेऽपि दुःखहेत्वविद्यादिनिवृत्त्यधीनाया दुःखप्रवाहनिवृत्तेर्ब्रह्मज्ञानसाध्यत्वोपपत्तिरिति प्रकृतविविधसांसारिकदुःखपरामर्शिना तच्छब्देन दर्शितं । ननु सांसारिकदुःखवत् सांसारिकसुखस्यापि निवृत्त्यङ्गीकारात् वैशेषिकमोक्षवत् अपुरुषार्थत्वं स्यादित्यत आह ॥ परमानन्दावाप्तये चेति ॥ आनन्दस्य परमत्वं च दुःखासम्भिन्नत्वं नित्यत्वं वस्वयोग्यतामपेक्ष्य पूर्णत्वं वा । अवाप्तिश्च स्वरूपानन्दस्य आवरणनिवृत्तिलक्षणप्रादुर्भावः, तदधीनः 'अहं सुखी' इत्यनुभवो वा ।

॥ जीवजडात्मकात् प्रपञ्चात् परमार्थत एव अत्यन्तभिन्नं इत्यनेन यथा परमते स्वप्रकाशत्वेन स्वतस्सिद्धात्ममात्रत्वेन ब्रह्मणो न विषयत्वं, न तथा अस्माकं मते । ब्रह्मणो मानान्तरसिद्धप्रपञ्चात् भिन्नतया शास्त्रविषयत्वोपपत्तिरिति दर्शितं । 'जीवजडात्मकात्' इत्यत्र जीवत्वं यदा 'जीवेशयोर्भिदा चैव' इत्यादाविव अस्वतन्त्रचेतनत्वं विवक्ष्यते, तदा चेतनप्रकृतिरपि जीवशब्देनोच्यते । यदा तु 'ब्रह्माणि जीवास्सर्वेऽपि' इत्यादाविव

[1] श्री. टि. अद्वैतज्ञाननिबर्हणीयमित्यतोऽनर्थहेतोरस्य.

(मं. टि.) दुःखस्पृष्टचेतनत्वं जीवत्वं तदा जीवशब्दश्चेतनप्रकृतेरपि उपलक्षक इति बोद्धव्यं। काल्पनिकभेदं व्यावर्तयता **परमार्थतः** इत्यनेन परमतेऽपि ब्रह्मणः परमार्थतः स्वप्रकाशमानप्रत्यगात्माभिन्नत्वेऽपि काल्पनिकभेदस्य सत्त्वात् विषयत्वोपपत्तिरिति नाशङ्कनीयं। काल्पनिकभेदप्रयुक्तविषयत्वतिरस्कारेण पारमार्थिकाभेदप्रयुक्ताविषयत्वस्यैव न्याय्यत्वात्। न हि परमार्थिकप्रयुक्तमपारमार्थिकेन प्रतिबद्ध्यते। तथात्वे दहनोऽपि गुञ्जापुञ्जतया आरोपितो न दहेदिति दर्शितं। एतच्च **परमार्थतः** इति विशेषणं **निखिलगुणोदारं** इत्यादावपि सम्बद्ध्यते। भेदाभेदं व्यावर्तयता अत्यन्तशब्देन **भेदाभेदवादिभास्करमतेऽपि** ब्रह्मणः स्वतस्सिद्धजीवात्माभिन्नत्वात् न विषयत्वोपपत्तिः। न च भेदस्यापि भावात् विषयतेति वाच्यं। अभेदेन अविषयत्वस्यापि प्राप्तौ विरोधापत्तेः'इति दर्शितं। ननु 'भेदकधर्माभावाद्भेदायोगः' इत्याशङ्क्य समन्वयाद्ध्यायप्रतिपाद्यं, मुमुक्षुणा स्वस्यानन्दादिगुणावाप्तये ज्ञातव्यं, पूर्णगुणत्वात्स्वप्रपञ्चात् भेदकं धर्ममाह ॥ **निखिलेति** ॥ ननु सति एकस्मिन्नपि दोषे तद्विरुद्धस्य गुणस्य असम्भवेन सकलगुणोदारत्वासिद्धिः इत्याशङ्क्य तदुपपत्तये अविरोधाद्ध्यायप्रतिपाद्यं, मुमुक्षुणा स्वस्य दुःखादिदोषनिवृत्त्यर्थं ज्ञातव्यं निर्दोषत्वमाह ॥ **निरस्तसमस्तदोषमिति** ॥ कर्मकाण्डस्यापि '**ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके**' इत्यधिकरणोक्तन्यायेन ब्रह्मण्येव महातात्पर्यमित्याह ॥ **सकलेति** ॥ वेदपरिगृहीतपौरुषेयग्रन्थवाचिना स्मृतिशब्देन इतिहासपुराणयोरपि ग्रहणं। वेदेन करणेन ब्रह्मणि प्रतीयमाने वेदार्थनिर्णायकन्यायव्युत्पादिका मीमांसा अवान्तरव्यापाररूपत्वेन इतिकर्तव्यता भवतीत्याह ॥ **तदुपकरणेति** ॥

एवं स्वाभिप्रेतं विषयादिकमुक्त्वा पराभिप्रेतं विषयादिकमाह ॥ **अपरे त्वित्यादिना** ॥ **आत्मैकत्वविद्याप्रतिपत्तये** प्राप्तये इत्यनेन विषयो दर्शितः। 'यज्ज्ञानार्थं यत्र प्रवर्तते स तस्य विषयः' इति सुप्रसिद्धं। **अस्य** अज्ञानस्य **प्रहाणाय** इत्यनेन प्रयोजनमुक्तं। ननु अज्ञाननिवृत्तेः कथं प्रयोजनत्वं? सुखप्राप्त्यादिरूपत्वाभावादित्यत आह ॥ **अनर्थहेतोरिति** ॥ अज्ञानस्य दुःखाद्यनर्थोपादानत्वात् अज्ञाने निवृत्ते तदुपादानकदुःखादिकमपि निवर्तेत इति दुःखनिवृत्तिहेत्वज्ञाननिवृत्तिरपि प्रयोजनमिति भावः। नन्वज्ञाननिवृत्त्यर्थं नात्मैकत्वविद्या अपेक्षिता। ज्ञानान्तरणैव तन्निवृत्तिसम्भवात् इति। अत आह ॥ **तदद्वैतज्ञाननिवर्तनीयमिति** ॥ अद्वैतावरकाज्ञानमेव दुःखाद्युपादानं। तच्च अद्वैतज्ञाननिवर्तनीयमिति तदज्ञानोपादानकं दुःखादिकमपि तन्निवर्त्यमिति भावः। नन्वज्ञानस्य अनर्थोपादानत्वमेवासिद्धं। उपादानान्तरस्यापि सम्भवादिति। अत आह ॥ **अज्ञाननिमित्तं दुःखादीति** ॥ **परब्रह्मभूतस्य इति** ॥ निर्दुःखब्रह्माभिन्ने जीवे दुःखादिकं न परमार्थसदिति युक्तमिति भावः। अत्र विशिष्टचैतन्यरूपयोर्जीवब्रह्मणोः परैरैक्यानङ्गीकाराज्जीवब्रह्मशब्दौ चैतन्यमात्रोपलक्षकाविति बोद्धव्यं। ननु जीवब्रह्मणोरभेदे बद्धमुक्तादिव्यवस्था कथं? इति। अत आह ॥ **स्वत इति** ॥ स्वाभाविकाभेदेऽपि औपाधिकस्तयोर्भेदोऽस्ति तेन व्यवस्थोपपत्तिरिति भावः।

### ग्रन्थस्य सङ्गतिप्रदर्शनम्

**(टी.)** तन्मतमपाकृत्य स्वमतं समर्थयितुमिदं प्रकरणमारभमाणो भगवानाचार्यः परममङ्गलं नरसिंहस्तवनमादावाचरति

मूले मङ्गलाचरणम्

नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः ।
जयत्यमितसज्ज्ञानसुखशक्तिपयोनिधिः ॥ १ ॥

(टी.) अखिलं चैतन्यमात्रातिरिक्तं अज्ञानकल्पितमिति यन्मतं तदेव ध्वान्तमिव सम्यग्ज्ञान प्रतिरूपत्वात् । तन्निरसने दिवाकर इव । जयति उत्कृष्टो वर्तते । तथा चोक्तं,

जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः ।
उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मकः ॥ इति ।

सत्त्वं ज्ञानसुखशक्तीनां विशेषणं । ज्ञानस्य यथार्थत्वं सत्वं, सुखस्य दुःखासम्भिन्नत्वं, शक्तेरप्रतिबद्धता । ताभिः पयोनिधिरिव । पयोनिधिः परिमितो भवतीत्यतस्तममितत्वेन विशिनष्टि । द्विविधः खलु पुरुषार्थोऽनिष्टनिवृत्तिरिष्टप्राप्तिश्च । तत्र अखिलेति मायावादादिदुर्मतप्रसञ्जितमिथ्याज्ञानाद्यनिष्टनिवर्तकत्वेन नरसिंहस्तुतिर्विहिता । अमितेति सम्यग्ज्ञानादिसमस्तेष्टसम्पादनसमर्थत्वेनेति ।

(मं. टि.) ॥ प्रतिरूपत्वादिति ॥ प्रतिकूलत्वादित्यर्थः । उक्तार्थे अभियुक्तसंमतिमाह ॥ तथा चोक्तमिति ॥ जयेरिति ॥ जयेर्धातोर्जयाभिभवयोरर्थयोर्वृत्तिः । तत्र आद्ये उत्कर्षप्राप्तिरूपेऽर्थे असौ जयतिधातुरकर्मकः । जयति उत्कृष्टो वर्तते इति कर्मनैरपेक्ष्येण प्रतीतेः । द्वितीयेऽर्थे तिरस्काररूपे सकर्मकः । चैत्रः शत्रून् जयति अभिभवति तिरस्करोतीति कर्मसापेक्षत्वेनैव प्रतीतेरिति सम्मतिश्लोकार्थः ॥ ज्ञानस्य यथार्थत्वं सत्वमिति ॥ इह सत्त्वं नाम नाबाध्यत्वादिकमभिप्रेतं । तस्यासदादिज्ञानादावपि भावात् । किं तु ? निर्दुष्टत्वमिति भावः ॥ समर्थत्वेनेति ॥ स्तुतिर्विहिता इत्यनेनानुषक्तेनास्यान्वयः । तथा च ग्रन्थादौ अनिष्टनिवर्तकत्वेन इष्टप्रापकत्वेन च अनुसंहितो नरसिंह एव तदुभयमपि करोतीत्यर्थः ।

प्रपञ्चस्याज्ञानकल्पितत्वं विना जीवब्रह्मैक्यं शास्त्रोक्तं नोपपद्यत इत्याक्षेपः

(टी.) अखिलाज्ञानमतं ध्वान्तसममित्येतदसहमान आह, जीवब्रह्मणोरेकत्वं हि श्रुतितन्मीमांसाभिस्तात्पर्यतः प्रतिपाद्यते । न चैतच्चैतन्यातिरिक्तस्य अखिलस्य अज्ञानकल्पिततया विनोपपद्यते । तत् कथमेवमुच्यते ? इति

जीवब्रह्मणोरेकत्वस्य शास्त्रोक्तत्वे शास्त्रस्यानारम्भणीयत्वापादनम्

मैवं । स्यादेतदेवं, यदि जीवब्रह्मणोरैक्यप्रतिपादकत्वं वेदतन्मीमांसयोरुपपन्नं स्यात् । न चैतदस्ति । तत्परतया व्याख्याने वेदादेरनारम्भणीयत्वप्रसङ्गात् । तत्कथं ? इति । तत्राह

विमतं अनारम्भणीयं अन्यथाप्रतिपादकत्वात् यदित्थं तत्तथा यथा सम्प्रतिपन्नं

(टी.) विमतं आरम्भणीयत्वानारम्भणीयत्वाभ्यां विमतिविषयीभूत श्रुतितन्मीमांसाशास्त्रं। 'शास्त्रं अनारम्भणीयं ' इत्येवोक्ते बौद्धादिशास्त्राणां अनारम्भणीयत्वस्य परेणाभ्युपगतत्वात् इष्टापादनमेतत् स्यात् । तर्हि वेदादि इत्येवोच्यतां । मैवं विमतिग्रहणेन निराश्रयत्वादिदोषपरिहारस्यापि सूचितत्वात् ।

सम्प्रतिपन्नपदप्रयोगप्रयोजनम्

एवं आपाद्यवैकल्यादिदोषपरिहारसूचनाय 'यथा सम्प्रतिपन्नं' इत्युक्तं। अन्यथा 'यथा बौद्धादिशास्त्रं ' इति ब्रूयात् ।

अनारम्भणीयत्वपदार्थविवरणम्

नन्वनारम्भणीयत्वं नाम अप्रणेतव्यत्वं वा? अश्रोतव्यत्वादिकं वा? आद्ये त्विष्टापादनं। वेदस्याप्रणेतव्यत्वात् । न द्वितीयः बौद्धादिशास्त्रश्रवणस्यापि दर्शनात्। मैवं प्रेक्षावदुपादेयत्वाभावस्य विवक्षितत्वात् ।

मूलस्य तर्कपरतासूचनाय स्यात् इतिपदाध्याहारः

स्यात् इति प्रतिज्ञावाक्यशेषः। तथा च ' यदि वेदादिकं जीवब्रह्मणोरैक्यप्रतिपादकं स्यात् तदा अनारम्भणीयं प्रसज्येत ' इत्युक्तं भवति ।

अन्यथाप्रतिपादकत्वात् इत्यस्य वैयर्थ्यशङ्कानिरासः

आपादकमेव अन्यथाप्रतिपादकत्वात् इत्यनेन हेतुवाक्येन विव्रियत इत्यदोषः। तच्चोत्तरत्र प्रदर्शयिष्यामः ।

(म. टि.) आचार्यकृतस्य अनारम्भणीयत्वसमर्थनस्य प्रथमश्लोके प्रतिज्ञातं यदखिलाज्ञानमतस्य ध्वान्तसमत्वं तत्समर्थनार्थत्वात् सङ्गतिरिति दर्शयितुं शङ्कामुत्थापयति ॥ अखिलेति ॥ न चैतच्चैतन्यातिरिक्तस्याखिलस्याज्ञानकल्पिततया विनोपपद्यत इति ॥ सर्वस्य सत्यत्वे सर्वज्ञत्वासर्वज्ञत्वादिविरुद्धधर्माणामपि सत्यत्वेन ऐक्यानुपपत्तेरिति भावः। यद्वा सर्वस्य सत्यत्वे जीवब्रह्मैक्यशब्दोपलक्षितसजातीयविजातीयस्वगतनानात्वराहित्यस्य अनुपपत्तेरिति भावः । एवं शङ्कामुत्थाप्य तदुत्तरत्वेन विमतमित्यादिमूलग्रन्थमवतारयितुमाह ॥ मैवमित्यादिना ॥ सूचितत्वादिति ॥ ' यदि आश्रयोऽसिद्धः स्यात् तदा किमाश्रया विमतिः स्यात्? यदि वा विशेषणमनारम्भणीयत्वमप्रसिद्धं स्यात् तदा कोटेरप्रसिद्धत्वान्न विमतिः स्यात्। अस्ति चेयं। ततो न निराश्रयत्वादि ' इति विमतग्रहणेन सूचितत्वादित्यर्थः ॥ सूचनायेति ॥ ' यदि दृष्टान्त आपाद्येन आपादकेन वा विकलः स्यात् तदा सम्प्रतिपत्तिर्न स्यात्। अस्ति चेयं। ततो नापाद्यवैकल्यादि ' इति सूचनायेत्यर्थः ॥ बौद्धादिशास्त्रमिति ब्रूयादिति ॥ सम्प्रतिपन्नशब्देनोक्तमेव बौद्धादिशास्त्रं बौद्धादिशास्त्रशब्देनैव ब्रूयादित्यर्थः ॥ वेद-

(अ.टि.) **स्वाप्रणेतन्यत्वादिति** ।। अपौरुषेयत्वादिति भावः ।। **बौद्धादिशास्त्रश्रवणस्यापीति** ।। अश्रोतव्यत्वं नाम-श्रवणायोग्यत्वं । तच्च अश्रवणगम्यत्वं । तच्च न बौद्धादिशास्त्रेऽस्ति । तेन आपाद्यविकलो दृष्टान्त इत्यर्थः। **मैवं प्रेक्षावदिति** ।। बौद्धादीनां तत्त्वविषये प्रेक्षाराहित्यस्योभयवादिसिद्धत्वेन तच्छास्त्रे प्रेक्षावद्भिस्तदुक्तफलसाधनत्वबुद्ध्या श्रूयमाणत्वादिलक्षणं प्रेक्षावदुपादेयत्वं नास्तीति अनुपादेयत्वलक्षणमनारम्भणीयत्वमस्त्येवेत्यर्थः । ननु श्रुतितन्मीमांसापक्षीकारेण अनारम्भणीयत्वसाधने बाधापसिद्धान्तौ स्यातामिति । अत आह ।। **स्यादिति प्रतिज्ञावाक्यशेष इति** ।। नन्वेवमप्यनारम्भणीयत्वस्य आपाद्यत्वेन बाधाद्यभावेऽपि आपादकस्य आचार्येणानुक्तत्वात् न्यूनत्वं स्यात् इत्याशङ्क्य **न हि ब्रह्मात्मैक्यस्य याथार्थ्यं तत्पक्षे** इत्युत्तरग्रन्थे जीवब्रह्मैक्यायाथार्थ्यं वदता आचार्येण 'यदि जीवब्रह्मणोरैक्यस्य प्रतिपादकं स्यात्' इत्यापादकस्य सूचितत्वान्न न्यूनत्वमिति भावेन सूचितापादकाध्याहारपूर्वकं तर्कस्वरूपमाह ।। **तथा चेति** ।।

ननु आपादकमध्याहृतं चेत् **'अन्यथाप्रतिपादकत्वात्'** इत्यस्य वैयर्थ्यं नाम दोषः स्यात् इत्याशङ्क्य घटकोक्त्यर्थत्वात् न तस्य वैयर्थ्यमिति भावेनाह ।। **आपादकमेवेति** ।। अयमर्थः, ऐक्यप्रतिपादकत्वमात्रेण न अनारम्भणीयत्वमापादयितुं शक्यं भेदप्रतिपादकत्व इव ऐक्यप्रतिपादकत्वेऽपि आरम्भणीयत्वोपपत्त्या अप्रयोजकत्वात् इत्याशङ्कायां तत्परिहाराय आचार्येण "स्यादेतदेवं, यद्यैक्यप्रतिपादकत्वेन साक्षात् अनारम्भणीयत्वमापाद्येत । न चैवं । किं तु ? 'शास्त्रं यद्यैक्यप्रतिपादकं स्यात् तर्हि वक्ष्यमाणन्यायेन ऐक्यस्य असत्यत्वात् अन्यथाप्रतिपादकं स्यात्' 'यदि च अन्यथाप्रतिपादकं स्यात् तदा अनारम्भणीयं स्यात्' इति अन्यथाप्रतिपादकत्वप्रसञ्जनद्वारा । एवं च नाप्रयोजकत्वं भेदप्रतिपादकत्व इवाभेदप्रतिपादकत्वे यथार्थप्रतिपादकत्वाभावात् प्रत्युत अन्यथाप्रतिपादकत्वात् । तस्य च अनारम्भणीयत्वप्रयोजकत्वेन बौद्धादिशास्त्रे क्लृप्तत्वात् क्लृप्तप्रयोजकसद्भावेऽपि प्रयोज्यानङ्गीकारे व्याघातादिति भावेन अन्यथाप्रतिपादकत्वात्" इत्युक्तं । एवं च अनेन हेतुवाक्येन, ऐक्यप्रतिपादकत्वलक्षणमापादकं आपाद्यापादनसमर्थत्वरूपापादकत्वाकारेण विव्रियत इति न हेतुवाक्यस्य वैयर्थ्यं नाम दोष इति ।। **उत्तरत्रेति** ।। **ननु यद्यद्वैतपरं** इत्यादिना अस्यैव हेतुवाक्यस्य वैयर्थ्ये शङ्किते तत्परिहाराय प्रवृत्ते **मैवमभिप्रायसद्भावात्** इत्यादावित्यर्थः ।

### मायावादस्य अनारम्भणीयत्वसाधनम्

**(टी.) अथ वा वेदतन्मीमांसादिकं ऐक्यपरतया व्याकुर्वन्मायावादिप्रणीतं शास्त्रमेव पक्षीकृत्य तस्य अनारम्भणीयत्वं वेदादेस्तत्परत्वनिरासाय साध्यते ।**

### मायावादस्यान्यथाप्रतिपादकत्वसमर्थनम्

**कथमन्यथाप्रतिपादकत्वं विमतस्य शास्त्रस्य ? इति । अत आह**

## न हि ब्रह्मात्मैक्यस्य याथार्थ्यं तत्पक्षे

**अन्यथाप्रतिपादकत्वं ह्ययथार्थप्रतिपादकत्वं । ब्रह्मात्मनोरेकत्वं च शास्त्रविषयतया परस्याभिमतम् । न तत् परमार्थभूतम् । अतोऽन्यथाप्रतिपादकत्वं सिद्धं ।**

(मं. टि.) पूर्वव्याख्याने स्यात् इत्यस्य यद्यैक्यप्रतिपादकं स्यात् इत्यापादकस्य अध्याहर्तव्यत्वात् अन्यथाप्रतिपादकत्वात् इत्यस्य च हेतुतया प्रतीयमानस्य आपादकविवरणपरतया व्याख्येयत्वात् तत्रापरितोषादन्यथा व्याचष्टे ॥ अथ वेति ॥ ननु ' वेदादिकमैक्यपरं चेत् अनारम्भणीयं स्यात् ' इत्यापादिते वेदादेः पराभिमतविषयादिनिराकरणं सिद्ध्येत् । न तु मायावादिशास्त्रस्य अनारम्भणीयत्वे साधिते । अतस्तत्साधनमसङ्गतमित्याशङ्क्याह ॥ वेदादेस्तत्परत्वनिरासायेति ॥ वेदादेरैक्यपरत्वसाधकस्य मायावादस्य अनारम्भणीयत्वे साधिते वेदादेरैक्यपरत्वसाधकाभावात् तत्परत्वं निरस्तं भवतीति भावः । ननु अन्यथाप्रतिपादकत्वे सिद्धे अनारम्भणीयत्वापादनं साधनं वा कर्तुं युक्तं । तदेवासिद्धं । न चैक्यपरत्वेन अन्यथाप्रतिपादकत्वसिद्धिः । भेदपरत्व इव ऐक्यपरत्वेऽपि अन्यथाप्रतिपादकत्वाभावोपपत्त्या अप्रयोजकत्वादिति शङ्कते ॥ कथमन्यथाप्रतिपादकत्वमिति ॥ एतदुत्तरतया मूलमवतारयति ॥ अत आहेति ॥ अन्यथाप्रतिपादकत्वं ह्ययथार्थप्रतिपादकत्वं इत्यादेरयं भावः । अन्यथाप्रतिपादकत्वं हि अन्येन प्रकारेण प्रतिपादकत्वं । प्रकारस्यान्यत्वं च वास्तवप्रकारापेक्षया । वास्तवश्च प्रकारो यथार्थ एवेति तदन्यस्य परमार्थसत्त्वाभावरूपायथार्थत्वनियमात् अयथार्थेन प्रकारेण प्रतिपादकत्वलक्षणमयथार्थपरत्वमेव अन्यथाप्रतिपादकत्वं ।

एवं च अयथार्थमयथार्थतया प्रतिपादयत् अयथार्थप्रतिपादकत्वात् अन्यथाप्रतिपादकं स्यात् । यथार्थमयथार्थतया प्रतिपादयच्च अयथार्थपरत्वाभावादन्यथाप्रतिपादकं न स्यात् इति चोद्यं निरस्तं । अयथार्थसम्बन्ध्ययथार्थत्वस्य प्रकारस्य यथार्थत्वेन अयथार्थमयथार्थतया प्रतिपादयतोऽपि अयथार्थेन प्रकारेण प्रतिपादकत्वरूपायथार्थपरत्वाभावात् । एवं यथार्थसम्बन्ध्ययथार्थत्वस्य प्रकारस्यापि अयथार्थत्वेन यथार्थमयथार्थतया प्रतिपादयतोऽपि अयथार्थेन प्रकारेण प्रतिपादकत्वलक्षणायथार्थपरत्वसद्भावात् । एवं च अस्माकं पक्षे भेदस्य सत्यत्ववत् परपक्षे ऐक्यस्य सत्यत्वाभावात् प्रत्युत परन्यायेनैव अभेदमिथ्यात्वस्य वक्ष्यमाणत्वात जीवाभेदरहितं ब्रह्मोद्दिश्य जीवाभिन्नमिति प्रतिपादयच्छास्त्रमयथार्थेन जीवाभेदेन प्रकारेण ब्रह्म प्रतिपादयतीति ऐक्यपरत्वमन्यथाप्रतिपादकत्वं विना नोपपद्यत इत्यैक्यपरत्वेन अन्यथाप्रतिपादकत्वापादनात्मकतर्कस्य अप्रयोजकत्वाभावात् अन्यथाप्रतिपादकत्वं सिद्धं । सिद्धे च अन्यथाप्रतिपादकत्वे तेन अनारम्भणीयत्वापादानात्मकतर्केऽपि नापादकासिद्धिः नापि साधने हेत्वसिद्धिरिति ।

## पूर्वोक्ततर्के आपादकविवरणम्

(टी.) ननु ' यद्यद्वैतपरं शास्त्रं स्यात् तदा अनारम्भणीयं प्रसज्येत ' इति प्रसङ्गोक्तौ आपादकस्योक्तत्वात् हेत्वभिधानं व्यर्थं स्यात् । न चैतदेव आपादकाभिधानमिति वाच्यं । तथासत्यन्यथाप्रतिपादकत्वादित्यस्य ब्रह्मात्मैक्यप्रतिपादकत्वात् इत्यर्थः स्यात् । तथा च दृष्टान्तानुपपत्तिः । न हि ब्रह्मात्मैक्यस्येत्युपपादनानुपयोगोऽसङ्गतत्वञ्चेति । मैवं अभिप्रायसद्भावात् । तथा हि, ' यदि अद्वैतमेव शास्त्रार्थः स्यात् तदा शास्त्रमनारम्भणीयं स्यात् ' इत्युक्ते निमित्तनैमित्तिकभावस्य अस्फुटत्वात् , कथं? इत्याकाङ्क्षायां अन्यथाप्रतिपादकत्वात् इत्युक्तं । ' यदि शास्त्रार्थोऽद्वैतं स्यात् तदा शास्त्रमन्यथाप्रतिपादकं स्यात् ' । ' ततश्च अनारम्भणीयं प्रसज्येत ' इति ।

ब्रह्मात्मैक्यस्य शास्त्रार्थत्वे शास्त्रस्यायथार्थप्रतिपादकत्वसमर्थनम्

(टी.) अद्वैतस्यैव शास्त्रार्थत्वे शास्त्रस्य अयथार्थप्रतिपादकत्वं कथं ? इत्यतो न हि ब्रह्मात्मैक्यस्य इत्यभिहितं। तत्रोपपत्तिः तत्पक्षे इति। ऐक्यमेव शास्त्रार्थश्चेद्ब्रह्मातिरिक्तं सर्वमपरमार्थभूतं स्यात्। ऐक्यं च ब्रह्मव्यतिरिक्तत्वादपरमार्थभूतं। तत्प्रतिपादकं च शास्त्रं कथमन्यथाप्रतिपादकं न भवेत् ? इति।

(मं. टि.) यदुक्तं, तच्चोत्तरत्र प्रदर्शयिष्यामः इति। तद्दर्शयितुं शङ्कते तावत्॥ नन्विति॥ यद्यपि विमतं इत्यादिपूर्वग्रन्थस्थहेतुवाक्यस्य वैयर्थ्यशङ्कातत्परिहारौ न हि ब्रह्मात्मैक्यस्य इतिव्याख्यानात् प्रागेव कर्तव्यौ तथापि न हि ब्रह्मात्मैक्यस्य इत्युपपादनानुपयोगः इतिशङ्काशेषस्य यद्यद्वैतमेव शास्त्रार्थः स्यात् इत्यादिना कृतस्य तत्परिहारस्य च न हीत्यादिग्रन्थार्थमज्ञात्वा ज्ञातुमशक्यत्वात् तद्व्याख्यानानन्तरं तौ कृताविति बोद्धव्यं॥ प्रसङ्गोक्ताविति॥ साधनपक्षे तु अन्येन हेत्वनभिधानात् अन्यथाप्रतिपादकत्वात् इत्यनेनैव च तदभिधानान्न तस्य वैयर्थ्यं शङ्कितुं शक्यमिति भावः। ननु अन्यथाप्रतिपादकत्वात् इत्येतदेव आपादकाभिधानमस्तु। न त्वापादकमध्याहर्तव्यं। श्रुतपरित्यागेन अश्रुताद्ध्याहारायोगादित्याशङ्क्याह॥ न चेति॥ तथा सतीति॥ वेदादेरैक्यप्रतिपादकत्वं निराकुर्वता तत्रैवानिष्टस्यापादनीयत्वात् अन्यथाप्रतिपादकत्वात् इत्यस्य ब्रह्मात्मैक्यप्रतिपादकत्वादित्येवार्थो वाच्यः। न च शब्दशक्तेरभावः। अन्यथा सिद्धान्त्यभिप्रेतजीवब्रह्मभेदापेक्षया प्रकारान्तरेण अभेदेन प्रतिपादकत्वादित्येवं अन्यथाप्रतिपादकत्वात् इत्यस्य ब्रह्मात्मैक्यप्रतिपादकत्वपरतया व्याख्यातुं शक्यत्वादिति भावः॥ तथा च दृष्टान्तानुपपत्तिरिति॥ यथा सम्प्रतिपन्नं इत्यनेन आचार्येण बौद्धादिशास्त्रं दृष्टान्तीकृतं। तदनुपपत्तिः। ब्रह्मात्मैक्यप्रतिपादकत्वलक्षणापादकस्य तत्राभावात्। तथा च यथा सम्प्रतिपन्नं इति पूर्वग्रन्थविरोधः स्यादित्यर्थः॥ न हि ब्रह्मात्मैक्यस्येत्युपपादनानुपयोग इति॥ ऐक्यपरत्वमात्रस्य अनारम्भणीयत्वापादकत्वे ऐक्यस्य सत्यत्वेऽपि तदनपायात् ऐक्यायथार्थत्वोपपादनस्य आपादकासिद्ध्यादिपरिहारेऽनुपयोगः। तथा च न हि इत्यस्योत्तरग्रन्थस्य वैयर्थ्यं स्यादित्यर्थः॥ असङ्गतत्वं चेति॥ ऐक्यपरत्वानारम्भणीयत्वयोः प्रयोज्यप्रयोजकभावाभावात्तेन तदापादनमप्रयोजकत्वादसङ्गतं असम्बद्धमिति युक्तिविरोधश्च स्यादित्यर्थः।

॥ केचित्तु 'उपपादनानुपयोगोऽसङ्गतत्वं च' इति समानाधिकरणमिदं। तथा चोपपादनानुपयोगरूपासङ्गतत्वं स्यादित्यर्थः। चशब्दश्च दृष्टान्तानुपपत्तिसमुच्चयार्थ इति व्याचक्षते।

अन्ये तु 'अन्यथाप्रतिपादकत्वात्' इत्यस्य ऐक्यप्रतिपादकत्वादित्येतदर्थप्रतिपादने शक्त्यभावात् तथा अर्थकथनस्य असङ्गतत्वमिति व्याकुर्वते।

॥ यद्यद्वैतमेवेति॥ तथा च 'यदि वेदादिकं' इत्यत्र अनारम्भणीयत्वरूपापाद्यसामानाधिकरण्यसिद्ध्यर्थमैक्यपरत्वमापादकीकृतं। अत्र तु 'सत्यां व्याप्तौ वैयधिकरण्यं न दोषः' इति अन्यत्र समर्थितत्वादैक्यस्य वेदादिविषयत्वं साक्षान्निराकर्तुं अद्वैतस्य शास्त्रार्थत्वमेव आपादकीकृतमित्यदोषः।

(मं. टि.) ॥ निमित्तनैमित्तिकभावस्यास्फुटत्वात्कथमित्याकाङ्क्षायामिति ॥ 'यद्यग्निर्न स्यात् तर्हि धूमोऽपि न स्यात्' इत्यादौ 'यद्यग्न्यभावेऽपि धूमः स्यात् तर्हि कारणाभावेऽपि कार्याङ्गीकारे व्याघातः स्यात्' इत्याद्यनुग्राहकतर्कान्तरवत् प्रकृते 'यद्यैक्यपरत्वेऽप्यारम्भणीयत्वं स्यात् तदा इदमनिष्टमापद्येत' इति अनुग्राहकतर्कान्तराभावात् आपाद्यापादकभावस्य अस्फुटत्वात् कथमनारम्भणीयं स्यादित्याकाङ्क्षायामित्यर्थः ॥ यदि शास्त्रार्थ इति ॥ ऐक्यस्य शास्त्रार्थत्वेन अन्यथाप्रतिपादकत्वापादनात्मकस्तर्कः, तेन च अनारम्भणीयत्वापादनात्मा अन्यस्तर्क इति तर्कद्वयमेतत् । तथा च 'यद्यद्वैतं शास्त्रार्थः तदा अन्यथाप्रतिपादकत्वप्रसङ्गात् शास्त्रमनारम्भणीयं प्रसज्येत' इति प्रसङ्गरूपो हेतुः अन्यथाप्रतिपादकत्वात् इत्यनेनोक्त इति भावः ॥ प्रसज्येतेतीति ॥ इतिशब्दस्य इत्यभिप्रायसद्भावादित्यन्वयः । तेन हेत्वभिधानं न व्यर्थमिति शेषः ।

एवं च न हि ब्रह्मात्मैक्यस्य इत्युपपादनानुपयोगदोषोऽपि नास्तीति भावेन शङ्कानिरासरूपं तदुपयोगं शङ्काप्रदर्शनपूर्वकमाह ॥ अद्वैतस्यैवेत्यादिना ॥ 'यत्र यत्र अद्वैतस्य शास्त्रार्थत्वं तत्र तत्र शास्त्रस्य अयथार्थत्वं' इति व्याप्तेरभावात् कथमेतत् ? इति चोद्याभिप्रायः । परिहाराभिप्रायस्तु प्रतिपाद्यस्याद्वैतस्य यथार्थत्वाभावात् 'यत्र यथार्थाप्रतिपादकत्वे सति प्रतिपादकत्वं तत्रायथार्थप्रतिपादकत्वं' इतिसामान्यव्याप्तिरस्तीति ॥ तत्रोपपत्तिस्तत्पक्ष इतीति ॥ तत्र ऐक्यस्यायथार्थत्वे उपपत्तिः तत्पक्षे ऐक्यपक्षे इत्यनेन प्रदर्शितेत्यर्थः ।

प्रदर्शनप्रकारमेवाह ॥ ऐक्यमेव शास्त्रार्थश्चेदिति ॥ जीवब्रह्मैक्यस्य कर्तृत्वभोक्तृत्वप्रमातृत्वादिविरुद्धधर्ममिथ्यात्वं विना अनुपपत्तेः, प्रमातृत्वादिमिथ्यात्वस्य च प्रमेयादिमिथ्यात्वेन विना अनुपपत्तेः ऐक्यनिर्वाहार्थं ब्रह्मव्यतिरिक्तं सर्वमपरमार्थभूतं वक्तव्यमित्यर्थः । यद्वा सर्वस्य परमार्थत्वे सर्वज्ञत्वासर्वज्ञत्वादिविरुद्धधर्माणामपि परमार्थत्वापत्त्या ऐक्यानुपपत्तेः ऐक्यनिर्वाहार्थं ब्रह्मव्यतिरिक्तं सर्वमपरमार्थभूतं वक्तव्यमित्यर्थः । यद्वा दृश्यजडपरिच्छिन्नरूपस्य वियदादेः परमार्थत्वे तन्न्यायेन दृश्यजडपरिच्छिन्नरूपाणां दुःखादिविरुद्धधर्माणामपि परमार्थत्वापत्तेरैक्यायोगात् तन्निर्वाहार्थं ब्रह्मव्यतिरिक्तं सर्वमपरमार्थभूतं वक्तव्यमित्यर्थः । यद्वा परेण ब्रह्मात्मैक्यशब्दोपलक्षितस्य सजातीयविजातीयस्वगतनानात्वराहित्यरूपस्यैक्यस्य शास्त्रार्थत्वेन अङ्गीकारात् तस्य च ब्रह्मव्यतिरिक्तसर्वमिथ्यात्वं विना अनुपपत्तेस्तन्निर्वाहार्थं ब्रह्मव्यतिरिक्तं सर्वमपरमार्थभूतं वाच्यमित्यर्थः । अस्तु ब्रह्मव्यतिरिक्तसर्वमपरमार्थभूतं । किं प्रकृते ? इत्यत आह ॥ ऐक्यं चेति ॥ अव्यतिरेकपक्षस्य दूषयिष्यमाणत्वात् ब्रह्मव्यतिरिक्तत्वात् इत्यस्यासिद्धिरिति द्रष्टव्यं । ननु ऐक्यस्यापरमार्थत्वेऽपि शास्त्रस्यान्यथाप्रतिपादकत्वं कथमुपपादितं भवति ? इति । अत आह ॥ तत्प्रतिपादकं चेति ॥ अत्र इतिशब्दस्य इति अनेन प्रकारेण उपपत्तिः प्रदर्शितेति पूर्वेणान्वयः ।

**ब्रह्मात्मैक्यस्य स्वरूपातिरेके सत्यत्वे च अद्वैतहानिदोषः**

(टी.) अथ ब्रह्मात्मैक्यं तत्स्वरूपातिरिक्तमपि परमार्थसत् अङ्गीक्रियते तदा तेनैव द्वैतापत्तेरद्वैतपरं शास्त्रमित्यस्य हानिः स्यादित्याह

**अद्वैतहानेः स्वरूपातिरेके**

ब्रह्मात्मैक्यस्येति वर्तते । याथार्थ्ये सतीति शेषः ।

**ब्रह्मात्मैक्यस्य स्वरूपानतिरेके स्वमतरीत्या सिद्धसाधनतादोषः**

(टी.) स्यादेतत्, ऐक्यं परमार्थसदेव। किं तु? ब्रह्मस्वरूपानतिरिक्तमेव। यथाह "तच्चाद्वैतं 'ब्रह्मैवेदं सर्वं' इति श्रुत्यर्थेन सहैक्यमापन्नं हि ब्रह्मैव स्यात्" इति। तथा च कथं तत्प्रतिपादकं शास्त्रमयथार्थप्रतिपादकं स्यात् इति। अत आह

अनतिरेके स्वप्रकाशत्वादात्मनः सिद्धसाधनता

शास्त्रस्येति शेषः। 'यद्यद्वैतं ब्रह्मस्वरूपानतिरिक्तं स्यात् तदा शास्त्रस्य सिद्धार्थबोधकत्वं प्रसज्येत' बोध्यस्यात्मनो ब्रह्मस्वरूपत्वात्, तस्य च स्वप्रकाशत्वेन नित्यसिद्धत्वात्। अतः सिद्धसाधनतापरिहाराय ऐक्यस्य स्वरूपातिरेके [1]अङ्गीक्रियमाणे अन्यथाप्रतिपादकत्वमेवेति।

(मं. टि.) ॥ **तदा तेनैव द्वैतापत्तेरिति** ॥ यदि ब्रह्मात्मैक्यं स्वरूपातिरिक्तमपि परमार्थसत् स्यात्, अत एव दृश्यत्वजडत्वपरिच्छिन्नत्वादिकमपि परमार्थसत् स्यात्, तेनैव द्वारेण समानन्यायतया दृश्यत्वादिमान् दुःखादिविरुद्धधर्मोऽपि सन् स्यादिति जीवब्रह्मणोर्द्वैतापत्तेस्तदद्वैतपरं शास्त्रं इत्यस्य हानिः स्यादित्यर्थः। अथ वा यदि ब्रह्मात्मैक्यशब्दोपलक्षितं सजातीयविजातीयस्वगतनानात्वराहित्यं ब्रह्मस्वरूपातिरिक्तमपि परमार्थसत् स्यात् तदा तेनैव द्वितीयेन सद्वितीयत्वापत्तेः त्रिविधनानात्वराहित्यपरं शास्त्रमित्यस्य हानिः स्यादित्यर्थः ॥ **याथार्थ्ये सतीति शेष इति** ॥ स्वरूपातिरेकमात्रेण नाद्वैतहानिरापादयितुं शक्या। अतिरेकेऽपि तस्य मिथ्यात्वे अद्वैतहान्यभावात्। ततो याथार्थ्ये सतीति विशेषणीयमित्यर्थः।

**अद्वैतस्य अभावरूपत्वेन नाद्वैतहानिरिति शङ्का तन्निरासश्च**

ननु अद्वैतस्य ब्रह्मातिरिक्तत्वेऽपि याथार्थ्येऽपि च नाद्वैतहानिः। तस्य द्वैताभावरूपत्वात्। मया च 'अभावानां प्रामाणिकत्वेऽपि सदद्वैताव्याकोपात्' इति वदता अभावद्वैतस्याङ्गीकारादिति चेन्न। तथात्वे अन्योन्याभावरूपभेदोऽपि सत्यत्वेन अङ्गीकार्यः स्यात्। किं च 'एकमेवाद्वितीयं' इति द्वितीयमात्रनिषेधानुपपत्तिः। तस्य भावरूपद्वितीयनिषेधपरत्वे च अभावरूपद्वितीयनिषेधपरत्वमेव किं न स्यात्। अपि च, सत्यस्य तस्याभावस्य आत्मातिरिक्तत्वेन दृश्यत्वावश्यम्भावात् मिथ्यात्वसाधकस्य दृश्यत्वादिहेतोस्तत्र व्यभिचारः स्यादित्यलं विस्तरेण। स्वोक्तार्थे खण्डनकारसंमतिमाह ॥ **यथाहेति** ॥ **श्रुत्यर्थेन सहैक्यमापन्नमिति** ॥ श्रुत्यर्थभूतमित्यर्थः। तथा च 'ब्रह्मैवेदं सर्वं' इति श्रुत्यर्थभूतं सर्वस्य ब्रह्ममात्रत्वलक्षणं यदद्वैतं तद्ब्रह्मैव। अद्वैतस्य ब्रह्मातिरिक्तत्वे सर्वस्य ब्रह्ममात्रत्वानुपपत्तिप्रसङ्गात्। तस्य च श्रुतिसिद्धत्वादिति संमतिग्रन्थार्थः। ननु अद्वैतस्य स्वप्रकाशब्रह्मस्वरूपानतिरिक्तत्वेऽपि शास्त्रस्य कथं सिद्धसाधनता? स्वप्रकाशभूतब्रह्मस्वरूपस्यैक्यस्य ब्रह्म प्रति प्रकाशमानत्वेऽपि जिज्ञासुं शास्त्रेण बोध्यं जीवं प्रति अप्रकाशमानत्वात्। अन्यथा भवतामपि पक्षे ब्रह्मणः स्वप्रकाशत्वात् जिज्ञासुं जीवं प्रति ब्रह्मप्रतिपादयतः शास्त्रस्य सिद्धसाधनत्वं दुर्वारमित्याशङ्क्याह ॥ **बोध्यस्यात्मनो ब्रह्मस्वरूपत्वादिति** ॥ **बोध्यस्य शास्त्रे**

---

[1] मं. टि. अङ्गीकार्ये.

णानुशासनीयस्य शास्त्रश्रवणे अधिकृतस्येत्यर्थः । जीवस्य ब्रह्मस्वरूपत्वात् ब्रह्म प्रति प्रकाशमानस्यैक्यस्य जीवं प्रत्यपि प्रकाशमानत्वात् सिद्धसाधनत्वं स्यात् । अस्माकं पक्षे तु जीवस्य ब्रह्मणः सकाशाद्भिन्नत्वान्न दोष इत्यर्थः । एवं च **स्वप्रकाशत्वाद्ब्रह्मणः** इति वक्तव्ये यदाचार्येण **स्वप्रकाशत्वादात्मनः** इत्युक्तं तद्ब्रह्मणो बोध्यजीवाभेदप्रतिपादनार्थमिति व्याख्यातं भवति ।

अन्ये तु, 'मृदात्मनो घटस्य' इत्यादाविव आत्मशब्दस्य स्वरूपार्थत्वमङ्गीकृत्य बोध्यस्य शास्त्रविषयस्य अद्वैतस्य यदात्मा स्वरूपं तस्येति वैयधिकरण्येन, बोध्यस्य शास्त्रविषयस्यात्मनोऽद्वैतस्वरूपस्येति सामानाधिकरण्येन वा व्याचक्षते ॥ **स्वरूपातिरेकेऽङ्गीकार्य इति** ॥ स्वरूपातिरिक्तस्य सत्यत्वेऽद्वैतहानिप्रसङ्गात् तस्य मिथ्यात्वे अङ्गीकार्य इति शेषः ।

(टी.) अयं च दोषः स्वमतरीत्यैवोक्त इति मन्तव्यं । 'स्वविषयप्रकाशत्वं स्वप्रकाशत्वं' इति स्वमते अङ्गीकारात् ।

ब्रह्मात्मैक्यस्य स्वरूपानतिरेके पररीत्या शास्त्रस्यैक्याप्रतिपादकत्वसाधनम्

परराीत्या तु स्वप्रकाशत्वादात्मनः शास्त्रस्याप्रतिपादकत्वं स्यात् । 'अवेद्यत्वं स्वप्रकाशत्वं' इत्यङ्गीकारादिति दूषणं द्रष्टव्यं ।

(मं. टि.) ॥ अयं च दोषः स्वमतरीत्यैवोक्त इति मन्तव्यमिति ॥ यद्यपि परैः स्वग्रन्थेषु स्वप्रकाशत्वमात्रस्य स्वतः सिद्धिसम्भवेनेति, स्वतः सिद्धतायामपि तदुपपत्तेरिति, विज्ञानमेव स्वपरप्रकाशस्वभावं प्रकाशत इति, स्वभावभेदादेव च स्वात्मनि व्यवहारं कुर्यादिति च तत्र तत्र वदद्भिः स्वप्रकाशस्य आत्मनः स्वकर्मत्वाभावेऽपि स्वजन्यव्यवहारविषयत्वयोग्यत्वलक्षणा स्वतःसिद्धिरिष्यते । तादृशात्माभिन्नं चाद्वैतं बोधयतः शास्त्रस्य सिद्धसाधनत्वं परराीत्यैव वक्तुं शक्यमिति परन्यायेन परमतनिराकरणपरतया स्वारस्येनैव मूलग्रन्थो व्याख्यातुं शक्यः । तथापि टीकाकारैः संविद्विषयताया एव स्वमतानुसारेण सिद्धिशब्दार्थत्वं मत्वा परेण संविद्विषयताया आत्मन्यनङ्गीकारात् संविद्विषयतालक्षणसिद्धेरात्मन्यभावात् सिद्धसाधनत्वं परराीत्या वक्तुमशक्यमिति भावेन स्वमतरीत्योक्त इत्युक्तमिति बोद्धव्यं ॥ **अवेद्यत्वं स्वप्रकाशत्वमित्यङ्गीकारादिति** ॥

चित्कर्मत्वाभावः स्वप्रकाशत्वमिति पक्षनिरासः

ननु परैः चित्कर्मत्वाभावरूपमेवावेद्यत्वं स्वप्रकाशत्वमित्यङ्गीक्रियते । न तु वृत्तिव्याप्यत्वाभावरूपं । न चात्मनश्चित्कर्मत्वाभावमात्रेण शास्त्रस्य तदप्रतिपादकत्वं वक्तुं शक्यं । शास्त्रजनितवृत्तिव्याप्यत्वमात्रेण शास्त्रस्य तत्प्रतिपादकत्वोपपत्तेरिति चेत् सत्यमेवं परमतस्थितिः । तथापि चित्कर्मत्वाभावस्य स्वप्रकाशशब्दार्थत्वे घटादेरपि चिद्विषयत्वे सुखादिवज्ज्ञातैकसत्त्वप्रसङ्गेन तदभावावश्यम्भावेन तस्यापि स्वप्रकाशत्वापत्तिः । न च घटाद्यवच्छिन्नचैतन्यावरकाज्ञाननिवृत्त्यर्थं वृत्तेरपेक्षितत्वेन तस्य ज्ञातैकसत्त्वाभाव इति वाच्यं । तत एव सुखादेरपि ज्ञातैकसत्त्वा-

(मं. टि.) भावप्रसङ्गात् । ननु सुखाद्यवच्छिन्नचैतन्यमज्ञानावृतमेव न भवतीति चेत् किमनावृतचैतन्यप्रदेशावच्छिन्नतयैव सुखदुःखादिकमुत्पद्यते ? किं वा सुखाद्युत्पत्त्यनन्तरमेव तदवच्छिन्नं चैतन्यमनावृतम्भवति ? इति । नाद्यः अनियतदेशानामन्तःकरणसम्बन्धिनामनन्तसुखादीनां नियतैकचैतन्यप्रदेशसम्बन्धितया उत्पत्त्यनुपपत्तेरनियतानन्तप्रदेशानामनावृतत्वे वक्तव्ये तत्प्रदेशसम्बन्धितयोत्पन्नानां घटादीनामपि ज्ञातैकसत्त्वप्रसङ्गात् । न द्वितीयः । तद्विषयकवृत्तेरेव तदज्ञाननिवर्तकतया दुःखादेरज्ञानानिवर्तकतया अज्ञाननिवृत्त्यर्थं दुःखादिविषयवृत्तेरङ्गीकार्यत्वेन घटादिवद्दुःखादेरपि ज्ञातैकसत्त्वानुपपत्तेः । तस्माद्दुःखादिकं ज्ञातैकसत् घटादिकं तु न तथेति व्यवस्थासिद्ध्यर्थं घटादौ चित्कर्मत्वाभावस्यावश्यं वक्तव्यतया चित्कर्मत्वाभावस्य स्वयंप्रकाशत्वरूपत्वे घटादेरपि स्वप्रकाशत्वापत्तेस्तत्परिहारार्थं वृत्तिव्याप्यत्वाभावः स्वप्रकाशत्वमिति वक्तव्यं । तथा च शास्त्रस्य तत्प्रतिपादकत्वं न स्यादित्यापादनं विवक्षितमित्यदोषः ।

### आत्मस्वरूपसिद्धावप्यद्वैतासिद्धिशङ्कापरिहारौ

(टी.) ननु स्वप्रकाशतया आत्मस्वरूपस्य सिद्धत्वेऽप्यद्वैतादिविशेषाकारेणानधिगतत्वान्न शास्त्रस्य सिद्धसाधनत्वादिकं । यथा खलु भवतां गुणगुणिनोरभेदेऽपि गुणिनः स्पर्शनेनोपलम्भे रूपस्यानधिगतिरेवमिति । अत आह

## निर्विशेषत्वादात्मनो नानधिगतो विशेषः

स्यादेवं घटोपलम्भेऽपि तद्रूपानुपलब्धिः यतो रूपं घटाभिन्नमपि तद्विशेषतया अङ्गीक्रियते । न तु तन्मात्रं । न चैक्यमपि आत्माभिन्नं तद्विशेषः । येन आत्मनि सिद्धेऽप्यनधिगतं इति युक्तं । आत्मस्वरूपस्य निर्विशेषत्वाङ्गीकारादिति ।

(मं. टि.) ॥ गुणगुणिनोरिति ॥ यावद्द्रव्यभाविगुणगुणिनोरित्यर्थः । अयावद्द्रव्यभाविगुणगुणिनोः सिद्धान्ते अत्यन्ताभेदाभावेन दृष्टान्तीकरणानुपपत्तेरिति ॥ तद्विशेषतया अङ्गीक्रियत इति ॥ भेदप्रतिनिधिरूपविशेषाश्रयीभूतधर्मतया अङ्गीक्रियत इत्यर्थः । निर्विशेषत्वस्य ब्रह्मण्यसिद्धत्वान्निर्विशेषत्वादिति कथमाचार्येणोक्तमित्याशङ्क्य तद्व्याख्यातं टीकाकृता निर्विशेषत्वाङ्गीकारादिति । परेण निर्धर्मकत्वस्याङ्गीकारादेव भेदप्रतिनिधिरूपविशेषाश्रयभूतधर्मराहित्यस्याप्यङ्गीकारादित्यर्थः ।

### अज्ञाननिवृत्तावद्वैतस्य स्वतःसिद्धिरिति शङ्का तत्परिहारश्च

(टी.) अथापि स्यात् , भवेदिदं शास्त्रस्य सिद्धसाधनत्वादि यदि शास्त्रं साक्षादद्वैतं प्रतिपादयतीति ब्रूमः । न चैवं । किं नाम ? आवरणभूताज्ञानमात्रं निवर्तयतीति । निवृत्ते त्वावरणे अद्वैतं स्वत एव सिद्धं । तदुक्तं ' सिद्धं तु निवर्तकत्वात् ' इति । तत्राह

## सिद्धत्वात्स्वरूपस्य विशेषाभावाच्च नाज्ञानं कस्यचिदावरकं

स्यादेवं शास्त्रस्य सिद्धसाधनतापरिहारः यदि परमते अज्ञानमावरणं सम्भवेत् । न चैतत्सम्भवति । आवरणं ह्याव्रियमाणेन व्याप्तं । न चाज्ञानस्य तदस्ति । तथा हि, किमज्ञानमात्मस्वरूपस्याव-

(टी.) रणं स्यात्? उत तद्विशेषस्य? नाद्यः तस्य स्वप्रकाशत्वेन नित्यसिद्धत्वात्। न द्वितीयः तदभावात्। तथा च व्यापकाभावाद्व्याप्यमावरणमपि न सम्भवतीति न तन्निवर्तकत्वेन शास्त्रस्यासिद्धसाधनत्वं भवतीति।

(मं. टि.) ॥ सिद्धं तु निवर्तकत्वादितीति ॥ ऐक्यस्य स्वप्रकाशात्मस्वरूपत्वेन सदा प्रकाशमानत्वेऽपि शास्त्रस्यारम्भणीयत्वं सिद्धमेव। शास्त्रस्याज्ञानमात्रनिवर्तकत्वादित्यर्थः ॥ नाद्यः तस्य स्वप्रकाशत्वेन नित्यसिद्धत्वादिति ॥

भासमानस्यैव अज्ञानविषयत्वमिति शङ्का तत्परिहारश्च

ननु कथमेतत्? प्रकाशमानेऽपि विषये परैरज्ञानावरणाङ्गीकारात्। यथोक्तं, 'प्रतिभासमानमेवाज्ञानव्यावर्तकं' इति। युक्तं च प्रतिभासमानस्याज्ञानविषयत्वं। तथा हि, इदमहं न जानामीति विषयावच्छिन्नमज्ञानमनुभूयते। तत्रावच्छेदको विषयो ज्ञातो न वा। न चेत्कथं तदवच्छिन्नाज्ञानज्ञानं? अवच्छेदकाज्ञाने अवच्छिन्नज्ञानायोगात्। ज्ञातश्चेत्सिद्धं भासमानेऽप्यज्ञानं। न चावच्छेदको विषयः सामान्यतो ज्ञायते विशेषतस्तु न ज्ञायत इति युक्तम्। सामान्याकारस्य ज्ञातत्वादेवाज्ञानविषयत्वाभावेनाज्ञानावच्छेदकत्वानुपपत्तौ विशेषाकारस्यैवावच्छेदकत्वे तत्प्रतिभासावश्यंभावात्।

एतेन [1]विशेषेऽपि 'अस्ति कश्चिद्विशेषः' इति सामान्यतो ज्ञायते। विशेषतस्तु न ज्ञायत इति निरस्तं। अत्रापि पूर्वोक्तप्रकारेण दूषणप्रवृत्तेः। तस्मात्स्वयंप्रकाशत्वेन भासमानस्याप्यात्मस्वरूपस्याज्ञानमावरणं भविष्यतीति चेत्। उच्यते। परेणापि नास्ति, न प्रकाशत इत्यादिव्यवहारसिद्ध्यर्थं आवरणमङ्गीक्रियते। यथोक्तं 'नास्ति न प्रकाशते इत्यादिव्यवहारालम्बनयोग्यत्वस्य व्यवहारदर्शनादेव कल्प्यमानस्य' इति। तथा च भासमाने 'नास्ति न प्रकाशते' इत्यादिव्यवहाराभावात्किमावरणेन? किं च यद्यज्ञातमपि भासेत तर्ह्यज्ञः पुमान् यत् येनाकारेण न जानाति तत्तेनाकारेण विविच्य वदेत्। न चावच्छिन्नाज्ञानस्यावच्छेदकज्ञानपूर्वकत्वनियमादज्ञानप्रकाशार्थमज्ञातप्रकाशो वाच्य इति युक्तं। यथा अन्यत्रावच्छिन्नसत्त्वस्यावच्छेदकसत्त्वपूर्वकत्वनियमेऽपि आरोपितरूप्याद्यभावसत्वस्य न रूप्यादिसत्वपूर्वकत्वं। तत्पूर्वकत्वे रूप्याद्यभावसत्वस्यैवायोगात्। तथा अन्यत्रावच्छिन्नज्ञानस्यावच्छेदकज्ञानपूर्वकत्वनियमेऽपि अज्ञातावच्छिन्नाज्ञानज्ञानस्य नाज्ञातज्ञानपूर्वकत्वं। अज्ञातस्य ज्ञाने अज्ञानस्यैवायोगादिति कल्पनात्। अन्यथा अन्यत्रावच्छेदकाऽवरकाज्ञाननिवृत्तावेवावच्छिन्नज्ञाननियमदर्शनात् प्रकृतेप्यर्थावच्छिन्नाज्ञानज्ञानार्थमवच्छेदकार्थावरकाज्ञाननिवृत्तिरप्यङ्गीकरणीया स्यात्। यथोक्तमन्यत्रास्माभिः

मोहभानार्थमज्ञातज्ञानं यदि च कल्प्यते।<br>अज्ञाते मोहहानिश्च तदर्थं किं न कल्प्यते ॥ इति।

शास्त्रस्य सिद्धसाधनत्वे अनुपादेयत्वाप्रामाण्यदोषौ

(टी.) अस्तु तर्हि सिद्धसाधनता शास्त्रस्य। को दोषः? इति चेत्। परार्थत्वाच्छास्त्रस्य परसिद्धबोधने अनुपादेयत्वं स्यादित्येकः। अपरं चाह

---

[1] विशेषेऽपि, इति मुद्रितपुस्तकस्थः पाठः साधुरिति भाति.

## ‘अनधिगतार्थगन्तृ प्रमाणम्’ इति तन्मतम्

(टी.) गन्तृशब्देनावगतिसाधनमुच्यते। अनधिगतेति स्मृत्यादिव्युदासार्थम्। शुक्तिरजतादिज्ञान-निरासाय अर्थग्रहणम्। अर्थस्य च यथावस्थितस्य विवक्षितत्वात्। अर्थस्य फलस्य च निवृत्त्यर्थं गन्तृपदं। तस्य च साधनपरत्वात् न कर्तर्यतिप्रसङ्गः। एतद्भाट्टानां प्रमाणलक्षणं। ‘व्यवहारे भट्टनयः’ इति मायावादिभिरङ्गीकारात्तन्मतमित्युक्तं। यदि शास्त्रमधिगतमेवार्थमवगमयेत्तदा प्रमाणलक्षणाभावादप्रमाणं प्रसज्येतेति।

(मं. टि.) ॥ को दोष इति ॥ धारावाहिकद्वितीयादिज्ञानवत्सिद्धबोधकत्वेऽपि प्रामाण्योपपत्तेरप्रामाण्यप्रसङ्गरूपो दोषो नास्तीत्यर्थः। अप्रामाण्यप्रसङ्गाभावेऽपि शास्त्रस्य प्रत्यक्षादिवत्स्वार्थत्वाभावात्परार्थत्वनियमात्सिद्धार्थबोधकत्वे अनुपादेयत्वप्रसङ्गरूपो दोषोऽस्तीत्याह ॥ परार्थत्वादिति ॥ भेदवाक्यानां तु यथा न सिद्धार्थबोधकत्वं तथान्यत्रोपपादितं।

॥ स्मृत्यादिव्यवच्छेदार्थमिति ॥ अनधिगतार्थगन्त्रित्यत्र गन्तृशब्दस्यावगतिसाधनपरत्वादनधिगतार्थावगतिसाधनं प्रमाणमित्युक्तं भवति। तत्र चानधिगतपदाभावे अवगतिपदेन स्मृत्यादिरपि गृह्येत। तथा च तत्साधने संस्कारादावतिव्याप्तिः स्यात्। तन्निवृत्त्यर्थमवगतिपदेन स्मृत्यादिग्रहणं मा भूदित्येतदर्थमनधिगतपदमित्यर्थः। यद्वा अवगतिपदेन ज्ञाततोच्यते तत्साधनत्वं स्मृत्यादेरप्यस्तीति तन्निवृत्त्यर्थमनधिगतपदमित्यर्थः। अर्थशब्देन परमार्थसत्त्वस्य विवक्षितत्वात् तेन शुक्तिरजतादिज्ञानव्यवच्छेद इत्याह ॥ शुक्तिरजतादिज्ञाननिरासायेति ॥ एतदपि स्मृत्यादिव्युदासार्थमितिवद्व्याख्येयं ॥ अर्थस्य फलस्य च निवृत्त्यर्थमिति ॥ अर्थस्यावगम्यत्वात्फलस्य चावगतिरूपत्वाद्गन्तृपदेन तद्व्यवच्छेद इत्यर्थः। करणे कर्तृत्वोपचारेण गन्तृपदेनावगतिसाधनस्य विवक्षितत्वान्न कर्तर्यतिव्याप्तिरित्याह ॥ तस्य चेति ॥ उपलक्षणं चैतत्। नापि साधने असम्भव इत्यपि ग्राह्यं ॥ प्रमाणलक्षणाभावादिति ॥ स्मृत्यादिव्यवच्छेदार्थमित्यस्य यदास्माभिः कृता प्रथमव्याख्या तदा अस्य ग्रन्थस्य यथाश्रुत एवार्थः। यदा तु द्वितीयव्याख्या तदा शास्त्रजनितज्ञाने प्रमाणलक्षणाभावाच्छास्त्रमप्रमाणं अप्रमाणज्ञानजनकं प्रसज्येतेत्यर्थः।

### अद्वैतवादे तन्न्यायेन विषयाभावसमर्थनम्

(टी.) एवमयथार्थपरत्वमन्यथाप्रतिपादकत्वमित्यभिप्रेत्योपपादितं। अधुना विषयप्रयोजनादिरहितत्वमन्यथाप्रतिपादकत्वमभिप्रेत्य तत्सिद्ध्यर्थं पराभिमतं शास्त्रस्य विषयादिकं परन्यायेनापाकरोति

## अज्ञानासम्भवादेव तन्मतमखिलमपाकृतं

तन्मतं तदभिमतं अखिलं विषयादिकमपाकृतं वेदितव्यं। कथं ? उक्तप्रकारेणैव तन्मते अज्ञानासम्भवाद्विषयादेश्चाज्ञानसापेक्षत्वात्। अज्ञातो हि विषयो भवति। अन्यथा अतिप्रसङ्गादिति।

(टी·) एवमज्ञानासम्भवेन विषयं निराकृत्य प्रकारान्तरेण निराचष्टे

मिथ्यात्वे चैक्यस्यातत्वावेदकत्वमागमस्य स्यात्

ऐक्यं हि शास्त्रस्य विषयतया परस्याभिमतं । तत्किमात्मस्वरूपातिरिक्तं ? उत तन्मात्रं ? आद्येऽपि सत्यं मिथ्या वा । नाद्यः अद्वैतहानिप्रसङ्गात् । न द्वितीयः ऐक्यस्य मिथ्यात्वे तत्प्रतिपादकस्य शास्त्रस्यातत्वावेदकत्वं स्यात् । तथा चापसिद्धान्तः स्यात्

ब्रह्मात्मैक्यस्य मिथ्यात्वे भेदसत्यतासिद्धिदोषः

किं च

सत्यता च भेदस्य

परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिना व्याप्तत्वादैक्यस्य मिथ्यात्वे भेदस्य सत्यता च स्यात् । अत ऐक्यमात्मस्वरूपमेवेत्यङ्गीकार्यं । स्वरूपस्य च स्वप्रकाशत्वेन न विषयता सम्भवतीति ।

(मं· टि.) ॥ विषयप्रयोजनादिरहितत्वमन्यथाप्रतिपादकत्वमित्यभिप्रेत्येति॥ लोके हि वैद्यशास्त्रादिकं सति विषयादौ कस्यचिदर्थस्य प्रतिपादकं दृष्टं । इदं त्वन्यथापि विषयाद्यभावेपि प्रतिपादकमित्येवमन्यथाप्रतिपादकत्वादित्यनेन विषयाद्यभावोऽभिप्रेत इति द्रष्टव्यं । यद्वा विषयादिरहितेऽपि तस्मिन्प्रेक्षावतां प्रवृत्तिसिद्धये सामान्यतो विषयादिकमस्तीति प्रतिपादकत्वादित्येवमन्यथाप्रतिपादकत्वादित्यनेन विषयाद्यभावोऽभिप्रेत इति द्रष्टव्यम् ।

॥ अन्ये तु अन्यथा स्वप्रकाशत्वेन सिद्धप्रकारादन्येन प्रकारेण अप्रतिपादकत्वादित्येवमन्यथाऽप्रतिपादकत्वादित्यनेन विषयाद्यभावोऽभिप्रेत इति व्याचक्षते ।

विषयाद्यभावस्य च विमतमनारम्भणीयं निर्विषयत्वात् स्फीतालोकमध्यस्थसमनस्केन्द्रियसंयुक्तघटप्रतिपादकवाक्यवत् , निष्प्रयोजनत्वात् काकदन्तपरीक्षाग्रन्थवच्च इति प्रत्येकं हेतुत्वं द्रष्टव्यं ।

नन्वैक्यस्य मिथ्यात्वं सिद्धं चेत्तेनागमस्यातत्वावदेकत्वमाचार्येणापादितं स्यात् । तदेव कथं ? इत्याशङ्क्य आचार्येण ऐक्यमात्मस्वरूपातिरिक्तं ? उतात्ममात्रं ? आद्ये सत्यं मिथ्या वेति विकल्प्य तन्मात्रपक्षं परिशेषयितुं सत्यत्वपक्षे अद्वैतहानिरित्यभिप्रेत्य मिथ्यात्वपक्षे अतत्वावेदकत्वापादनं कृतं । तेन नापादकासिद्धिरित्याह ॥ ऐक्य हि शास्त्रस्येत्यादिना ॥ न द्वितीय इत्यस्यानन्तरं यत इत्यध्याहर्तव्यं । ततश्च यतोऽपसिद्धान्तः स्यात्तस्मान्न द्वितीय इति योजना ।

ननु परैर्भेदमात्रस्य मिथ्यात्वाङ्गीकाराद्यत्रैक्यस्य मिथ्यात्वं तत्र भेदस्य सत्यत्वमित्यत्र परं प्रति दृष्टान्ताभावात्कथमैक्यस्य मिथ्यात्वेन भेदस्य सत्यत्वापादनमित्याशङ्क्याह ॥ परस्परविरुद्धयोरिति ॥ यत्र परस्परविरुद्धयोरन्यतरस्य मिथ्यात्वं तत्रान्यतरस्य सत्यत्वं । यथा ब्रह्मणि दुःखात्मताया मिथ्यात्वे आनन्दरूपतायाः सत्यत्वमिति सामा-

(मं. टि.) न्यव्याप्तिरस्तीति । आनन्दात्मकतायाश्चासत्यत्वे मोक्षस्यापुरुषार्थत्वं 'आनन्दो ब्रह्म' इत्यादिश्रुतेरतत्वावेदकत्वं च स्यादिति भावः । ननु तर्हि तन्मात्रमिति द्वितीयपक्षोऽस्त्वित्याशङ्क्य तदैक्यस्य स्वप्रकाशात्माभिन्नत्वेन नित्यसिद्धतया अज्ञातत्वाभावेन विषयत्वायोगादाचार्याभिप्रेतो विषयाभावः सिद्ध इत्याह ॥ स्वरूपस्य च स्वप्रकाशत्वेनेति ॥

**पूर्वोत्तरग्रन्थयोः पौनरुक्त्यशङ्का तत्परिहारश्च**

(टी.) **पूर्वमनतिरेकपक्षप्रतिषेधेनातिरेकपक्षमङ्गीकार्यायथार्थप्रतिपादकत्वं समर्थितं । इदानीं तु तद्विपर्ययेण विषयत्वाभावप्रतिपादनमिति भेदः ।**

(मं. टि.) ननु पूर्वमैक्यं स्वरूपातिरिक्तं तदभिन्नं वा । आद्ये मिथ्या सत्यं वा । अभिन्नमित्यत्रापि तन्मात्रं तद्विशेषो वेति विकल्पं हृदि निधायाचार्येण मिथ्येति पक्षे **न हि ब्रह्मात्मैक्यस्ये**त्यनेन शास्त्रस्यायथार्थप्रतिपादकत्वं स्यादित्युक्त्वा, अतिरिक्तं सत्यमिति पक्षे **अद्वैतहानेः स्वरूपातिरिक्ते** इत्यनेनाद्वैतहानिः स्यादित्युक्त्वा तन्मात्रमिति पक्षे **अनितिरेके स्वप्रकाशत्वादि**त्यनेन शास्त्रस्य सिद्धसाधनत्वं स्यादित्युक्त्वा तद्विशेष इति पक्षे **निर्विशेषत्वादात्मन** इत्यपसिद्धान्तमुक्त्वा ऐक्यं दूषितं । इदानीमपि तमेव विकल्पं हृदि निधाय अतिरिक्तं सत्यमिति पक्षे पूर्वोक्ताद्वैतहानिं बहिरेवाभिप्रेत्य, तन्मात्रमिति पक्षेऽपि पूर्वोक्तां सिद्धसाधनतां बहिरेवाभिप्रेत्य, तद्विशेष इति पक्षे तमेऽत्रापसिद्धान्तं बहिरेवाभिप्रेत्य, अतिरिक्तं मिथ्येति पक्षे **मिथ्यात्वे चैक्यस्ये**त्यनेन आगमस्यातत्वावेदकत्वप्रसङ्गमुक्त्वैक्यं दूषितं । तत्र अतत्वावेदकत्वं नाम अयथार्थप्रतिपादकत्वमेव । ततश्च दूषणप्रकारभेदाभावेन पुनरुक्तिरित्याशङ्क्याह ॥ **पूर्वमनतिरेकेति** ॥ पूर्वमन्यथाप्रतिपादकत्वमयथार्थप्रतिपादकत्वमिति विवक्षितत्वा तत्सिध्यर्थमनतिरेकपक्षं अतिरेकेऽपि सत्यत्वपक्षं दूषयित्वा, अतिरिक्तं मिथ्येति पक्षं च परिशेष्यायथार्थप्रतिपादकत्वस्यासिद्धिः परिहृता । इदानीं विषयादिराहित्यमन्यथाप्रतिपादकत्वमित्यभिप्रेत्य तत्सिद्ध्यर्थमतिरिक्तमिति पक्षं अनतिरिक्तत्वेऽपि तद्विशेषत्वपक्षं च दूषयित्वा तन्मात्रत्वपक्षं च परिशेष्य विषयादिशून्यत्वस्यासिद्धिः परिहृता । तेन पर्यवसानभेदेन फलभेदादपुनरुक्तिरित्यर्थः ।

**अद्वैतवादे प्रयोजननिरासः**

(टी.) **एवं विषयं निराकृत्य प्रयोजनं निराकरोति**

## एवमेव प्रयोजनमपि निरस्तं

**यथा अज्ञानासम्भवादज्ञातस्य विषयस्यासम्भवोऽद्वैतवादे एवमेवाज्ञानासम्भवादेव शास्त्रस्य प्रयोजनमपि निरस्तं वेदितव्यं । मोक्षो हि प्रयोजनं । स चाज्ञाननिवृत्तिरूपः । यदाह**

**अविद्यास्तमयो मोक्षः सा संसार उदाहृतः ॥ इति ।**

**न चाज्ञानासम्भवे तन्निवृत्तिरुपपद्यते । नन्वेतत् अज्ञानासम्भवादेव इत्यनेनैव वाक्येन सिद्धं । तत्किमर्थोऽयं ग्रन्थः? सत्यं, तथापि तस्यैव प्रपञ्चोऽयमित्यदोषः । प्रपञ्चनं च प्रकारान्तरेण प्रयोजननिरासप्रस्तावायेति ।**

**आत्मैवाज्ञानहानिरितिपक्षनिरासः**

**प्रकारान्तरेण प्रयोजनं निराकरोति**

स्वरूपत्वान्मोक्षस्य पूर्वमेव सिद्धत्वात्

(टी.) प्रयोजनं निरस्तमिति सम्बन्धः । अज्ञाननिवृत्तिलक्षणो हि मोक्षः परेण आत्मस्वरूपतयैवेष्टः । यथाह 'आत्मैवाज्ञानहानिः' इति । आत्मस्वरूपं च प्रागेव शास्त्रप्रवृत्तेः सिद्धमेवेति कथं तत् प्रयोजनं स्यात् ? न हि कश्चित्सिद्धस्य साधनाय यतते । नापि तत्साधनार्हं ।

(मं. टि.)॥ न चाज्ञानासम्भवे तन्निवृत्तिरिति ॥ प्रध्वंसरूपाया निवृत्तेः प्रतियोग्यभावे अयोगादिति भावः ॥ नन्वेतदज्ञानासम्भवादेवेत्यनेनैवेति ॥ तत्राभिमतवाचिना मतशब्देन प्रयोजनस्यापि विवक्षितत्वादित्यर्थः । न हि कश्चित् इत्यनेनासिद्धसिद्धेरेव प्रयोजनत्वान्न सिद्धसिध्यर्थं प्रेक्षावत्प्रयत्नो युक्त इति मुमुक्षूणां मोक्ष सिद्धयर्थं श्रवणादौ प्रवृत्तिरयुक्ता स्यादित्युक्तं । नापि तत्साधनार्हं इत्यनेन तु प्रयोजनमननुसन्धाय मुमुक्षूणां प्रवृत्तावपि प्रागभावप्रतियोगिन एवोत्पादनापरपर्यायसाधनार्हत्वान्न सिद्धस्य ब्रह्मणः साधनार्हत्वमस्तीत्युक्तमिति भेदः ।

ज्ञात आत्मैवाज्ञानहानिरितिपक्षनिरासः

(टी.) 'ज्ञात आत्मैवाज्ञानहानिर्नात्ममात्रं' इति कश्चित् । तदसत् आत्मनो ज्ञानकर्मतानङ्गीकारात् । वृत्तिविषयतास्तीति चेत् । तथापि वृत्तिविशिष्ट आत्मा मोक्ष इत्युक्तं स्यात् । तथा च वृत्तेर्निवृत्तौ मोक्षनिवृत्तिप्रसङ्गः । वृत्त्युपलक्षित आत्मा मोक्ष इति चेत् तथापि जीवन्मुक्तौ प्रसङ्ग इत्येषा दिक् ।

(मं. टि.) ननु नात्ममात्रमज्ञाननिवृत्तिः किं तु ज्ञातः । एवं च ज्ञातत्वस्य शास्त्रप्रवृत्तेः प्रागसिद्धत्वात्तदुपरक्तात्मनः शास्त्रप्रवृत्तेः प्रागसिद्धिरिति न पूर्वोक्तदोष इति शङ्कते ॥ ज्ञात आत्मैवाज्ञानहानिरिति ॥ ज्ञातत्वं नाम चिद्रूपज्ञानविषयत्वं वा वृत्तिरूपज्ञानविषयत्वं वा इति विकल्प्य आद्यं दूषयति ॥ आत्मनो ज्ञानेति ॥ द्वितीयं शङ्कते ॥ वृत्तीति ॥ अस्तु वृत्तिविषयत्वरूपं ज्ञातत्वं तथापि 'ज्ञातो घटः' इत्यत्रेव 'ज्ञात आत्मा' इत्यत्रापि विषयत्वेनात्मसम्बद्धं ज्ञानमज्ञातात्पदार्थादात्मानं व्यावर्तयतीति व्यावर्तकत्वमङ्गीकार्यं । तत्र वृत्तिरूपं व्यावर्तकं विशेषणं ? उपलक्षणं वा ? आद्ये वृत्तिविशिष्ट आत्माऽज्ञाननिवृत्तिरूपो मोक्ष इत्युक्तं स्यादित्याह ॥ तथापीति ॥ दूषयति ॥ तथा चेति ॥ विशेषणनिवृत्तौ विशिष्टनिवृत्तिनियमाद्विशेषणीभूतवृत्तिनिवृत्तौ विशिष्टात्मरूपो योऽज्ञानहान्याख्यो मोक्षस्तस्यापि निवृत्तिः स्यादित्यर्थः । ननु वृत्तिरुपलक्षणमिति द्वितीयः पक्षोऽस्तु । तत्र वृत्त्युपलक्षित आत्मा मोक्षः । न चोपलक्षणनिवृत्तावुपलक्षितनिवृत्तिः । पाकक्रियानिवृत्तावपि पाचकानुवृत्तिदर्शनात् । यथाह

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।
उपलक्षणहानेऽपि स्यान्मुक्तिः पाचकादिवत् ॥ इति ।

तथा च न कोपि दोष इति भावेन शङ्कते ॥ वृत्त्युपलक्षित इति ॥ दूषयति ॥ तथापीति ॥ वृत्त्युपलक्षित आत्माऽज्ञानहानिश्चेत् जीवन्मुक्त्यवस्थायामप्यज्ञाननिवृत्तिप्रसङ्गः । तत्र तत्वविषयकापरोक्षवृत्तेः सत्वात् । यथोक्तं

उत्पन्नात्मावबोधस्य जीवन्मुक्तिः प्रसिद्ध्यति । इति ।

(मं. टि.) न चेष्टापत्तिः। जीवन्मुक्तस्याज्ञानानुवृत्त्यभावे स्वदेहादिजगदवभासाभावेन तस्य भिक्षाटनादौ प्रवृत्त्यनुपपत्तरिति भावः।

**वृत्त्युपलक्षित आत्मा अज्ञानहानिरिति पक्षे जीवन्मुक्तस्य निःशेषाज्ञाननिवृत्त्यापादनम्**

ननु जीवन्मुक्तस्य शरीरादिप्रतिभासदर्शनेन निश्शेषाविद्यानिवृत्त्यभावेऽपि प्रपञ्चे परमार्थसत्यत्वादिभ्रम-हेतुरविद्याकारो निवर्तत एवेतीष्टापत्तिरिति शङ्कापरिहारो दिक्पदसूचितः। परिहारप्रकारस्तु निःशेषाविद्यानि-वृत्तिर्जीवन्मुक्त्यवस्थायामापाद्यते। तस्यापि वृत्त्युपलक्षितात्मस्वरूपत्वात्। तस्य जीवन्मुक्त्यवस्थायामपि भावात्। न च वाच्यं प्रारब्धकर्मविनाशविशिष्टो वृत्त्युपलक्षित आत्माऽज्ञाननाशः। न च जीवन्मुक्त्यवस्थायां प्रारब्धकर्म-विनाशविशिष्ट आत्मास्ति। तदा प्रारब्धकर्मणां सत्वादिति। तथात्वे वृत्त्युपलक्षितग्रहणवैयर्थ्यापातात्। प्रारब्धकर्म-विनाशविशिष्टस्यात्मनः प्रागसत्वेन साध्यत्वोपपत्तश्च साध्यत्वानुपपत्तिदोषपरिहारस्य कर्मविनाशविशिष्टग्रहणेनैव कृत-त्वेन वृत्त्युपलक्षितपदस्याकिञ्चित्करत्वात्। किं च प्रारब्धकर्मविनाशस्य मिथ्यात्वे तन्निवृत्त्यवश्यम्भावेन पुनः प्रार-ब्धकर्मोन्मज्जनप्रसङ्गः। सत्यत्वे अद्वैतहानिः। ब्रह्मस्वरूपत्वे जीवन्मुक्त्यवस्थायामपि तत्प्रसङ्ग इति। न च वृत्त्यु-पलक्षित इत्यनेन अवर्तमानया वृत्त्योपलक्षितत्वं विवक्ष्यते। एवं च जीवन्मुक्त्यवस्थायां न प्रसङ्गः। तदा वृत्तेर्वर्त-मानत्वादिति वाच्यं। जीवन्मुक्तस्य सुषुप्त्यवस्थायां वृत्त्यभावेन निःशेषाविद्यानिवृत्तिप्रसङ्गादिति। प्रपञ्चस्तु सत्त-र्कविलासे अस्माभिः कृतो द्रष्टव्यः।

**अज्ञानहानेः पञ्चमप्रकारतापक्षनिरासः**

(टी.) अपर आह, नाविद्यास्तमयलक्षणं मोक्षमात्मस्वरूपमाचक्ष्महे। किं नाम? अन्यमेव। न च वाच्यं तस्य सत्त्वे अद्वैतहानिः, असत्त्वे तदभावः, सदसत्त्वं विरुद्धं, सदसद्विलक्षणत्वेऽज्ञाननिवृत्तित्वानु-पपत्तिः प्रतियोगितन्निवृत्त्योर्वैलक्षण्यस्यावश्यकत्वादिति। पञ्चमप्रकारताभ्युपगमात्। यथोक्तं,

> न सन्नासन्न सदसन्नानिर्वाच्यश्च तत्क्षयः।
> यक्षानुरूपो बलिरित्याचार्याः प्रत्यपीपदन्॥ इति।

तत्राह

**अज्ञानासम्भवेन चतुर्थप्रकाराभावात्पञ्चमप्रकारतापि निरस्ता**

मोक्षस्येत्यनुवर्तते। अज्ञानस्य हि न सत्वं अद्वैतभङ्गात्। नाप्यसत्वं प्रतीतिविरोधात्। न च सदसत्त्वं विरोधात्। अतश्चतुर्थप्रकारोऽनिर्वचनीयत्वमङ्गीकार्यम्। न च तन्निवृत्तिरपि तादृशी सम्भ-वतीत्येवं मोक्षस्य पञ्चमप्रकारता परेणाङ्गीकृता। स्यादियं यद्यज्ञानमेव परमते स्यात्। न च तत्सम्भ-वति। सिद्धत्वात्स्वरूपस्य इत्यादिना तदसम्भवस्योक्तत्वात्। अतोऽज्ञानासम्भवेन चतुर्थप्रकारस्य सुतरामभावात् तेन कल्प्यमाना मोक्षस्य पञ्चमप्रकारतापि पूर्वोक्तरीत्यैव निरस्ता।

(मं. टि.) एवं तावदात्मैवाज्ञानहानिरिति इष्टसिद्धिकारादिमतानुसारितत्त्वप्रदीपिकाकारादिमतं दूषयित्वा 'सा आत्मातिरिक्तः पञ्चमप्रकारो मोक्षः' इति आनन्दबोधादिमतदूषणपरत्वेन अज्ञानासम्भवादेव चतुर्थप्रकाराभावादिति मूलग्रन्थं व्याख्यातुं तन्मतमाशङ्कते ॥ अपर आहेति ॥ असत्त्वे तदभाव इति ॥ अज्ञाननिवृत्तिरूपस्य मोक्षस्य शशशृङ्गवदत्यन्तासत्त्वे मोक्षस्य स्वरूपेणैवाभावादनिर्मोक्षप्रसङ्ग इत्यर्थः ॥ यक्षानुरूपो बलिरिति ॥ लोके हि, भावस्याभावो निवृत्तिः अभावस्य च भावो निवृत्तिः भावाभावविलक्षणस्य त्वज्ञानस्य निवृत्तिर्यादृशो यक्षस्तादृशो बलिरिति पञ्चमप्रकारेत्यर्थः ॥ प्रतीतिविरोधादिति ॥ अपरोक्षप्रतीतिविरोधादित्यर्थः ।

(टी.) अथ वा अज्ञाननिवृत्तिर्यद्यात्मातिरिक्ता पञ्चमप्रकारोऽङ्गीक्रियते तदा वक्तव्यं । किमज्ञानकार्यं ? न वा ? इति । न तावद्द्वितीयः आत्मातिरिक्तस्याज्ञानतत्कार्ययोरन्यतरत्वावश्यम्भावाभ्युपगमात् ।

### अज्ञाननिवृत्तेरज्ञानकार्यत्वनिरासः

आद्ये बाधकमाह ॥ अज्ञानासम्भवेनेति ॥ यद्यज्ञाननिवृत्तिरज्ञानकार्या तदा अज्ञानस्य तदानीमवस्थानं स्यात् । न ह्युपादानेन विनोपादेयस्य स्थितिरस्ति । अज्ञाननिवृत्तावज्ञानासम्भवात् । तथा चाज्ञाननिवृत्तेरुभयथाप्यसम्भवेन स्वरूपमेव नास्ति । पञ्चमप्रकारता तु दूरनिरस्तेति । किं च घटादीनां सत्त्वं, शशविषाणादीनामसत्त्वं, घटादीनामेव देशकालादिव्यवस्थया सदसत्त्वमिति प्रकारत्रयस्यैवानुभवाच्चतुर्थप्रकार एव नास्ति । तदभावात्पञ्चमप्रकारता तु मोक्षस्याष्टमरस इवात्यन्तासम्भाविनीत्याह ॥ चतुर्थप्रकारेति ॥

(मं. टि.) ननु अज्ञानासम्भवेन चतुर्थप्रकाराभावात् इति ग्रन्थो यद्यज्ञानस्य स्वरूपत एवासम्भवेन मोक्षनिराकरणार्थः तर्हि अज्ञानासम्भवादेव तन्मतमखिलमपाकृतम् इत्यनेन सह पुनरुक्तिः स्यात् । अज्ञानासम्भवस्य वादान्तरसाध्यत्वात्सापेक्षत्वं च स्यादिति पूर्वत्रापरितोषात् अन्यथा व्याचष्टे ॥ अथ वेति ॥ अभावज्ञानस्य प्रतियोगिज्ञानाधीनत्वाद्विकल्पसमये पश्चान्निर्दिष्टमप्यज्ञानकार्यं नेति पक्षं पराभिप्रेतत्वात् आद्यपक्षोत्तरत्वेन अज्ञानासम्भवेन इति मूलग्रन्थावयवं व्याख्यातुं चादौ दूषयति ॥ न तावदिति ॥ तत्र हेतुः आत्मातिरिक्तस्य इति । यद्यपि पदार्थो हि त्रिप्रकारः आत्मा अज्ञानं तत्कार्यं चेति । तथा च चतुर्थप्रकाराभावादात्मातिरिक्तस्य मोक्षस्य अज्ञानतत्कार्ययोरन्यतरत्वनियमात्तत्र चाज्ञाननिवृत्तेरज्ञानत्वायोगात्परिशेषादज्ञानकार्यत्वावश्यम्भावादज्ञानकार्यं नेति पक्षो न युक्त इत्यर्थः, इत्यनेन प्रकारेण चतुर्थप्रकाराभावात् इत्येतदेव द्वितीयपक्षदूषणपरतया व्याख्यातुं शक्यते तथापि एवं व्याख्याने प्रतिपत्तिगौरवप्रसङ्गात् टीकाकारेण द्वितीयपक्षो बहिरेव दूषित इति द्रष्टव्यं ।

### आत्मातिरिक्तस्य पररीत्या अविद्यातत्कार्यान्यतरत्वसमर्थनम्

नन्वात्मातिरिक्तस्याज्ञानतत्कार्ययोरन्यतरत्वं नाभ्युपगम्यते अनिर्वचनीयस्यैव तदभ्युपगमादिति चेन्न । पञ्चमप्रकारायामप्यविद्यानिवृत्तौ सदसद्विलक्षणत्वरूपानिर्वचनीयत्वस्यापि सत्त्वात् । ननु पञ्चमप्रकारे सदसद्विलक्षण-

(मं. टि.) वैलक्षण्यमस्तीति चेत्किं तावता। न हि [1]सदसद्विलक्षणवैलक्षण्यराहित्यमप्यनिर्वचनीयत्वलक्षणान्तर्गतं। तथात्वे तुशुक्तिरूप्यादौ घटादौ च सत्ववत्सदसद्विलक्षणत्वमपि मिथ्येति वदता त्वया तत्र सदसद्विलक्षणत्ववत्सदसद्विलक्षणवैलक्षण्यस्याप्यङ्गीकारेण लक्षणस्यासम्भवप्रसङ्गात्। ननु बाध्यत्वमनिर्वचनीयत्वं। तच्च बाधकज्ञानानन्तरभाविन्यामविद्यानिवृत्तौ नास्तीति चेत् यदि परमार्थसत्त्वाकारेण प्रतिपन्नोपाधौ निषिध्यमानत्वं बाध्यत्वं तर्हि तदविद्यानिवृत्तावप्यस्ति। न ह्यविद्यानिवृत्तिः परमार्थसती सदद्वैतव्याकोपप्रसङ्गात्। पञ्चमप्रकारत्वहानिप्रसङ्गाच्च। अथ स्वरूपेणैव प्रतिपन्नोपाधौ निषिध्यमानत्वं बाध्यत्वं। तच्चाविद्यानिवृत्तौ नास्तीति चेन्न। शुक्तिरूप्यादेरप्यविद्याकार्यस्य प्रतीतिवेलायामसद्विलक्षणमद्रूपेण विद्यमानतया स्वरूपेण निषेद्धुमशक्यतया बाध्यत्वलक्षणस्यासम्भवप्रसङ्गात्। किं चात्मातिरिक्तत्वादेवाविद्यानिवृत्तेः सदसद्विलक्षणत्वरूपं बाध्यत्वरूपं वा अनिर्वचनीयत्वं स्यात्। न चानिर्वचनीत्वे निवृत्तिमत्त्वं प्रयोजकं। अविद्यानिवृत्तेरात्मातिरिक्तपदार्थत्वादेव निवृत्तेरपि प्रसङ्गात्। न च निवृत्तेर्निवृत्तावनवस्थाप्रसङ्गः प्रतियोग्युन्मज्जनप्रसङ्गश्च। अनयोरपि दोषयोर्मयैवापाद्यमानत्वात्। तव पक्षे घटादिनिवृत्तेर्निवृत्तावप्यनवस्थाभाववत्प्रतियोग्यनुन्मज्जनवच्चात्राप्युपपत्तेः। न च परमते घटादिनिवृत्तेरप्यनिवृत्तिः। चरमसाक्षात्कारात्प्राक् मुद्गरप्रहारादिना जाताया व्यावहारिक्या घटादिनिवृत्तेर्घटादिवच्चरमसाक्षात्कारेण निवृत्त्यवश्यम्भावात्।

एतेन ज्ञाननिवर्त्यत्वमनिर्वचनीयत्वं। तदेव चाविद्यातत्कार्ययोरन्यतरत्वे प्रयोजकं। न त्वात्मातिरिक्तत्वं। ज्ञाननिवर्त्यत्वं चाविद्यानिवृत्तौ नास्तीति निरस्तं। आत्मातिरिक्तत्वादेव ज्ञाननिवर्त्यत्वस्याप्यापादितत्वात्।

किं च आत्मातिरिक्ता अविद्यानिवृत्तिर्यद्यविद्यातत्कार्ययोरन्यतरा न स्यात् तदा अद्वैतहानिः। न च तस्याः परमार्थसत्त्वाभावादद्वैतव्याकोपो नास्तीति वाच्यं। असद्विलक्षणायास्तस्या अविद्यातत्कार्ययोरन्यतरत्वाभावे परमार्थसत्वावश्यम्भावात्। न च परमार्थसत्वे आत्मत्वं प्रयोजकं। अविद्यातत्कार्ययोरन्यतरत्वाभावेन आत्मत्वस्याप्यापादयितुं शक्यत्वात्। किं च अविद्यानिवृत्तेरव्यावहारिकत्वादप्रातिभासिकत्वाच्च पारमार्थिकत्वावश्यम्भावः। तस्मादद्वैतहानिपरिहारार्थमविद्यातत्कार्ययोरन्यतरत्वमभ्युपगन्तव्यमिति युक्त **अविद्यातत्कार्ययोरन्यतरत्वावश्यम्भावाभ्युपगमात्** इति।

आद्यपक्षोत्तरत्वेन **अज्ञानासम्भवात्** इत्येतं वाक्यावयवं व्याचष्टे॥ **आद्य इति**॥ ननु उपादानेन बिनोपादेयस्य स्थितिर्नास्ति चेन्मोक्षावस्थायामपि अज्ञानमस्त्वित्यत आह॥ **अज्ञाननिवृत्ताविति**॥ अज्ञाननिवृत्तौ च अज्ञानासम्भवादेवेति एवशब्दाध्याहारेण योज्यम्। **चतुर्थप्रकाराभावात्** इत्येतं वाक्यावयवं दूषणान्तरपरतया व्याचष्टे॥ **किं चेत्यादिना**॥ **घटादीनामेव देशकालेति**॥ ननु यथा घटादेः स्वदेशादौ सत्वं देशान्तरादावसत्वमिति सदसत्वलक्षणस्तृतीयः प्रकारः एवं स्वदेशादौ असद्विलक्षणत्वं देशान्तरादौ तु सद्विलक्षणत्वमिति सदसद्विलक्षणत्वलक्षणश्चतुर्थप्रकारोऽपि देशकालादिव्यवस्थया अस्त्येवेति चेन्मैवं। अभावाभावस्य भावत्वेन स्वदेशादौ सत्वा-

---

[1] सदसद्विलक्षणवैलक्षण्यराहित्यमप्यनिर्वचनीयलक्षणान्तर्गतं, इति पाठेन भाव्यमिति भाति.

(मं. टि.) तिरिक्तस्यासद्विलक्षणत्वस्य देशान्तरादौ चासत्वातिरिक्तस्य सद्विलक्षणत्वस्याननुभवात् । अत एव प्रकार-त्रयस्यैवानुभवात् इत्युक्तं ।

मायावादे अधिकार्यभावविवरणम्

(टी.) अज्ञानासम्भवादधिकारी च निरस्त इत्युक्तं । तद्विवरणार्थमाह

विषयप्रयोजनाभावादेवाधिकारी च

निरस्त इति सम्बन्धः । यो हि यत्प्रयोजनमर्थयमानो यं विषयं जिज्ञासते स एव तत्राधिकारी भवति । प्रकृते चाज्ञानासम्भवेन विषयप्रयोजने निराकृते इति तदभावादेव तदविनाभूतोऽधिकारी च निरस्तो वेदितव्यः ।

मायावादे सम्बन्धाभावोपपादनम्

अज्ञानासम्भवात्सम्बन्धाभाव उक्तः । तमुपपादयति

तदभावादेव सम्बन्धोऽपि

सतामेव हि सम्बन्धो भवति । अज्ञानासम्भवेन विषयाद्यभावश्चोपपदितः । अतो विषयाद्यभा-वात्सम्बन्धोऽपि निरस्त एवेति ।

(मं. टि.) ॥ निरस्त इत्युक्तमिति ॥ अज्ञानासम्भवादेव तन्मतमखिलमपाकृतं इत्यत्रेत्यर्थः ॥ तद-भावादेवेति ॥ विषयप्रयोजनयोः प्रत्येकमधिकारिणं प्रति व्यापकत्वाद्विषयप्रयोजनाभावयोः प्रत्येकमधिकार्यभावे हेतुत्वं द्रष्टव्यं ॥ ॥ सम्बन्धोऽपि निरस्त इति ॥ अधिकारिविषयादेर्ज्ञातृज्ञेयभावादिसम्बन्धो निरस्त इत्यर्थः ।

श्रुतिस्मृतिभ्यां विष्णोः सर्वोत्तमत्वस्यैव सर्वशास्त्रार्थत्वसमर्थनम्

(टी.) एवं वेदादेर्जीवब्रह्मणोरेकत्वप्रतिपादकत्वे अनारम्भणीयत्वप्रसङ्गान्न तत्प्रतिपादकत्वमि-त्युक्तं । इदानीं परमाप्ततमेन भगवता श्रुत्या च विष्णोः सर्वोत्तमत्वस्यैव सर्वशास्त्रप्रतिपाद्यतया अभि-हितत्वाच्च तदेव वेदादिप्रतिपाद्यं नात्मब्रह्मैक्यमित्याह

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।

इमौ इति प्रमाणसिद्धतां सूचयति । पुरुषौ चेतनौ । एवशब्दस्य द्वावेव इति सम्बन्धः । तद्धटनाय परमपुरुषं व्यावर्तयितुं लोके इत्युक्तं ।

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

तदनेनोत्तमपुरुषनिरूपणस्यापेक्षितं पुरुषनिरूपणं कृतं । ततः किं ? इत्यत आह

उत्तमः पुरुषस्त्वन्यः........................ ।

(टी.) अन्यः क्षराक्षराभ्यां। न त्वनयोरेवैकः पुरुषोत्तमः कल्प्यत इति भावः। अन्यस्योत्तमपुरुषत्वे श्रुत्यादिसंमतिमाह

........................परमात्मेत्युदाहृतः ।

आत्मशब्दोऽत्र चेतनपर्यायः। युक्तिं चाह

यो लोकत्रयमाविश्य बिभर्ति............ ।

यो हि यस्य भर्ता स तस्मादुत्तमो युक्तः। आविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत आह

......................................अव्ययः........ ।

तत्कथं? ऐश्वर्यादित्याह

..........................................ईश्वरः ।

स च कः? इत्यतोऽहमेवेति सप्रमाणकमाह

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

क्षरं चातीत इति चशब्दान्वयः। लोकशब्देन पौरुषेयागम उच्यते। तात्पर्यद्योतनाय वेतुः फलमाह

यो मामेवमसंमूढो जानाति पुरुषोत्तमं ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥

एवमित्यस्य व्यावृत्तिनिरासः असंमूढ इति। न पुनरश्वकर्णादिवत्सञ्ज्ञामात्रत्वेनेत्यर्थः। स सर्ववित् अस्यैव सर्वशास्त्रार्थत्वात्। सर्वभावेन सर्वप्रकारेण। एतच्च न यस्मै कस्मै वाच्यमित्याह

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।

स सर्वविदित्याद्युक्तं। ततः किं? इत्यत आह

एतद्बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥

बुद्धिमान् अपरोक्षज्ञानी। कृतकृत्यो मुक्तः।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥

महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥

(टी.) आत्मा महानिति सामानाधिकरण्यं । न परं किञ्चित् । किन्तु ? सा काष्ठा स एवावधिः । कुत एतत् ? सा परा गतिः गम्यत इति गतिः । एवं सर्वशास्त्रैः प्रतिपाद्यत इत्याह ।

भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति

सर्वगुणेषु भूमगुणस्य ज्यायस्त्वस्य मुख्यतो वेदप्रतिपाद्यत्वमिति सूत्रार्थोऽत्राभिमतः ।

इति विष्णोः सर्वोत्तमत्वमेव शास्त्रार्थत्वेन भगवता श्रुत्या चाभिहितं

(मं. टि.) एवं युक्तिबलात्पराभिप्रेतं विषयादिकं निराकृत्येदानीमागमबलादपि पराभिप्रेतं विषयादिकं निराकृत्य स्वाभिप्रेतं विषयादिकं समर्थयते भगवानाचार्य इत्याह ॥ एवं वेदादेरित्यादिना ॥ 'क्षरश्चाक्षर एव चेति द्वौ' इति मूलग्रन्थ इति शब्दोऽध्याहार्यः ॥ तद्घटनायेति ॥ लोके इत्यनुक्तौ क्षराक्षरव्यतिरेकेणेश्वरस्यापि भावात् द्वावेवेत्यवधारणानुपपत्तिः । अत ईशितव्यवर्गवाचिलोकशब्दप्रयोग इत्यर्थः। क्षरः सर्वाणीतिपादद्वयस्यायमर्थः । सर्वाणि भूतानि ब्रह्मादयो जीवाः क्षरः शरीरक्षरणात् । कूटस्थः पुरुषो महालक्ष्मीः अक्षरः शरीरक्षरणाभावादिति ।

॥ न त्वनयोरेवैकः पुरुषोत्तमः कल्प्यत इति ॥ यद्यपि पुरुषोत्तम इत्यत्र न समानाधिकरणसमासः 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति सूत्रेण प्रथमानिर्दिष्टस्योत्तमशब्दस्य पूर्वनिपातप्रसङ्गात् । नापि षष्ठीसमासः 'न निर्धारणे' इति समासप्रतिषेधात् । तथापि 'पञ्चमी भयेन' इत्यत्र 'पञ्चमी' इति योगविभागाद्वा 'कर्तृकरणे कृता बहुलं' इति बहुलग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वाद्बहुलग्रहणेन वा 'ग्रामान्निर्गतः' इत्यादाविव पञ्चमीसमासो द्रष्टव्यः। अत एव च अक्षरादपि चोत्तमः इति निर्देशो घटते ।

अन्ये तु 'यतश्च निर्धारणं' इति निर्धारणे सप्तम्या अपि विधानात्तस्याश्च समासाप्रतिषेधात्सप्तमीसमास इत्याहुः ।

॥ आत्मशब्दोऽत्रेति ॥ परमात्मा व्यवस्थितः, आत्मा नारायणः परः इत्यादिश्रुत्या नारायणपरतया प्रयुक्ते परमात्मशब्दे आत्मशब्दश्चेतनपर्यायः परमशब्दश्चोत्तमपर इति प्रसिद्धमेव । तथा च परमात्मशब्द एव

(मं. टि.) चेतनोत्तमत्वरूपपुरुषोत्तमत्वं तस्य वदतीत्यर्थः ॥ **भर्तेति** ॥ धारणपोषणकर्तेत्यर्थः ॥ **क्षरं चातीत इति चशब्दान्वय इति** ॥ अपिशब्दमात्रस्य त्वक्षरादप्युत्तम इत्यन्वय इत्यर्थः । ननु क्षराक्षरातीतत्वरूपेणोक्तेन प्रकारेण कथं पुरुषोत्तमत्वं? क्षराक्षरातीतत्वे मानाभावात् । न च पुरुषोत्तमशब्दावयवशक्तिपर्यालोचनया तत्सिद्धिरिति वाच्यं । तस्याश्वकर्णादिशब्दवत्सञ्ज्ञात्वेनाप्युपपत्तेः । तस्मात् एवं इत्येतन्नोपपद्यत इत्याशङ्क्याह ॥ **एवमित्यस्येति** ॥

ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात्क्षराः ।
लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः ॥

इत्यादिश्रुतिसिद्धत्वादेवाश्वकर्णादिशब्दवत्सञ्ज्ञामात्रमिति संमोहवर्जित इति वदता असंमूढपदेन **एवमित्यस्य** व्यावृत्तिनिरासः कृतः इत्यर्थः । नन्वत्र विष्णोः सर्वोत्तमत्वमेवोच्यते । न तु श्रुत्यादेस्तत्र तात्पर्यमित्याशय आत्मपुरुषोत्तमत्वज्ञस्य सर्वविदित्यनेन सर्वज्ञत्वं तावदुच्यते । न च पुरुषोत्तमत्वज्ञानमात्रेणेश्वरवन्मुख्यं सर्वज्ञत्वं युक्तं । पुरुषोत्तमत्वस्य सर्वात्मकत्वाभावात् । तथा च मुमुक्षुणा ऋगादिशास्त्रार्थस्यैव ज्ञातव्यत्वात् पुरुषोत्तमत्वस्य च सर्वशास्त्रार्थत्वात्तज्ज्ञानेन ज्ञातव्यं सर्वं ज्ञातं भवतीत्यनेन प्रकारेण पुरुषोत्तमत्वज्ञस्य सर्वज्ञत्वं वक्तव्यम् । तथा च सर्वविदित्यनेन पुरुषोत्तमत्वस्य सर्वशास्त्रार्थत्वसिद्धिरिति भावेनाह ॥ **अस्यैव सर्वशास्त्रार्थत्वादिति** ॥ **ततः किमितीति** ॥ यो मामेवमित्यादिना फलं वक्तुमुपक्रान्तं । सर्वविदित्यादिना च सर्वशास्त्रार्थज्ञानपूर्विका भगवत्सेवोक्ता । ततश्च तस्याः स्वतः फलरूपत्वाभावात् फलान्तरं वक्तव्यमिति भावः ॥ **बुद्धिमानपरोक्षज्ञानीति** ॥ परोक्षज्ञानस्य बुद्ध्वा इत्यनेनैवोक्तत्वादित्यर्थः ।

॥ **इन्द्रियेभ्यः परा ह्यर्थाः** इतिश्रुताविन्द्रियादिशब्दा अभिमान्यधिकरणन्यायेनेन्द्रियाद्यभिमानिदेवतापरा इति द्रष्टव्यम् ॥ **आत्मा महानिति सामानाधिकरण्यमिति** ॥ बुद्धेरात्मा परः इति **आत्मनो महान्परः** इति आत्मशब्दावृत्त्या परशब्दावृत्त्या च आत्मा महानित्यनयोर्वैयधिकरण्यं नाशङ्कनीयं बुद्धितत्त्वाभिमानिन्याः सरस्वत्या अनन्तरं महत्तत्त्वाभिमानिचतुर्मुखब्रह्मणोऽर्वाक् आत्मशब्दाभिधेयाया अन्यस्या देवताया अभावादित्यर्थः

**'इन्द्रियेभ्यः' इति श्रुतिगतपुरुषशब्दस्य नारायणपरत्वसमर्थनम्**

अस्यां च श्रुतौ पुरुषशब्दो नारायणपरः **पुरुषो ह वै नारायणः, सहस्रशीर्षा पुरुषः** इत्यादौ तत्प्रयोगात् । अस्यामेव श्रुतौ 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद' इति पूर्वत्र विष्णोः प्रस्तुतत्वाच्च ।

नन्वत्र **सा काष्ठा** इत्यनेन विष्णोः सर्वोत्तमत्वमेवोक्तं । न तु 'तस्योत्तमत्वं सर्वशास्त्रार्थः' इति । तत्कथमियं श्रुतिर्विष्णोः सर्वोत्तमत्वमेव सर्वशास्त्रार्थ इत्यस्मिन्नर्थे प्रमाणीक्रियते ? इत्याशङ्क्य **सा परा गतिः** इत्यनेन सर्वोत्तमत्वमेव सर्वशास्त्रार्थ इत्युक्तमिति दर्शयितुं 'श्रुतौ सा काष्ठेति स्वोक्तार्थे सा परा गतिरिति हेतुकथनं । न तु सा परा गतिः इत्येतदपि सर्वोत्तमत्वमात्रं प्रतिपादयति । सा काष्ठेत्यनेन पुनरुक्तिप्रसङ्गात्' इति भावेन सा परा गतिरित्येतद्व्याख्यातुं तदवतारयति ॥ **कुत एतदिति** ॥ एतदवधित्वं कुतः? इत्यर्थः । अत्र गतिशब्दः कर्मसाधन

(मं. टि.) इत्याह ॥ **गम्यत इति** ॥ गम्यत इति व्युत्पत्त्या लब्धं गतिशब्दार्थमाह ॥ **एवं शास्त्रैरिति** ॥ यद्यपि कर्मसाधनेन गतिशब्देन ज्ञेयत्वमेवोक्तं तथापि शास्त्रैकसमधिगम्यस्यान्येन ज्ञेयत्वानुपपत्तेः शास्त्रैः प्रतिपाद्यत इत्युक्तं एवं गतिशब्देन शास्त्रप्रतिपाद्यत्वमात्रे लब्धेऽपि परा गतिः परं प्रतिपाद्यमिति प्रतिपाद्यत्वस्य परशब्देनोत्कृष्टताय उक्तत्वात् उत्कृष्टत्वस्य चैकदेशप्रतिपाद्यत्वेऽनुपपत्तेः सर्वशास्त्रप्रतिपाद्यत्वसिद्धिरिति भावेन सर्वग्रहणं। **एवं परा गति** रित्यनेन सर्वशास्त्रप्रतिपाद्यत्वमात्रे लब्धेऽपि केन प्रकारेण **परा गतिः** सर्वशास्त्रप्रतिपाद्यमिति जिज्ञासायां **स काष्ठेति** पूर्वप्रस्तुतमवधित्वलक्षणं सर्वोत्तमत्वमेव प्रकारो भवतीति भावेनोक्तं ॥ **एवमिति** ॥ एतदवधित्वं कुतो हेतो इतिप्रश्नस्य 'एवं सर्वशास्त्रैः प्रतिपाद्यत' इत्येतस्माद्धेतोरेतदवधित्वमित्युत्तरं दत्तं ।

ननु भूम्नः क्रतुवज्ज्यायस्त्वमितिसूत्रं ' पूर्णत्वरूपस्य भूमगुणस्य पूर्णानन्दः पूर्णज्ञान इति सर्वगुण-विशेषणतया सर्वोपास्यत्वलक्षणं ज्यायस्त्वं विवक्ष्यते ' इति भाष्ये व्याख्यातं । तथा च सर्वोत्तमत्वरूपस्य पूर्ण-त्वाख्यभूमगुणस्य सर्ववेदप्रतिपाद्यत्वे कथमिदं सूत्रं प्रमाणीक्रियते इत्याशङ्क्य प्रकारान्तरेण सूत्रव्याख्यानं विव-क्षित्वा भाष्यकारेण स्वोक्तार्थे सूत्रं प्रमाणीकृतमित्याह ॥ **सर्वगुणेष्विति** ॥

(टी.) एवं प्रकरणार्थमुपपाद्य तस्य प्रयोजनमाह

इति सर्वज्ञमुनिना मायावादतमोऽखिलं ।
निरस्तं तत्ववादेन सतां संशयनुत्तये ॥

अन्यथा हि विप्रतिपत्तेः संशयो भवति । प्रकरणार्थमुपसंहरन् तदनुगुणं भगवद्वाक्यमेव पठति

नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहं ॥

इति श्रीमदानन्दतीर्थभगत्पादाचार्यविरचितं मायावादखण्डनं सम्पूर्णम्

वचनप्रसूनमाला जयतीर्थाख्येन भिक्षुणा रचिता ।
ध्रियतां सदये हृदये कमलामहिलेन पुरुषेण ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितमायावादखण्डनविवरणं जयतीर्थभिक्षुविरचितं सम्पूर्णं

(टी.) ॥ **प्रकरणार्थमुपसंहरंस्तदनुगुणमिति** ॥ अत्रापि **सर्वार्थान्** साधयामीत्यनेन नारायणोत्तमत्वस्यैव सर्वशास्त्रार्थत्वोक्तेरिति भावः ।

सान्द्रभक्तिमरन्दार्द्रमध्वमानसपङ्कजे ।
वसन्तं सन्ततं कंसध्वंसिहंसं भजेऽनिशं ॥

इति श्रीमद्ब्रह्मण्यपूज्यपादानां शिष्येण व्यासतीर्थयतिना विरचिता मायावादखण्डनटीका मन्दारमञ्जरी सम्पूर्णा

श्रीव्यासराजतीर्थाः



भो भो मत्सरकुत्सितान् सुमतयो दुर्वैदुषीगर्वितान्
आकाशादवतारभागिन इवाहंयून् समाढौक्य किम् ।
श्लाघाकम्पनमेकमेव शिरसः श्रीव्यासयोगीशितु
र्मेरूणां शतमर्हति क्षितितले विद्यासु विद्यावताम् ॥

श्रीः

# अथ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितेषु दशप्रकरणेषु

# पञ्चमं प्रपञ्चमिथ्यात्वानुमान खण्डनम्

श्रीमज्जयतीर्थभिक्षुविरचितेन विवरणेन

श्रीब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थरचितया
मन्दारमञ्जरीटिप्पण्या समलङ्कृतेन

विभूषितम्

श्रीराघवेन्द्रतीर्थाः



धीरश्रीराघवेन्द्रव्रतिवर रसनारङ्गनृत्यत्स्वयम्भू-

योषाधम्मिल्लभारश्लथकुसुमततीस्त्वद्गिरः सद्गिरामः ।

याभिः संमिश्रिताभिर्निरवधिवसुधाविश्रुता सा सुधापि

क्षोणीगीर्वाणगम्यं परिमलमतुलं साम्प्रतं सम्प्रपेदे ॥

श्रीः

# अथ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितेषु दशप्रकरणेषु

# पञ्चमं प्रपञ्चमिथ्यात्वानुमान खण्डनम्

श्रीमज्जयतीर्थभिक्षुविरचितया टीकया विभूषितम्

### टीका

#### मङ्गलाचरणम्

नत्वा विश्वोदयस्थेमलयहेतुं पतिं श्रियः ।
कुर्मः प्रपञ्चमिथ्यात्वमानखण्डनपञ्चिकां ॥

अथ श्रीब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थयतिविरचिता प्रपञ्चमिथ्यात्वानुमानखण्डन-टीकाटिप्पणी मन्दारमञ्जरी प्रारभ्यते

कमलारमणं नत्वा पूर्णबोधेष्टदैवतं ।
व्याकुर्वे विश्वमिथ्यात्वमानखण्डनपञ्चिकां ॥ १ ॥

स्पष्टार्थो य इह ग्रन्थः स न व्याक्रियते मया ।
ग्रन्थगौरवभीरुत्वान्न चोद्ग्रन्थं बहूच्यते ॥ २ ॥

(मं. टि.) प्रपञ्चमिथ्यात्वानुमानखण्डनं व्याचिख्यासुर्जयतीर्थाचार्यवर्यः ग्रन्थादौ मङ्गलमाचरंश्चिकीर्षितं निर्दिशति ॥ नत्वेति ॥ यद्यपि सृष्टिसंहारप्रवाहस्यानादित्वेन दर्शपौर्णमासीतिथ्योरिव नैकस्यादित्वं सम्भवति तथापि उत्पन्नस्य नाशवन्नष्टस्य नोत्पत्तिरित्येकव्यक्त्यपेक्षयोदयादेः प्राथम्यादीति सृष्टिस्थितिलयानां क्रमनिर्देश उपपन्नः ।

#### शास्त्रैकदेशसम्बन्धेनास्य ग्रन्थस्य प्रकरणत्वोपपादनम्

(टी.) 'जन्माद्यस्य यतः' इति भगवता सूत्रकारेण जगदुदयादिनिमित्तकारणत्वं परस्य ब्रह्मणो लक्षणमभिहितं । [1]न च जगतसत्यतामन्तरेण तद्वास्तवं सम्भवति । सापि न परोदीरितप्रपञ्चमिथ्यात्व-प्रमाणस्य आभासताव्युत्पादनेन विनोपपद्यत इति तदर्थमिदं प्रकरणमारभते भगवानाचार्यः ।

---

[1] मं. मं. जगत्सत्यतामन्तरेण न च तद्वास्तवं सम्भवति.

(टी.) ननु कथं स्वपक्षसाधनेन विना निर्णयः? सत्यं, तथापि शास्त्रैकदेशसम्बन्धित्वात्प्रकरणस्य नदोषः । विज्ञास्यते च कालातीतताव्युत्पादनेन स्वपक्षसाधनप्रकारोऽपीति ।

(मं. टि.) व्याख्येयस्यास्य ग्रन्थस्य प्रकरणतासिद्धये शास्त्रैकदेशसम्बन्धित्वं दर्शयति ॥ **जन्माद्यस्य यत इत्यादिना ॥ निमित्तकारणत्वमिति** ॥ उपादानकारणत्वे च ब्रह्मणो निर्विकारत्वानुपपत्तिः। विवर्ताधिष्ठानत्वे तु श्रुतौ 'यतो वा इमानि भूतानि जायन्ते' इति निर्देशः, सूत्रे जन्मादीनि निर्देशश्चासङ्गतः स्यात् । न हि शुक्तिकातो रजतं जायत इति व्यपदेशोऽस्तीति भावः ॥ **न च तद्वास्तवं सम्भवतीति** ॥ जगत्कारणत्वस्यावास्तवत्वे तत्प्रतिपादकश्रुतिसूत्राप्रामाण्यप्रसङ्ग इति भावः ॥ **तथापीति** ॥ तथापि शास्त्र इवात्र स्वपक्षसाधनाभावेन निर्णयासम्भवेऽपि परपक्षदूषणेन जगत्सत्यत्वस्याश्रद्धेयतानिरासमात्रं भविष्यतीत्यर्थः ।

**ग्रन्थारम्भे मङ्गलाचरणाभावप्रयुक्तन्यूनताशङ्कापरिहारः**

(टी.) ननु अविगीतशिष्टाचारपरम्परादिप्राप्तं प्रारिप्सितपरिसमाप्त्यादिप्रयोजनं किमपि मङ्गलाचरणं प्रकरणादौ कस्मादाचार्यो नानुष्ठितवानिति चेत् कथमेतदवगतं? अनुपलम्भादिति चेन्न । तत्कालीनस्याधुनोपलब्धुमशक्यत्वात् । ग्रन्थे निवेशनाभावस्तावत्प्रत्यक्षसिद्ध इति चेत् । किमतः? न हि ग्रन्थे निवेशनमेव तदनुष्ठानं । नापि तद्व्याप्तं । कायवाक्चित्तनिमित्तानामनेकेषां भावात् । ग्रन्थान्तरे निवेशनादिनैव शिष्या अवगमिष्यन्ति । अत एव न तदनुष्ठानसन्देहोऽपीति ।

(मं. टि.) ॥ **नापि तद्व्याप्तमिति** ॥ कर्मणि क्तः । ततश्च 'व्याप्तेः कर्म व्याप्यं' इति टीकाकारैरन्यत्रोक्तत्वात् तत् अनुष्ठानं व्याप्तं व्याप्यं यस्य ग्रन्थनिवेशनस्य तत् तद्व्याप्तमिति बहुव्रीहिः । यद्वा तदिति व्यस्तं पदं । तथा च तत् अनुष्ठानं ग्रन्थे निवेशनेन व्याप्तं न हीत्यर्थः । अथ वा भावे क्तः । 'तयोरेव कृत्यक्तखलर्थाः' इति कर्मणीव भावेऽपि क्तविधानात् । ततो 'भुक्ता ब्राह्मणाः' 'पीता गावः' इत्यादाविव मत्वर्थीयोऽकारः । तथा च ग्रन्थे निवेशनं व्यापकत्वेन व्याप्तिनिरूपकतया अनुष्ठानेन व्याप्तिमदित्यर्थः । यद्वा 'चैत्रो ग्रामं प्राप्तः' इत्युक्ते 'ग्रामं गतः' इत्यर्थप्रतीतेः आप्नोतेरपि गत्यर्थत्वात्[1] 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति सूत्रे कर्त्रर्थस्य प्राप्तशब्दस्य पाणिनिनापि प्रयुक्तत्वाच्च 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' इत्यादिना सूत्रेण कर्तरि क्तः । तथा च 'व्याप्तेः कर्तृ व्यापकमिति टीकाकारैरन्यत्रोक्तत्वाद्ग्रन्थे निवेशनं तस्यानुष्ठानस्य व्यापकं' इत्यर्थः । एवं च पक्षचतुष्टयेऽप्ययं वाक्यार्थः । ग्रन्थे निवेशनमनुष्ठानव्यापकं चेत् अनिवेशनेनाननुष्ठानमनुमीयेत । तथात्वं तु नास्तीत्यर्थः ।

यद्वा ग्रन्थे निवेशनमेवानुष्ठानव्याप्यं चेदनुष्ठाने लिङ्गान्तराभावात् रूपोपलब्ध्येकलिङ्गस्य चक्षुषो रूपानुपलब्ध्या अभाव इव अनिवेशनेन अननुष्ठानमनुमीयेत तथात्वं तु नास्तीति । ग्रन्थकर्तुराचार्यस्य परमास्तिकत्वादिलिङ्गान्तरस्यापि सत्त्वादिति वाक्यार्थः ॥ **अवगमिष्यन्तीति** ॥ ग्रन्थादौ मङ्गलाचरणस्य कर्तव्यतामिति

---

[1] 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' इति सूत्रेण 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति सूत्रे कर्त्रर्थस्य प्राप्तशब्दस्य पाणिनिनापि प्रयुक्तत्वाच्च कर्तरि क्तः, इति पाठेन भाव्यमिति भाति.

(मं. टि.) शेषः। आचार्यकर्तृकारम्भस्य अन्यत्र मङ्गलाचरणेन भूयः साहचर्यदर्शनात् उपाधिव्यभिचारयोरदर्शनादत्रापि तदनुष्ठानं निश्चीयत इत्याह ॥ अत एवेति ॥

मायावाद्युक्तप्रपञ्चमिथ्यात्वानुमानानुवादः

(टी.) तत्र तावन्मायावादिनोदितं प्रपञ्चमिथ्यात्वानुमानमनुवदति

विमतं मिथ्या दृश्यत्वात् यदित्थं तत्तथा यथा सम्प्रतिपन्नं

'सर्वं मिथ्या' इत्युक्ते ब्रह्मणि प्रमाणबाधः शुक्तिरजतादौ सिद्धार्थता च स्यादिति विमतमित्युक्तं। विमतेरनेकविधत्वेऽपि साध्यविशेषोपादानात्तद्विशेषसिद्धिः। तथा च सत्यत्वमिथ्यात्वाभ्यां वादिप्रतिवादिविमतिविषयो वियदादीत्युक्तं भवति। तर्हि वियदादीत्येव वक्तव्यं। न चैवं शङ्क्यं अवच्छेदकानुक्तावुक्तदोषानिस्तारात्।

मिथ्यात्वानुमाने व्यतिरेकव्याप्तिप्रदर्शनाभावे कारणकथनम्

यद्यपि दृश्यत्वहेतुरन्वयव्यतिरेकी। तथाप्यकुटिलेऽन्वये सम्भवति न कुटिलो व्यतिरेक आदरणीय इति सूचयितुं यदित्थं तत्तथेत्यन्वय एव दर्शितः।

मिथ्यात्वानुमाने यत्तत्पदयोरावृत्त्यभावेऽपि विवक्षितार्थसिद्धिः

यत्तदिति साधारणप्रयोगादेव सर्वोपसंहारसिद्धेर्द्विर्वचनाभावो न दोषाय। 'गौर्न पदा स्प्रष्टव्या' इतिवत्।

मिथ्यात्वानुमाने सम्प्रतिपन्नपदकृत्यम्

सम्प्रतिपन्नं दृश्यत्वमिथ्यात्ववत्तयेति शेषः। सम्प्रतिपन्नग्रहणेन साध्यविकलत्वादिदृष्टान्तदोषनिरासोऽपि कृतः स्यादिति शुक्तिरजतमित्येव नोक्तं।

प्रपञ्चमिथ्यात्वानुमाने पञ्चावयवाननुवादकारणम्

यद्यपि परेण स्वग्रन्थे पञ्चावयवप्रयोगोऽस्य विहित इति तथैवानुवादो युक्तः। तथाप्युपनयनिगमनयोरसाधनाङ्गत्वादनुवादार्हतापि नास्तीति सूचयितुं त्र्यवयवानुवादः। तच्चान्यत्रोपपादितं। एवं चानुवदतैव अधिकं नाम निग्रहस्थानमपि सूचितं भवति।

(मं. टि.) ॥ अवच्छेदकानुक्ताविति ॥ अयमर्थः, वियदादीत्यत्र आदिशब्दः किमसङ्कुचितवृत्तिः? किं वा सङ्कुचितवृत्तिः? आद्ये ब्रह्मशुक्तिरूप्ययोरपि पक्षतया बाधसिद्धसाधनते। द्वितीये विवक्षितव्यक्तिविशेषाणामनन्तत्वेन तत्तन्नाम्ना जन्मसहस्रेणापि निर्देष्टुमशक्यत्वात् इयानेव आदिशब्दार्थ इति किञ्चिदवच्छेदकं वाच्यं। तच्च विमति-

(मं. टि.) विषयत्वातिरिक्तं नास्ति । यद्यपि असद्विलक्षणत्वे सति प्रातिभासिकातिरिक्तत्वे सति ब्रह्मव्यतिरिक्तत्वं-पक्षतावच्छेदकमस्ति । तथापि प्रतीतिगौरवान्न तदवच्छेदकं । लाघवाद्विमतिविषयत्वमेवावच्छेदकमिति ॥ **गौरिति** ॥ यथा 'या या गौः सा सा न पदा स्प्रष्टव्या' इति वीप्साया अभावेऽपि सर्वगवां पदा अस्प्रष्टव्यतासिद्धिस्तद्वदित्यर्थः ॥ **तथापीति** ॥ यद्यपि दूष्यैकदेशानुवादे अननुभाषणप्रसङ्गात् सर्वानुवादः प्राप्तः । तथापि भट्टमतानुसारिणा परेणाप्युपनयनिगमनयोरसाधनाङ्गताङ्गीकारात्पञ्चावयवप्रयोगे परस्याधिकं नाम निग्रहस्थानं सूचयितुं ऽव्यवयवानुवादः कृत इत्यर्थः ।

**प्रपञ्चमिथ्यात्वानुमाने असत्वस्य मिथ्यात्वरूपत्वे अप्रसिद्धविशेष्यतादोषः**

(टी.) एवमनूदितमनुमानं दूषयिष्यन् प्रथमप्राप्तत्वात्प्रतिज्ञाश्रयं दोषमाह

**इत्युक्ते जगतोभावादाश्रयासिद्धः पक्षः**

इति मायावादिनोक्ते वक्तव्यमिति शेषः । अग्न्याहितादिवदसिद्ध आश्रयो यस्यासावाश्रयासिद्धः । पक्ष इति तदेकदेशस्साध्यधर्मो लक्ष्यते । अथ वा सप्तम्यर्थे बहुव्रीहिरिति मुख्यार्थ एव पक्षशब्दः ।

'उक्ते' इत्यनेनोक्तिनिमित्तमिदं दूषणमिति सूचयता 'अनुक्तोपालम्भोऽयं परेण प्रपञ्चासत्त्वस्यासाधनात्' इति निरस्तं भवति ।

ननु 'जगतोऽभावात्' इतिहेतुः सिद्धश्चेत्सिद्धं परस्याभिमतं । किमप्रसिद्धविशेष्यता करिष्यति ? असिद्धश्चेत्तथापि । असिद्धाश्रयत्वसाधकाभावात् । मैवं, यदि जगदभावोऽत्र साध्यते तदा जगतोऽभावात्साध्यधर्मस्य आश्रयासिद्धिः स्यात् । ततश्च विशेष्याभावाद्विशिष्टाभावः इति प्रतिज्ञार्थो बाधितः स्यात् इत्येवं पराङ्गीकृतेन परस्य दोषोद्भावनात् ।

**मिथ्यात्वमसत्वमिति पक्षाश्रयणेन दूषणे छलशङ्का तत्परिहारश्च**

मिथ्याशब्देन किमसदुच्यते ? उतान्यत्किमपि ? इति विकल्पेनोपक्रमान्न छलप्रसङ्गः । शिष्याणां कथाक्रमशिक्षणार्थं विकल्पः ।

(मं. टि.) ननु स्वार्थानुमानेऽप्याश्रयासिद्धिरस्त्येव । तत आचार्येण इत्युक्ते आश्रयासिद्धः' इति कथमुक्तं ? इत्याशङ्क्य सत्यमेवं, तथाप्याश्रयासिद्ध्युक्तिस्तु परार्थानुमान एव । तथा च श्रुतस्य इत्युक्ते इत्यस्योपपपत्तये अश्रुतमप्यध्याहियत इत्याह ॥**वक्तव्यमिति शेष इति** ॥ ननु 'इति वक्तव्यमिति शेषः' इति वाच्यं । इतिशब्दाभावे 'आश्रयासिद्धः पक्षो वक्तव्यं' इत्युक्तेऽनन्वयादिति चेन्न । इत्युक्ते, इत्यत्र विद्यमानस्य इति शब्दस्यानुषङ्गेणैव सम्बन्धसम्भवेन तस्याध्याहार्यताऽभावात् ।

(मं. टि.) नन्वसिद्धशब्दस्य निष्ठान्तत्वात् 'निष्ठा' इत्यनेन पूर्वनिपातप्रकरणगतेन सूत्रेण 'कृतक...' इत्यत्र कृतशब्दस्येव पूर्वनिपातेन भवितव्यमित्यत आह ॥ **अग्न्याहितादिवदिति** ॥ 'वाऽऽहिताग्न्यादिषु' इत्यनेन सूत्रेण आहितादीनामग्न्यादिसम्बन्धे परनिपातस्याप्युक्तत्वात् तस्य च आकृतिगणत्वात् असिद्धशब्दस्य विकल्पेन परनिपातोपपत्तिरित्यर्थः ।

ननु विशेषणं साध्यधर्मं प्रति य आश्रयो धर्मी विशेष्यः तदसिद्धिरेव दोषः । विशेष्याभावे विशिष्टाभावेन धर्मविशिष्टधर्मिविषयकस्यानुमानस्याप्रामाण्यापातात् । न तु साध्यधर्मविशिष्टस्य पक्षस्य य आश्रयस्तदसिद्धिः । तत्सिद्धेः प्रकृतानुपयोगात् । तस्मात् **आश्रयासिद्धः पक्षः** इति कथमाचार्येणोक्तं ? इत्याशङ्क्याह ॥ **पक्ष इति तदेकदेश इति** ॥ अथ वा आश्रयोऽसिद्धो यस्मिन् पक्ष इति सप्तम्यर्थे बहुव्रीहिरित्याह ॥ **अथ वेति** ॥ पक्षस्य साध्यतदाश्रयरूपोभयसमुदायात्मकत्वात्समुदायस्याश्रयं प्रति अधिकरणत्वोपपत्तिः । 'वने चूतः' इत्यादौ तद्दर्शनात् । तेन सप्तम्यर्थोपपत्तिरिति द्रष्टव्यं । नन्वाचार्येण 'इत्यत्राश्रयासिद्धः पक्षः' इत्येव वक्तव्यं । किमर्थमुक्तग्रहणं कृतं ? यदुपपत्त्यर्थं वक्तव्यपदमध्याह्रियत इत्यत आह ॥ **उक्त इतीति** ॥ मिथ्याशब्दस्यानिर्वचनीयवाचिताया अन्यत्र निरस्तत्वात् 'विमतमसत्' इत्यनुक्तावपि मिथ्याशब्देनैवासत्त्वस्योक्तत्वात् 'मिथ्या' इत्युक्तिनिमित्तमिदं दूषणं । न तु पराभिप्रेतानिर्वचनीयत्वादिरूपार्थनिमित्तमिति 'उक्ते' इति निमित्तसप्तमीप्रयोगात् सूचयता आचार्येण 'अनुक्तोपालम्भोयं परेणासत्वस्यासाधनात् । अनिर्वचनीयत्वरूपमिथ्यात्वस्यैव तेन साधनात्' इति निरस्तं भवति । तेनानुक्तोपालम्भनिराससूचनार्थं 'उक्ते' इति वक्तव्यमित्यर्थः ।

अन्ये तु 'खपुष्पं सुरभि' इत्यादाविव न वस्तुत आश्रयासिद्धिः । प्रपञ्चस्य सत्त्वात् । किं तु ? मिथ्येतिपरोक्तिनिमित्ता इत्यनेन प्रकारेणोक्तिनिमित्तमिति ग्रन्थं व्याचक्षते । असिद्धत्वपक्षं दूषयति ॥ **असिद्धश्चेत्तथापीति** ॥ 'सिद्धं परस्याभिमतं' इत्यनेनानुषक्तेनास्य सम्बन्धः । तत्र हेतुरसिद्धाश्रयत्वेति । आचार्येण पक्षग्रहणेन सूचितमाश्रयासिद्धेः प्रतिज्ञादोषत्वं दर्शयति ॥ **ततश्चेति** ॥

## मिथ्यात्वानुमाने विशेष्याभावाद्विशिष्टाभावस्य पररीत्या समर्थनम्

ननु यत्र विशेष्यसद्भावो विशेषणाविरोधी तत्र विशेष्याभावे विशिष्टाभावः । यथा पुरुषाभावे दण्ड्यभावः । प्रकृते तु प्रपञ्चरूपविशेष्यसद्भावो मिथ्यात्वलक्षणविशेषणविरोधी । ततश्च विशेष्यसद्भावाङ्गीकारे विशेषणायोगाद्विशेषणाभावप्रयुक्तो विशिष्टाभावः । यथा 'प्रध्वस्तो घटः' इत्यत्र घटसद्भावाङ्गीकारे प्रध्वंसविशिष्टघटाभावः । तस्मात्कथमुक्तं विशेष्याभावाद्विशिष्टाभाव इति । मैवं 'प्रतिपन्नस्वभावानुपमर्देन सत्यविवेकापरपर्यायधर्मसाधनं' इति वदता परेण प्रपञ्चरूपविशेष्ये सद्विलक्षणस्वरूपसद्भावस्य मिथ्यात्वलक्षणविशेषणानुकूलता अङ्गीक्रियते । ततश्च [1]विशेषणस्यात्यन्तासत्त्वे विशेष्याभावेन विशिष्टाभावापरिहारादिति । ननु मिथ्याशब्दस्यानिर्वचनीयावाचित्वेऽपि तार्किकैस्समवायशब्देन नित्यसम्बन्धवत् परैरपि परिभाषामात्रेणापि मिथ्याशब्देनानिर्वचनीयत्वस्य

---

[1] विशेषणस्यात्यन्तासत्त्वरूपत्वे इति पाठेन भाव्यमिति भ.

(मं. टि.) विवक्षितुं शक्यत्वाद्विवक्षितं पक्षं परित्यज्य अविवक्षितासत्वपक्षाश्रयणेन आश्रयासिद्ध्यभिधाने छलप्रसङ्ग इत्याशङ्क्याह ॥ **विकल्पेनोपक्रमादिति** ॥ आचार्यो मिथ्यात्वं किमसत्वं? किं वा अनिर्वचनीयत्वादि ? इति विकल्पं हृदि निधाय आद्ये आश्रयासिद्धिमाह । अन्यत्र दोषं वक्ष्यति । तेन छलप्रसङ्गो नास्तीत्यर्थः ।

एतच्च असत्त्वपक्ष एवाश्रयासिद्धिर्नान्यत्रेत्यभ्युपगमवादेनोक्तं । वस्तुतस्तु अनिर्वचनीयत्वादिपक्षेऽप्याश्रयत्वप्रयोजकसत्त्वाभावेन आश्रयासिद्धिर्दुर्वारेति विकल्पेनोपक्रमाभावेऽपि न छलप्रसङ्ग इति द्रष्टव्यं । ननु पराभिप्रेत एव पक्षो दूष्यः । किमनभिप्रेतासत्त्वपक्षदूषणार्थं विकल्पेन ? इति । तत्राह ॥ **शिष्याणामिति** ॥ शुक्तिरूप्यादेर्मिथ्यात्वमसद्रीत्या असत्त्वं परस्य त्वनिर्वचनीयत्वादिकमिति । तथा च प्रकृते का रीतिः? इति विकल्पयता आचार्येण अन्यत्रापि सामान्यशब्दे प्रयुक्ते रीतिद्वयसम्भवे च विकल्पपूर्वकमेव दोषो वाच्यः । पराभिप्रेतपक्ष एव दोषाभिधाने परः 'त्वद्रीत्या मयोक्तं । तस्मादनुक्तोपालम्भः' इति प्रतारयेदिति सूचितमित्यर्थः ।

**मिथ्यात्वानुमाने असत्वस्य मिथ्यात्वरूपत्वे अपसिद्धान्तः**

(टी.) **अथ वा जगतोऽसत्वे प्रतिज्ञाते अपसिद्धान्तमनेनाचष्टे । तथा हि, पक्षः प्रतिज्ञार्थः प्रपञ्चस्यासत्वलक्षणः । स 'आश्रयासिद्धः' आश्रयः सिद्धान्तः तदाश्रयेण कथाप्रवृत्तेः । तस्मिन्नसिद्धः तद्विरुद्ध इति यावत् । कुतः? जगतो भावात् भावत्वेन असद्विलक्षणत्वेन परेणाङ्गीकृतत्वादिति ।**

(मं टि.) एवं 'जगतो विश्वस्य अभावात्' इति पदविभागमाश्रित्य व्याख्यातं । इदानीं 'भावात्' इतिपदविभागमाश्रित्य व्याचष्टे ॥ **अथ वेति** ॥ अपसिद्धान्तं वक्तुं पक्षाश्रयासिद्धशब्दान् व्याचष्टे ॥ **पक्ष इत्यादिना यावदित्यन्तेन** ॥ भावादित्येतद्व्याचष्टे ॥ **भावत्वेनाङ्गीकृतत्वादिति** ॥ **भावत्वेनेति** स्वपदं विवृणोति ॥ **असद्विलक्षणत्वेनेति** ॥

**सर्वथा निर्वचनानर्हत्वस्य मिथ्यात्वरूपत्वे अप्रसिद्धविशेषणता**

(टी.) **स्यादेतत्, न वयं मिथ्येत्यत्यन्तासन्तं गगनकुसुमसमं प्रपञ्चमाचक्ष्महे । येन साध्यधर्मस्याश्रयासिद्धिरपसिद्धान्तो वा स्यात् । किन्तु ? अनिर्वचनीयमेवेति । अत आह**

## अनिर्वचनीयासिद्धेरप्रसिद्धविशेषणः

**पक्ष इत्यनुवर्तते । अत्र पक्ष इति तदेकदेशो धर्मी प्रपञ्चो लक्ष्यते । अप्रसिद्धं विशेषणं यस्मिन्निति मुख्यार्थो वा । अनिर्वचनीयं खलु निर्वचनानर्हमुच्यते । न च तत् प्रागेतदनुमानात्सिद्धं । सर्वस्यापि निर्वचनार्हत्वात् । अन्यथा स्वव्याघातो मूकता वा स्यात् । अतो मिथ्यापदेन विमतस्यानिर्वचनीयताभिधाने पक्षोऽप्रसिद्धविशेषणो भवति । अयमपि वचननिमित्तो दोष इति ज्ञातव्यं ।**

(मं. टि.) ननु साध्यधर्मविशिष्टः पक्षः । तस्य कथं अप्रसिद्धं विशेषणं यस्येति बहुव्रीहिणा आचार्यैः साध्यधर्मवैशिष्ट्यमुक्तं । न हि दण्डिनः पुनर्दण्डवैशिष्ट्यं किं तु ? देवदत्तस्यैवेति । अत आह ॥ **पक्ष इति तदेकदेश इति** ॥ **अन्यथेति** ॥ निर्वचनानर्हं किं ? इति प्रश्नेयदि इदम् इति वदेत्तदा स्वव्याघातः । न चेन्मूकतेत्यर्थः ।

(मं. टि.) ॥ **अयमपि वचननिमित्त इति** ॥ यथा आश्रयासिद्धिर्मिथ्यापदोक्तिनिमित्ता एवमप्रसिद्धविशेषणत्वमप्यनिर्वचनीयपदप्रयोगनिमित्तं । तस्य निर्वचनानर्हवाचित्वात् तस्य चाप्रसिद्धत्वात् । न तु परपरिभाषितसदसद्विलक्षणत्वरूपार्थनिमित्तं । तत्र सिद्धसाधनत्वादेर्वक्ष्यमाणत्वादित्यर्थः ।

**सदसद्वैलक्षण्यस्य मिथ्यात्वरूपत्वे सिद्धसाधनत्वदोषः**

(टी.) ननु सदसद्वैलक्षण्यमेव मिथ्यात्वं ब्रूमो नासत्वं । एतदेवानिर्वचनीयत्वं नाम । न तु सर्वथा निर्वचनानर्हत्वमेव । अतो नोक्तदोष इति । तत्राह

## सदसद्वैलक्षण्ये मिथ्यात्वे सिद्धसाधनता

प्रतिज्ञादूषणप्रस्तावात्साधनशब्दोऽत्र भावसाधनः । करणसाधनत्वे हि हेतुदूषणं स्यात् । सदसद्वैलक्षण्ये मिथ्यात्वेऽङ्गीक्रियमाणे हि विमतं सद्विलक्षणमसद्विलक्षणं चेति प्रतिज्ञार्थः स्यात् । तत्र असद्विलक्षणत्वं प्रपञ्चस्यास्माभिरङ्गीकृतमेवेति सिद्धसाधनता भविष्यति ।

ननु सद्वैलक्षण्येन सहासद्वैलक्षण्यमत्र साध्यते । तत्कथमेष दोषः? इति । मैवं, न हि सिद्धमसिद्धेन सहोच्यमानमसिद्धं भवति । सद्वैलक्षण्यविशिष्टासद्वैलक्षण्यसाधनाददोष इति चेत् तथापि सिद्धसाधनतैव । सतोऽपि सदन्तरवैलक्षण्याङ्गीकारात् । सदसद्वैलक्षण्यं नाम सदसत्त्वानाश्रयत्वमिति चेत् तथापि न सिद्धसाधनतानिस्तारः । सत्वैकस्वभावस्य प्रपञ्चस्य सदसत्त्वानङ्गीकारात् । प्रत्येकमुभयानाश्रयत्वमिति चेत् । तथाप्यसत्त्वानाश्रयत्वेन सिद्धसाधनतातादवस्थ्यं । विशिष्टसाधनाददोष इति चेत् तथापि देशकालपरिच्छिन्नेषु घटादिषु व्यवस्थाश्रयणेन सिद्धसाधनतैवेति ।

(मं. टि.) ॥ **करणसाधनत्वे हीति** ॥ तथात्वे साधनं लिङ्गं स्यात् । तथा च सिद्धसाधनतापि तन्निष्ठैवेति हेतुदोषः स्यादित्यर्थः । सदसद्विलक्षणमिति कोऽर्थः? सदसद्रूपं यदेकं ततो विलक्षणमिति वा ? सद्विलक्षणमसद्विलक्षणं चेति वा? सद्विलक्षणत्वे सत्यसद्विलक्षणमिति वा ? आद्ये सदसद्रूपतायाः प्रपञ्चे मयाप्यनङ्गीकारात्सिद्धसाधनताप्रसङ्गेन द्वितीय एवाङ्गीकार्य इत्याह ॥ **सदसद्वैलक्षण्य इति** ॥ तर्हि द्वितीय एवास्त्वित्यत आह ॥ **तत्रेति** ॥ **न हि सिद्धमसिद्धेनेति** ॥ 'पर्वतः शिलात्मकोऽग्निमांश्च' इत्यादाविव अंशे सिद्धसाधनता दुर्वारेत्यर्थः । तृतीयं शङ्कते ॥ **सद्वैलक्षण्येति** ॥ विशिष्टस्याखण्डैकपदार्थान्तरत्वाभावांशस्तत्रापि । येनांशे सिद्धसाधनतं स्यात् । अन्यथा 'प्रामाण्यं स्वतो ज्ञायते' इति प्रतिज्ञायां ज्ञानमात्रस्य परतस्त्ववादिनाप्यङ्गीकारादंशे सिद्धसाधनता स्यादित्यर्थः । परिहरति ॥ **तथापीति** ॥ तर्हि सदसत्त्वानाश्रयत्वं साध्यमिति चेत् किमत्र सदसद्रूपं यत्-विशिष्टं तत्त्वानाश्रयत्वं साध्यते ? किं वा सत्त्वानाश्रयत्वं असत्त्वानाश्रयत्वं चेति द्वयं ? यद्वा सत्त्वानाश्रयत्वे सत्यसत्त्वानाश्रयत्वं नाम विशिष्टं ? इति विकल्प्याद्यं दूषयति ॥ **तथापीति** ॥ द्वितीयं शङ्कते ॥ **प्रत्येकमिति** ॥ दूषयति ॥ **तथाप्यसत्त्वेति** ॥ तृतीयं शङ्कते ॥ **विशिष्टेति** ॥

(मं. टि.) ननु तथापि देशकालेति घटादेः सत्त्वानाश्रयत्वमङ्गीकृत्य परिहारोऽभिहितः । स न युक्तः घटादेः सत्त्वाश्रयत्वाङ्गीकारात् । स्वदेशकालाद्यवच्छेदेन सत्त्वाश्रयस्यापि घटादेः देशान्तराद्यवच्छेदेन सत्त्वानाश्रयत्वं चास्तीति चेत् तर्हि देशान्तराद्यवच्छेदेनासत्त्वाश्रयत्वं चास्तीति 'सत्त्वैकस्वभावस्य इत्येतदसङ्गतं स्यादिति चेत् मैवं सत्त्वैकस्वभावस्येत्यत्र सर्वदेशकालसम्बन्धाभावरूपात्यन्ताभावाप्रतियोगित्वं सत्त्वं विवक्षित्वा सत्त्वैकस्वभावत्वमुक्तं । तथापि देशकालेत्यत्र तु 'अस्तीतिप्रमितिविषयत्वं सत्त्वं' 'तदविषयत्वं चासत्त्वं' विवक्षित्वा अन्यदेशादौ सत्त्वानाश्रयत्वं स्वदेशादावसत्त्वानाश्रयत्वं चोक्तमिति ।

सिद्धान्तिनामनिष्टस्य सदसद्वैलक्षण्यस्य मिथ्यात्वरूपत्वे अप्रसिद्धविशेषणतादोषः

(टी.) अथैवं ब्रूयात् यादृशं सदसद्वैलक्षण्यं सद्वादिनामनिष्टं तन्मिथ्यात्वमिति । तत्राप्येतदेवोत्तरं । तथा हि, सदसद्वैलक्षण्ये मिथ्यात्वेऽङ्गीक्रियमाणे सति असिद्धसाधनता अप्रसिद्धविशेषणता भवतीति । एतच्च दृष्टान्तव्युदासप्रस्तावे वक्ष्यामः । सर्वत्र असद्वैलक्षण्यसाधनवैयर्थ्यं च ।

सत्यविवेकस्य मिथ्यात्वरूपत्वे सिद्धसाधनता

सत्यविवेकस्य मिथ्याभावस्य साध्यत्वान्नोक्तदोष इति चेत् न । सत्यान्तरविवेकाङ्गीकारेण सिद्धसाधनत्वात् ।

सत्यतानाश्रयत्वस्य मिथ्यात्वरूपत्वे अपसिद्धान्तादिदोषाः

सत्यतानाश्रयत्वं सत्यविवेक इति चेत् । केयं सत्यता ? अर्थक्रियासामर्थ्यादिलक्षणा चेत्तदनाश्रयत्वसाधने परस्यापसिद्धान्तप्रसक्तिः । तदन्या चेत्सिद्धसाधनतैव ।

सत्यमबाध्यं बाध्यं मिथ्येति तद्विवेक इति चेत् । तर्हि बाधो वक्तव्यः । अन्यथाविज्ञातस्य सम्यग्विज्ञानं चेत्सिद्धसाधनतैव । क्षणिकत्वादिना विज्ञातस्य प्रपञ्चस्य अक्षणिकत्वादिबाधकज्ञानविषयत्वस्यास्माभिरङ्गीकृतत्वात् ।

प्रतिपन्नोपाधौ त्रैकालिकसत्यतानिषेध इति चेत् न । सत्यताया एवाद्याप्यनिरूपणात् ।

(मं. टि.) ॥ यादृशमिति ॥ सर्वथा सत्त्वानधिकरणत्वे सति असत्त्वानधिकरणत्वं सदसत्त्वानधिकरणत्वमित्यर्थः । असिद्धसाधनता इति पदविभागमाश्रित्य तत्परिहारतया तदेव वाक्यं व्याचष्टे ॥ तत्राप्येतदेवोत्तरमिति ॥ सर्वत्रेति ॥ विशिष्टसाधनपक्षेऽपि 'पर्वतः प्रमेयत्वे सत्यग्निमान्' इत्यादाविव अंशे सिद्धसाधनता दुर्वारा। 'प्रामाण्यं स्वतो ज्ञायते' इत्यादौ 'ज्ञायते' इत्यनुक्त्वा विप्रतिपन्नस्वतस्त्वमात्रस्य साधयितुमशक्यत्वान्न सिद्धसाधनता । न चैवं प्रकृते । 'असद्विलक्षणत्वं, इत्यनुक्त्वापि विप्रतिपन्नसद्विलक्षणत्वमात्रस्य साधयितुं शक्यत्वादिति भावः ।

॥ सत्यतानाश्रयत्वमित्यत्र सत्यताशब्देन किमुच्यते ? किमर्थक्रियासामर्थ्यादिकं ? किं वा व्यवहारातीतत्वलक्षणपारमार्थिकत्वं ? अथ वा अबाध्यत्वं ? इति विकल्पयति ॥ केयमिति ॥ आद्यमाशङ्कते ॥ अर्थ

**(मं. टि.) क्रियेति** ॥ आदिशब्देन सत्ताजात्याश्रयत्वासद्विविक्तत्वादिकं विवक्षति । अर्थक्रियासामर्थ्यादेः पक्षे परेणाप्यङ्गीकारात् तदनाश्रयत्वसाधने अपसिद्धान्त इति परिहरति ॥ **तदनाश्रयत्वेति** ॥ द्वितीयमाशङ्कते ॥ **तदन्या चेदिति** ॥ तादृशपारमार्थिकत्वानधिकरणत्वस्य पक्षे मयाप्यङ्गीकारात्सिद्धसाधनतेति परिहरति ॥ **सिद्धसाधनतैवेति** ॥ तृतीयमाशङ्कते ॥ **सत्यमबाध्यमिति** ॥

॥ **प्रतिपन्नोपाधाविति** ॥ सत्यताग्रहणाभावे बाधलक्षणमसम्भवि स्यात् । मायिकस्य आविद्यकस्य वियदादेः शुक्तिरूप्यादेश्च मायावादिना प्रतिभासकाले अवस्थित्यङ्गीकारेण स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वानङ्गीकारात् । तदर्थं सत्यताग्रहणं । त्रैकालिकपदाभावे तु सिद्धसाधनत्वं सत्यत्ववादिनापि घटादेः कालान्तरावच्छिन्नप्रतिषेधाङ्गीकारात् । तदर्थं त्रैकालिकत्वेन प्रतिषेधो विशेषितः । प्रतिपन्नोपाधिपदाभावे पुनस्तदेव सिद्धसाधनत्वं सत्यत्ववादिनापि गोत्वादेरश्वादावुक्तप्रतिषेधाङ्गीकारात् । तदर्थं प्रतिपन्नोपाधिपदं ।

'सत्यतानिरुक्तौ बाधनिरुक्तिः तन्निरुक्तौ बाध्यत्वाभावलक्षणसत्यतानिरुक्तिः इत्यन्योन्याश्रय इति परिहरति ॥ **सत्यताया इति** ॥

### सत्त्वाभावस्य आश्रयासिद्धिप्रयोजकत्वसमर्थनम्

(टी.) किं चैवं सति अत्यन्तासत्त्वमेव प्राप्तमिति आश्रयासिद्ध्यादिप्रत्यावृत्तिः । सत्त्वनिषेध एव क्रियते । न त्वसत्त्वविधिरिति चेन्न । सत्त्वनिषेधातिरिक्तस्यासत्त्वस्याभावात् । भावेऽपि सत्त्वनिषेधेनैवाश्रयासिद्धिः स्यात् । असत्त्वमनाश्रयत्वे प्रयोजकं न सत्त्वाभाव इति चेन्न । नियामकाभावात् । समं प्रतिवादिनोऽपीति चेत् अस्तु तावत् , आश्रयासिद्धिसन्देहेऽप्यनुमानमसाधकं ।

### व्यावहारिकसत्त्वस्याश्रयत्वप्रयोजकत्वशङ्का तन्निरासश्च

व्यावहारिकसत्तास्वीकारादाश्रयतोपपत्तिरिति चेत् केयं व्यावहारिकी सत्ता ? यदा व्यवहारनिर्वाहहेतुस्तदा सिद्धं नः समीहितं । व्यर्थं च व्यावहारिकीति विशेषणं । सत्तामङ्गीकृत्य पुनस्तन्निषेधे परस्यापसिद्धान्तश्च ।

पारमार्थिकत्वमेव निषिध्यते न तु व्यावहारिकी सत्तेति चेत् किमिदं पारमार्थिकत्वं ? अव्यावहारिकत्व चेत् निषिध्यतां । न नो हानिः । अबाध्यत्वमिति चेत् अबाध्यत्वनिषेधो बाध्यत्वमेव । तच्च सत्तानिषेध इति कुतो व्यावहारिकी सत्तापि । इतरेतराश्रयदोषो वा स्यात् ।

भ्रान्तिसिद्धा सत्ता व्यावहारिकी सत्तेति चेत् तथा सति नास्ति सत्तेत्यनाश्रयतैव ।

(मं. टि.) एवं तावत्सत्यतानाश्रयत्वं सत्यविवेक इति पक्षः [1]सत्यत्वनिरुक्त्या दूषितः । इदानीमस्तु यत्किञ्चित्सत्यत्वं । अथापि तदनाश्रयत्वसाधने अत्यन्तासत्त्वमेवापन्नमिति आश्रयासिद्ध्यपसिद्धान्तौ स्यातामिति तत्सि-

---

[1] सत्यत्वानिरुक्त्या इति मुद्रितपुस्तकस्थः पाठः

(मै. टि.) अेव पक्षे दोषान्तरमाह ॥ किञ्चैवमिति ॥ सत्त्वनिषेधातिरिक्तेति ॥ शशशृङ्गादौ सत्त्वाभावेनैव बलेन असद्व्यवहारोपपत्तौ तद्व्यतिरिक्तासत्त्वकल्पनं नित्यत्वाभावातिरिक्तानित्यत्वकल्पनमिव निष्प्रमाणकमित्यर्थः ॥ अस्तु तावदिति ॥ यद्यसत्त्वाभाव आश्रयत्वे प्रयोजकः स्यात्तदा आश्रयत्वाभावरूपे अनाश्रयत्वे असत्त्वाभावभावरूपमसत्त्वमेव प्रयोजकं स्यात् । न त्वेतदस्ति गौरवात् । किं तु ? लाघवेन आश्रयत्वे सत्त्वमेव प्रयोजकं । तथा च अनाश्रयत्वेऽपि सत्त्वाभाव एव प्रयोजक इति निश्चेतुं शक्यत्वेन निश्चिताश्रयासिद्धिरेव वक्तुं शक्या । तथापि सत्त्वाभावस्य अनाश्रयत्वप्रयोजकत्वनिश्चयाभावमुपेत्य [1]सन्दिग्धासिद्धिरुच्यत इति तावच्छब्दाभिप्रायः ॥

॥ व्यर्थं चेति ॥ सत्त्वेन व्यवहारमात्रं व्यावहारिकं सत्त्वमित्यङ्गीकारे मिथ्यात्ववादिनः सत्त्वनिषेधलक्षणप्रयोजनरहितं व्यावहारिकपदं स्यात् । तत्तु नाङ्गीकर्तुं शक्यं । अर्थगतसत्त्वाभावेन आश्रयासिद्धितादवस्थ्यात् । व्यवहारनिर्वाहहेतुभूतं सत्त्वं व्यावहारिकं सत्त्वमित्यङ्गीकारे तु अर्थसत्त्वसम्भवेन आश्रयासिद्धिपरिहारेऽपि सत्ताया अभ्युपगतत्वेन सत्तानिषेधलक्षणप्रयोजनरहितं व्यावहारिकत्वविशेषणं व्यर्थमित्यर्थः । यद्वा व्यवहारनिर्वाहाहेतुसत्ताया अभावेन व्यावर्त्याभावात् निष्प्रयोजनं विशेषणमित्यर्थः । किं च सत्यतानाश्रयत्वमित्यत्र किं सत्तामात्रनिषेधोऽभिप्रेतः? किं वा व्यावहारिकसत्ताभ्युपगमेन पारमार्थिकसत्तानिषेधः? इति विकल्पं हृदि निधायाद्यं दूषयति ॥ सत्तामङ्गीकृत्येति ॥ द्वितीयमाशङ्कते ॥ पारमार्थिकत्वमेवेति ॥ दूषयति ॥ किमिदमित्यादिना ॥ सत्यतानाश्रयत्वमित्यत्र पारमार्थिकत्वमेव निषिध्यते । तच्च पारमार्थिकत्वमबाध्यत्वमिति वदता परेण अबाध्यत्वनिषेधः सत्यतानाश्रयत्वमित्युक्तं स्यात् । अबाध्यत्वनिषेधो बाध्यत्वमेव । बाधश्च पूर्वोक्तसत्यतानिषेधरूपः । तत्र च बाधलक्षणे किं सत्तामात्रनिषेधोऽभिप्रेतः? पारमार्थिकसत्तानिषेधो वा । तत्राद्ये व्यावहारिकसत्तापि न स्यादित्याह ॥ कुतो व्यावहारिकीति ॥ द्वितीये 'पारमार्थिकत्वज्ञाने तन्निषेधलक्षणबाध्यत्वज्ञानं बाध्यत्वज्ञाने च अबाध्यत्वरूपपारमार्थिकत्वज्ञानं' इत्यन्योन्याश्रय इत्याह ॥ इतरेतराश्रयदोषो वेति ॥

यद्यपि सत्यताया एवाबाध्यत्वनिरूपणादित्यत्रापि ग्रन्थे अन्योन्याश्रयः प्रागुक्तः । अत्रापि स एवोच्यते । तथापि प्राक् सत्यतानाश्रयत्वमिति लक्षणे "सत्यतापदेन अबाध्यत्वविवक्षायामन्योन्याश्रयप्रसङ्गात्तदर्थमर्थक्रियासामर्थ्यादिकं व्यवहारातीतत्वं वा विवक्षणीयं । तत्राद्ये मूलग्रन्थोक्त एवापसिद्धान्तः । द्वितीये तु तदुक्तैव सिद्धसाधनता । तथा च सत्यतानाश्रयत्वं सत्यविवेकः इति पक्षोऽपि मूलग्रन्थोक्तदोषं नातिवर्तते" इति वक्तुं तदुपयोगित्वेनार्थक्रियासामर्थ्यादिपक्षं परिशेषयितुं पक्षान्तरे अन्योन्याश्रय उक्तः । इदानीं तु सत्यतानाश्रयत्वमितिलक्षणे मूलग्रन्थोक्ताश्रयासिद्धिरपि वक्तुं शक्येति किञ्चैवमित्यादिना प्रक्रम्य मध्ये व्यावहारिकसत्यत्वेन परेण आश्रयत्वे शङ्किते तदभावोपपादनार्थं "सत्यतानाश्रयत्वमित्यत्र लक्षणे पारमार्थिकत्वनिषेधे अन्योन्याश्रयप्रसङ्गात् सत्तामात्रनिषेधोऽपि विवक्षणीयः । तथा च व्यावहारिकसत्ताया अप्यभावादाश्रयासिद्धिः" इत्येवमाश्रयासिद्धिं वक्तुं तदुपयोगित्वेन सत्तामात्रनिषेधपक्षं परिशेषयितुं पक्षान्तरे अन्योन्याश्रय उच्यत इति फलभेदान्न पौनरुक्त्यं ।

[1]सन्दिग्धाश्रयासिद्धिरुच्यत इति मुद्रितपुस्तकस्थः पाठ एव साधुरिति भाति.

(मं. टि.) ननु न व्यवहारनिर्वाहहेतुसत्ता व्यावहारिकी सत्ता येन तव समीहितसिद्ध्याधिकं स्यात् । किं तु ? अन्यैवेति शङ्कते ॥ भ्रान्तिसिद्धेति ॥ तथा सति नास्तीति ॥ भ्रान्तिसिद्धस्यासित्वे भ्रान्तित्वस्यायोगादित्यर्थः ।

सत्तां विना प्रतीतिगोचरत्वस्यैव आश्रयत्वप्रयोजकत्वशङ्का तन्निरासश्च

(टी.) ननु प्रतीतिगोचरतामात्रेण आश्रयतोपपत्तौ किं सत्तया ? सुरभितासाधने तु गगनारविन्दस्य [1]नाश्रयता सत्ताविरहात् । अपि तु निरुपाख्यत्वादिति चेन्न । तथा सति शब्दाद्गगनारविन्दादिसत्ताप्रतीतौ तत्र सुरभितासाधने नाश्रयासिद्धिरुद्भाव्येत । अस्त्वेवं, अङ्गान्तरवैकल्यं तत्र भविष्यतीति चेन्न । काल्पनिकाङ्गसाकल्यस्य सर्वत्र सौलभ्यात् । तथा च न साधनतदाभासनियमः स्यात् । बाधाद्यभ्युपगमेन नियम इति चेन्न । कथाभासप्रसङ्गेन असत्साधनदूषणयोरपि सत्त्वप्रसङ्गात् । किं चैवं सति प्रकृतानुमानस्यापि न तत्त्वावेदकत्वं स्यात् ।

सत्तां विना अपरोक्षप्रतीतिगोचरत्वस्यैव आश्रयत्वप्रयोजकत्वशङ्का तन्निरासश्च

गगनारविन्दस्यापरोक्षप्रतीतिर्नास्तीति चेत् तथा सत्यतीन्द्रियप्रपञ्चभागस्य अनाश्रयत्वं स्यादिति ।

(मं. टि.) अरविन्दत्वहेतावाश्रयासिद्ध्यनुद्भावनमस्त्वित्याह ॥ अस्त्वेवमिति ॥ कथं तर्हि तस्य दुष्टत्वं ? इत्यत आह ॥ अङ्गान्तरेति ॥ काल्पनिकाङ्गेति ॥ अकाल्पनिकाङ्गसाकल्यं तु तव कुत्रापि नास्तीति शेषः । एवं च सर्वमपि दुष्टं स्यात् अदुष्टं वा । न तु किंचिद्दुष्टं किंचिददुष्टमिति विभागः स्यादित्याह ॥ तथा चेति ॥ कथाभासेति ॥ यद्यङ्गसाकल्यस्य काल्पनिकत्वेऽपि यत्राङ्गसाकल्यं वादिप्रतिवादिप्राश्निकाभ्युपगतं तत्साधनं सत्साधनमन्यदसदिति नियमः तदा भ्रान्तवाद्यारब्धकथाभासे अङ्गसाकल्यवत्तया तदभ्युपगतस्य वस्तुतो दुष्टस्य साधनस्यादुष्टत्वं स्यात् । अविद्यमानाभ्युपगन्तुर्वादित्वमेव नास्तीति चेत्तर्हि अङ्गसाकल्यस्य काल्पनिकत्वेऽपि बाधाद्यभ्युपगमेन नियम इत्यसङ्गतं स्यादिति भावः । एतच्चान्यत्रास्माभिः प्रपञ्चितं ॥ किं चैवं सतीति ॥ इत्यस्यानुमानाङ्गसाकल्ये उभयवादिसंमतिश्चेत् तत्प्रामाण्येऽपि उभयवादिसम्मतिरस्तु । वस्तुतस्तु प्रामाण्यं न स्यात् । वस्तुतोऽङ्गसाकल्याभावात् । अङ्गसाकल्यं च व्यावहारिकमस्तीति चेत्तर्हि प्रामाण्यमपि व्यावहारिकमेवास्तु । न तत्त्वावेदकत्वलक्षणं पारमार्थिकं । प्रयोजकानुरोधित्वात्प्रयोजनस्य । अन्यथा प्रातिभासिकाङ्गसाकल्येन व्यावहारिकावेदकत्वलक्षणं व्यावहारिकं प्रामाण्यं स्यादिति भावः ।

असतोऽपि निषेधाश्रयत्वे व्यावहारिकसत्त्वाङ्गीकारवैयर्थ्यसाधनम्

(टी.) यदप्युक्तं "निषेधं प्रति असतोऽप्याश्रयत्वं सम्भवति । यथा 'वन्ध्यासुतो न वक्ता' इति । अन्यथा स्ववचनव्याघातादिदोषप्रसङ्गः । किन्तु व्यवहारसतः प्रपञ्चस्य" इति । तदनुपपन्नं ।

---

[1] नानाश्रयता इति पाठेन भाव्यमिति भाति.

**(टी.) तथा सति प्रपञ्चस्य व्यावहारिकसत्तास्वीकारवैयर्थ्यप्रसङ्गात् । निषेधं प्रत्याश्रयत्वे विधिं प्रति तत्क्साम्य स्यात् । न हि विधिनिषेधयोर्वस्तुत्वे कश्चिद्विशेषः ।**

(मं. टि.) ॥ **अन्यथा स्ववचनेति** ॥ 'निषेधं प्रति असन् नाश्रयः' इति निषेधाश्रयत्वनिषेधं प्रति असत आश्रयत्वमङ्गीकृतं चेत्पुनस्तन्निषेधे स्ववचनव्याघातः । नाङ्गीकृतं चेन्निषेधाश्रयत्वनिषेधं प्रति अनाश्रयत्वे निषेधाश्रयत्वापात इत्यर्थः ॥ **तथा सतीति** ॥ अनुमानाश्रयत्ववदर्थक्रियान्तरस्यापि व्यावहारिकसत्तां विनैवोपपत्तेर्व्यावहारिकसत्ता व्यर्था स्यात् । न च वाच्यं प्रयोजनवशान्न तदङ्गीकारः । किं तु ? 'सन् घटः' इत्यादिप्रमाणबलादिति । 'सद्गन्धर्वनगरं' इत्यादिवत्तस्य प्रातिभासिकसत्ताविषयत्वेनाप्युपपत्तेः । न च वाच्यं सत्त्वेन व्यवहारातिरिक्तं व्यावहरिकं सत्त्वमेव मया न स्वीकृतं । कस्य वैयर्थ्यमापाद्यते ? इति । असञ्जातबाधभ्रमविषयरूप्येऽपि चिरकालमबाधितसद्व्यवहारसम्भवेन तस्य, गगनारोपितनैल्यादेश्च व्यावहारिकतापातादिति भावः । नन्वसतोऽवस्तुरूपत्वादवस्तुभूतनिषेधं प्रत्याश्रयत्वं युक्तं । न तु विधिं प्रति । तस्य वस्तुत्वेन तदाश्रयस्यासतोऽपि वस्तुत्वप्रसङ्गादित्याशङ्क्य विधिनिषेधयोः स्वरूपसत्त्वरूपवस्तुत्वे न कश्चिद्विशेषः । अभावोऽस्तीति प्रतीतेस्तस्यापि स्वरूपसत्त्वादित्याह ॥ **न हि विधीति** ॥ वस्तुत्व इति विषयसप्तमी । न च निषेधाश्रयत्वे 'वन्ध्यासुतो न वक्ता' इत्यनुभव एव विशेषः । 'वन्ध्यासुतोऽभिधेयः' इति विध्याश्रयत्वेऽपि तद्भावात् । तथा च निषेधग्रहणं व्यर्थमित्यर्थः ।

### तत्वप्रदीपिकाकारोक्तमिथ्यात्वनिरासः

**(टी.)एतेन स्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानत्वं मिथ्यात्वमिति निरस्तं । तदेतदपाकृतासत्त्वानिर्वचनीयत्वाभ्यां न बहिर्भूतमिति न पृथगाशङ्क्य दूषितं ।**

### आश्रयासिद्धेरदोषत्वशङ्का तन्निरासश्च

**नन्वाश्रयासिद्धिरस्माकं न दोषः । परोऽपि तथा अङ्गीकुरुते । 'निरुपाख्यमप्याश्रय एव' इत्युक्तत्वात् । तत्कथं तदुद्भावनं ? इत्थं । यद्यपि परो वैयात्यमात्रेण तथागतमतमनुसृत्य तथाह । तथापि नासौ तत्सिद्धान्तः । तथात्वे निरुपाख्यस्यापि प्रतीत्यङ्गीकारप्रसङ्गात् । प्रपञ्चस्य व्यावहारिकसत्तास्वीकारवैयर्थ्यापत्तेश्चेति ।**

(मं. टि.) आश्रयासिद्धिप्रसङ्गेनैव **तत्वप्रदीपिकाकारोक्त**मिथ्यात्वनिर्वचनं निरस्तमित्याह ॥ **एतेनेति** ॥ स्वात्यन्ताभावसमानाधिकरणत्वमित्येवोक्ते व्याघातः स्यात् । भावतदत्यन्ताभावयोरेकाधिकरणत्वायोगात् । अतस्तथा प्रतीयमानत्वमित्युक्तं । एवं च न व्याघातः । भावाधिकरणतया भ्रान्तिसिद्धस्य वस्तुतोऽभावाधिकरणत्वस्योपपत्तेः । एवं च स्वाधिकरणतया प्रतीयमाननिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति बोद्धव्यं ॥ **तदेतदिति** ॥ अभावप्रतियोगित्वं स्वरूपेण यदि तदा असत्त्वापत्तिः । शशविषाणादेरपि स्वरूपेणात्यन्ताभावप्रतियोगित्वातिरिक्तासत्त्वाभावात् । यदि त्वसद्विलक्षणस्वरूपानुपमर्देन सत्वाकारेण तदा अनिर्वचनीयत्वापत्तिरित्यर्थः ।

॥ **तथागतमतमनुसृत्येति** ॥ परेण निरुपाख्यस्याश्रयत्वमुपपाद्य स्वोक्तार्थे

(मं. टि.) तदुक्तं,

विधानं प्रतिषेधं च मुक्त्वा शाब्दोऽस्ति नापरः ।
व्यवहारः स चासत्सु नेति प्रागत्र मूकता ॥

इति धर्मकीर्तिसम्मतिकथनादित्यर्थः ॥ तथात्व इति ॥ अप्रतीते धर्मिणि कस्यापि निषेद्धुमशक्यत्वात् निरुपाख्ये धर्मिणि किञ्चिन्निषेधता तत्प्रतीतिर्वाच्या । न च वक्तुं शक्या । निरुपाख्यस्य ख्यात्ययोगादित्यर्थः ।

प्रतिज्ञानिराकरणसमाप्तिः हेतुनिराकरणारम्भः

(टी·) प्रतिज्ञानिराकरणानन्तरं हेतुनिरासावसरः । तत्रादौ लिङ्गदर्शनं ततो व्याप्तिस्मृतिः अथावसरविचारस्ततोनुमितिरिति तेनैव क्रमेण हेतुमाभासीकरिष्यन्नसिद्धिं तावदाह

दृश्यत्वाभावादसिद्धो हेतुः

हेतुरिति तदर्थो लिङ्गमुच्यते । परेण हेतुतया अभिधीयमानत्वमेवास्य हेतुत्वं न तु वास्तवमिति न व्याघातः ।

दृश्यत्वस्य सत्वाभावे असत्वप्रसङ्गेनासिद्धत्वोपपादनम्

दृश्यत्वं हि परेण वियदादिप्रपञ्चस्य न तावत्सत्यमङ्गीकर्तुं शक्यं । तत्र दृश्यत्वस्य वृत्तावनैकान्तिकत्वप्रसङ्गात् । अवृत्तावज्ञानासिद्धिप्रसक्तेः । अतस्तदसदेवेति वाच्यं । तथा च दृश्यत्वाभावादसिद्धो हेतुः स्यात् ।

दृश्यत्वस्यानिर्वचनीयत्वे अन्यतरासिद्धिः

मा भूत्सत्यं दृश्यत्वं । अनिर्वचनीयं तु विद्यत एव । अतो नासिद्धिरित्यत आह

अनिर्वचनीयासिद्धेरेव

अनिर्वचनीयदृश्यत्वस्य प्रपञ्चे अस्माकमसिद्धेरसिद्धिरेव ।

दृश्यत्वसामान्यस्य हेतुत्वे अन्यतरासिद्धिः

न ब्रूमो वयं सत्यमनिर्वचनीयं वा दृश्यत्वं हेतुरिति । येनान्यतरासिद्धिः स्यात् । किं नाम ? दृश्यत्वसामान्यं । तच्चास्त्येव वियदादौ वादिप्रतिवादिसंमतमिति कथमसिद्धिः स्यात् । साधारणप्रयुक्तहेतोश्च विशेषविकल्पेन निरासे सर्वानुमानभङ्गः । तथा च धूमाद्धूमध्वजसाधनेऽप्यनेतद्देशकालसंलग्नो धूमो हेतुः? किं वैतद्देशकालसंलग्नः? इति विकल्प्य असिद्धिराद्ये, द्वितीये साधनशून्यं निदर्शनमिति शक्यते वक्तुं । तत्र च अविवक्षितविशेषं धूममात्रं हेतुरित्येव परिहारः । स तु समः प्रकृतेऽपीति । तत्राप्येतदेवोत्तरं । तथा हि, स्यादयं धूमानुमाने परिहारः धूमद्वयेऽपि धूमत्वसामान्यस्य वादिप्रतिवादिसंमतत्वात् । न च सत्यानिर्वचनीयदृश्यत्वयोर्दृश्यत्वसामान्यं वादिप्रतिवादिसंमतं । येनात्र तथा परिहारः स्यात् । अनिर्वचनीयस्य स्वरूपत एवास्माकमसिद्धेः । नचासिद्धाश्रयं सामान्यं सिद्धं भवति ।

(मं. टि.) ॥ अथावसरविचार इति ॥ सति प्रतिप्रमाणे अनुमानानुदयात्तदभावलक्षणावसरोऽप्यनुमित्सता विचार्यत इत्यर्थः । लिङ्गवचनं हेतुः । तच्च सिद्धमेवेति कथं असिद्धो हेतुरित्याचार्येणोक्तं ? इति । अत आह ॥ हेतुरिति तदर्थ इति ॥ [1]अस्यार्थसम्बन्धरूपलक्षणाबीजं उच्यत इति वचनवृत्तिं च कथयतोऽयमभिप्रायः । 'धूमो हेतुः' इत्यादिप्रयोगदर्शनाल्लिङ्गं हेतुशब्दवाच्यमिति कृत्वा अत्रापि वचनवृत्त्या लिङ्गं हेतुशब्देनोच्यते । यदि तु कश्चिद्ब्रूयात् 'प्रतिज्ञाहेतूदाहरणानि' इत्यादौ हेतुशब्दस्य लिङ्गवचने प्रयोगात् तदेव हेतुशब्दार्थः 'धूमो हेतुः' इत्याद्यपि लक्षणयोपपन्नमिति तदा प्रकृतेऽपि [2]लक्षणया तद्वल्लिङ्गं प्रतिपाद्यतामिति । यद्वा उच्यत इति प्रतिपादनमात्रं विवक्षितं नाभिधावृत्तिः । अथ वा तदर्थ इति न लक्षणाबीजं कथ्यते । किं तर्हि ? वचनस्य सिद्धत्वेऽपि तदर्थो हेतुरसिद्ध इत्यसिद्धिरिति । असिद्धस्य हेत्वाभासत्वेन हेतुत्वाभावात् असिद्धो हेतुरिति कथमुक्तं ? इत्यत आह ॥ परेणेति ॥ तत्र दृश्यत्वस्येति ॥ हेतोरेव साध्यशून्यतया विपक्षत्वेन तत्र हेतुवृत्तौ अनैकान्तिकतेत्यर्थः ॥ अवृत्ताविति ॥ दृश्यत्वे दृश्यत्वस्यावृत्तौ [3]दृश्यत्वहेतोरज्ञानविषयतया अज्ञानासिद्धिस्स्यादित्यर्थः ॥ तत्राप्येतदेवोत्तरमिति ॥ अनिर्वचनीयदृश्यत्वरूपविशेषस्यात्यन्ताभावं प्रतिपादयता अनिर्वचनीयासिद्धेरेव इत्यनेन ग्रन्थेनार्थादनुगतसामान्याभावस्यापि प्रतिपादितत्वादित्यर्थः ॥ न चासिद्धाश्रयं सामान्यं सिद्धं भवतीति ॥ यद्यसिद्धाश्रयं सामान्यं सिद्ध्येत तदा वन्ध्यासुतेऽपि सुतत्वं बाष्पारोपितधूमेऽपि धूमत्वं च स्यात् । न च तद्युक्तं मातृजन्यत्वविशेषस्य अग्निव्याप्यत्वविशेषस्य च तत्रायोगात् । अथ वह्निव्याप्यताविशेषः सत्यधूमत्वं । धूमत्वमात्रं तु धूमतया प्रतीयमानत्वं तथा व्यवह्रियमाणत्वं वा । तच्च तत्राप्यस्तीति चेत् धूमतयेत्यत्र धूमशब्देन किं वह्निव्याप्यतोच्यते ? किं वा धूमतया प्रतीयमानत्वादिः? आद्ये सैव धूमता स्यात् । द्वितीये धूमताशब्देन किं वह्निव्याप्यतेत्यादिपूर्वोक्तविकल्पापर्यवसानादनवस्था स्यात् । किं च प्रकृतेऽपि तर्हि दृश्यत्वमात्रं तथा व्यवह्रियमाणत्वं वाच्यं । न च वक्तुं शक्यं । आत्मनोऽपि दृश्यतया मया व्यवह्रियमाणत्वादिति तात्पर्यं ।

**दृग्जन्यफलाश्रयत्वस्य दृश्यत्वे अविद्ययादिदोषाः**

(टी.) अथ वा दृग्जन्यफलाश्रयत्वं दृश्यत्वं परेण वक्तव्यं । वृत्तिव्याप्यत्वस्य साधारणस्य च दृश्यत्वस्य आत्मनि विपक्षेऽप्यङ्गीकृतत्वेन अनैकान्तिकत्वापातात् । ज्ञाततालक्षणफलस्यान्यत्र निराकृतत्वेन अस्मन्मते दृश्यत्वाभावादसिद्धो हेतुः स्यात् ।

ज्ञातताङ्गीकारेऽपि अतीतादावतीन्द्रियेषु च दृश्यत्वाभावाद्भागासिद्धिः । असिद्धो हेतुरिति च योगविभागः कर्तव्यः । तेन आश्रयासिद्धिसङ्ग्रहोऽपि भवति । उपपत्तिस्तु पूर्वोक्तैवानुसन्धेयेति ।

---

[1] मुख्यार्थसम्बन्धरूपलक्षणाबीजं, इति मुद्रितपुस्तकस्थः पाठः । वस्तुतस्तु ॥ हेतुरितीति ॥ तदर्थ इति मुख्यार्थसम्बन्धरूपलक्षणाबीजं, उच्यत इति वचनवृत्तिं च कथयतोऽयमभिप्रायः इति पाठेन भाव्यमिति भाति । 'अथ वा तदर्थ इति न लक्षणाबीजमुच्यते' इति अग्रिमग्रन्थस्वारस्यात्. [2] लक्षणयैव लिङ्गं हेतुशब्देन प्रतिपाद्यतां इति मुद्रितपुस्तकस्थः पाठः ।

[3] दृश्यत्वहेतोर्ज्ञानाविषयतया इति मुद्रितपुस्तकस्थः पाठः

(टी.) ननु दृश्यत्वाभावातिरिक्तं न तस्यासिद्धत्वं नाम । अतः कथं हेतुहेतुमद्भावः? मैवं, सामान्यविशेषभावेन वृक्षत्वशिंशुपात्वयोरिवोपपत्तेः । व्यवहारो वा अत्र साध्य इत्यदोषः । एवमुत्तरत्रापि वेदितव्यं ।

(मं. टि.) ॥ दृग्जन्यफलाश्रयत्वमिति ॥ अन्तःकरणवृत्तिरूपदृग्जन्यज्ञातताशब्दवाच्यमभिव्यक्तस्फुरणसम्बन्धरूपं यत्फलं तदाश्रयत्वमित्यर्थः ॥ वृत्तिव्याप्यत्वस्येति ॥ अन्तकरणवृत्तिविषयत्वस्येत्यर्थः ॥ साधारणस्येति ॥ फलव्याप्यवृत्तिव्याप्यानुगतस्य व्यवहारविषयतालक्षणसामान्यस्येत्यर्थः ॥ अङ्गीकृतत्वेनेति ॥ प्रमाणजनितान्तःकरणवृत्तिव्याप्यत्वेन विषयताङ्गीकार इति परेण वृत्तिव्याप्यतारूपविशेषस्य अङ्गीकृतत्वाद्विशेषस्य सामान्यं विना अयोगादर्थान्तरस्याप्यङ्गीकृतत्वादित्यर्थः । ज्ञाततामङ्गीकुर्वतोपि वादिनो भागासिद्धो हेतुरित्येतदर्थपरतया दृश्यत्वाभावादित्येतद्व्याचष्टे ॥ ज्ञातताङ्गीकारेऽपीति ॥ तेनाश्रयासिद्धीति ॥ आश्रयासिद्धः पक्षः इत्यत्र बाधरूपः प्रतिज्ञादोष उक्तः । अत्र त्वाश्रयशून्यतालक्षणं हेतुदूषणमुच्यत इति न पौनरुक्त्यं ॥ सामान्यविशेषभावेनेति ॥ यथा शिंशुपात्वं वृक्षत्वसामान्ये हेतुः तेन तदनुमानदर्शनात् तथा दृश्यत्वाभावरूपो विशेषोऽसिद्धत्वसामान्ये हेतुः । सामान्यविशेषभावश्च असिद्धत्वस्य शब्दपक्षीकारेण प्रयुक्तचाक्षुषत्वादावपि भावात् । दृश्यत्वाभावस्य तु दृश्यत्वमात्रसम्बन्धित्वादिति भावः । अन्ये तु दृश्यत्वस्य स्वरूपेणाभावो हेतुः । तस्य हेतुत्वाकारेणाभावो हेतुमानिति व्याचक्षते । पक्षान्तरमाह ॥ व्यवहारो वेति ॥ असिद्धत्वं हेतुः, असिद्ध इति व्यवहारः साध्य इति तयोर्भेद इत्यर्थः ।

### व्याप्तिभङ्गभेदवतां असिद्धादीनां दुष्टत्वक्रमनिरूपणम्

(टी.) व्याप्तिभङ्गभेदाः विरुद्धानैकान्तिकानध्यवसिताः । तत्र विरुद्धो विपरीतनिश्चयं करोति । अनैकान्तिकः सन्देहमुत्पादयति । अनध्यवसितस्तु ज्ञानमेव न जनयति। तदेवं दुष्टत्वक्रमानुरोधेन व्याप्त्यभावमुद्भावयिष्यन् विरुद्धं तावदाह

### दृश्यत्वहेतोर्विरुद्धत्वसमर्थनम्

## अनिर्वचनीयासिद्धेरेव सपक्षाभावाद्विरुद्धः

हेतुरिति सर्वत्रानुवर्तते । ननु साध्यविपरीतव्याप्तो हेतुर्विरुद्ध उच्यते । न तु सपक्षशून्यः । तथा सति केवलव्यतिरेकिणो हेतोरनध्यवसितविशेषस्यापि विरुद्धत्वप्राप्तेः । तत्कथमुक्तं 'सपक्षाभावाद्विरुद्धः' इति ? । कथं च अनिर्वचनीयासिद्धेः सपक्षाभावः ? न ह्यनिर्वचनीयता मिथ्यात्वं इति परेणोक्तमिति । मैवं, एवं हीदं विज्ञायते । यावन्तो हि मिथ्यात्वविकल्पास्ते सर्वे नासत्त्वानिर्वचनीयत्वाभ्यां बहिर्भूता इत्युपपादितं । तत्रासत्यत्वमपसिद्धान्तादिभयाच्च परेणाङ्गीकृतमिति वाचनिकविन्यासभेदेनाप्यनिर्वचनीयत्वमेव परस्याभिप्रायव्याप्तं । ततोऽनिर्वचनीयेनैव सपक्षेण भाव्यं । तथा

(टी.) च यथा अनिर्वचनीयासिद्धेरप्रसिद्धविशेषणत्वाद्युक्तं एवं तत एव सपक्षाभावाद्वियदादिव्यतिरिक्तं सर्वं विपक्ष इति शुक्तिरजतादौ विपक्षे वर्तमानत्वात्साध्यविपरीतव्याप्त्या विरुद्धो हेतुरिति ।

**मूले पूर्वापरविरोधशङ्का तत्परिहारश्च**

ननु 'रजतं दृष्टमिति भ्रममात्रत्वात्' इति शुक्तिरजतादेर्दृश्यत्वाभावं वक्ष्यति । अतः कथं न विरोधः? सत्यं, यथा न विरोधस्तथा तत्रैव वक्ष्यामः ।

**दृश्यत्वहेतोः साध्याभावेन व्याप्तिसमर्थनम्**

अथ वा 'आत्मनोपि दृश्यत्वात्' इति वक्ष्यमाणमत्रापि सिंहावलोकनन्यायेन सम्बद्ध्यते । तत्र 'सपक्षाभावात्' इत्यनेन साध्यसम्बन्धाभाव उपपादितः । 'आत्मनोपि दृश्यत्वात्' इत्यनेन तदभावसम्बन्धः समर्थितः । तथा च विपरीतव्याप्तिरेव सिद्धा भवतीति ।

(मं. टि.) ॥ व्याप्तिभङ्गभेदा इति ॥ साध्याभावमात्रसम्बन्धसाध्यतदभावसम्बन्धानुभयसम्बन्धरूपाणां व्याप्तिभङ्गानां क्रमेण विरुद्धादिनिष्ठत्वात् विरुद्धादयो व्याप्तिभङ्गविशेषवन्त इत्यर्थः । यद्वा विरुद्धादिशब्दानां भावप्रधानत्वाद्विरुद्धत्वादयो व्याप्तिभङ्गविशेषा इत्यर्थः ॥ तत्र विरुद्ध इत्यादि ॥ विरुद्धस्य स्वव्यापको यः साध्याभावः तन्निश्चायकत्वाद्विपरीतनिश्चयजनकत्वं । अनैकान्तिकस्य स्वसहचरितसाध्यतदभावलक्षणकोटिद्वयस्मरणद्वारा संशयहेतुत्वं । अनध्यवसितस्य तु साध्यासहचरितस्य तदबोधकत्वमित्यर्थः ॥ दुष्टत्वक्रमेति ॥ लोके हि कर्तव्याकरणमकर्तव्यकरणं चेति दोषः । प्रकृते च कर्तव्या साध्यप्रमा । [1]अकर्तव्या च तदभावप्रमा । तत्रानध्यवसितस्य कर्तव्याकरणमात्रं । इतरयोश्चाकर्तव्यकरणविशिष्टं । तत्राप्यनैकान्तिकजन्या संशयरूपा च या अप्रमा सा साध्यमप्यवलम्बते । विरुद्धजन्या साध्याभावनिश्चयरूपा प्रमा न साध्यगन्धं सहत इति विरुद्धस्यातितरां दुष्टत्वमनैकान्तिकस्यातिदुष्टत्वं अनध्यवसितस्य दुष्टत्वमात्रमिति क्रम इत्यवगन्तव्यं ।

अन्ये तु विरुद्धो विपरीतनिश्चयमित्यस्य ग्रन्थस्य विरुद्धः साध्याभावव्याप्तत्वात् साध्याभाववति साध्यविषयकविपर्ययं जनयतीत्यर्थः । अनैकान्तिकस्तु सन्देहमित्यादेः पूर्वोक्त एवार्थ इति वदन्तस्तदनुसारेण दुष्टत्वक्रमेत्येतमपि ग्रन्थं विरुद्धस्य विपर्ययजनकत्वादतितरां दुष्टत्वं अनैकान्तिकस्य सन्देहजनकत्वादतिदुष्टत्वं अनध्यवसितस्तु ज्ञानमेव न जनयतीति तस्य दुष्टतामात्रमिति व्याचक्षते ।

॥ अनध्यवसितविशेषस्येति ॥ अविद्यमानसपक्षविपक्षस्य 'सर्वमनित्यं सत्त्वात्' इत्यादेः, विद्यमानविपक्षस्य अविद्यमानसपक्षस्य 'सर्वं कार्यं प्रधानान्वितं कार्यत्वात्' इत्यादेरनध्यवसितस्येत्यर्थः । 'भूर्नित्या गन्धवत्त्वात्' इति विद्यमानसपक्षानध्यवसितव्युदासाय विशेषग्रहणं ।

---

[1] अकर्तव्या च तदप्रमा तदभावप्रमा च, इति मुद्रितपुस्तकस्थः पाठः । वस्तुतस्तु 'अकर्तव्या च तदप्रमा । सा द्विविधा तत्संशयरूपा तदभावप्रमारूपा चेति', इति पाठेन भाव्यमिति भाति । अग्रिमग्रन्थे 'अनैकान्तिकजन्या संशयरूपा च या अप्रमा, विरुद्धजन्या साध्याभावनिश्चयरूपा प्रमा' इत्यभिधानं तदैव घटते ।

(मं. टि.) परेण विरुद्धतापरिहारानुपयोगितया पश्चादाशङ्कितमपि सपक्षसद्भावं सपक्षाभावात् इति मूलग्रन्थोक्तसपक्षाभावरूपहेतोरसिद्धिकथनार्थत्वेन अत्यन्तमूलग्रन्थविरोधितया प्रथमं निषेधति ॥ यावन्तो हीति ॥ विपरीतव्याप्त्या विरुद्ध इति ॥ आचार्येण विपरीतव्याप्त्युपपादनाय सपक्षाभाव उक्तो न तु विरुद्धलक्षणतयेति भावः ॥ वक्ष्यतीति ॥ तथा च तेन अस्य शुक्तिरूप्यादेर्दृश्यत्वमङ्गीकृत्य प्रवृत्तस्य विरोध इति शेषः ॥ तथा चेति ॥ तदसम्बन्धित्वे सति तदभावसम्बन्धिनस्तदभावव्याप्तिरिति नियमाद्विपरीतव्याप्तिसिद्धिरिति भावः।

दृश्यत्वहेतोरनैकान्तिकतासमर्थनम्

## आत्मनोऽपि दृश्यत्वादनैकान्तिकः

(टी.) न केवलं सपक्षस्य शुक्तिरजतादेः। किं तु ? विपक्षस्यात्मनोऽपीति योजना। नन्वेतद्विरुद्धं। प्रागनिर्वचनीयाभावात्सपक्षाभाव उक्तः। इदानीं तु तद्भावः। न हि तदभावे तत्र दृश्यत्वस्य वृत्तिः सम्भवतीति। सत्यं, अभ्युपगमवादोयमित्यदोषः। बाधनैकान्तिको वा। आत्मनि दृश्यत्वस्य तं प्रति समर्थनात्।

अथ वा मिथ्यात्वं नाम असत्वं वा अनिर्वचनीयत्वं वा सद्विविक्तत्वं वा वक्तव्यं। तत्र अनिर्वचनीयत्वे साध्ये विरुद्धत्वमुक्त्वा असत्वसद्विविक्तत्वयोरनैकान्तिकत्वमनेनोच्यते। एतेन लक्षणविरोधोऽपि परिहृतः।

(मं. टि.) ॥ बाधनैकान्तिको वेति॥ वस्तुतः सपक्षाभावेऽपि परेण सपक्षस्य तस्मिंश्च हेतुवर्तनस्य चाङ्गीकृतत्वादित्यर्थः। तर्हि परेण विपक्षवृत्तित्वस्यानङ्गीकारात् न तद्रीत्या अनैकान्तिकत्वमित्याशङ्क्य युक्तिबलात्परेण तदङ्गीकार्यमित्याह ॥ आत्मनीति ॥ एतेनेति ॥ विरुद्धानैकान्तिकत्वयोः पक्षभेदेन व्यवस्थितत्वेन लक्षणविरोधः साध्यतदभावसम्बन्धतदभावमात्रसम्बन्धगर्भयोरनैकान्तिकविरुद्धलक्षणयोर्विरोधः परिहृत इत्यर्थः।

आत्मनः स्वप्रकाशत्वेन दृश्यत्वाभावशङ्का

(टी.) आह, नात्मनो दृश्यत्वं युक्तं। तस्यापराधीनप्रकाशत्वात्। तथा हि, ममेदमनुकूलं प्रतिकूलमिति वा विज्ञानस्य अवच्छिन्नप्रकाशत्वेन अवच्छेदकात्मप्रकाशनान्तरीयकत्वात् अवश्यमात्मा प्रकाशत इत्यङ्गीकार्यं। तस्य च मानसवेदनीयतायां वृत्तिविरोधात्, संवित्कर्मतामन्तरेणापरोक्षस्य संविदधीनप्रकाशताविरोधात् परिशेषतः स्वप्रकाशतासिद्धिरिति।

आत्मनो दृश्यत्वसमर्थनम्

तत्रेदं वक्तव्यं, किमात्मनो निरुपाधिकरूपमपराधीनप्रकाशं ? उत सोपाधिकमपि ? आद्ये किमनेनानुकूलप्रतिकूलसम्बन्धिनः सोपाधिकस्यापराधीनप्रकाशताप्रतिपादनेन। द्वितीये तु ज्ञानमात्रस्यात्मन्यवृत्तिप्रसङ्गात्।

सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते ।

(टी.) इत्यादिस्ववचनविरोधश्च स्यात् । किं च 'आत्मा न पराधीनप्रकाशः' इति वृत्तिविषयो न वा ? आद्ये दृश्यत्वापत्तिः । मूकोऽहमितिवत्स्वक्रियाविरोधश्च । द्वितीये व्यतिरेकासिद्ध्या सन्दिग्धानैकान्तिकः ।

सोपाधिकस्य दृश्यत्वव्यतिरेकावच्छिन्नस्य दृश्यत्वं स्यादेवेति आनन्दबोधोक्तिनिरासः

नन्वात्मनो निरुपाधिकं रूपमेवापराधीनप्रकाशं । सोपाधिकं तु पराधीनप्रकाशमपि । तेन स्वप्रकाशत्वेऽपि व्यतिरेकावच्छिन्नस्य स्यादेव दृश्यतेति चेत् न । व्यतिरेकावच्छिन्नस्य सत्यत्वे अनैकान्त्यतादवस्थ्यात् । मिथ्यात्वे किमनेन सिद्धेनापि व्यतिरेकेण । प्रत्युत तस्य पक्षतया भागासिद्धिश्च स्यात् ।

दृश्यत्वव्यतिरेकावच्छिन्नं दृश्यमिति विप्रतिषिद्धं च । अत एव 'यतो वाचः' इत्यादिश्रुतयोऽप्यन्यथा योजनीयाः । निरुपाधिकरूपे पुनस्तदवस्थो व्यतिरेकानिश्चयः ।

(मं. टि.) आत्मनः स्वप्रकाशतामुपपादयितुं प्रकाशमात्रं तावदुपपादयति ॥ ममेदमिति । 'ममेदमनुकूलं' इत्यादिज्ञानस्य अहमर्थविशिष्टानुकूलादिवस्तुप्रकाशत्वेन अवच्छेदकात्मप्रकाशोऽङ्गीकार्यः । दण्ड्यादिलक्षणावच्छिन्नप्रकाशस्य दण्डादिलक्षणावच्छेदकप्रकाशसाहित्यनियमदर्शनादित्यर्थः । एवमात्मनः प्रकाशमात्रमुपपाद्य तस्यापराधीनप्रकाशत्वसिद्धये नैयायिकाङ्गीकृतां मानसवेद्यतां तावन्निषेधति ॥ तस्येति ॥ आत्मनो मनोजन्यस्वनिष्ठज्ञानवेद्यत्वे स्वनिष्ठक्रियायाः स्वस्मिन्विषये वृत्तिरापद्येत । सा चायुक्ता । देवदत्तगताया गतेस्तद्विषयत्वादर्शनादित्यर्थः । नन्वस्त्वात्मनो मानसवेदनीयत्वाभावः । तथाप्यपराधीनता आत्मप्रकाशस्य कुतः? ज्ञानाश्रयत्वेनाप्यात्मनः प्रकाशोपपत्तेरिति [1]भास्करस्य शङ्कां निरस्यति ॥ संवित्कर्मतामिति ॥ अयमर्थः, आत्मा न संविदधीनप्रकाशः संवित्कर्मतामन्तरेणापरोक्षत्वात् संवेदनवत् । घटादौ धर्माधर्मादौ च व्यभिचारपरिहारार्थं हेतुगतं विशेषणद्वयं । न च नैयायिकादीन्प्रति विशेषणासिद्धिः । संवित्कर्मत्वे वृत्तिविरोधस्योक्तत्वात् । न च निदर्शनस्य साध्यवैकल्यं । संविदः संविदन्तराधीनप्रकाशत्वे अनवस्थानादिति ।

परिहरति ॥ तत्रेदमिति ॥ आद्यं दूषयति ॥ आद्य इति ॥ निरुपाधिकस्यैवापराधीनप्रकाशत्वे ममेदमित्यादिना अनुकूलादिविशिष्टस्य अन्तःकरणसम्बन्धिचैतन्यरूपस्य अहमर्थस्य स्वयंप्रकाशत्वसाधनमसङ्गतमित्यर्थः । द्वितीयं दूषयति ॥ द्वितीय इति ॥ निरुपाधिकरूपवत्सोपाधिकरूपस्याप्यपराधीनप्रकाशत्वाङ्गीकारे आत्मनि ज्ञानमात्रं निषिद्धं स्यात् । तथा चापसिद्धान्तः स्यात् ।

सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते ।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ॥

इति मण्डनमिश्रादिभिस्तस्य वेद्यताभिधानादित्यर्थः । दोषान्तरमाह ॥ किं चेति ॥ 'आत्मा न पराधीनप्रकाशः' इत्येवंप्रकारकवृत्तिविषयो न वेति विकल्पार्थः ॥ स्वक्रियाविरोध इति ॥ यथा मूकोऽहमिति वच-

[1] प्राभाकरमतमाशङ्क्य निरस्यति, इति मुद्रितपुस्तकगतः पाठ एव साधुरिति भाति । तस्य त्रिपुटीप्रत्यक्षवादित्वात्,

(अं. टि.) नक्रियया मूकपदोक्तवचननिषेधो विरुद्ध्यते तथा 'आत्मा पराधीनप्रकाशो न' इति आत्मसम्बन्धित्वेन-पराधीनप्रकाशत्वनिषेधकात्मविषयकज्ञानक्रियया नेतिपदोक्तनिषेधो विरुद्ध्यत इत्यर्थः ॥ द्वितीय इति ॥ यत्र मिथ्यात्वाभावस्तत्र दृश्यत्वाभाव इति व्यतिरेकोऽस्ति न वा? । आद्ये आत्मन्येव स दर्शयितव्यः । अत्यन्तासति सद्विविक्तत्वरूपमिथ्यात्वस्य पराधीनप्रकाशत्वरूपदृश्यत्वस्य च सद्भावेन तत्र व्यतिरेकासम्भवात् । न चात्मनि स शक्यो दर्शयितुं । 'आत्मा न पराधीनप्रकाशः' इति पराधीनप्रकाशत्वरूपदृश्यत्वाख्यसाधनाभावविषयकज्ञानं प्रत्यात्मनो विषयत्वाभावेन तन्निष्ठतया व्यतिरेकस्य ज्ञातुमशक्यत्वात् । द्वितीये सन्दिग्धानैकान्तिकता । निश्चितसाध्याभाववति साधनाभावनियमानिश्चयेन तत्र साधनसन्देहादित्यर्थः ।

ननु 'आत्मा न पराधीनप्रकाशः' इति वृत्तिविषय इत्याद्यः पक्षोऽङ्गीक्रियते । तर्हि दृश्यत्वं स्यादिति चेत् किं निरुपाधिकस्य? किं वा सोपाधिकस्य? नाद्यः अपराधीनप्रकाशत्वविशिष्टस्यैव तत्र स्फुरणान्निरुपाधिकस्य तत्रास्फुरणात् । न द्वितीयः सोपाधिकस्य दृश्यत्वाङ्गीकारादिति चोदयति ॥ नन्विति ॥ निरुपाधिकं रूपमेवापराधीनप्रकाशं सोपाधिकं तु तदेव रूपं पराधीनप्रकाशमपीत्यपिशब्दो योज्यः । एवं च निरुपाधिकस्यापराधीनप्रकाशत्वेऽपि दृश्यत्वाभावावच्छिन्नस्य दृश्यत्वसिद्धौ सिद्धो व्यतिरेक इत्याह ॥ तेनेति ॥ तत्रेदं वक्तव्यं, किं सोपाधिके व्यतिरेकः प्रदर्श्यते? किं वा निरुपाधिके? आद्ये सोपाधिकं सत्यं मिथ्या वा । आद्यं दूषयति ॥ न व्यतिरेकावच्छिन्नस्येति ॥ व्यतिरेकावच्छिन्नस्यादृश्यत्वे तन्निष्ठतया व्यतिरेकस्य ज्ञातुमशक्यत्वात् सत्यस्य दृश्यत्वावश्यम्भावाद्व्यभिचार इत्यर्थः । द्वितीयं दूषयति ॥ मिथ्यात्व इति ॥ अनेन दृश्यत्वरूपसाधनस्य व्यतिरेकेण [1]किमपि । मिथ्यात्वरूपसाध्यव्यतिरेकाभावेन व्यतिरेकव्याप्तेरदर्शितत्वादित्यर्थः ॥ भागासिद्धिरिति ॥ सोपाधिकस्य मिथ्यात्वे तस्यापि पक्षीकर्तव्यतया दृश्यत्वस्य तत्रावृत्तौ भागासिद्धिरित्यर्थः ।

एवं विशिष्टस्य मिथ्यात्वात् विशिष्टे साध्यव्यतिरेको नास्तीत्युक्तं । इदानीं साधनव्यतिरेको वा तज्ज्ञानं वा स्यादयं । साधनव्यतिरेको हि सोपाधिकस्य दृश्यत्वव्यतिरेकावच्छिन्नत्वमपेक्षते । सोपाधिकावच्छिन्नतया साधनव्यतिरेकज्ञानं तु सोपाधिकस्य दृश्यत्वमपेक्षते । न च दृश्यत्वव्यतिरेकावच्छिन्नत्वदृश्यत्वयोरेकत्रावस्थानं युक्तं विरोधात् । एवं च 'व्यतिरेकावच्छिन्नस्य स्यादेव दृश्यता' इति आनन्दबोधोक्तिश्च व्याहतेत्याह ॥ दृश्यत्वव्यतिरेकेति ॥

### दृश्यत्वदृश्यत्वाभावयोः सामानाधिकरण्यशङ्का तन्निरासश्च

ननु भावाभावयोः सामानाधिकरण्ये हि विप्रतिषेधः स्यात् । न त्वेतदस्ति । स्वरूपमात्रे दृश्यत्वाभावः, स्वरूपमात्राद्भिन्ने दृश्यत्वव्यतिरेकावच्छिन्ने दृश्यत्वमित्यधिकरणभेदाङ्गीकारादिति चेन्मैवं । दृश्यत्वव्यतिरेकाश्रयस्य दृश्यत्वव्यतिरेकावच्छिन्नतया दृश्यतासिद्ध्यर्थं दृश्यत्वव्यतिरेकदृश्यत्वयोः सामानाधिकरण्यस्यावश्यकत्वात् । अन्यथा एकत्र व्यतिरेकः अपरत्र दृश्यत्वव्यतिरेकाभाव इत्युक्तौ यत्र व्यतिरेकमात्रं तत्र स्वरूपमात्रसिद्धावपि तदवच्छिन्न-

[1] किं ! न किमपि, इति पाठेन भाव्यमिति भाति.

(मं. टि.) तथा व्यतिरेकज्ञानासम्भवः । न हि तस्याज्ञाने तदवच्छिन्नतया किञ्चिज्ज्ञातुं शक्यं । यत्र दृश्यत्वमात्रं तत्र तद्व्यतिरेकस्यैव असम्भव इति दूरे तदवधारणमिति ।

श्रुतिभिरपि सर्वथा दृश्यत्वं निषिद्ध्यते चेत् ब्रह्मसम्बन्धित्वेनैव तन्निषेद्धव्यं । न च ब्रह्मणोऽज्ञाने तत्र दृश्यत्वं निषेद्धुं शक्यं । अज्ञाते धर्मिणि धर्मनिषेधायोगात् । एवं च सर्वथा दृश्यत्वनिषेधे व्याघातादेव अन्यपरत्वं तासामित्याह ॥ **अत एवेति** ॥ एवं तावदवच्छिन्नस्य दृश्यत्वेन तन्निष्ठतया व्यतिरेकस्य शक्यज्ञानत्वेऽपि अवच्छिन्नस्य मिथ्यात्वाद्दृश्यत्वाच्च साध्यसाधनयोर्व्यतिरेकस्वरूपमेव तत्र न सम्भवतीति सोपाधिके व्यतिरेकः प्रदर्श्यत इति पक्षो दूषितः । इदानीं निरुपाधिके व्यतिरेकः प्रदर्श्यत इति पक्षं दूषयति ॥ **निरुपाधिक इति** ॥ निरुपाधिकस्यात्मनः सत्यत्वेन तत्र साध्यव्यतिरेकस्य अदृश्यत्वेन साधनव्यतिरेकस्य च स्वरूपतः सद्भावेऽपि निरुपाधिकस्य अदृश्यतया तन्निष्ठत्वेन व्यतिरेकनिश्चयो न सम्भवतीति तत्र तन्निश्चयं वदता तस्य दृश्यत्वं वक्तव्यमित्यनैकान्तिकत्वमित्यर्थः ।

### आत्मस्वरूपस्यादृश्यत्वेपि दृश्यत्वाभाववैशिष्ट्यस्य दृश्यत्वशङ्का तन्निरासश्च

अत्र केनचित्प्रलपितं, स्वयंप्रकाशत्वेन प्रकाशमाने आत्मनि 'यतो वाचो निवर्तन्ते' इत्यादिवाक्याददृश्यत्वाकारा बुद्धिरुत्पद्यते । तस्यां चाभिव्यक्तो दृगात्मा स्वाध्यस्तं दृश्यत्वाभाववैशिष्ट्यं साधयति । एवं चात्मस्वरूपेऽदृश्येऽपि दृश्यत्वाभाववैशिष्ट्यं दृश्यं भविष्यति । न च वाच्यं दृश्यत्वाभाववैशिष्ट्यस्य मिथ्यात्वे दृश्यत्वं वास्तवं स्यादिति । स्वप्ने भावतद्विपर्ययोरध्यस्ततादर्शनादिति । तत्तुच्छं । तथा हि, अदृश्यत्वाकारबुद्धिः किमात्मावच्छिन्नमदृश्यत्वं बोधयति ? उतानवच्छिन्नं ? आद्ये अवच्छेदकात्मनोपि ज्ञानं स्यात् । द्वितीये कथं दृश्यत्वाभावविशिष्टस्यात्मीयतासिद्धिः? [1]वाक्यादुत्पन्नायाश्च वृत्तेरध्यस्तदृश्यत्वविषयकत्वेन कथं वाक्याप्रामाण्यापातः । किं चैवमारोपितो दृश्यत्वव्यतिरेकः आत्मनीव प्रपञ्चेप्यस्तीत्यसिद्धिः । प्रपञ्चे दृश्यत्वमारोपितमस्तीति नासिद्धिरिति चेत् तर्ह्यात्मन्यप्यध्यस्तं तदस्तीति व्यभिचारः । किं च दृश्यत्वाभावस्याध्यस्तत्वे तदभावरूपेण दृश्यत्वेन बाधगोचरेण भवितव्यं । बाधविषयस्य चाध्यस्तत्वे बाधस्याप्रामाण्यप्रसङ्गात्सत्यतासिद्धिः । अत एव स्वप्नदृष्टान्तोऽप्यसम्प्रतिपन्न इत्यलं दुर्बलहिंसया ।

### प्रकारान्तरेण आत्मनो दृश्यत्वसमर्थनम्

(टी.) एवमात्मैकत्वज्ञानमपि सोपाधिकविषयं चेत् न मोक्षसाधनं स्यात् । निरुपाधिकविषयत्वे दृश्यत्वापत्तिः ।

### व्यतिरेकावच्छिन्नस्य स्यादेव दृश्यतेति परवाक्येनैवाऽऽत्मनो दृश्यत्वसमर्थनम्

किं च यथा दण्डिनो दर्शने देवदत्तोऽपि दृष्ट एव एवमवच्छिन्नात्मनो दृश्यत्वेऽप्यात्मा दृष्ट एवेति किमनेन ? तथापि शुद्धेन रूपेण न दृश्यत इति चेत् मा दर्शि । सत्येऽप्यात्मनि गतं दृश्यत्वं । अनैकान्तिकं स्थितमेव । सोऽपि मिथ्येति चेत् तर्हि किमत्र व्यतिरेकग्रहणेन ? इत्युक्तं । अपि चैवं घटोऽप्यपराधीनप्रकाश इति भागासिद्धत्वं स्यात् ।

[1] वाक्यादुत्पन्नायाश्च वृत्तेरध्यस्तदृश्यत्वाभावविषयकत्वेन कथं न वाक्याप्रामाण्यापातः इति पाठेन भाव्यमिति भाति.

(मं. टि.) प्रकारान्तरेणाप्यात्मनो दृश्यत्वमुपपादयति ॥ एवमिति ॥ सोपाधिकेति ॥ मिथ्याभूतसोपाधिकविषयभ्रान्तिज्ञानस्याविद्यानिवर्तकत्वायोगादित्यर्थः । 'व्यतिरेकावच्छिन्नस्य स्यादेव दृश्यता' इति परोक्त्यैव अवच्छेद्यस्यात्मनोऽपि दृश्यतामुपपादयति ॥ किञ्चेति ॥ शुद्धेन रूपेणेति ॥ विशेषणानवच्छिन्नस्वरूपेणेत्यर्थः । अत्र प्रष्टव्यं, किं ज्ञानविषयत्वमात्रं दृश्यत्वं ? किं वा शुद्धेन रूपेण ज्ञानविषयत्वं ? आद्यं दूषयति ॥ मा दर्शीति ॥ ॥ सोऽपीति ॥ यद्यप्यवच्छेद्यस्यात्मस्वरूपस्य परेण सत्यत्वमङ्गीक्रियते । अन्यथा शून्यवादप्रसङ्गात् । तथाप्यनैकान्तिकतापरिहाराभिनिविष्टचेतसो विस्मृतसिद्धान्तस्येदं चोद्यमिति बोद्धव्यं । सोपि मिथ्या चेत्साध्यव्यतिरेकाभावेन तथापि शुद्धेन रूपेण न दृश्यते इति वाक्यप्रतिपादितं दृश्यत्वव्यतिरेकावधारणं निष्प्रयोजनमित्याह ॥ तर्हीति ॥ द्वितीयं दूषयति ॥ अपि चेति ॥ एवमपि च बुद्धिस्थद्वितीयपक्षाङ्गीकारेऽपि च । घटादेरपि घटत्वाद्यवच्छेदेन दृश्यत्वाद्यङ्गीकारात्स्वरूपेणैव दृश्यत्वं भागासिद्धमित्यर्थः ।

### टीकागतं घटादौ दृश्यत्वस्य भागासिद्धिकथनमयुक्तमिति शङ्का तत्परिहारश्च

ननु घटादेः सर्वस्यापि यत्किञ्चिद्विशेषणावच्छेदेनैव प्रतीयमानतया सम्पूर्णासिद्धिसम्भवे किमिति भागासिद्धिरुक्ता ? न चैवं घटत्वादेरवच्छेदकस्याप्यवच्छेदकान्तरावच्छेदेन प्रतीतावनवस्थाप्रसङ्गः । घटाद्यवच्छेदकं घटत्वादिकं प्रति तदवच्छेद्यस्य घटादेरेवावच्छेदकतया अवच्छेदकान्तरानपेक्षणात् । विशिष्टज्ञाने हि विशेषणविशेष्ये परस्परावच्छिन्ने एव प्रतीयेते इति चेत्सत्यं । तथापि निर्विकल्पकवादे गोत्वादेरेकदापि विशेषणान्तरावच्छेदेनाप्रतीतेः तदभ्युपगमेन भागासिद्धिरुक्तेत्यदोषः ।

### आत्मनो वृत्तिविषयत्वेऽपि दृश्यत्वाभावशङ्का तत्परिहारश्च

(टी.) अपर आह, आत्मनो वृत्तिविषयत्वेऽपि न दृश्यत्वमनैकान्तिकं । न हि दर्शनप्रतियोगितामात्रं दृश्यत्वं हेतुः । अपि तु स्वव्यवहारे स्वातिरेकिदर्शनापेक्षानियतिः । न चात्मनि स्वप्रकाशे साऽस्तीति । तदप्यसत् । स्वप्रकाशत्वाद्वितीयत्वादिरूपेण आत्मव्यवहारस्य स्वातिरेकिसंवित्सापेक्षतानियमात् । औपाधिकात्मविकल्पे तदुपनायकप्रमाणापेक्षानियमेऽपि न स्वरूपमात्रव्यवहृतौ तदपेक्षेति चेत्तर्हि सममेतद्घटादाविति भागासिद्धिः स्यादित्युक्तं । अथ घटे विशिष्टव्यवहारातिरिक्तो व्यवहार एव नास्तीति चेत् तुल्यमात्मनि । सुषुप्त्यादावस्तीति चेत् । कुतः सिद्धः ? 'एतावन्तं कालं सुखमहं सुप्तोस्मि' इत्युत्तरकालपरामर्शादिति चेत् तर्हि तत एव विशिष्टव्यवहारसिद्धिरिति तूष्णीमास्स्व।

(मं. टि.) ॥ दर्शनप्रतियोगितामात्रमिति ॥ वृत्तिज्ञानं प्रति विषयतया सम्बन्धित्वमात्रमित्यर्थः । आत्मनोपि स्वव्यवहारे स्वरूपसंविदपेक्षा नियतेत्यत उक्तं स्वातिरेकीति । कदाचित्तस्यैव अद्वितीयत्वादिव्यवहारे 'एकमेवाद्वितीयं' इत्यादिवाक्यजन्यवृत्तिसापेक्षत्वान्नियतिग्रहणं ।

किं व्यवहारशब्देन विशिष्टव्यवहारो विवक्षितः? स्वरूपमात्रव्यवहारो वा ? इति विकल्पं हृदि निधाय आद्यं प्रत्याह ॥ स्वप्रकाशत्वेति ॥ स्वप्रकाशत्वादिव्यवहारे 'अत्रायं पुरुषः स्वयं ज्योतिः' इत्यादिवाक्यजन्यवृत्तिसापेक्षत्वा-

(मं. टि.) दनैकान्तिकतेत्यर्थः। सोपाधिकात्मविषयविशिष्टव्यवहारे उपाध्युपनायकप्रमाणापेक्षानियमेऽपि न स्वरूपमात्रव्यवहार इति द्वितीयमाशङ्कते ॥ **औपाधिकेति** ॥ **सुषुप्त्यादाविति**॥ सुषुप्तिमूर्छादौ स्वरूपमात्रस्फुरणापरपर्यायाभिज्ञारूपो व्यवहारोऽस्तीत्यर्थः ॥ **तर्हि तत एवेति**॥ परामर्शस्य सुखकालादिविशिष्टविषयतया तन्मूलाभिज्ञाया अपि तद्विषयकत्वं वाच्यं। तयोः समानविषयकत्वनियमादित्यर्थः।

### फलव्याप्यत्वाभावेनात्मनो न दृश्यत्वमिति शङ्का तन्निरासश्च

(टी.) अन्यस्त्वाह, वृत्तिविषयस्याप्यात्मनोऽनाधेयातिशयत्वात्प्रकाशरूपे प्रकाशान्तरानुदयात्फलव्याप्यत्वाभावेन न दृश्यत्वमनैकान्तिकमिति। तदेतदसिद्धिप्रसङ्गेन प्रागेव निरस्तमित्यलं।

(मं टि.) ॥ अन्यस्त्वाहेत्यादि ॥ फलव्याप्यत्वाभावे हेतुः अनाधेयातिशयत्वादिति। तत्र हेतुः प्रकाशरूप इति। यथा घटादौ तदाकारवृत्त्या स्फुरणरूपोऽतिशय आधीयते नैवमात्मनि। तस्यैव स्फुरणरूपत्वादित्यर्थः। परेणापि परोक्षवृत्तौ न तदाधेयं स्फुरणमङ्गीकृतं। परोक्षवृत्तेरेव तत्र ज्ञानत्वाभ्युपगमात्। अन्यथा स्फुरणस्यापरोक्षैकरसत्वेनाभिव्यक्तापरोक्षैकरसस्फुरणसम्बन्धेन परोक्षवृत्तिविषयस्याप्यतीतादेरपरोक्षत्वप्रसङ्गः। एवं च परोक्षवृत्तेरिवापरोक्षवृत्तेरेव ज्ञानत्वोपपत्तौ तदाधेयस्फुरणमप्रामाणिकमिति असिद्धो हेतुरिति भावेनाह॥ **तदेतदिति** ॥

### मिथ्यात्वानुमाने अनध्यवसितत्वदोषप्रतिज्ञा

## जगतोऽभावेऽनुमानस्याप्यभाव इति तर्कबाधितत्वेनानध्यवसितः।

### जगतोऽभाव इति जगदसत्वानुवादानुपपत्तिशङ्का तत्परिहारश्च

(टी.) नन्वत्र जगतोऽनिर्वचनीयत्वं सद्विविक्तत्वं वा साध्यं। तत्कथं जगतोऽभाव इत्यनुवादः? सत्यं, तथापि अनिर्वचनीयत्वस्याप्रसिद्धत्वात् सद्विविक्तस्य अनिर्वचनीयासदन्यतरत्वानिस्तारादसत्वमेव सिद्धवत्कृत्यायमनुवाद इत्यदोषः। जगतः सत्वाभाव इति वा व्याख्यातव्यं।

### जगतोऽभावे अनुमानस्याप्यभावः इति तर्के व्याप्त्युपपादनम्

तथापि व्याप्त्यभावात्कथमिदमापादनं? इति चेन्न। 'यदि जगन्मिथ्या स्यात्तदा तदन्तर्गतमनुमानमपि मिथ्या स्यात्। गन्धर्वनगरान्तर्गतभवनवत्' इति वा 'यदि दृश्यत्वं जगति वर्तमानं तन्मिथ्यात्वं प्रतिपादयेत्तदा अनुमानस्यापि मिथ्यात्वं प्रतिपादयेदविशेषात्' अन्यथा व्यभिचारापत्तेरिति वा आपादनात्।

### जगतोऽभावे इति मूलस्य असिद्ध्यादिपरत्वेन वैयर्थ्यशङ्का तत्परिहारश्च

नन्वनेन असिद्धिरेवोक्ता स्यात्। सा च प्रागेवोक्तेति किमनेन? न च वाच्यं लिङ्गाभावेनासिद्धिः। साध्यलिङ्गव्याप्तीनामनुमानाङ्गानामभावोऽत्रापाद्यत इति भेद इति। तथात्वेऽपि व्याप्यत्वासिद्ध्याद्यनिस्तारादिति। मैवं, अनुमानाङ्गानामसत्वापादनमुखेन असाधकत्वमात्रापाद्यमानत्वात्।

(टी.) तदिदमुक्तं 'इतितर्कबाधितत्वेनानध्यवसितः' इति । न विद्यते अध्यवसितं अध्यवसायः साध्यसिद्धिर्यस्मात्स तथोक्त इति । एतेन अनुमानमिथ्यात्व परस्येष्टमेव । तत्कथमापादनं ? इत्यपि निरस्तं ।

(मं. टि.) ॥ अनिर्वचनीयासदन्यतरत्वानिस्ताराददिति ॥ [1]सद्विविक्तस्यासद्विविक्तत्वेन विशेषितत्वविवक्षायां सद्विविक्तत्वमनिर्वचनीयत्वेऽन्तर्भवति। अन्यथा त्वसत्व इत्यर्थः ॥ सत्त्वाभाव इति ॥ सत्त्वस्य साधकताप्रयोजकत्वेन असाधकत्वमत्यन्तासत्त्व इव सत्त्वाभावेऽप्यापततीति भावः ॥ व्याप्त्यभावादिति ॥ 'यत्र जगतोऽभावस्तत्रानुमानाभावः' इत्यत्र निदर्शनादर्शनादित्यर्थः । 'यन्मिथ्या तत्समानयोगक्षेमं तदन्तर्गतमपि मिथ्या यथा सम्प्रतिपन्नं' इति व्याप्तिरस्तीति परिहरति ॥ न यदि जगदिति ॥ पक्षान्तरमाह ॥ यदि दृश्यत्वमिति ॥ ननु व्याप्त्यभावस्तदवस्थः । 'यत्र जगन्मिथ्यात्वप्रतिपादकत्वं तत्रानुमानमिथ्यात्वप्रतिपादकत्वं' इत्यत्र निदर्शनाभावादित्यत आह ॥ अविशेषादिति ॥ 'यत् यत्साधनप्रयोजकविशिष्टं यद्यत्रास्ति तत्तत्र तत्साधयति यथा संमतं' इति सामान्यव्याप्तिरस्ति । ततश्च जगति वर्तमानतामात्रेण तन्मिथ्यात्वप्रतिपादकं दृश्यत्वं स्वात्मनि वर्तमानं स्वमिथ्यात्वं साधयेदित्यर्थः ॥ तदिदमुक्तमितितर्कबाधितत्वेनेति ॥ बाधितत्वेनेति तृतीयया [2]व्याप्त्याद्यभावस्य साधकत्वे द्वारत्वं कथयता न व्याप्त्याद्यभावमात्रपर्यवसानमिति सूचितमित्यर्थः ।

### मिथ्यात्वानुमाने अनध्यवसितत्वदोषोपपादनम्

(टी.) नन्वेवं व्याख्याने हेतोः को दोष उक्तः स्यात् ? अनध्यवसित इति ब्रूमः । तदर्थं 'इत्यनध्यवसितः' इत्यस्य आवृत्तिर्व्याख्यायते । तर्हि 'तर्कबाधितत्वेन' इति कथं ? तथात्वे कालात्ययापदिष्टत्वप्रसङ्गादिति चेन्न । बाधितशब्दस्य विरुद्धार्थत्वात् ।

### अनध्यवसितलक्षणस्य मिथ्यात्वानुमानगतत्वसमर्थनम्

ननु साध्यासाधकः पक्ष एव वर्तमानोऽनध्यवसितः । न चायं तथेति कथं अनध्यवसितः? इति चेन्न । तथा सति बाधिते सत्प्रतिपक्षे च केवलव्यतिरेकिण्यतिप्रसङ्गात् । साध्यासाधकत्वं नाम तत्प्रतीत्यजनकत्वं । बाधितसत्प्रतिपक्षौ तु विपर्ययसन्देहजनकाविति चेत् तथासति विरुद्धादिव्युदासस्य तत एव सिद्धेः 'पक्ष एव वर्तमानः' इत्यस्य वैयर्थ्यप्रसङ्गात् । असिद्धिपरिहारार्थं इति चेन्न । एवकारवैयर्थ्यात् । तथा चासिद्धातिरिक्तः साध्यासाधक इति लक्षणार्थः स्यात् । स च समः प्रकृतेऽपीति कथं नानध्यवसितः ?

(मं. टि.) ॥ आवृत्तिर्व्याख्यायत इति ॥ तर्कबाधितत्वेन अनध्यवसितः साध्यासाधक इति कृत्वा अनध्यवसितो नाम हेत्वाभास इति व्याख्यायत इत्यर्थः । केवलव्यतिरेकिणीत्यनेनैव पक्ष एव वर्तमानत्वे सिद्धे साध्यासाधकतासिद्ध्यर्थं केवलव्यतिरेकिणं विशेषणद्वयेन विशिनष्टि ॥ बाधिते सत्प्रतिपक्षे चेति ॥ तथा सतीति ॥

---

[1] सद्विविक्तस्यासद्विविक्तत्वेन, इति मुद्रितपुस्तकगतः पाठः [2] व्याप्त्याद्यभावस्यासाधकत्वे इति पाठेन भाव्यमिति भाति

(मं. टि.) विरुद्धादेः साध्याभावप्रतीत्यादिजनकत्वेन प्रतीत्यजनकत्वरूपसाध्यासाधकत्वविशेषणेनैव तद्व्युदाससिद्धेरित्यर्थः ॥ **एवकारेति** ॥ पक्षे वर्तमानग्रहणेनैवासिद्धावतिव्याप्तिपरिहारादित्यर्थः । तर्हि एवकारस्त्यज्यतामित्यत आह ॥**तथा चेति** ॥ **स च सम इति** ॥ 'सर्वमनित्यं सत्त्वात्' इत्यादेर्हेतोः साध्यासङ्गरितत्वात्प्रतीत्यजनकत्वं । दृश्यत्वस्य तु असत्त्वात् । तथा चोपपादकभेदेऽपि प्रतीत्यजनकत्वं समं । दृश्यत्वस्यासिद्धातिरिक्तत्वं तु त्वयैवाभ्युपेतमिति अनध्यवसितलक्षणं प्रकृतेऽपि विद्यत इत्यर्थ ।

## असिद्धानध्यवसितयोर्लक्षणोदाहरणभेदसमर्थनम्

(टी.) [1]असिद्धिबहिर्भावोऽस्य कथं ? इति चेत् । इत्थं, यदा वादिप्रतिवादिनोरन्यतररीत्या लिङ्गाभावस्तदाऽसिद्धिः । यदा सामर्थ्यविघटनं तदा अनध्यवसित इति भेदः । प्रकृते तर्कस्यासिद्धिपुरस्कारेण प्रवृत्तेर्दोषद्वयमपि । न चैवं सर्वत्रेत्यसङ्कीर्णता च सिद्धेति ।

(मं. टि) ननु यद्यपि मया असिद्धातिरिक्तत्वं नेष्यते । तथाप्यसाधकत्वं तु नेष्यते । त्वया त्वसाधकत्वाङ्गीकारेऽपि असिद्धिबहिर्भावो नेष्यते । तथा च कथमनध्यवसितत्वेति शङ्कते ॥ **असिद्धिबहिर्भावोस्य कथमिति** ॥ किं दृश्यत्वहेतोरसिद्धिबहिर्भावो नास्तीत्युच्यते ? किं वा सामान्यतोऽनध्यवसितमात्रस्य ? नाद्यः त्वया तस्य तत्राङ्गीकृतत्वेन त्वदङ्गीकारे कारणस्य पररीत्या दूषणमभिदधता [2]त्वया वक्तव्यत्वेन मां प्रति तत्प्रश्नायोगात् । असाधकत्वस्य च त्वां प्रति साधनात् । द्वितीयेऽपि किं लक्षणभेदो नास्तीत्युच्यते ? किं वा उदाहरणभेदो [3]नास्तीति ? विकल्पं हृदि निधायाद्यं दूषयति ॥ **इत्थमिति** ॥ असति लिङ्गे ज्ञानजनकतालक्षणसामर्थ्यवैधुर्यमसिद्धलक्षणमित्याह ॥ **यदेति** ॥ सत्यपि लिङ्गे ज्ञानजनकतालक्षणसामर्थ्यवैधुर्यं अनध्यवसितलक्षणमित्याह ॥ **यदा सामर्थ्येति** ॥ न द्वितीय इत्याह ॥ **प्रकृते तर्कस्येति** ॥ [4]दृश्यत्वानुमानासाधकतासाधकतर्कस्यासिद्धिपुरस्कारेण प्रवृत्तेर्दोषद्वयं । 'सर्वमनित्यं सत्त्वात्' इत्यादौ त्वसाधकत्वं नासिद्धिपुरस्कारेण प्रवर्तत इति तत्रानध्यवसितत्वमेवास्ति न त्वसिद्धिरित्युदाहरणभेदसिद्धिरित्यर्थः ।

## प्रकारान्तरेण असिद्धानध्यवसितयोर्वैलक्षण्योपपादनम्

यद्वा **नन्वसिद्धिबहिर्भावोऽस्य कथं** इत्यादेर्ग्रन्थस्यायमर्थः । **ननु पक्ष एव वर्तमानः साध्यासाधकोऽनध्यवसितः** इति लक्षणे अनध्यवसितस्यासिद्धिदूषकताबीजात्पक्षेऽवर्तमानत्वाद्भिन्नं पक्षादन्यत्रावर्तमानत्वं दूषकताबीजं सिद्ध्यति । एवकारत्यागे तु न सिद्ध्यति । तथा हि, अनध्यवसितस्य किं पक्षे वर्तमानत्वं दूषकताबीजं ? किं वा प्रतीत्यजनकत्वरूपं साध्यासाधकत्वं ? यद्वा पक्षे वर्तमानत्वविशिष्टं साध्यासाधकत्वं ? नाद्यः तस्य सदनुमानसाधारणतया गुणत्वेन दूषकताबीजत्वाभावात् । न द्वितीयः तस्यासिद्धसाधारण्यात् । न तृतीयः 'इदं

---

[1] मं. टि. नन्वसिद्धिबहिर्भावोऽस्य. [2] मयाऽवक्तव्यत्वेन, इति मुद्रितपुस्तकस्थपाठ एव साधुरिति भाति.

[3] नास्तीति ? इति विकल्पं, इति पाठेन भाव्यमिति भाति. [4] दृश्यत्वानुमानासाधकतापादकतर्कस्यासिद्धिपुरस्कारेण, इति पाठेन भाव्यमिति भाति.

(मं. टि.) साध्यप्रमितिजनकं न भवति पक्षे वर्तमानत्वे सति साध्यप्रतीत्यजनकत्वात्' इत्यसाधकतानुमाने व्यर्थविशेषणत्वात् । तस्मात् एवकारत्यागे दूषकताबीजभेदासिद्धिः । न च दूषकताबीजभेदं विना हेत्वाभासभेदसिद्धिरित्यनध्यवसितस्यासिद्धिबहिर्भावो न युक्त इति **एवकारः** कर्तव्यः । तथा च दृश्यत्वस्य नानध्यवसितता । विपक्षेऽपि वर्तमानत्वस्य त्वयोक्तत्वादिति शङ्कते ॥ **असिद्धिबहिर्भावोऽस्येति** ॥ परिहरति ॥ **इत्थमिति** ॥ वादिप्रतिवादिनोरन्यतररीत्या हेतुस्वरूपाभावोऽसिद्धस्य दूषकताबीजं । साध्यप्रतीतिजननसामर्थ्याभावस्त्वनध्यवसितस्य दूषकताबीजमिति भेदसिद्धिरित्यर्थः । अन्यतरासिद्ध्यादावपि दूषकताबीजानुगत्यर्थं वादिप्रतिवादिनोरन्यतररीत्येत्युक्तं ।

नन्वनध्यवसितदूषकताबीजं हेतुस्वरूपासत्त्वं विनापि सिद्ध्यति न वा ? आद्ये प्रकृतेऽपि तथैव सिद्ध्युपपत्तेरनध्यवसित एव स्यात् । नत्वसिद्ध इति दोषद्वयानुपपत्तिः । द्वितीये असिद्धिरहितस्यानध्यवसितोदाहरणस्याभावात्साङ्कर्यमित्यत आह ॥ **प्रकृत इति** ॥ प्रकृतानुमाने अनध्यवसितदूषकताबीजं हेतुस्वरूपासत्त्वं विना न सिद्ध्यतीति दोषद्वयं । 'सर्वमनित्यं सत्त्वात्' इत्यादौ न तथेति न सङ्कीर्णतेति ।

### असत्त्वस्यैवासाधकत्वोपयोगितासमर्थनम्

(टी.) ननु कथमसत्यस्यासाधकत्वं ? तथा सति धूमाभासस्यापि साधकत्वप्रसङ्गादिति ब्रूमः । अथ धूमाभासस्यासाधकता नासत्वात् । अपि तु अव्याप्तत्वात् । बहुलोर्ध्वतादिवत् आभासविवेकस्यापि व्याप्त्युपयोगादिति मन्येत । तदा वक्तव्यं, किमेवं लोकानुभवात्कल्प्यते ? उतासतोऽपि साधकत्वाभिमानात् ? न प्रथमः तदभावात् । लौकिका हि 'महाह्रदोऽग्निमान्धूमवत्त्वात्' इति प्रयुक्ते असिद्धिमुद्भावयन्ति । न द्वितीयः निर्मूलत्वात् । असत्यस्यापि प्रतिबिम्बादेः बिम्बादिसिद्धावङ्गतोपलम्भान्नेति चेन्न । प्रतिबिम्बाद्यसत्यताऽसिद्धेरन्यत्रोपपादितत्वात् ।

(मं. टि.) ॥**बहुलोर्ध्वतादिवदिति** ॥ यथा धूममात्रस्य शान्ताग्नावपि विद्यमानत्वेन बहुलतादिर्व्याप्त्युपयोगी तथा आभाससाधारणधूमस्य ह्रदे व्यभिचारात् 'यत्र अनाभासो धूमस्तत्राग्निः' इति व्याप्त्युपयोग्येव आभासविवेक इत्यर्थः ।

### धूमाद्यनुमाने आभासविवेकस्य व्याप्त्युपयोगितानिरासः

आभासविवेकस्य व्याप्त्युपयोगित्वेऽप्यारोपिताभासविवेकधूमवति ह्रदे व्यभिचारो दुर्वारः । आभासविविक्त एव आभासविवेको व्याप्त्युपयोगीति चेन्न । आभासविवेकतोऽपि आभासविवेकस्यारोपितस्य तत्र वक्तुं शक्यत्वाद्व्यभिचारापरिहारात् । आभासविवेकविशेषणीभूताभासविवेकेनाप्याभासविविक्तेन भाव्यमिति चेन्न एवं तर्ह्याभासविवेकविशेषणपरम्पराया अपर्यवसितत्वेन जन्मशतेनापि हेतुरनिरूपितः स्यात् ।

किं च ह्रदे न धूममात्रमप्यस्ति । किं तु ? तद्गतस्य बाष्पस्य तथा प्रतीतिरेव । न च भ्रान्त्यनुसारेणाङ्गीकारो युक्तः । भ्रान्तेः प्रमाणत्वापातात् । न चास्माभिर्धूमवत्तया प्रतीयमानत्वं हेतूकृतं । किं तु ? धूमवत्त्वं । ततो नाभासविवेको व्याप्त्युपयोगीति । किं च आरोपितदृश्यत्वस्य ब्रह्मण्यपि सम्भवाद्दृश्यत्वेऽपि व्याप्त्युपयोगि-

(मं. टि.) तथैवाभासविवेकोऽङ्गीकार्य इति परिहारे स्थितेऽपि परिहारान्तरमाह ॥ तदा वक्तव्यमिति ॥ प्रतिबिम्बाद्यसत्यतासिद्धेरिति ॥ छायावत् प्रतिध्वनिवत् प्रतिसूर्यवच्च प्रतिबिम्बादेः सत्यत्वादिति भावः ।

**अर्थावच्छिन्नं ज्ञानमिति पक्षे अवच्छिन्नस्य हेतुत्वे अवच्छेदकस्यापि हेतुत्वमित्यादिव्याप्तिभङ्गः**

(टी.) सवितृसुषिरादिना अनिष्टानुमानं कथं ? इति चेन्न । तत्रापि तज्ज्ञानस्यैव साधकत्वात् । ज्ञेयभेदानवच्छिन्नस्य ज्ञानमात्रस्यातिप्रसक्तित्वात्तदवच्छिन्नस्य सिध्यङ्गतायां तस्याप्यङ्गत्वमिति चेत् न । दोषवशात्सत्यतद्विषयज्ञानसदृशस्य ज्ञानस्याङ्गताङ्गीकारात् । नन्वेवं सति प्रकृतेऽप्यनुमानाङ्गानां प्रतीतिमद्भावात्किं तत्सत्यतया ? इति चेन्न । प्रतीतेरपि परेण सत्तानभ्युपगमात् ।

किं च अस्त्ययं विभागः । किञ्चित्स्वरूपेण सत् ज्ञाततया अनुमानाङ्गं । कस्यचित् ज्ञानमेवेति । अथ सतः साधकत्वं कुतः ? इति चेत् । असतोऽसाधकत्वादर्शनादित्यास्तां विस्तरः ।

(म. टि.) अर्थावच्छिन्नं ज्ञानमङ्गमिति पक्षोऽस्तु । तथात्वे अवच्छेदकार्थस्यापि सिद्ध्यङ्गत्वं स्यादिति चेत । किं अवच्छिन्नस्य यद्भवति तत् अवच्छेदकस्यापि भवतीति सामान्यव्याप्तिः? किं वा अवच्छिन्नस्य हेतुत्वे अवच्छेदकस्यापि हेतुत्वं ' इति विशेषव्याप्तिः? नाद्यः ब्रह्मज्ञानस्य वेदान्तसाध्यत्वेऽपि त्वया ब्रह्मणस्तत्साध्यतानभ्युपगमात् । न द्वितीयः ब्रह्मज्ञानस्य जगदुपादानत्वे ब्रह्मणोऽपि तत्प्रसङ्गात् । निर्विकारे चतस्मिंस्तस्यायोगात् । आत्मज्ञानस्याविद्यानिवृत्तिहेतुत्वे आत्मनोऽप्यविद्यानिवृत्तिहेतुत्वप्रसङ्गाच्च । [1]तस्य च ज्ञानस्फोरकत्वेन तदनिवर्तकत्वात् ।

**आरोपितस्यापि ज्ञेयस्य ज्ञानव्यावर्तकत्वात्साधकतेति शङ्कानिरासः**

नन्वथापि ज्ञेयस्य ज्ञानव्यावर्तकत्वात् व्यावर्तकत्वस्य च व्यावृत्तिज्ञानहेतुत्वात्मकत्वात् आरोपितस्यापि हेतुत्वसिद्धिरिति चेत् । स्यादेतदेवं, यदि व्यावृत्तिज्ञानहेतुत्वं व्यावर्तकत्वं स्यात् । न चैवं । किं तु ? व्यावृत्तिज्ञानहेतुज्ञानविषयत्वमेव व्यावर्तकत्वं । कुत एतत् ? सत्यपि दण्डे दण्डाज्ञाने व्यावृत्त्यज्ञानात् । मया च आरोपितस्य हेतुतानभ्युपगमेऽपि व्यावृत्तिधीहेतुभूतज्ञानविषयत्वस्याभ्युपगतत्वेन आरोपितस्य व्यावृत्तिज्ञानहेतुज्ञानविषयत्वापरपर्याय व्यावर्तकतोपपत्तेः ।

नन्ववच्छेदकस्य आरोपिततया तदवच्छिन्नमप्यारोपितमेवेति पुनरप्यारोपितस्य हेतुता प्राप्तेति चेन्न । अज्ञानस्यावच्छेदकस्यानिर्वचनीयत्वेऽपि तदवच्छिन्नाज्ञानहानेर्ब्रह्माभिन्नायाः पञ्चमप्रकाराया वा सदसद्वैलक्षण्यलक्षणानिर्वचनीयत्वाभावात् । द्वैतस्यासत्यत्वेऽपि तदवच्छिन्नस्य [2]द्वैताभावरूपस्याद्वैतस्य सत्यतायास्त्वया अभ्युपगमाच्च । तत्र अज्ञानद्वैते तटस्थे इति चेत् । [3]अत्रापि ज्ञेयं तथेति अवच्छिन्नं पक्षमाश्रित्य केचित्परिहरन्ति ।

---

[1] तस्य चाज्ञानस्फोरकत्वेन, इति मुद्रितपुस्तकगतः पाठः साधुरिति भाति.

[2] द्वैताभावरूपस्याद्वैतस्य असत्यतायास्त्वया अनभ्युपगमाच्च इति मुद्रितपुस्तकस्थः पाठः.

[3] अत्रापि ज्ञेयं तथेति अवच्छिन्नं ज्ञानमिति पक्षमाश्रित्य केचित्परिहरन्ति । स्वयं तु अनवच्छिन्नं ज्ञानमिति पक्षमेवाश्रित्य, इति पाठेन भाव्यमिति भाति.

(मं टि.) स्वयं तु अनवच्छिन्नं पक्षमेवाश्रित्याह ॥ न दोषेति॥ अयमर्थः । [1]अर्थावच्छिन्नमेव सुषिरज्ञानं हेतुः । न च असुषिरज्ञानस्यापि हेतुताप्रसङ्गः । विषयावच्छेदमन्तरेण धर्मान्तरेणैव असुषिरज्ञानाद्व्यावृत्तेः । तथा हि, सा किं सत्यसुषिरज्ञानस्य नेत्युच्यते ? किं वा असत्यसुषिरज्ञानस्य ? नाद्यः 'सत्यसुषिरज्ञानं असुषिरज्ञानाद्व्यावर्तकधर्मोपेतं ततो व्यावृत्तत्वात्संमतवत्' इति तदनुमानात् । न च विषयेणार्थान्तरता तस्य अतद्धर्मत्वात् । नापि विषयसम्बन्धेन । ज्ञानज्ञेययोः संयोगादेरसम्भवात् । स्वरूपप्रत्यासत्तेश्च ज्ञानस्वरूपानतिरिक्तत्वेन तद्व्यावर्तकत्वायोगात् ।

किं च 'सत्यसुषिरज्ञानं विषयोपाधिमनपेक्ष्य असुषिरज्ञानाद्विलक्षणं तज्जनकविलक्षणजनकजन्यत्वात् परोक्षज्ञानजनकविलक्षणजनकजन्यापरोक्षज्ञानवत्' । न चासिद्धिः । असुषिरज्ञानजनको योऽसुषिरेन्द्रियसंयोगः तद्विलक्षणसुषिरेन्द्रियसम्प्रयोगजन्यत्वात् सुषिरज्ञानस्य । न च दृष्टान्तस्य साध्यवैकल्यं एकविषययोरपि परोक्षत्वापरोक्षत्वलक्षणवैलक्षण्यदर्शनेन अपरोक्षत्वस्य विषयोपाधिकत्वाभावात् । न च विलक्षणजनकजन्यत्वं सुषिराख्यविषयसम्बन्धरूपवैलक्षण्येनैवोपपन्नमिति तदतिरिक्तवैलक्षण्यसाधने अप्रयोजकता ? यवबीजविलक्षणकलमबीजजन्यत्वस्यापि कदाचिद्देवदत्तादिसम्बन्धरूपवैलक्षण्येनैवोपपत्त्या कलमबीजजन्याङ्कुरस्य यवबीजाङ्कुरात्स्वतो वैलक्षण्यरूपकलमाङ्कुरत्वस्य कदाचिदभावप्रसङ्गात् ।

अपि च 'सत्यसुषिरज्ञानं असुषिरज्ञानादन्यसम्बन्धमनपेक्ष्य विलक्षणं असुषिरज्ञानजनितार्थक्रियाविलक्षणार्थक्रियाकारित्वात् यवबीजात्कलमबीजवत्' । न च सुषिरसम्बन्धरूपवैलक्षण्येनैव विलक्षणार्थक्रियाकारित्वोपपत्त्या स्वतो वैलक्षण्येऽप्रयोजकता । तथात्वे देवदत्तसम्बन्धेन विलक्षणस्य यवबीजस्य कदाचित्कलमाङ्कुरोत्पादकत्वप्रसङ्गात् ।

### घटाभावादीनां प्रतियोगिसम्बन्धमनपेक्ष्यैव स्वाभाविकवैलक्षण्यसमर्थनम्

नन्वेवं घटाभावस्यापि घटसम्बन्धमनपेक्ष्यैव पटाभावादिभ्यो वैलक्षण्यं स्यादिति चेत् स्यादेव, अन्यथा [2]घटसम्बन्धेनापि विलक्षणं न स्यात् । न हि स्वतोऽविलक्षणमन्यसम्बन्धमात्रेण विलक्षणं भवति । एकस्यैव सत्तादेरीश्वरज्ञानादेश्च विलक्षणानेकसम्बन्धेन वैलक्षण्यप्रसङ्गात् । एकस्यैव दृशोऽनेकदृश्यसम्बन्धेन वैलक्षण्यापाताच्च । देवदत्तादेरपि न दण्डादिना वैलक्षण्यं । किं तु ? स्वत एव । दण्डादिना तु दण्ड्यादिरूपं विशिष्टाख्यं वस्त्वन्तरमेवोत्पद्यत इति न कश्चिद्दोषः । काकातिरेकेण गृहे संस्थानविशेषवत् क्षीरसम्बन्धातिरेकेण क्षीरमधुरे गुडादिमाधुर्याद्वैलक्षण्यवच्च घटसम्बन्धातिरेकेण घटाभावस्यापि पटाभावादितो विलक्षणस्वभावविशेषस्य घटनिरूपणाधीननिरूपणविषयस्य [3]विलक्षणकारणजन्यत्वस्य विलक्षणकार्यकरत्वस्य वा अनुभवसिद्धत्वात् । स्वतोऽविलक्षणस्य च नान्यसम्बन्धमात्रेण विलक्षणकारणजन्यत्वं विलक्षणकार्यकरत्वं चेत्युक्तं । [4]तस्मादज्ञानवदभावादिरपि स्वत एवान्यस्मा-

---

[1] अर्थानवच्छिन्नमेव, इति पाठेन भाव्यमिति भाति. [2] घटसम्बन्धेनापि वैलक्षण्यं, इति पाठेन भाव्यमिति भाति.

[3] विलक्षणकारणजन्यस्य विलक्षणकार्यकरस्य चानुभवसिद्धत्वात् इति मुद्रितपुस्तकस्थः पाठः

[4] तस्मादज्ञानवदभावादेरपि, इति पाठेन भाव्यमिति भाति.

(मं. टि.) द्विलक्षणः। व्यवहारसमये तु अनुभवसिद्धस्यापि तस्याभावस्वभावविशेषस्य क्षीरमाधुर्यादिवद्विशिष्याख्यातुमशक्तः क्षीरपदवत्तदुपलक्षकं घटपदमेव प्रयुङ्क्ते घटो नास्तीति। अलं प्रसक्तानुप्रसक्त्या।

न द्वितीयः। असत्यसुषिरज्ञानस्यापि [1]सत्यसुषिरज्ञानवद्विषयोपाधिमनपेक्ष्य व्यावृत्तेरङ्गीकार्यत्वात्। तदेतदाह ॥ **सत्यतद्विषयज्ञानसदृशस्येति** ॥ न च कल्पितसुषिरेन्द्रियसम्प्रयोगादिसुषिरज्ञानसामग्र्यजन्यस्यास्य कथं विषयोपाधिमनपेक्ष्यासुषिरज्ञानाद्व्यावृत्तत्वाकारेण सुषिरज्ञानसदृशत्वमिति वाच्यं। दोषवशात्तदुपपत्तेः। अन्यथा तवापि असत्यसुषिरज्ञानस्य [2]सुषिरविषयावच्छेदकस्याप्यभावप्रसङ्गादित्याह ॥ **दोषवशादिति** ॥ **सत्त्वानभ्युपगमादिति**॥ वृत्तिरूपायास्तत्प्रतिबिम्बितचैतन्यरूपाया वा प्रतीतेः परेण सत्यत्वानभ्युपगमात् [3]पक्षादिप्रतीतेरप्यङ्गता वक्तुं अशक्येत्यर्थः ॥ **किञ्चास्तीति** ॥ व्याप्त्यादिकं स्वरूपेण सत् ज्ञाततया अनुमानाङ्गम्। व्याप्तिप्रतीतिमात्रस्य व्यभिचारेऽपि सम्भवात्। पक्षादिकं तु ज्ञाततयैव। भ्रान्तिप्रतिपन्नरजतादिकं पक्षीकृत्य तद्बाद्यादिभिरसत्त्वादिसाधनात्। एवं चानुमानाङ्गं सर्वं [4]प्रतीतिद्वारा अङ्गमिति अव्याप्त्यादेः स्वरूपसत्त्वमङ्गीकार्यमित्यर्थः।

### असतोऽपि साधकत्वस्य प्रकारान्तरेण शङ्का तन्निरासश्च

ननु "असतोऽपि साधकत्वमस्ति अनुत्पन्नस्यापि कार्यस्य कारणगतशक्त्यवच्छेदकतादर्शनात्। कालान्तरे सत्त्वं नोपयोगि" इत्यादिशङ्काप्राप्तौ, "मैवं शक्त्यवच्छेदकता हि शक्तिविषयता। सा च शक्तिसाध्यतेति साध्यत्वमेवानुत्पन्नस्य। न तु साधकत्वं। साध्यत्वं च नात्यन्तासतः। किं तु? प्रागभावप्रतियोगिनः" इत्यादिकं समाधानं यद्यपि वक्तव्यमस्ति तथापि ग्रन्थगौरवभयात्सङ्क्षिप्यत इत्याह ॥ **आस्तां विस्तर इति** ॥

### विश्वमिथ्यात्वानुमानस्य प्रबलप्रमाणबाधोपपादनम्

**(टी.) अनुमानस्यानवसरो द्वेधा प्रमाणबाधस्तत्प्रतिरोधश्च। तत्राद्यः प्रबल इति तमेवादौ दर्शयति।**

## प्रत्यक्षादिविरुद्धत्वात् 'विश्वं सत्यं' इत्यादिवाक्यविरुद्धत्वाच्च कालात्ययापदिष्टः

**यथायथं प्रत्यक्षानुमानागमसिद्धान् पदार्थान् खलु पक्षीकृत्य तन्मिथ्यात्वमनुमातव्यं। प्रमाणानि च तत्सत्यतावगाहीनीति तद्बाधितत्वात्कालात्ययापदिष्टो भवति।**

### प्रपञ्चे त्रैकालिकाबाध्यत्वस्य आगमसिद्धत्वोपपादनम्

**ननु केयं सत्यता? या प्रत्यक्षादिगोचरा ब्रह्मणि परेणाङ्गीक्रियते सैवेति ब्रूमः। कालत्रयाबाध्यतालक्षणा सा न प्रत्यक्षादिगोचर इति चेत्। तर्हि ब्रह्मणोऽपि कुतः सिद्धा? 'तत्सत्यं' इत्याद्यागमा-**

---

[1] सत्यसुषिरज्ञानवदसुषिरज्ञानाद्विषयोपाधिमनपेक्ष्य, इति मुद्रितपुस्तकस्थः पाठः [2] सत्यसुषिरावच्छेदस्याप्यभावप्रसङ्गादित्याह, इति पाठेन भाव्यमिति भाति. [3] पक्षादिप्रतीतेरप्यनङ्गता वक्तुं शक्येत्यर्थः, इति मुद्रितपुस्तकस्थः पाठः [4] प्रतीतिद्वारा अङ्गमिति वदतापि व्याप्त्यादेः इति पाठेन भाव्यमिति भाति.

(टी.) दिति चेत् । तर्हि तत्प्रकृतेऽपि समममिति तद्विरोधात्कालातीत एव । तदिदमुक्तं 'विश्वं सत्यं' इत्यादिना । अन्यथा प्रत्यक्षादीत्यादिपदेन वाक्यस्यापि गृहीतत्वात्पुनर्ग्रहणं व्यर्थं स्यात् ।

### प्रपञ्चे त्रैकालिकाबाध्यत्वस्य प्रत्यक्षादिसिद्धत्वोपपादनम्

अङ्गीकारवादश्चायं । यथा च त्रैकालिकाबाध्यत्वलक्षणं सत्यत्वं प्रत्यक्षादिनैव सिद्धं तथोपपादितमन्यत्रेति ।

(मं. टि.) प्रत्यक्षादीनां प्राबल्यसिद्धये तेषामनुमानोपजीव्यतामाह ॥ यथायथमित्यादिना ॥ तदिदमुक्तमिति ॥ प्रत्यक्षादीत्यादिशब्दोपात्तमपि वाक्यमादरात्पुनरुपादानेन 'प्रत्यक्षवदागमस्य विवक्षितसत्ताग्राहित्वं न प्रयाससाध्यं । किं तु ? अनायाससिद्धम्' इति सूचितमित्यर्थः । प्रबलप्रत्यक्षविरोधेनाङ्गीकार्याप्रामाण्यानुमानादिविरोधात् [1]स्वतः प्राप्तप्रत्यक्षप्रामाण्यत्यागायोगाच्च प्रत्यक्षप्रामाण्यं तावदङ्गीकार्यं । तत्प्रामाण्यं च यत्कालाद्यवच्छेदेन स्वविषयो गृहीतः तत्कालाद्यवच्छिन्नतया तस्यासत्वे नोपपद्यत इति तत्कालाद्यवच्छिन्नतया प्रत्यक्षविषयस्य सत्त्वमङ्गीकार्यं । तथा चाविद्यमानस्य तत्कालाद्यवच्छेदेनासत्त्वस्य केनापि प्रमाणेन गृहीतुमशक्यत्वात् कालान्तरादिभाविनोऽपि तत्कालाद्यवच्छेदेन तदसत्त्वग्राहिप्रमाणस्याभावनिश्चयात् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वलक्षणं बाध्यत्वं कदापि नास्तीत्यत्यन्ताबाध्यतासिद्धिः । प्रत्यक्षेण यत्कालाद्यवच्छेदेन स्वविषयो गृहीतः तदतिरिक्तकालाद्यवच्छेदेनासत्त्वं तु घटादेर्मयाप्यङ्गीक्रियते परिच्छिन्नत्वात्तस्य । तथा च प्रत्यक्षस्यापि कालत्रयाबाध्यत्वरूपसत्यताग्राहित्वमस्त्येव । आचार्यैस्त्वङ्गीकारवादः कृत इति अभिप्रेत्याह ॥ अङ्गीकारवादश्चेति ॥

### विश्वमिथ्यात्वानुमाने प्रकरणसमदोषः

(टी.) प्रतिरोधोऽपि द्विविधः तेनैव हेतुना हेत्वन्तरेणेति । तत्राद्यस्यान्तरङ्गत्वात्प्रथमं तमाह

**'रजतं दृष्टं' इति भ्रममात्रत्वात् 'विमतं सत्यं दृश्यत्वादात्मवत्' इत्यपि प्रयोज्यत्वात् प्रकरणसमः**

विमतं' इति पूर्ववद्व्याख्येयं । सत्यं कालत्रयाबाध्यं । आत्मनोऽपि दृश्यत्वस्योपपादितत्वान्न दृष्टान्तः साधनविकलः । 'इत्यपि प्रयोज्यत्वात्' प्रपञ्चमिथ्यात्व इव तत्सत्यत्वेऽपि दृश्यत्वस्य प्रयोक्तुं शक्यत्वात् ।

### शुक्तिरजते दृग्विषयत्वरूपदृश्यत्वाभावसमर्थनम्

ननु मिथ्याभूतेऽपि शुक्तिरजते वर्तमानं दृश्यत्वं कथं प्रपञ्चसत्यतासिद्धौ प्रयोक्तुं शक्यते ? इति । अत उक्तं 'रजतं' इत्यादि । इदमत्राकूतं । दृग्विषयत्वं हि दृश्यत्वमत्राभिमतं । 'यत्सन्निकृष्ट-

---

[1] स्वतः प्राप्तप्रत्यक्षप्रामाण्यत्यागायोगात् इति, मुद्रितपुस्तकस्थः पाठः साधुरिति भाति,

(टी.)करणेन यज्ज्ञानमुत्पद्यते स तस्य विषयः' इति अनित्यज्ञाने व्यवस्था । रजतज्ञानं च शुक्तिसन्निकृष्टेन्द्रियेण जातमिति सैव तस्य विषयः ।

### दृग्व्यावर्तकत्वरूपदृगुल्लेख्यत्वमेव शुक्तिरजतस्येति समर्थनम्

अत एव 'अन्यत् अन्यात्मना अवगाहते' इति भ्रमः । तथा च 'रजतं दृष्टं' इति योयमनुव्यवसायः स च भ्रम एव । न च भ्रान्तिकल्पितेन विपक्षवृत्तित्वेन लिङ्गस्य व्यभिचारो भवति । तथा सति सर्वानुमानोच्छेदप्रसङ्गात् ।

### शुक्तिरजते दृग्विषयत्वरूपदृश्यत्वाभावे विरोधाद्युद्भावनानुपपत्तिशङ्का तन्निरासश्च

दृग्विषयत्वाभावेऽपि दृग्व्यावर्तकत्वमात्रममतोऽपि शुक्तिरजतस्यास्तीति तदभ्युपगमेन न विरुद्धादिवादविरोध इति । नन्वनैकान्त्यं दृष्टान्तस्य साधनवैकल्यं चानाश्रित्य न प्रकरणसमप्रवृत्तिरिति ताभ्यामेवालं । किमनेन ? मैवं, तथा सति हेतुदोषमनाश्रित्य दृष्टान्तदोषाप्रवृत्तेः सोप्यनुपसङ्ख्येयः स्यात् । स्फुटप्रतिभासवशात्तत्परिग्रहे प्रकृतेऽपि समानं । वस्तुतस्तु नेयमाचार्यप्रक्रिया । विरुद्धानैकान्तिकादिवत् परपरिकल्पितरीत्या व्यवहार इति ।

(मं. टि.) ॥ अन्तरङ्गत्वादिति ॥ दूष्यानुमानातिरिक्तहेतुनिरपेक्षत्वादित्यर्थः । ननु 'प्रयोग्यत्वात्' इति वक्तव्यम् । 'चजोः कु घिण्यतोः' इति कुत्वविधानादिति । अत उक्तं 'प्रयोक्तुं शक्यत्वात्' इति । 'प्रयोज्यनियोज्यौ शक्यार्थे' इति शक्यार्थे प्रयोज्यशब्दस्य निपातितत्वात्साधुत्वमित्यभिप्रायः ।

ननु सिद्धान्तिनापि वस्तुतो रजतस्य दर्शनाङ्गीकारात् कथं तस्य भ्रान्तिसिद्धत्वमुक्तं ? इति । अत आह ॥ इदमत्राकूतमिति ॥ नित्यज्ञानस्योत्पत्त्ययोगान्नित्यज्ञानविषये अव्याप्तिनिरासाय [1]नित्यज्ञान इत्युक्तं ॥ शुक्तिसन्निकृष्टेति ॥ आरोपितस्य रजतस्य इन्द्रियसन्निकर्षायोगादित्यर्थः ।

ननु रजतज्ञानं कथं शुक्तिविषयं स्यात् ? अन्यज्ञानस्यान्यविषयत्वायोगादिति चेत् रजतज्ञानमिति कोऽर्थः ? किं रजतसम्बन्धिज्ञानमिति ? किं वा रजतसन्निकृष्टकरणजन्यज्ञानमिति ? यद्वा रजतोल्लेखिज्ञानमिति ? नाद्यः चक्षुरादिजन्यतया जन्यजनकभावसम्बन्धेन चक्षुरादिसम्बन्धिनोऽपि ज्ञानस्य रूपादिविषयत्वोपलम्भात् । न द्वितीयः आपादकासिद्धेरुक्तत्वात् । तृतीयं दूषयति ॥ अत एवेति ॥ अत एव उल्लेख्येन्द्रियसन्निकृष्टयोर्भेदादेव अन्यत् इन्द्रियसन्निकृष्टं शुक्त्यादि अन्यात्मना इन्द्रियासन्निकृष्टरजतात्मना अवगाहते उल्लिखतीति कृत्वा भ्रमत्वं । इन्द्रियसन्निकृष्टस्यैवोल्लेख्यत्वे सन्मात्रोल्लेखित्वेन भ्रान्तित्वायोगादित्यर्थः ।

एतेन "रजतस्याविषयत्वे 'रजतस्य ज्ञानं' इति षष्ठ्यर्थो न निरूपितः स्यात् । विषयविषयिभावातिरेकेण षष्ठ्यर्थस्य सम्बन्धस्याभावात्" इति निरस्तं । उल्लेख्योल्लेखिभावसम्बन्धस्य षष्ठ्यर्थत्वात् । न च तद्भिन्नस्यातिरिक्तं

---

[1] अनित्यज्ञान इत्युक्तं, इति पाठेन भाव्यमिति भाति ।

(मं. टि.) तदुल्लेख्यत्वं नास्तीति युक्तं । उक्तरूपविषयताहीनस्यापि रजतस्य व्यावर्तकतामात्ररूपोल्लेख्यत्वानुभवात् । न च "मया हेतूकृतं दृश्यत्वं न दृग्जनककरणसन्निकृष्टत्वं । किं तु ? तदुल्लेख्यत्वमेव । त्वयापि सत्यत्वे तदेव हेतूकर्तव्यं । अन्यथा प्रकरणसमत्वायोगात् । न ह्यर्थभेदेऽपि शब्दैक्यमात्रेण प्रकरणसमता । तथा च सत्यत्वसाधकदृश्यत्वहेतोः शुक्तिरूप्ये व्यभिचारः" इति साम्प्रतं । यदि दृश्यत्वं दृग्जनककरणसन्निकृष्टत्वं तदा प्रकरणसमता । यदा दृग्व्यावर्तकत्वमात्रं तदा विरुद्धत्वादिरिति पक्षभेदेन प्रकरणसमताभिधानात् । अत एव वक्ष्यति तदभ्युपगमेन न विरुद्धादिवाद विरोधः इति । दृग्व्यावर्तकत्वमात्रस्यास्मन्यपि विद्यमानतया त्वया तस्य हेतूकर्तुमशक्यत्वाच्च ।

'रजतं दृष्टं' इत्यनुव्यवसायस्य बाधकाभावेन भ्रान्तित्वानुपपत्तिशङ्का तन्निरासश्च

॥ स च भ्रम एवेति ॥ ननु कथमेतत् ? बाधकं विना भ्रान्तित्वायोगात् । न चारोपितस्य करणसन्निकर्षो नास्तीति युक्तिर्बाधिका । प्रत्यक्षविरोधेन युक्त्यप्रामाण्यस्यैव न्याय्यत्वात । स्वमते अनुव्यवसायस्य नियतप्रामाण्यसाक्षिरूपत्वेन तदप्रामाण्येऽपसिद्धान्तश्च । क्वचिज्ज्ञानगतप्रामाण्ये सन्देहादिना तस्य मानसत्वेऽपि ज्ञानमात्रे क्वचिदपि सन्देहाद्यभावेन तस्य सर्वत्र साक्षिवेद्यतानियम इति हि स्वसिद्धान्त इति चेत् मैवं, भावानवबोधात् । 'रजतं दृष्टं' इति रजतावच्छिन्नं दर्शनमेवानुभूयते । न तु दर्शनस्य रजतसन्निकृष्टेन्द्रियजन्यत्वं । जन्यजनकभावस्य सर्वत्रान्वयव्यतिरेकावसेयत्वेन तस्याप्रत्यक्षत्वात् । अथापि स साक्षिवेद्य इत्यङ्गीकारे निरवकाशयुक्त्या सावकाशसाक्षिणो बाधिततया जन्यजनकभावे अनुव्यवसायो भ्रमः स्यादित्यापादनं ह्यत्राभिप्रेतमिति न कोपि दोष इति ॥ नन्वनैकान्त्यमिति ॥ एतदनुमाने सपक्षस्य ब्रह्मणो दूष्यानुमानविपक्षत्वात् 'अस्य सपक्षवृत्तित्वं दूष्यानुमानस्य विपक्षवृत्तित्वं विना नोपपद्यते' इति दूष्यानुमानानैकान्तिकत्वमस्योपजीव्यं । तथैतदनुमानविपक्षस्य शुक्तिरूप्यस्य दूष्यानुमानदृष्टान्ततया अस्य विपक्षाद्व्यावृत्तिर्दूष्यानुमानदृष्टान्तस्य साधनवैकल्यं विना नोपपद्यते' इति दूष्यानुमानदृष्टान्तसाधनवैकल्यमस्योपजीव्यमित्यर्थः ॥ हेतुदोषमिति ॥ साध्यवैकल्यं हि दृष्टान्तस्य साधारणानैकान्तिकतामाश्रित्य प्रवर्तते । साध्यविकलदृष्टान्तस्यैव विपक्षतया तद्वृत्तेर्हेतोरनैकान्तिकतावश्यम्भावात् । साधनवैकल्यं तु असाधारणानैकान्तिकतामाश्रित्य प्रवर्तते । दृष्टान्ते साधनाभावे विपक्षादिव सपक्षादपि व्यावृत्त्यवश्यम्भावादित्यादेरिति भावः ॥ सोप्यनुपसङ्ख्येयस्स्यादिति ॥ उपसङ्ख्यातश्च भासर्वज्ञादिभिरिति शेषः । नैयायिकैकदेशिभिरुदाहरणाभासः पृथङ्नोपसङ्ख्यातः । तान्प्रति व्याप्यत्वासिद्धिमनाश्रित्य विरुद्धाद्यप्रवृत्तेः विरुद्धाद्यपि न पृथगुपसङ्ख्येयं स्यादिति वक्तव्यं ॥ वस्तुतस्तु नेयमिति ॥ आचार्यमते असिद्ध्यव्याप्त्योरेव हेतुदोषत्वादिति भावः ।

विश्वमिथ्यात्वानुमाने सप्रतिसाधनदोषः

**'विमतं सत्यं प्रमाणदृष्टत्वात् यदित्थं तत्तथा यथा आत्मा' इति प्रयोगात् सप्रतिसाधनः**

प्रमाणदृष्टत्वात् इत्यत्र प्रमाणपदवैयर्थ्यशङ्का तत्परिहारश्च

(टी.) नन्वत्र दृष्टत्वमात्रस्य व्यभिचारोऽस्ति न वा ? आद्ये पूर्वानुमानमसत्स्यात् । तत्र तन्मात्रस्य प्रयोगात् । द्वितीये प्रमाणविशेषणवैयर्थ्यमिति । मैवं प्रमाणदृष्टत्वपदेन प्रामाणिकत्वमात्रस्याभिमतत्वात् । अथ वा दृग्व्यावर्तकत्वमेवात्र दृष्टत्वमभिमतं । तच्च शुक्तिरजतादावस्तीति सफलं विशेषणं ।

### अनुमानप्रयोगे व्याप्त्यभिधाननियमाभावसूचनम्

(टी.) पूर्वानुमाने व्याप्तिमनभिधायात्र यदित्थं तत्तथेति तामभिदधता तदभिधाननियमो नास्तीति सूचितं । आत्मनः प्रमाणदृष्टत्वानङ्गीकारे वेदान्तवैयर्थ्यं स्यात् ।

### प्रमाणदृष्टत्वहेतुं विकल्प्य दूषणं तन्निरासश्च

नन्वत्र तत्वावेदकप्रमाणदृष्टत्वं हेतुः? उत अतत्वावेदकप्रमाणदृष्टत्वं ? आद्येऽसिद्धिः । द्वितीये विरोध इति । मैवं, 'अतत्वावेदकं प्रमाणं' इति च विप्रतिषिद्धमेतत् ।

### प्रमाणदृष्टत्वानुमाने असिद्धिशङ्का तन्निरासश्च

एवं तर्हि असिद्धिरेवास्त्विति चेत् न । 'प्रपञ्चमिथ्यात्वसिद्धौ प्रत्यक्षादीनामप्रामाण्यसिद्धिः तत्सिद्धौ च तत्सिद्धिः' इति परस्पराश्रयप्रसङ्गात् ।

(मं. टि.) ॥ प्रामाणिकत्वमात्रस्येति ॥ तस्यैकरूपत्वान्न विशेषणमस्ति येन तद्वैयर्थ्यं चोद्येत ।

### प्रामाणिकत्वहेतावपि प्रमाणपदवैयर्थ्यशङ्का तत्परिहारश्च

नन्वथापि प्रामाणिकत्वं प्रमाणज्ञातत्वं । तथा च ज्ञातत्वेनैव पूर्णत्वात्प्रमाणग्रहणं व्यर्थमेव । ननु चैवमवयवार्थविचारेण वैयर्थ्याभिधाने 'मानविषयत्वं मेयत्वं । तत्र विषयत्वमात्रेणालं । किं मानग्रहणेन ?' इत्यादेर्वक्तुं शक्यत्वादतिप्रसङ्गः । तत्र प्रमेयपदेनैव सर्वमुपात्तं । न तु विशेषणोपादानार्थमधिको यत्नः कृतोऽस्ति यस्य वैयर्थ्यं शङ्क्यत इति चेत् । मैवं, प्रकृतेऽपि प्रामाणिकग्रहणेनैव सर्वस्योपात्तत्वेन परिहारसाम्यात् । किं च न प्रामाणिकत्वं प्रमाणज्ञातत्वं । किं तु ? प्रमाणविषयत्वं । तथा च पूर्वोक्तदृश्यत्वस्यात्र प्रवेश एव नास्तीति दृष्टत्वमात्रस्य व्यभिचारोऽस्ति न वेति विकल्प एव न सम्भवति । न चात्रापि प्रमाणग्रहणं व्यर्थं । आरोपितरजतस्येष्टत्वेनेच्छाविषये तस्मिन्विषयत्वमात्रस्य व्यभिचारादिति भावः ।

यद्येवं तर्हि प्रामाणिकत्वादित्येव वक्तव्यं । लक्षणाश्रयणे प्रयोजनाभावात् । प्रमाणदृष्टत्वादिति त्वयुक्तं । एवं च प्रमाणग्रहणवैयर्थ्यं-तदवस्थमित्यपरितोषात् पक्षान्तरमाह ॥ अथ वेति ॥

॥ द्वितीये विरोध इति ॥ अतत्वावेदकप्रमाणदृष्टत्वस्य सत्यत्वाभावेनैव व्याप्तत्वादिति भावः ॥ विप्रतिषिद्धमिति ॥ तत्वावेदकस्यैव प्रमाणशब्दार्थत्वादिति भावः ।

॥ असिद्धिरेवास्त्विति ॥ प्रत्यक्षादेः प्रामाण्यस्यैवाभावात्प्रमाणदृष्टत्वमसिद्धमिति भावः । प्रत्यक्षादीनामप्रामाण्ये कारणान्तराभावात्प्रपञ्चमिथ्यात्वमेव तत्र कारणमिति वाच्यं । प्रत्यक्षादिप्रमाणसिद्धप्रपञ्चमिथ्यात्वं च कुतः? इत्युक्ते तद्ग्राहिप्रत्यक्षादीनामप्रामाण्यादिति वक्तव्यं । तथा चान्योन्याश्रय इत्याह ॥ न प्रपञ्चेति ॥

(टी.) आत्मत्वमत्रोपाधिरिति चेन्न । तस्यैवानिरूपणात् । न तावज्ज्ञानत्वमात्मत्वं । ज्ञातृज्ञेयशून्यस्य ज्ञानस्यापि शून्यत्वात् । नापि ज्ञानाश्रयत्वं निर्गुणत्वाङ्गीकारात् । न च सामान्यविशेष आत्मत्वं । सामान्यस्यापि वास्तवस्य परेणानङ्गीकारात् । कल्पितस्य तु देहादावपि सद्भावात् ।

प्रपञ्चस्य सत्यत्वे दृग्दृश्यसम्बन्धाभावेन दृश्यत्वानुपपत्तिशङ्का

प्रपञ्चस्य सत्यत्वे दृग्दृश्ययोः सम्बन्धानुपपत्तेः कथं दृश्यत्वं ? इति चेत्

दृग्दृश्यसम्बन्धं विनैव दृश्यत्वोपपादनम्

अन्तरेणैव सम्बन्धं दृश्यत्वमस्तु । अतिप्रसङ्गं च प्रतीतिरेवापाकरिष्यति ।

(मं टि.) ॥ ज्ञातृज्ञेयशून्यस्येति ॥ न तावदात्मैव ज्ञाता ज्ञेयो वा । परेणानङ्गीकारात् । नापि तदतिरिक्त । तस्य कल्पिततया मोक्षावस्थायामभावादित्यर्थः ॥ कल्पितस्येति ॥ 'अन्योन्यस्मिन्नन्योन्यात्मकतामध्यस्य' इति वदता परेण देहादावात्मत्वारोपस्याभ्युपगतत्वादित्यर्थः ॥ अतिप्रसङ्गमिति ॥ अयं भावः, दृश्यत्वनियामकत्वेन सम्बन्धो वाच्य इति हि त्वयोच्यते । यथोक्तं 'न च [1]दृक्सम्बन्धमात्रेण दृश्यत्वमिति युज्यते अतिप्रसङ्गात्' इति । तदसङ्गतं । तथात्वे हि तस्यापि नियामकान्तरं कल्प्यं । एवं तस्य तस्यापीत्यनवस्था स्यात् । तथा च तत्परिहारार्थं 'कश्चित्स्वनिर्वाहकः स्वभाव एव नियामकः । स च प्रतीत्युन्नेयः' इति वाच्यं । तथा च आदावेव तथास्तु लाघवात् । न चैवं सति स्वभाववादप्रसङ्गः । बहुधाऽन्वेषणेऽपि नियामकान्तरालाभे स्वभावस्वीकरणात् । प्रकृते च वास्तवसम्बन्धस्य भवतैव महता प्रयासेन निराकृततया तदलाभस्तावत्सिद्धः ।

आध्यासिकसम्बन्धस्य दृश्यत्वानिर्वाहकत्वम्

आध्यासिकसम्बन्धोऽपि स्वस्य [2]दृश्यतानिर्वाहार्थमाध्यासिकसम्बन्धान्तरमपेक्षते, एवं तदपि सम्बन्धान्तरमपेक्षत इत्यनवस्थानान्न नियामकः । किं च आध्यासिकसम्बन्ध इति कोर्थः । किं यः कश्चित्सम्बन्ध एवाध्यस्त इति वा ? किं वा दृश्यस्य दृगध्यस्तत्वं नाम सम्बन्ध इति ? आद्ये सम्बन्धमात्रस्यैव मिथ्यात्वं लब्धं न दृश्यवर्गस्येति तवाभिमतासिद्धिः । न द्वितीयः दृग्दृश्यत्वनिर्वाहार्थं तत्कल्पने दृष्टानेकपदार्थहानिप्रसङ्गेन तस्याकल्पनीयत्वात् । न ह्यल्पस्य हेतोर्बहुत्यागो युक्त इति ।

आध्यासिकसम्बन्धं विनापि दृग्दृश्ययोः सम्बन्ध्यभिन्नं सम्बन्धमङ्गीकृत्य दृश्यत्वोपपादनम्

अथ वा अस्तु कश्चिद्दृग्दृश्ययोः सम्बन्धः । स च सम्बन्धिभ्यां न भिद्यते । येन सम्बन्धिभिन्नसम्बन्धस्य सम्बन्धिना सम्बन्धान्तरमङ्गीकार्यं । एवं तस्य तस्यापीत्यनवस्था स्यात् । न चैवं सम्बन्धाभावप्रसङ्गः । ज्ञानाभेद-

---

1 दृक्सम्बन्धमन्तरेण इति मुद्रितपुस्तकस्थः पाठ एव साधुरिति भाति.

2 दृश्यतानिर्वाहकतार्थमाध्यासिकसम्बन्धान्तरमपेक्षते इति पाठेन भाव्यमिति भाति.

(मं. टि.) मात्रेण आनन्दाभावप्रसङ्गेन मोक्षस्यापुमर्थताप्रसङ्गात् । असन्मते अभेदेऽपि विशेषबलादेकतरपरिशेषाभावस्यान्यत्रोपपादितत्वाच्च ।

आध्यासिकसम्बन्धं विनापि दृग्दृश्ययोः संयोगसम्बन्धमङ्गीकृत्य दृश्यत्वोपपादनम्

(टी.) संयोगो वाऽस्तु । गुणत्वान्नेति चेत् । त्यज्यतां गुणत्वं । गुणत्वे वा गुणादिपञ्चकस्य निर्गुणत्वनिष्क्रियत्वपरिभाषा नादरणीया ।

(मं. टि.) ननु स तर्हि सम्बन्धः संयोगः समवायो वा ? आद्यस्तावदस्त्वित्याह ॥ संयोगो वेति ॥ त्यज्यतां गुणत्वमिति ॥ ज्ञानस्येति शेषः ॥ गुणत्वे वेति ॥ अयमभिप्रायः । गुणे क्रिया तावदङ्गीकार्या । पटे गच्छति तद्गतरूपेऽपि गतिदर्शनात् । पटगता सा रूपे प्रतीयत इति चेत् विपरीतं किं न स्यात् । पटावयवतन्तुगता गतिः पटे प्रतीयत इति वक्तुं शक्यत्वादतिप्रसङ्गाच्च ।

किं च गच्छत्पटनिष्ठमहारजनद्रव्ये गतिरस्ति न वा । न चेन्महारजनस्य देशान्तरेण सह संयोगो न स्यात् । असमवायिकारणाभावात् । न च पटनिष्ठक्रिया तदसमवायिकारणं । कार्यैकार्थप्रत्यासत्तेः कारणैकार्थप्रत्यासत्तेश्चाभावेन तस्याः समवायिकारणप्रत्यासत्त्यभावात् । नापि पटदेशान्तरसंयोगः । देशान्तरेण पटस्य संयोगानन्तरं महारजनस्य देशान्तरेण सह संयोगप्रतीतिप्रसङ्गात् । तन्तुदेशान्तरसंयोगादेव पटस्य देशान्तरसंयोगसिद्धौ पटे क्रियाभावप्रसङ्गाच्च । न च क्रियावता पटेन महारजनसंयोगस्तदसमवायिकारणं । क्रियाहीनस्य महारजनद्रव्यस्य क्रियावता पटेन संयोगानुपपत्तेः । क्रियावत्संयोगस्य संयोगप्रतिसम्बन्धिनि क्रियामुत्पादयतस्तन्निष्ठक्रियाद्वारैव तस्य देशान्तरसंयोगोत्पादकतानियमेन महारजने क्रियास्वीकारावश्यम्भावाच्च । तस्माद्गच्छत्पटनिष्ठमहारजने गतिरस्तीति पक्ष एवाश्रयणीयः । एवं च तद्रीत्या रूपादावपि क्रियासिद्धिः । अनुभवस्याविशेषात् ।

एवं गुणे गुणोऽप्यङ्गीकार्यः । 'एकं रूपं' 'चतुर्विंशतिर्गुणाः' इति गुणेऽपि सङ्ख्यादिगुणप्रतीतेः । यद्यपि गुणे संयोगव्यवहारं 'द्रव्ययोरेव संयोगः' इति दर्शनाभ्यासवान्जनो न करोति तथापि घटपटयोः संयुक्तयोः सतोः 'तद्गतरूपे अपि संयुक्ते' इति लोकः करोत्येव । किं च 'रूपेण युक्तो घटः' इति सर्वेऽपि व्यवहरन्ति । तथापि 'संयुक्त' इति न व्यवहरन्तीति चेन्न । ध्वंसप्रध्वंसशब्दयोरिवानयोरर्थभेदास्फुरणात् । 'द्रव्याणां कर्म संयोगः' इत्यादौ जैमिन्यादिभिः परीक्षकैरद्रव्यसम्बन्धेऽपि संयोगव्यवहाराच्च । तथा च ज्ञानस्य गुणत्वेऽपि तस्य विषयेण सह गुणात्मकः संयोगः सम्बन्धोऽस्तु । न च ज्ञाने संयोगासमवायिकारणक्रियाभावात्संयोगानुपपत्तिः । रूपादौ क्रियासाधनप्रकारेण ज्ञानेऽपि तत्साधनात् । नन्वतीतेन विषयेण कथं संयोगः? इति चेत् किमतीतादेः सम्बन्धमात्रं नाङ्गीक्रियते ? संयोग एव वा ? नाद्यः सम्बन्धाभावस्याप्यतीतसम्बन्धित्वाभावप्रसङ्गात् । प्रध्वंसादेरतीतादिसम्बन्धाभावप्रसङ्गाच्च । न द्वितीयः तद्वत्संयोगस्याप्युपपत्तेः । न चास्माभिः संयोगो द्विष्ठ इत्यङ्गीक्रियते । येन विषयलक्षणाश्रयाभावे कथं तदाश्रितसंयोगोऽवतिष्ठेतेति चोद्येत । किं नाम ? सादृश्यादिवदेकाश्रितोऽन्यनिरूप्य

(मं. टि.) इति । 'संयोगः' इत्यबाधितव्यवहारास्पदत्वं च संयोगलक्षणं । न चैवमन्योन्याश्रय. । पूर्वपूर्ववृद्धकृत-व्यवहारविषयत्वज्ञानेनोत्तरोत्तरेषां व्यवहारोपपत्तेः । 'मन्त्रः' इत्यभियुक्तप्रसिद्धिर्मन्त्रलक्षणं इति मीमांसकैरङ्गीकृत-त्वाच्चेति ।

आध्यासिकसम्बन्धं विनापि दृग्दृश्ययोः समवायसम्बन्धमाश्रित्य दृश्यत्वोपपादनम्

(टी.) समवायो वा अस्तु । प्रक्रिया तु प्रकारान्तरेण कल्प्यतां ।

दृग्दृश्ययोः संयोगसमवायातिरिक्तवास्तवसम्बन्धमाश्रित्य दृश्यत्वोपपादनम्

किं च गुणगुणिनोः संयोगानुपपत्तौ समवाय इव तन्तुद्वयस्य समवायासम्भवे संयोग इव च दृग्दृश्ययोः प्रसिद्धसम्बन्धानुपपत्तावन्य एव कश्चिद्वास्तवः किं न कल्पनीयः ? न हि प्रक्रियापरिक्षयो वस्तुपरिक्षयाद्गरीयान् ।

प्रपञ्चस्य मिथ्यात्वेऽपि दृश्यत्वानुपपत्तिसमर्थनम्

किञ्च मिथ्यात्वेऽपि कथं दृश्यत्वं ? गगन इव गन्धर्वनगरस्य दृशि प्रपञ्चस्यारोपितत्वादिति चेत् तर्हि सर्वेण सर्वं दृश्येत । न वा केनापि किञ्चित् । इन्द्रियसन्निकर्षादिकं नियामकमिति चेत् तर्हि किमनेनारोपितत्वेन ? करणसम्बन्धादिनिबन्धनो विषयविषयिभाव एवास्तु दृग्दृश्ययोः सम्बन्ध इति सङ्क्षेपः ।

(मं. टि.) ॥ प्रकारान्तरेणेति ॥ संयोगातिरिक्तः सम्बन्धस्समवायः । सचानित्योनेकश्चेत्यादिः प्रकारान्तरशब्दार्थः ॥ अन्य एवेति ॥ उभयातिरिक्ते सम्बन्धेऽर्थापत्तिसिद्धे तस्योभयेतरत्वे सति सम्बन्धत्वलक्षणं नामान्तरं च करणीयमित्यर्थः । अधिष्ठानभूता दृक् संसारावस्थायां प्रकाशते न वा ? आद्ये दोषमाह ॥ तर्हि सर्वेणेति ॥ प्रकाशमानदृगध्यस्तत्वस्य सर्वान्प्रत्यविशिष्टत्वादिति भावः । द्वितीयं दूषयति ॥ न वा केनेति ॥ अधिष्ठानप्रकाशरूपस्याध्यस्तस्फुरणस्याभावान्न किञ्चिदपि प्रकाशेतेत्यर्थः ।

सङ्क्षेपशब्दसूचितार्थविवरणम्

॥ इति सङ्क्षेप इति ॥ "इदमंशावच्छिन्ने चैतन्ये रजतमध्यस्तं । अविद्यावृत्तिप्रतिबिम्बितसाक्षिचैतन्येन तु दृश्यते । एवं च यत्राध्यस्तं न तेन दृश्यं । येन च दृश्यं न तत्राध्यस्तं । अपि च नित्यानुमेयविषयस्य परोक्ष-वृत्तिज्ञानेऽध्यासस्त्वयापि नाङ्गीक्रियते । अथापि नित्यानुमेयं तेन दृश्यमित्यङ्गीकार्यं । अन्यथा हेतोर्भागासिद्धिप्रस-ङ्गादिति न दृगध्यस्तत्वं दृश्यताप्रयोजकं । किं च 'यदि दृश्यं दृगध्यस्तं स्यात् तदा ' दृग्घटः' इति तदनुविद्धतया प्रतीयेत' । न च दृशि दृक्त्वादन्यः सामान्याकारोस्ति । येन तदनुविद्धतया घटादिः प्रतीयेत, न तु दृग्रूपवि-शेषानुविद्धतया इति चोद्येत" इत्यादि यद्यपि बहु वक्तव्यमस्ति । तथापि ग्रन्थगौरवभयादुपरम्यत इति भावः ।

प्रपञ्चमिथ्यात्वानुमाने दृष्टान्ते साध्यवैकल्योपपादनम्

(टी.) अथावसरतो दृष्टान्तं दूषयिष्यन् साध्यसिद्ध्यर्थं साधनान्वेषणमिति प्राधान्यात् साध्यवै-कल्यं तावदाह

## शुक्तिरजतस्याप्यनिर्वचनीयत्वाभावात्साध्यविकलो दृष्टान्तः

(टी.) 'किमु तद्दृष्टान्तेन जगतः' इति अपिशब्दार्थः। असत्वस्य परेण जगत्यसिसाधयिषितत्वात्सद्विविक्तत्वादीनां च अनिर्वचनीयत्वाबहिर्भावं सिद्धवत्कृत्य'अनिर्वचनीयत्वाभावात्' इत्युक्तं । 'साध्यविकलः' इति साध्यसमानधर्मविकल उच्यते ।

### शुक्तिरजतानिर्वचनीयत्वसाधकार्थापत्तिशंका

न तावच्छुक्तिरजतं सत् । बाधविरोधात् । नाप्यसत् । अपरोक्षतया प्रतीत्यनुपपत्तेः । ततोऽर्थादनिर्वचनीयं तदिति चेन्न ।

### अर्थापत्तेः सदसदात्मकत्वेनाप्युपपत्तिसमर्थनम्

सत्वात्प्रतीतिः, असत्वाच्च बाधः, इति सदसदात्मकत्वेनाप्युपपत्तेः । तत् विरुद्धमिति चेत् । कोऽयं विरोधः अर्थापत्तिश्चेत्तथाभावं गमयेत् । अन्यथा सदसद्वैलक्षण्यमपि नाङ्गीकार्यं स्यात् । विरुद्धविधिसमुच्चयवत् विरुद्धनिषेधसमुच्चयस्यापि विरुद्धत्वात् । निषेधसमुच्चयस्यातात्त्विकत्वान्न विरोध इति चेत् । तर्हि विधिसमुच्चयोऽप्यतात्विक एवाङ्गीक्रियतां । लाघवात् ।

### आध्यासिकसम्बन्धं विना दृश्यत्वानुपपत्तेरेवाभावसमर्थनम्

किं च अपरोक्षप्रतीतिविषयत्वमुक्तविधया न शुक्तिरजतस्यास्तीति कस्यानुपपत्तिः? । उल्लेखमात्रं त्वसतोऽपि चेत्का अनुपपत्तिः! । विस्तृतमेतदन्यत्रेत्यलं पल्लवितेन ।

(मं. टि.) ननु साधयितुं योग्यं हि साध्यं । [1]एवं दृष्टान्तस्यापि सिद्धसाध्यसजातीयधर्मं प्रति आश्रयत्वात्साध्यविकलत्वमिष्टमेवेत्यत आह ॥ साध्यविकल इतीति॥ अपरोक्षतया प्रतीत्यनुपपत्तेरिति ॥ असतः परोक्षप्रतीत्यभावे ततो वैलक्षण्यस्य ज्ञातुमशक्यत्वेनानिर्वचनीयत्वासिद्धिप्रसङ्गात अपरोक्षतयेति विशेषितं ॥ न सत्वात्प्रतीतिरसत्त्वाच्च बाध इति ॥ यथा भट्टमतानुसारिणा त्वयापि गुणगुण्यादेरत्यन्तभेदे गवाश्वादिवत्पृथक्सिद्ध्यादिप्रसङ्गात् अत्यन्ताभेदे च पर्यायत्वप्रसङ्गात् भेदाभेदौ स्वीकृतौ न तूभयबहिर्भावः, यथा वा जातेष्टेः शुद्धकाम्यत्वे 'पुत्रे जाते' इति पुत्रजननरूपनिमित्तश्रवणविरोधात् शुद्धनैमित्तिकत्वे च 'पूत एव तेजस्व्यन्नादो भवति' इति पूतत्वादिफलश्रवणविरोधात् [2]उभयसम्बन्धिताङ्गीकारोऽङ्गीकृतः न तूभयबहिर्भावः, तथा शुक्तिरूप्यादेरत्यन्तसत्वे बाधानुपपत्तेः अत्यन्तासत्त्वे च प्रतीत्यनुपपत्तेरुभयात्मकत्वमङ्गीकार्यं । तथा च ख्यातेः सत्त्वेन, बाधस्य च असत्त्वेनाप्युपपन्नत्वादर्थापत्तेरन्यथाप्युपपत्तिरित्यर्थः ।

---

[1] दृष्टान्तस्य साध्यसजातीयसिद्धधर्मं, इति पाठेन भाव्यमिति भाति.

[2] सम्बन्धिताधिकारोऽङ्गीकृतः, इति मुद्रितपुस्तकस्थः पाठः । वस्तुतस्तु उभयसम्बन्धिताधिकारोऽङ्गीकृतः इति पाठेन भाव्यमिति भाति.

(मं. टि.)किमर्थापत्तौ प्रवृत्तायामपि विरोधः? किं वा विरोधादर्थापत्तिरेव न प्रवर्तते ? इति । आद्यं दूषयति ॥ **विरोध इति** ॥ द्वितीयं प्रत्याह ॥ **अन्यथेति** ॥ **विधिसमुच्चय इति** ॥ न चैवं निषेधसमुच्चयस्य तात्त्विकतापातः। निषेधसमुच्चयस्यातात्त्विकत्वेपि विधिसमुच्चयतात्त्विकत्वप्रसङ्गस्याविशेषात् ।

**उल्लेखमात्रमिति** ॥ यद्यपि ज्ञानजनककरणसम्बन्धित्वरूपं विषयत्वं सत्त्वमपेक्षते । असतः करणसम्बन्धायोगात् तथापि यथा परोक्षज्ञानं प्रति तज्जनिताभिवदनरूपव्यवहारविषयतायोग्यतारूपं 'कस्य ज्ञानं' इत्युक्ते 'अस्य ज्ञानं' इति आश्रयाश्रयिभावादिसम्बन्धान्तराभावेऽपि ज्ञानावच्छेदकत्वरूपं तदुल्लेख्यत्वं तथा अपरोक्षज्ञानं प्रत्यप्यस्तु । अविशेषात् । तथाप्यसतोऽपरोक्षज्ञानं भ्रान्तेरन्यत्र न दृष्टचरमिति चेत् न । सद्विलक्षणस्यापि भ्रान्तेरन्यत्र [1]दर्शनादिति भावः ।

### प्रपञ्चमिथ्यात्वानुमाने दृष्टान्ते साधनवैकल्योपपादनम्

## उक्तप्रकारेण दृश्यत्वाभावात्साधनविकलश्च

(टी.) 'रजतं दृष्टमिति भ्रममात्रत्वात्' इति उक्तप्रकारेण । 'शुक्तिरजतस्य' इत्यनुवर्तते । 'च'कारो दृष्टान्त इत्यस्यानुकर्षणार्थः ।

### प्रपञ्चमिथ्यात्वानुमाने उपाधिदोषोद्भावनम्

केचित्, उपाधिदोषमसिद्धावन्तर्भावयन्ति । अन्ये, अनैकान्तिके । परे, कालात्ययापदिष्टतायां । एके सत्प्रतिपक्षतायां । केचित्तु दृष्टान्तदोष इति । तत्र गुणदोषचिन्तायां नायमवसर इति सर्वावसितौ उपाधिदोषमाह

## प्रमाणविरुद्धत्वमुपाधिः

### उपाधेः साध्याभिन्नताशंका

नन्वत्र बाध्यत्वं साध्यं । तदेव च प्रमाणविरुद्धत्वं । न हि स्वस्मिन्स्वयमुपाधिः । व्याप्यव्यापकभावस्य भिन्नाश्रयत्वादिति । मैवं अन्यथाप्रतिपत्तिपूर्वकं तदुन्मूलनेन सम्यग्बोधो बाधः । प्रमाणविरोधस्तु विपरीतप्रमाणविषयत्वमात्रमिति भेदात् ।

(मं. टि.) **असिद्धाविति** ॥ उपाधिसद्भावे निरुपाधिकसम्बन्धरूपव्याप्तेरभावादुपाधिव्याप्यत्वासिद्धावन्तर्भवतीत्यर्थः ॥ **अनैकान्तिक इति** ॥ उपाधिरूपव्यापकनिवृत्त्या पक्षात्साध्यरूपव्याप्यनिवृत्त्या पक्षस्यैव विपक्षत्वात्पक्षे वर्तमानस्य हेतोरनैकान्तिकतेत्यर्थः ॥ **कालात्ययापदिष्टतायामिति** ॥ उपाधिरूपव्यापकनिवृत्तिलक्षणप्रबलप्रमाणेन पक्षे साध्याभावस्य निर्णीतत्वादिति भावः ॥ **सत्प्रतिपक्षतायामिति** ॥ उपाधिव्यतिरेकस्य पक्षे भूल्या-

---

[1]तदवर्शनादिति भावः, इति मुद्रितपुस्तकस्थः पाठः.

(मं. टि.) नुमानसाध्याभावसाधकत्वादिति भावः ॥ दृष्टान्तदोष इति ॥ साध्यादिमत एव दृष्टान्तत्ववदुपाधिहीनस्यैव दृष्टान्तत्वात्साध्यवैकल्यादिवदुपाधिर्दृष्टान्तदोष इत्यर्थः ॥ सर्वावसिताविति ॥ उपाधेर्दोषत्वे सर्ववादिसंमतौ सत्यामित्यर्थः । क्वचित्सर्वावसितमिति पाठः । तदा सर्वावसितत्वं उपाधिदोषविशेषणं ।

'सम्यग्बोधो बाधः' इत्युक्ते 'घटोऽयं' इति सम्यग्बोधो बाधः स्यात् । तदर्थं 'अन्यथाप्रतिपत्तिपूर्वकं' इत्युक्तं । तावत्युक्ते शुक्तिकायां रजतत्वज्ञानानन्तरं तस्यामेव 'इदं' इति सम्यग्बोधो बाधः स्यात् । तदर्थं 'तदुन्मूलनेन' इत्युक्तं । अन्यथाप्रतिपत्तेरुन्मूलनं च तद्विषयासत्त्वज्ञापनं वा तस्या भ्रान्तित्वज्ञापनं वेति द्रष्टव्यं । सम्यग्ग्रहणाभावे तु वल्मीके स्थाणुत्वभ्रमानन्तरं 'नायं स्थाणुः । किं तर्हि ? पुरुषः' इति भ्रान्त्यन्तरमपि बाधः स्यात् । तदर्थं सम्यग्ग्रहणं ॥ विपरीतप्रमाणविषयत्वमात्रमिति ॥ 'नेदं रजतं' इति अभावग्राहकप्रमाणं प्रति रजतादेः प्रतियोगित्वेनावच्छेदकतया विषयत्वमात्रमित्यर्थः । मात्रपदेन अन्यथाप्रतिपत्तिपूर्वकत्वं तदुन्मूलनं च व्यावर्तितं । तेनोक्तरूपं बाधं प्रति निषेध्यतया विषयत्वरूपात् बाध्यत्वात् प्रमाणविरुद्धत्वस्य भेद इति द्रष्टव्यं ।

### प्रमाणविरुद्धत्वोपाधेः साध्याव्यापकताशङ्का तत्परिहारश्च

(टी.) तर्हि अनुपसञ्जातबाधभ्रमे प्रमाणविरुद्धत्वं नास्तीत्यव्याप्तिरिति चेन्न । तत्रापि बाधार्हत्वस्य सत्वात् ।

### प्रमाणविरुद्धत्वोपाधेः साधनव्यापकत्वशङ्का तन्निरासश्च

प्रपञ्चस्यापि प्रमाणविरुद्धत्वात्साधनव्यापकोऽयमिति चेन्न । प्रतीतप्रमाणानामन्यथा व्याख्यातत्वात् । दृश्यत्वेन साधने मिथ्यात्वस्योपाधित्वात् । अन्योन्योपाधिभावेनापि अनुमानस्याभासत्वात् ।

### प्रमाणविरुद्धत्वस्यैव मिथ्यात्वे प्रयोजकत्वसमर्थनम्

लोके च कस्यचिदर्थस्य सत्यत्वमिथ्यात्वयोर्विप्रतिपत्तौ दर्शनं सत्यतायां प्रमाणविरोधं मिथ्यात्वेऽनुसरन्ति । ततो मिथ्यात्वे तदेव प्रयोजकमिति ज्ञायते ।

(मं. टि.) ॥ अनुपसञ्जातबाधभ्रमे प्रमाणविरुद्धत्वं नास्तीत्यव्याप्तिरिति ॥ अनुपसञ्जातबाधभ्रमविषये मिथ्यात्वस्य सत्त्वेऽपि प्रमाणविरुद्धत्वं नास्तीत्युपाधेः साध्यव्यापकता नास्तीत्यर्थः ॥ बाधार्हत्वस्येति ॥ प्रबलविपरीतप्रमाणविषयत्वयोग्यतारूपप्रमाणविरुद्धत्वलक्षणोपाधेरित्यर्थः । न तु बाध्यत्वरूपसाध्यस्येति भ्रमितव्यं । तत्र तस्य परेणाप्यङ्गीकृतत्वात् । न विपरीतप्रमाणविषयत्वमात्रमुपाधिः । किं तु ? तद्योग्यत्वं । तच्च तत्राप्यस्तीति सिद्धा साध्यव्यापकतेति भावः । एतच्च भ्रान्तिसमानाधिकरणमेव विपरीतप्रमाणमभ्युपेत्योक्तं । वस्तुतस्तु अनुपसञ्जातबाधभ्रमे विपरीतप्रमाणविषयत्वं चास्त्येव । भ्रान्तेन तदभावस्याज्ञातत्वेऽपि ईश्वरादिभिस्तदभावस्य ज्ञातत्वात् । [1]न

[1] न हि यथा भ्रान्तिसमानाधिकरणमेव भ्रान्त्युन्मूलनेन बाधकं भवतीति नियमः तथा भ्रान्तिसमानाधिकरणमेव विपरीतप्रमाणं भवतीति नियमः, इति मुद्रितपुस्तकस्थः पाठः

(मं. टि.) हि भ्रान्तिसमानाधिकरणमेव तदुन्मूलनं बाधकं भवतीति नियमः तथा भ्रान्तिसमानाधिकरणमेव विपरीतप्रमाणं भवतीति नियमः ।

अनुपसञ्जातबाधभ्रमविषये उपाधेः साध्यसमव्याप्तता नास्तीति शंका तत्परिहारश्च

॥ **अनुपसञ्जातबाधभ्रमे प्रमाणविरुद्धत्वमस्ती**ति क्वचित्पाठः । तत्र "अनुपसञ्जातबाधभ्रमविषये भ्रमविषयत्वात् प्रमाणविरुद्धत्वे सत्यपि अनुपसञ्जातबाधत्वात् बाधविषयत्वरूपबाध्यत्वस्याभावेन 'यत्रोपाधिस्तत्र साध्यं' इति समव्याप्तेरभावादनुपाधित्वमित्यभिप्रायेण **अनुपसञ्जातबाधे**त्यनेन ग्रन्थेन शङ्कितत्वात् **तत्रापि बाधार्हत्वस्य सत्त्वा**दित्यनेन ग्रन्थेन परेणापि बाध्यत्वं बाधार्हत्वमेव विवक्षणीयं, अन्यथा अनुपसञ्जातबाधभ्रमविषये दृश्यत्वहेतोर्व्यभिचारप्रसङ्गात् । बाधार्हत्वं च तत्राप्यस्तीति समव्याप्तिरस्तीति भावेन परिहृतम्" इति व्याख्येयः ।

॥ **प्रतीतप्रमाणानामिति** ॥ 'नेह नाना' इत्यादिवाक्यानामित्यर्थः । दृश्यत्वेनैव प्रमाणविरुद्धत्वं प्रपञ्चे साध्यते । तथा च साधनवत्पक्षाद्व्यावृत्तेः साधनव्यापक उपाधिरित्याशङ्क्याह ॥ **दृश्यत्वेनेति** ॥ ननु यदा दृश्यत्वेन मिथ्यात्वप्रमाणविरुद्धत्वयोरन्यतरत साध्येत तदा एकस्य साधने अपर उपाधिर्भवतीति न कस्यापि सिद्धिः स्यात् । यदा तु मिथ्यात्वे सति प्रमाणविरुद्धत्वं विशिष्टं साध्येत तदा कथं? इति चेत् न । साध्यविशेषणप्रयोजनानां सिद्धसाधनतापरिहारादीनामभावेन तथा साध्यनिर्देशासम्भवात् । उपाधित्वेन शङ्क्यमानानामनन्तत्वेन तेषां साध्यशरीरप्रवेशनायोगाच्च । किं च पक्षेतरत्वं पक्षे न साधयितुं शक्यं व्याघातात् । [1]अनुकूलतर्कसद्भावे च तस्याप्युपाधित्वात् ।

एतेन केनचिद्धेतुना विश्वसत्यतासाधने प्रमाणविरुद्धत्वमुपाधिः । तत्साधने च सत्यत्वमुपाधिरिति स्वव्याघात इति निरस्तं । अनुकूलतर्काभाव एवैवमाश्रयणात् । मिथ्यात्वसत्यत्वसाधकानुमानेषु [2]चानुकूलतर्काभावाभावयोरन्यत्रोक्तत्वाच्चेत्यलं । उपाधिरेव प्रयोजक इत्याह ॥ **लोक इत्यादिना** ॥

पक्षादिलक्षणकथने कारणोक्तिपूर्वं पक्षलक्षणकथनम्

**(टी.) अत्र 'आश्रयासिद्धः पक्षः' 'सपक्षाभावाद्विरुद्धः' 'असिद्धो हेतुः'। 'साध्यविकलो दृष्टान्तः' इति पक्षसपक्षविपक्षाः प्रतिज्ञाहेतुदृष्टान्ताश्च व्यवहृताः । न च पक्षादिस्वरूपानवगतौ उक्तदोषस्फूर्तिर्भवतीति क्रमेण तल्लक्षणान्याह**

## साध्यधर्मविशिष्टः पक्षः

**'यत्प्रतीतिर्लिङ्गेन जनयितव्या स साध्यधर्मः' इति नास्ति कश्चित् क्षुद्रोपद्रवः । साध्यग्रहणं सपक्षादिव्यावृत्त्यर्थं । 'साध्यविशिष्टः' इत्येवोक्ते वस्तुतोऽग्निविशिष्टस्य पर्वतस्य साध्यत्वात्तद्विशिष्टस्या-**

---

[1] अनुकूलतर्कासद्भावे इति पाठेन भाव्यमिति भाति.

[2] चानुकूलतर्काभावभावयोरन्यत्रोक्तत्वाच्चेत्यलं, इति पाठेन भाव्यमिति भाति.

(टी.) न्यस्य पक्षत्वं स्यात्तदर्थं धर्मग्रहणं। धर्ममात्रस्य प्रागेव सिद्धत्वात् साध्यत्वानुपपत्तेर्विशिष्टग्रहणं। तथा च साध्यत्वं धर्मस्य तत्सम्बन्धितयैव सिद्ध्यति। विशिष्टत्वं च धर्मधर्मिभावेनैव विवक्षितं। न तु सम्बन्धमात्रेण। तेन साधनधर्मादावतिप्रसङ्गाभावान्न तदर्थं धर्मीति वक्तव्यं।

(मं. टि.) ॥ पक्षसपक्षविपक्षाः प्रतिज्ञाहेतुदृष्टान्ताश्च व्यवहृता इति ॥ यद्यपि विपक्षपदं प्रतिज्ञापदं चेहाचार्येण न प्रयुक्तं तथापि आत्मनोऽपि दृश्यत्वादित्यत्र विपक्षस्यात्मनोऽपि विवक्षितत्वाद्विपक्षोऽपि व्यवहृतः। तथा प्रतिज्ञादोषमाश्रयासिद्ध्यादिकं कथयता प्रतिज्ञाप्यर्थाद्व्यवहृतेति भावः।

॥ नास्ति कश्चिदिति ॥ साध्यशब्देन किं सन्दिग्धो धर्मो विवक्षितः? किं वा प्रतिज्ञापनीयः? अथ वा प्रमित्सितः? नाद्यः [1]प्रमाणसम्प्लववादिना निश्चितेऽपि अनुमानप्रवृत्तेरङ्गीकारात्। न द्वितीयः स्वार्थानुमाने प्रयोज्यकर्तुरभावेन प्रज्ञापनाभावात्। न तृतीयः अनिष्टानुमानाभावप्रसङ्गादित्यादिरुपप्लवो नास्ति। लिङ्गजन्यप्रतीतिविषयधर्मस्य साध्यधर्मपदेन विवक्षितत्वादित्यर्थः ॥ अग्निविशिष्टस्य पर्वतस्य साध्यत्वादिति ॥ यथा अग्निः पर्वतसम्बन्धितया साध्यः तथा पर्वतोऽप्यग्निसम्बन्धितया साध्यः। स्वरूपमात्रसिद्धावपि विशिष्टासिद्धेरुभयत्र समत्वादित्यर्थः। एवं चाग्निविशिष्टस्य पर्वतस्यापीति अपिशब्दाध्याहारेण योज्यं। अन्यथा साध्यत्वं धर्मस्य तत्सम्बन्धितयैवेत्युत्तरग्रन्थविरोधात् ॥ तथा च साध्यत्वमिति ॥ यद्यपि साध्यो धर्मो यस्येति बहुव्रीहेराश्रयितुं शक्यत्वाद्विशिष्टग्रहणं न लक्षणान्तर्गतं तथापि धर्मस्य न स्वरूपेण साध्यत्वमित्यर्थसूचकत्वाद्विशिष्टग्रहणं सार्थकमित्यर्थः।

साध्यधर्मविशिष्टत्वं साध्यधर्मसम्बन्धित्वं। तच्च व्याप्यतया साधनस्याप्यस्तीति तत्रातिव्याप्तिपरिहारार्थं कैश्चिद्धर्मिग्रहणं कृतं। तन्न कर्तव्यमित्याह ॥ विशिष्टत्वं चेति ॥ विवक्षितमिति ॥ धर्मिग्रहणं कुर्वताप्यवश्यं साध्यविशिष्टशब्देन साध्येन धर्मितया सम्बन्धित्वं विवक्षित्वैवातिव्याप्तिः परिहरणीया। न तु धर्मिग्रहणेन। साधनस्यापि स्वनिष्ठधर्मं प्रति धर्मित्वादित्यर्थः।

### सपक्षलक्षणकथनम्

## साध्यसमानधर्मविशिष्टः सपक्षः

(टी.) पक्षविपक्षयोरपि समानधर्मविशिष्टत्वात्तद्व्युदासार्थं साध्यग्रहणं। समानग्रहणं च पक्षव्युदासार्थं। समानत्वं च साध्यत्वमपहाय साक्षादेवेति नातिप्रसङ्गः। शेषं पूर्ववत्।

### विपक्षलक्षणम्

## साध्यविपरीतधर्मविशिष्टो विपक्षः

विपरीतो विरुद्धः। यथा अग्निमत्वसाधने निरग्निकत्वं। तेन पक्षसपक्षयोरपि व्युदासः।

(मं. टि.) ॥ इति नातिप्रसङ्ग इति॥ ॥ समानत्वं किं सर्वथा? उत कथञ्चित्? नाद्यः सन्दिग्धत्वा-

---

[1] प्रमाणसम्प्लववादिना, इति पाठेन भाव्यमिति भाति.

(मं. टि.) दिना साध्यस्य महानसगतामावप्यभावात् । न द्वितीयः अन्यभावस्यापि प्रमेयत्वादिना साध्यसमत्वेन तद्वतो विपक्षस्यापि सपक्षताप्रसङ्गादित्ययं दोषो नास्ति । सन्दिग्धत्वादिकं विना व्यापकतावच्छेदकाग्नित्वादिना वपि विद्यमान साध्यस्य विवक्षितत्वात् । न हि धूमव्यापकत्वमग्नित्वेनेव प्रमेयत्वेनावच्छिद्यते । प्रमेयत्वस्य धूमाव्यापके घटादात्वात् । अतिप्रसक्तस्य चावच्छेदकत्वायोगादिति भावः ।

### प्रतिज्ञालक्षणम्

## पक्षवचनं प्रतिज्ञा

(टी.) नन्वेवं सति 'पक्षः' इत्यादेः प्रतिज्ञात्वं स्यात् । न स्यात् । येनाकारेण योऽर्थः परं प्रति जिज्ञापयिषितः तथा तन्निर्देशस्य विवक्षितत्वात् । अत एव न निगमने प्रसङ्गः ।

(मं. टि.) ॥ येनाकारेणेति ॥ न च पक्ष इत्यादिकं तथा । पक्षत्वाकारस्य पर्वतसम्बन्धित्वेन वह्निं जिज्ञासमानेन परेणाजिज्ञासितत्वेन प्रतिजानतापि पुरुषेण तस्याजिज्ञापयिषितत्वात् । यत्र तु पक्षत्वमेव जिज्ञापयिषितं तत्र 'अयं पक्षः' इति वचनमपि प्रतिज्ञा भवतीति भावः ॥ अत एवेति ॥ निगमने हि साधनोपलक्षितो वह्निः पर्वतसम्बन्धितया निदर्श्यते । न च साधनोपलक्षितो वह्निर्जिज्ञापयिषितः । पक्षसम्बन्धितया साध्यस्यैव जिज्ञापयिषितत्वात् । साधनस्य तज्ज्ञानोपायत्वेनोपादानादिति भावः ।

### हेतुलक्षणम्

## लिङ्गं हेतुः

(टी.) व्याप्तिबलेन अर्थगमकं लिङ्गं ? यद्यपि हेतुशब्दः साधनत्वाभिव्यञ्जकलिङ्गवचने प्रसिद्धः तथाप्यर्थस्यैवात्र विवक्षितत्वात्तल्लक्षणमेवोक्तमिति अर्थे वर्तते ।

(मं. टि.)॥ अर्थस्यैवात्र विवक्षितत्वादिति ॥ असिद्धो हेतुरित्यत्र अर्थासिद्धेरेवोक्तत्वेन तस्यैवात्र [1] विवक्षितत्वादित्यर्थः ॥ तल्लक्षणमेवोक्तमिति ॥ लिङ्गमित्यनेन हेतुशब्दार्थलक्षणमेवोक्तमित्यर्थः ॥ अर्थे वर्तत इति ॥ हेतुशब्द इत्यनुवर्तते ।

### दृष्टान्तलक्षणम्

## निदर्शनं दृष्टान्तः

(टी.) निदर्श्यते साध्यसाधनयोर्धर्मयोर्व्याप्तिर्यस्मिन् तन्निदर्शनं । व्याप्तिग्रहणस्थलमिति यावत् । तद्वचनमुदाहरणं प्रसिद्धमेवेति ।

(मं. टि.) ॥ व्याप्तिग्रहणस्थलमिति ॥ यत्र सतोर्व्याप्यव्यापकयोर्व्याप्तिर्गृह्यते तद्व्याप्तिग्रहणस्थलमिति द्रष्टव्यं ।

### ग्रन्थान्ते मङ्गलाचरणम्

(टी.) यत्प्रसादात् यत्प्रीत्यैव च इदं प्रकरणं कृतवांस्तमेवाचार्योऽन्ते स्तुतिप्रणामाभ्यां प्रीणयति-

---

[1] लक्षणीयत्वादित्यर्थः इति मुद्रितपुस्तकस्थः पाठः ।

यो दृश्यते सदानन्दनित्यव्यक्तचिदात्मना ।
निर्दोषाखिलकल्याणगुणं वन्दे रमापतिं ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं प्रपञ्चमिथ्यात्वानुमानखण्डनं सम्पूर्णम्

(टी.) दृश्यते इत्यनेन 'दृश्यते त्वग्र्यया बुद्ध्या' इत्यादिश्रुतिं सूचयति । तेन यदुक्तं 'आत्मनोऽपि दृश्यत्वात्' इति तदुपपादितं भवति । दृश्यते चेद्रूपादिमत्त्वेनानित्यत्वं प्रसज्ज्येतेति चेन्न । निर्दोषानन्द-नित्याभिव्यक्तज्ञानात्मकत्वेन अजडत्वात् । तदाह ॥ सदानन्देति ॥ इत्थम्भूतलक्षणे तृतीया । न केवलं निर्दोषानन्दचिदात्मकः । नाप्यभेदात् गुणगुणिभावाभाव इत्युक्तं निर्दोषेति । कल्याणत्वं परिपूर्ण-त्वादिना । रमापतिमित्यनेन भगवती चापि वन्दिता भवतीति ।

उत्पत्तिस्थितिभङ्गं विश्वं यस्मात्प्रपद्यते पुरुषान् ।
स जयति जगतामन्तर्यामी स्वामी रमानाथः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितप्रपञ्चमिथ्यात्वानुमानखण्डनविवरणं जयतीर्थ-भिक्षुविरचितं सम्पूर्णं ॥

(मं. टि.) ॥ नाप्यभेदादिति ॥ चिदात्मनेत्युक्त्या अभेदात्प्रसक्तो यो गुणगुणिभावाभाव. सोऽपि नेति गुणग्रहणं कुर्वतोक्तमित्यर्थः । अभेदेऽपि विशेषबलाद्गुणगुणिभावो भविष्यतीति भावः ।

अभीष्टफलदातारं शुकादिद्विजसेवितं ।
भवाध्वाटनखिन्नोऽहं विष्णुमन्दारमाश्रये ॥

॥ इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासतीर्थयतिना विरचिता प्रपञ्चमिथ्यात्वानुमानखण्डनपञ्चि-काभावप्रकाशिका मन्दारमञ्जरी सम्पूर्णा ॥